# स्मृतिचन्द्रिका

## श्रीयाज्ञिकदेवणभट्टोपाध्यायरचिता

श्रीयाज्ञिकदेवभट्टोपाध्यायरचिता

व्यवहारकाण्डस्तृतीयः, तत्र प्रथम द्वितीयपरिच्छेदः

---

# SMRITICHANDRIKA

BY

**DEVANA-BHATTA**

EDITED BY

L. SRINIVASACHARYA

*Pandit, Govt. Oriental Library, Mysore*

## III. VYAVAHARA KANDA

Part I-II




**नाग प्रकाशक**

११ ए/यू. ए., जवाहर नगर, दिल्ली-७

This Publication has been brought out with the financial assistance from the Govt. of India, Ministry of Human Resource Development.

(If any defect is found in this volume, please return the copy per VPP for postage to the Publisher for free exchange.)

NAG PUBLISHERS

(i) 11A/ U.A. Jawahar Nagar, Delhi-110007
(ii) 8A/3 U.A. Jawaharnagar, Delhi-110007
(iii) Jalalpur Mafi (Chunar-Mirzapur) U. P.

ISBN 81-7081-177-5 (Set)

1988

PRICE Rs. per set

PRINTED IN INDIA

Published by Nag Sharan Singh for Nag Publishers, 11A/U.A. Jawaharnagar, Delhi-110007 and printed at New Gian Offset Printers, Delhi.

## NOTE

The following manuscripts have been used for editing this Volume :—

(1) A paper manuscript belonging to the Adyar Library.

(2) A palm-leaf manuscript belonging to the Adyar Library.

(3) Two palm-leaf manuscripts Nos. 3884 and 466 of the Government Oriental Library, Mysore.

(4) A palm-leaf manuscript belonging to Pandit Srisailam Tatacharya of Conjeeveram.

27-7-14. A.M.S.

## स्मृतिचन्द्रिकायां व्यवहारकाण्डे

## प्रथमपरिच्छेदाविषयाः.

---


| विषयसंख्या. | | | | पुटसंख्या. |
|---|---|---|---|---|
| 1 | व्यवहारस्वरूपनिरूपणम् | .... | .... | 1 |
| 2 | अष्टादशपदनिरूपणम् ... | .... | .... | 4 |
| 3 | व्यवहारभेदाः .... | .... | .... | 20 |
| 4 | निर्णेतृनिर्णयः ... | .... | .... | 29 |
| 5 | धर्मस्थाने अवस्थानम् | .... | .... | 42 |
| 6 | व्यवहारदर्शनविधिः .... | .... | .... | 52 |
| 7 | आसेधविधिः .... | .... | .... | 67 |
| 8 | व्यवहारदर्शनोपक्रमः .... | .... | .... | 70 |
| 9 | प्रतिज्ञापादः .... | .... | .... | 80 |
| 10 | उत्तरपादः .... | .... | .... | 92 |
| 11 | विवादविषयवचनानि .... | .... | .... | 105 |
| 12 | प्रत्याकलितपादः .... | .... | .... | 113 |
| 13 | क्रियापादः .... | .... | .... | 123 |
| 14 | लेख्यनिरूपणम् .... | .... | .... | 125 |
| 15 | लेख्यपरीक्षा .... | .... | .... | 139 |
| 16 | भुक्तिनिरूपणम् .... | .... | .... | 153 |
| 17 | साक्षिलक्षणानि .... | .... | .... | 173 |

| विषयसंख्या. | | पुटसंख्या. |
|---|---|---|
| 18 | साक्षिभेदाः | 184 |
| 19 | असाक्षिभेदाः | 187 |
| 20 | साक्ष्युद्भावनम् | 191 |
| 21 | साक्षिपरीक्षा | 195 |
| 22 | साक्ष्यनुयोजनविधिः | 198 |
| 23 | साक्ष्यप्रश्नविधिः | 203 |
| 24 | साक्ष्यवादविधिः | 206 |
| 25 | साक्षिवचोविषयवचनानि | 208 |
| 26 | साक्षिविषयवचनानि | 212 |
| 27 | असाक्षिप्रत्ययाः | 220 |
| 28 | दिव्यनिरूपणम् | 222 |
| 29 | अभियोगाल्पत्वमहत्त्वज्ञानोपयोगिवचनानि | 229 |
| 30 | धनपरिमाणतो दिव्यव्यवस्था | 232 |
| 31 | विवादिजात्यादितो दिव्यव्यवस्था | 239 |
| 32 | ऋतुतो दिव्यव्यवस्था | 242 |
| 33 | दिव्यदेशाः | 243 |
| 34 | धटनिर्माणविधिः | 245 |
| 35 | सर्वदिव्यसाधारणविधिः | 248 |
| 36 | धटारोपणविधिः | 253 |
| 37 | अग्निविधिः | 260 |
| 38 | कोशविधिः | 271 |
| 39 | तण्डुलविधिः | 275 |
| 40 | तप्तमाषविधिः | 277 |
| 41 | फालविधिः | 279 |

| विषयसंख्या. | | पुटसंख्या. |
|---|---|---|
| 42 | धर्मजदिव्यविधिः .... .... .... | 280 |
| 43 | निर्णयादिकृत्यम् .... .... .... | 281 |
| 44 | दण्डविषयवचनानि ... .... .... | 290 |
| 45 | पुनर्न्यायः .... .... .... | 300 |
| 46 | कृतनिवर्तनम् .... .... .... | 305 |
| 47 | बालादिधनविषयवचनानि .... .... | 310 |

# व्यवहारकाण्डे द्वितीयपरिच्छेदे
## विषयानुक्रमणिका.

---


(1) **ऋणादानाख्यं प्रथमं पदं—** पुटसंख्या

धनप्रयोगविधिः .... ... .... 317

आधिप्रकरणम्—

निर्दोषधनिकस्याधिविषयाणि ... .... 321

सदोषधनिकस्याधिविषयाणि ... .... 323

आधेः स्वत्वध्वंसविषयाणि .... .... 329

आधिसिद्धिविषयाणि .... .... 335

आध्यादिविवादापनोदविषयाणि ... .... 336

आधिमोचनविषयाणि .... ... 341

प्रतिभूप्रकरणम्—

प्रतिभूभेदाः .... .... .... 346

प्रतिभुवामसाधारणविधिः .... .... 348

प्रतिभूपुत्रादीनां विधयः .... .... 351

प्रतिभ्वादिदत्तप्रतिक्रियाविधयः .... .... 356

वृद्धिप्रकरणम्—

वृद्धिभेदाः .... .... .... 358

वृद्धिपरिमाणनियमः .... .... 361

अकृतवृद्धिविधयः .... .... 363

अकृतवृद्ध्यपवादः .... .... 365

वृद्धिग्रहणप्रतिषेधाः ... .... 367

| | | | पुटसंख्या |
|---|---|---|---|
| वृद्ध्युपरमावधिनिरूपणम् | .... | .... | 371 |
| वृद्ध्युपरमापवादः | .... | .... | 374 |
| अधमर्णप्रकरणम् -- | | | |
| ऋणप्रतिदानविधिः | .... | .... | 376 |
| असमर्थाधमर्णविषयाणि | .... | ... | 378 |
| ऋणग्रहणोपायः .... | ... | ... | 382 |
| दुस्साधाधमर्णविषयाणि | .... | ... | 388 |
| ऋणप्रतिदातृप्रकरणम् — | | | |
| पुत्रविषयाणि .... | ... | ... | 392 |
| पौत्रविषयाणि ... | .... | .... | 397 |
| रिक्थग्राहादिविषयाणि | .. | ... | 400 |
| कुटुम्बविषयाणि | .... | ... | ,, |
| कुटुम्बजनविषयाणि | ... | .... | 410 |
| परतन्त्रस्त्रीविषयाणि | .... | .... | 411 |
| अतीतोत्तमर्णऋणापाकरणविषयाणि | | .... | 413 |
| (2) निक्षेपः. | | | |
| निक्षेपादिस्थापनविधिः | ..... | ...... | 415 |
| तस्य पालनविधिः | .... | .... | 416 |
| सभ्यभूतग्रहीतृविषयाणि | .... | ... | 417 |
| सभ्याभासग्रहीतृविषयाणि | ..... | .... | 419 |
| ग्रहीतृस्थापकादिकृत्यम् | ..... | .... | 421 |
| प्रत्यनन्तरे प्रत्यर्पणप्रतिषेधापवादः ... | | .... | 424 |
| याचितान्वाहितविषयाणि | .... | .... | 425 |

पुटसंख्या

(3) संभूयसमुत्थानम्—

संभूयकारिणां वणिजां विधयः .... .... 429
संभूय कृषिकाणां विधयः .... .... 434
,, शिल्पिनां विधयः .... .... 435
,, ऋत्विजां विधयः .... 436
,, नर्तकादीनां विधयः .... .... 440

(4) दत्ताप्रदानिकम्—

अदेयविषयाणि .... .... .... 441
देयविषयाणि .. .... .... 444
दत्तविषयाणि .... .. .... 449
अदत्तविषयाणि .... .... .... 451

(5) अभ्युपेत्याशुश्रूषा—

कर्मकरविषयाणि .... .... 454
दासनिरूपणम् ... .... ... 460
दासविषयाणि ... ... .... 463

(6) वेतनानपाकर्म—

वेतनसमर्पणविषयाणि .... .... 470
भृत्यविषयाणि .... .... .... 472
स्वामिविषयाणि .... .... .... 476
पण्यस्त्रीतदुपभोक्तृविषयाणि .... .... 481
स्वामिपालपदम् .... .... .... 482
पश्वादिव्यतिक्रमविषयाणि .... .... 487

| | | | |
|---|---|---|---|
| (7) अस्वामिविक्रयः— | | | पुटसंख्या |
| विप्रतिपन्नास्वामिविक्रयविषयः | .... | ... | 501 |
| स्वाम्यनर्पिततदीयवस्तुभोक्तृविष | | .... | 508 |
| (8) विक्रीयासंप्रदानम्— | | | |
| विक्रीयासंप्रदानविधिः | .... | .... | 509 |
| (9) क्रीत्वानुशयः— | | | |
| क्रीत्वानुशयविषयाणि | .... | .... | 516 |
| (10) समयानपाकर्म— | | | |
| समयानपाकर्माविधिः | .... | .... | 520 |
| (11) क्षेत्रजाविवादः— | | | |
| सीमालिङ्गनिरूपणम् | .... | .... | 534 |
| सीमाविवादनिर्णयः | .... | .... | 537 |
| सीमासाक्ष्याद्यपराधविषयाणि | .... | .... | 546 |
| नद्यादिवशात्प्राप्तभूविषयाणि | .... | .... | 548 |
| गृहादिविषयाणि .... | .... | .... | 550 |
| सेत्वादिविषयाणि | .... | .... | 555 |
| क्षेत्रकर्तृविषयाणि | .... | .... | 558 |
| (12) स्त्रीपुंसंबन्धः— | | | |
| स्त्रीरक्षणविधिः .... | .... | .... | 561 |
| स्त्रीरक्षणप्रकारः .... | .... | .... | 565 |
| अधिवेदनम् .... | .... | ... | 572 |
| अत्याज्यस्त्रीविषयाणि | .... | .... | 575 |
| त्याज्यस्त्रीविषयाणि | .... | .... | 576 |

पुटसंख्या


जायापतिधर्माः .... .... .... 581

स्त्रीधर्माः .... .... .... 584

स्त्रीकर्माणि .... .... .... 588

प्रोषितभर्तृकाधर्माः .... .... 592

मृतभर्तृकाधर्माः .... .... 594

(13) दायविभागः—

विभागकालकर्तृप्रदर्शनम् .... .... 597

जीवद्विभागप्रकारः .... .... 607

तत्र समविभागप्रकारः .... .... 614

,, विषमविभागप्रकारः .... .... 618

अजीवद्विभागविषयाणि .... .... 622

दायानर्हविषयाणि .... .... 628

विभाज्यनिरूपणम् .... .... 635

अविभाज्यनिरूपणम् ... .... 636

पुत्रपौत्रादिविभागविषयाणि .... .... 646

स्त्रीधनविभागविषयाणि .... .... 651

स्त्रीधनकृत्यम् .... .... .... 654

स्त्रीद्वाराऽऽगतधनविभागः .... .... 660

गौणपितृद्वाराऽऽगतधनविभागः .... .... 667

अपुत्रद्वाराऽऽगतधनविभागे पत्नीविषयाणि .... 672

,, दुहित्रादिविषयाणि ... 682

संसृष्टभ्रात्रादिविषयाणि .... .... 700

विभक्तजपुत्रादिविभागः .... .... 709

अवलुप्तविभागः .... .... .... 713

पुटसंख्या

विभक्तकृत्यम् .... .... .... 715

विभागतद्धर्मसद्भावनिर्णयहेतवः ... .... ,,

(14) साहसपदम्—

वधलक्षणसाहसविषयाणि .... .... 722

स्तेयविषयाणि .... .... 733

केवलस्तेयविषयाणि .... .... 735

साहसस्त्रीसंग्रहविषयाणि .... .... 740

केवलस्त्रीसंग्रहविषयाणि .... .... 743

उभयपारुष्यविषयाणि .... .... 750

साहसकल्पापराधदण्डविषयाणि ... .... 752

(15) वाक्पारुष्यम्—

वाक्पारुष्यविधिः .... .... 758

(16) दण्डपारुष्यम्—

दण्डपारुष्यविधिः .... ... 761

(17) द्यूतसमाह्वयः—

द्यूतसमाह्वयविधिः .... .... 768

(18) प्रकीर्णकपदम्—

प्रकीर्णकविधिः .... .... .... 770


इति विषयानुक्रमणिका.



## व्यवहारकाण्डस्यास्यादर्शपुस्तकोल्लेखः.

---

| | | | | | |
|---|---|---|---|---|---|
| (1) | लैब्ररि नंबरु (3884) | ग्रन्थाक्षरमयः | समग्रः | शुद्धः | तालपत्रकोशः. |
| (2) | ,, (466) | ,, | पूर्वभागः | ,, | ,, |
| (3) | ,, (452) | ,, | उत्तरभागः | ,, | ,, |
| (4) | ,, (3694) | ,, | अनादिरनन्तश्च | ,, | ,, |

(5) काञ्चीनगरनिवासिनां श्रीमतामाचार्यश्यामदेशिकश्रीशैलताताचार्यमहाशयानां तालपत्रकोशस्समग्रः नातीव शुद्धः.

| | | | | |
|---|---|---|---|---|
| (6) | अडयार्लैब्ररी | तालपत्रकोशः | पूर्वभागः | शुद्धः. |
| (7) | ,, | ,, | ,, | ,, |
| (8) | ,, | कागदमयः | दायभागः | ,, |

एवं पुस्तकाष्टकं निबन्धान्तरीयव्यवहारकाण्डांश्चोपजीव्य पर्यष्क्रियत निखिलकोविदोपादेयः स्मृतिचन्द्रिकाव्यवहारकाण्डः इति शम्.

॥ श्रीः ॥

# स्मृतिचन्द्रिकायां

## व्यवहारकाण्डः.



इदानीं व्यवहारकाण्डमारभ्यते—तत्रादौ व्यवहारस्वरूपं निरूप्यते। तत्र बृहस्पतिः—

धर्मप्रधानाः पुरुषाः पूर्वमासन्नहिंसकाः।
लोभद्वेषाभिभूतानां व्यवहारः प्रकीर्तितः॥

अस्यार्थो नारदेन विवृतः—

धर्मैकतानाः पुरुषाः यदाऽऽसन् सत्यवादिनः।
तदा न व्यवहारोऽभून्न द्वेषो नापि मत्सरः॥
नष्टे धर्मे मनुष्याणां व्यवहारः प्रकीर्तितः।

इति। मनुष्याणां ऋणादानादिविषयका विवादा व्यवहारः प्रकीर्तित इत्यर्थः। तथा च कात्यायनः—

प्रयत्नसाध्ये विच्छिन्ने धर्माख्ये न्यायविस्तरे।
साध्यमूलस्तु यो वादो व्यवहारस्स उच्यते॥

अयमर्थः—'सम्यग्भाषणाहिंसनानिमित्तम्' इत्यादिप्रयत्नसाध्ये धर्माख्ये पदार्थे लोभद्वेषादिवशाद्विच्छिन्ने सति यत्र ऋणा

दानादौ साधनप्राप्त्यर्थं समयधर्मादौ च परधर्मवर्जनार्थं न्यायविस्तरणं क्रियते, तत्र साध्यमूलो यो मनुष्याणां विवादः स व्यवहार उच्यते इति। अत एव हारीतः—

स्वधनस्य यथा प्राप्तिः परधर्मस्य वर्जनम्।
न्यायेन क्रियते यत्र व्यवहारस्स उच्यते—

धनापह्नवविवादः पाषण्डादीनां स्वधर्मसमयविवादोपि व्यवहार इत्यर्थः। न चैवं चौर्यपारुष्यादिविवादो न व्यवहार इति शङ्कनीयम्। यत आह याज्ञवल्क्यः—

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत्॥

इति। कात्यायनोपि—

शिष्यं क्रोधेन हन्याच्चेदाचार्यो लतया विना।
येनात्यर्थं भवेत्पीडा वादस्स्याच्छिष्यतः पितुः॥

बृहस्पतिरपि—

प्रयच्छेच्चेद्भृतिं स्वामी भृत्यानां कर्म कुर्वताम्।
न कुर्वन्ति च भृत्याश्चेत्तत्र वादः प्रवर्तते॥
हिंसां वा कुरुते कश्चिद्देयं वा न प्रयच्छति।
द्वे हि स्थाने विवादस्य तयोर्बहुतरा गतिः॥

उशनाऽपि—

कार्यमुद्दिश्य यत्किञ्चित्क्वचिद्राज्ञे निवेदयेत्।
पदं तदष्टादशधा विवादानां प्रकीर्तितम्॥

एवञ्चाष्टादशविधविषयाणामन्यतमाविषयको विवादो व्यवहार इति याज्ञवल्क्यादिवचनानामार्थिकोऽर्थः प्रत्येतव्यः । अत एव नारदः—

ऋणादानं ह्युपनिधिः सम्भूयोत्थानमेव च ।
दत्तस्य पुनरादानमशुश्रूषाऽभ्युपेत्य च ॥
वेतनस्यानपाकर्म तथैवास्वामिविक्रयः ।
विक्रीयासम्प्रदानं च क्रीत्वाऽनुशय एव च ॥
समयस्यानपाकर्म विवादः क्षेत्रजस्तथा ।
स्त्रीपुंसयोश्च सम्बन्धो दायभागोऽथ साहसम् ॥
वाक्पारुष्यं तथैवोक्तं दण्डपारुष्यमेव च ।
द्यूतं प्रकीर्णकं चैवेत्यष्टादशपदः स्मृतः ॥

ऋणादानाद्यष्टादशविषयान्यतमविषयो व्यवहारः स्मृत इत्यर्थः । न च वाच्यम्—निक्षेपादिपदान्तरव्यवहारस्मरणादष्टादशपदः स्मृत इत्येतद्विरुद्धमिति । यत आह स एव—

एषामेव प्रभेदोऽन्यश्शतमष्टोत्तरं स्मृतम् ।
क्रियाभेदान्मनुष्याणां शतशाखो निगद्यते ॥

इति । कात्यायनोऽपि—

अष्टादशक्रियाभेदाद्भिन्नान्यष्टसहस्रशः ।

इति । क्रियाभेदात् साध्यभेदादित्यर्थः । अनेन व्यवहारा अप्यष्टसहस्रशो भिन्ना इत्यर्थादुक्तम् । शतमष्टोत्तरमष्टसहस्रश इत्येतयोर्बहुत्वप्रतिपादनपरत्वादविरोधः ।

इति स्मृतिचन्द्रिकायां व्यवहारस्वरूपनिरूपणम् ।

अथाष्टादशपदनिरूपणम् ।

तत्र ऋणादानस्य स्वरूपं भेदाश्च केचिन्नारदेन दर्शिताः ।

ऋणं देयमदेयं च येन यत्र यथा च यत् ।
दानग्रहणधर्मश्च ऋणादानमिति स्मृतम् ॥

द्यूतादिकुत्सितेतरकार्यार्थं पित्रादिकृतं ऋणं देयम् । कुटुम्बभरणाद्यावश्यकेतरकार्यार्थं पुत्रादिकृतमृणं देयम् । पुत्रपौत्राद्यधिकारिणां बाल्यापगमनान्तरादिकाले द्वैगुण्यादिप्रकारेण ऋणं देयमिति यत्तत्तत्र, तथा 'बन्धग्रहणादिधनप्रयोगधर्माश्शनैः' इत्यादिप्रयुक्तधनादानधर्माश्च यस्मिन्विवादविषय उक्ताः तत्पदमृणादानमिति स्मृतमित्यर्थः । द्वितीयपदस्यापि स्वरूपं भेदं चाह स एव —

स्वद्रव्यं यत्र विस्रम्भान्निक्षिपत्यविशङ्कितः ।
निक्षेपो नाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥
असङ्ख्यातमविज्ञातं समुद्रं यन्निधीयते ।
तज्जानीयादुपनिधिं निक्षेपं गणितं विदुः ॥

इति । निक्षेपोपनिध्योर्गणितागणितत्वनिबन्धनो भेद इत्यर्थः । अविज्ञातमित्यस्यार्थो बृहस्पतिना प्रपञ्चितः —

अनाख्यातं व्यवहितमसङ्ख्यातमदर्शितम् ।
मुद्राङ्कितं च यद्दत्तं तदौपनिधिकं स्मृतम् ॥

इति । दत्तं परहस्त इति शेषः । तथा च याज्ञवल्क्यः—

भाजनस्थमसङ्ख्यातं हस्ते न्यस्य यदर्प्यते ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥

भाजनं निक्षेप्यस्याधारभूतं करण्डकादिपात्रम् । हस्त इत्युपलक्षणम् । अत एव नारदः—

अन्यद्रव्यव्यवहितं द्रव्यमव्याकृतं च यत् ।
निक्षिप्यते परगृहे तदौपनिधिकं स्मृतम् ॥

यत्र तल्लक्षणरहितं स्थाप्यते तन्न्यासाख्यमित्याह बृहस्पतिः—

राजचोरारातिभयाद्दायादानां च बाधनात् ।
स्थाप्यतेऽन्यगृहे द्रव्यं न्यासस्तत्परिकीर्तितः ॥

इति । कात्यायनस्त्वस्यापवादमाह—

क्रयप्रोषितनिक्षिप्तबन्धान्वाहितयाचितम् ।
वैश्यवृत्त्यर्पितं चैव सोऽर्थस्तूपनिधिस्स्मृतः ॥

क्रयः क्रयधनम् । प्रोषितनिक्षिप्तमित्यत्र प्रोषितग्रहणं प्रवत्स्यत उपलक्षणार्थम् । बन्ध आधिः । अन्वाहितमन्यस्मै दातुमर्पितम् । याचितं परकीयमलङ्काराद्यर्थमानीतम् । वैश्यवृत्त्यर्पितं वृत्त्यर्थमर्पितं कृष्यादिकर्माद्यर्थमन्यस्यार्पितम् । एवमुक्तभेदो निक्षेपादिः पुनर्द्विविध इत्याह नारदः—

स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा ।
प्रतिदानं तथैवास्य प्रत्ययस्स्याद्विपर्यये ॥

भत्ययो दिव्यम् ॥

तथा तृतीयपदस्यापि तेनैव स्वरूपभेदौ दर्शितौ—

वणिक्प्रभृतयो यत्र कर्म सम्भूय कुर्वते ।
तत्संभूयसमुत्थानं व्यवहारपदं स्मृतम् ॥

वणिजो वाणिज्यं, ऋत्विजो यज्ञं, कृषीवलाः कार्षि, हेमकारादयश्शिल्पं, नर्तकादयो नृत्तादिकं, स्तेनाः स्तेयं यत्र संहत्य कुर्वते, तत्संभूय क्रियमाणं वाणिज्यादि सम्भूय समुत्तिष्ठन्ते समेधन्तेऽनेनेति व्युत्पत्त्या सम्भूयसमुत्थानाख्यं व्यवहारपदमित्यर्थः । वणिक्प्रभृतय इत्यनेनैवैते भेदा दर्शिताः । तथा चतुर्थस्यापि पदस्य स्वरूभेदौ तेनैव दर्शितौ—

दत्वा द्रव्यमसम्यग्यत् पुनरादातुमिच्छति ।
दत्ताप्रदानिकं नाम व्यवहारपदं हि तत् ॥

यस्मिन् दाने दत्तं द्रव्यं कर्मकारादिवैगुण्यात् पुनस्सम्प्रदानादपहार्यं तद्दानम् । दत्तस्याप्रदानमस्मिन्विद्यत इति व्युत्पत्त्या दत्ताप्रदानिकाख्यं व्यवहारपदमिति श्रौतोऽर्थः । तथा कर्मकाराद्यवैगुण्याद्दत्तस्यानपाकर्मानपनयनमस्मिन्निति व्युत्पत्त्या दत्तानपाकर्माख्यमपीदमेव पदमित्यार्थिकोऽर्थः । एवं श्रुत्यर्थाभ्यामस्य पदस्य द्वैविध्यमभिधाय पुनर्देयादेयादिकर्मकारकभूतद्रव्यभेदेन चातुर्विध्यमाह स एव—

अथ देयमदेयं च दत्तं चादत्तमेव च ।

व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः ॥

देयमनिषिद्धं दानक्रियायां निर्वर्तकं द्रव्यम् । अदेयं चानिर्वर्तकम् । दत्तं दाने सति सम्प्रदानादनपहार्यम् । अदत्तं चापहार्यमित्येतैर्देयादेयदत्तादत्तैर्दानमार्गो दानप्रकारश्चतुर्विधो व्यवहारेषु विज्ञेय इत्यर्थः । तथाऽनन्तरपदस्यापि स्वरूपभेदावुक्तौ—

अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते ।
अशुश्रूषाऽभ्युपेत्यैतद्विवादपदमुच्यते ॥

यच्छिष्यादिशुश्रूषकस्याङ्गीकृतगुर्वाद्याज्ञाऽकरणं तदभ्युपेत्याशुश्रूषाख्यं विवादपदमित्यर्थः । य इति सामान्यशब्दोक्तशिष्यान्तेवासिभृतककर्मकृद्दासाख्यपञ्चशुश्रूषकवशात् पञ्चविधत्वमस्य पदस्यार्थात्सिद्धमिति न तेन पृथग्भेदो दर्शितः । बृहस्पतिना पुनर्बहुधा भेदा दर्शिताः—

अनेकधा त्वभिहिता जातिकर्मानुरूपतः ।
विद्याविज्ञानकामार्थनिमित्तेन चतुर्विधा ॥
एकैकः पुनरेतेषां क्रियाभेदात्प्रभिद्यते ॥

इति । वेदविद्या हि शिष्यस्य शुश्रूषुकत्वे निमित्तम् । शिल्पविज्ञानमन्तेवासिनः । कामार्थौ भृतकादेः । अनन्तरपदस्य तु स्वरूपभेदौ नारदेनाभिहितौ—

भृत्यानां वेतनस्योक्तो दानादानविधिक्रमः ।
वेतनस्यानपाकर्म तद्विवादपदं स्मृतम् ॥

भृत्यानां भृत्यर्थं कर्म कुर्वतां वेतनस्य भृतेर्दानादानविधि-क्रमः ईदृशस्य देयं ईदृशस्य न देयम्, दत्तमप्येवंविधात् भृत्या-देयं क्वचिद्द्विगुणं देयमित्याद्युक्तं यत्र विवादपदे तद्वेतनस्य भृतेरनपाकर्म अनपनयनमननुरूपकरणं वाऽत्र विद्यते इति व्युत्पत्त्या वेतनानपाकर्माख्यं विवादपदमित्यर्थः । अनेनैव देयादिसाध्यभेदादस्य पदस्यानेकविधत्वमुक्तम् । एवमनन्त-रपदस्याप्याह—

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वाऽपहृत्य वा ।
विक्रीयतेऽसमक्षं यत् स ज्ञेयोऽस्वामिविक्रयः ॥

असमक्षं स्वामिन इति शेषः । तथा च व्यासः—

याचितान्वाहितन्यासं हृत्वा वाऽन्यस्य यद्धनम् ।
विक्रीयते स्वाम्यभावे स ज्ञेयोऽस्वामिविक्रयः ॥

स्वाम्यभावे स्वामिनोऽसन्निधावित्यर्थः । एवमनन्तरपदस्यापि स्वरूपविभागौ द्रष्टव्यौ । तथा च नारदः—

विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते ।
विक्रीयासम्प्रदानं तद्विवादपदमुच्यते ॥

अस्य च पण्यभेदतो भेद इति तद्भेदमाह—

लोकेऽस्मिन् द्विविधं द्रव्यं जङ्गमं स्थावरं तथा ।
क्रयविक्रयधर्मेषु सर्वं तत्पण्यमुच्यते ॥
षड्विधस्तस्य तु बुधैः दानादानविधिस्स्मृतः ।
गणितं तुलितं मेयं क्रियया रूपतः श्रिया ॥

अस्यार्थः—गणितं क्रमुकादि, तुलितं कनकादि, मेयं प्रस्थादिना व्रीह्यादि, क्रियया दोहनादिकया अश्वमहिष्यादि, रूपतः पण्याङ्गनादि, श्रिया कान्त्या रत्नादि। एवमनन्तरपदस्यापि स्वरूपमाह—

क्रीत्वा मूल्येन यः पण्यं क्रेता न बहु मन्यते।
क्रीत्वाऽनुशय इत्येतद्विवादपदमुच्यते॥

न बहु मन्यते न परामर्शपूर्वमिति मन्यत इत्यर्थः। तथाऽनन्तरपदार्थनिरूपणार्थमाह—

पाषण्डनैगमादीनां स्थितिस्समय उच्यते।
समयस्यानपाकर्म तद्विवादपदं स्मृतम्॥

पाषण्डाः क्षपणादयः। नैगमास्सार्थिकाः वणिजः। आदिशब्देन त्रैविद्यब्राह्मणसमूहश्रेणिपूगव्रातगणगुल्मग्रामदेशादयो गृह्यन्ते। तेषां स्थितिः पारिभाषिकधर्मतो व्यवस्था समयः तस्यानपाकर्म अनुल्लङ्घनं यत्तत्समयस्यानपाकर्म। तदन्यथा क्रियमाणं विरुद्धलक्षणयाऽर्थवत्। समयस्यानपाकर्माख्यं विवादपदं स्मृतमित्यर्थः। संविद्व्यतिक्रम इति मुख्यमाख्यान्तरमस्य पदस्य प्रसिद्धत्वान्नोक्तम्।

अनन्तरपदमपि व्याचष्टे—

सेतुकेदारमर्यादाविकृष्टाकृष्टनिश्चयाः।
क्षेत्राधिकारा यत्र स्युर्विवादः क्षेत्रजस्स्मृतः॥

सेतुर्जलप्रवाहबन्धः । केदारः क्षुद्रवास्तुभिः कल्पितो देशः, क्षेत्रमात्रा वा । मर्यादा क्षेत्रादिसीमा । विकृष्टो लाङ्गलादिनोद्भेदितो देशः । अकृष्टः खिलो देशः । तेषां निश्चयाः क्षेत्राधिकाराः क्षेत्रविषया यत्र भवेयुः स क्षेत्रजो विवाद इत्यर्थः । स च षट्प्रकार इत्याह कात्यायनः—

आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च ।
आभोगभुक्तिस्सीमा च षट् भूवादस्य हेतवः ॥

अस्यार्थो विविच्योच्यते—कश्चिद्भूभागमङ्गीकृत्य ततोऽधिका भूरस्ति नेतीति विवाद आधिक्यनिबन्धनः । एतावती भूस्तव नेत्युक्ते ममैतावत्यस्तीत्येवंविधो न्यूनताहेतुकः । अस्यां भुवि ममांशोऽस्तीत्युक्ते नेत्येवंविधोंऽशोऽस्तित्वकारितः । अत्र तवांशो नास्तीत्युक्ते विद्यत इत्येवंविधोंऽशो नास्तित्वनिमित्तकः । मदीया भूस्त्वया प्रागभुज्यमानैवेदानीं भुज्यत इत्युक्ते प्रागपि भुक्तिरस्तीत्येवंविधो भोगभुक्तिबीजकः । इयं मर्यादा मदीया या भुव इत्युक्ते नेत्येवंविधस्सीमासम्भवः । स च यावत्सीमाभेदं भिद्यत इति भेदमाह नारदः—

ध्वजिनी मात्स्यिनी चैव नैधानी भयवर्जिता ।
राजशासननीता च सीमा पञ्चविधा स्मृता ॥

ध्वजिनी वृक्षादिना लक्षिता । मात्स्यिनी जलेन । नैधानी निखातकुष्टादिना । भयवर्जिता वादिनोर्मिथस्सम्प्रतिपत्तितः कृता । राजशासननीता राजेच्छया निर्मिता ।

अथ तेनैवानन्तरपदद्वयस्य निरूपणं संक्षेपेण कृतम्—

विवाहादिविधिः स्त्रीणां यत्र पुंसां च कीर्त्यते ।
स्त्रीपुंसयोगसंज्ञं तद्विवादपदमुच्यते ॥
विभागोऽर्थस्य पित्र्यादेः पुत्रैर्यत्र प्रकल्प्यते ।
दायभाग इति प्रोक्तं व्यवहारपदं बुधैः ॥

उभयत्रादिशब्देन बहुविधो भेदो दर्शितः । पुत्रैरिति दायादोपलक्षणार्थम् । अनन्तरपदत्रयस्य तु प्रपञ्चेनैव निरूपणं कृतम्—

सहसा क्रियते कर्म यत्किंचिद्बलदर्पितैः ।
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥

यत्किञ्चिन्मध्यगधनापहरणादिकमित्यर्थः । तथाच याज्ञवल्क्यः—

सामान्यद्रव्यप्रसभहरणं साहसं स्मृतम् ॥

इति । सामान्यद्रव्यग्रहणं मनुष्यमारणादेरुपलक्षणार्थम् । अत एव बृहस्पतिः—

मनुष्यमारणं चौर्यं परदाराभिमर्शनम् ।
पारुष्यमुभयं चेति साहसं पञ्चधा स्मृतम् ॥

इति । एवमनेकविधत्वमस्य पदस्य यत्किञ्चिच्छब्देन लक्षणश्लोकगतेनोक्त्वा पुनस्त्रैविध्यमाह नारदः—

तत्पुनस्त्रिविधं ज्ञेयं प्रथमं मध्यमं तथा ।
उत्तमं चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥

लक्षणमपि प्रपश्चितं तेन—

फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
भङ्गाक्षेपोपमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥
वासःपक्वान्नपानानां गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥
व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् ।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥

इति । विविधानामापदां विषादिभिरापादनं व्यापादनम् ॥ तथा वाक्पारुष्यस्य स्वरूपमाह—

देशजातिकुलादीनामाक्रोशन्यङ्गसंयुतम् ।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते ॥

यद्वचनं देशाद्याक्षेपार्थबोधकं, यच्चात्यन्तदुःखकरार्थकं तद्वाक्पारुष्यम् । तदपि त्रिविधमित्याह—

निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम् ।

इति । निष्ठुरादीनां स्वरूपमाह—

साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंयुतम् ।
पतनीयैरुपक्रोशैः तीव्रमाहुर्मनीषिणः ॥

धिङ्मूर्खजाल्मेत्यादि साक्षेपम् । न्यङ्गं भगिनीसम्बन्धाद्यवद्यम् । पतनीयैः सुरापोसीत्यादिभिः । तथाच कात्यायनः—

यत्त्वसत्संज्ञितैरङ्गैः परमाक्षिपति क्वचित् ।
अभूतैर्वाऽथ भूतैर्वा निष्ठुरा वाक् स्मृता बुधैः ॥

न्यग्भावकरणं वाचा क्रोधात्तु कुरुते यदा ।
वृत्तेर्देशकुलादीनामश्लीला सा बुधैः स्मृता ॥
महापातकयोक्त्री च रागद्वेषकरी च या ।
जातिभ्रंशकरी वाऽथ तीव्रा सा प्रथिता तु वाक् ॥

बृहस्पतिस्त्वत्रापि साहसवत् प्रथममध्यमोत्तमभेदेन त्रैविध्यमाह–

देशग्रामकुलादीनां क्षेपः पापेन योजनम् ।
द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते ॥
भगिनीमातृसम्बन्धमुपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्यापेयकथनं महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनम् ॥

इति । द्रव्यं विना द्रव्यवैशिष्ट्यं विनेत्यर्थः । कात्यायनस्त्वन्यानपि वाक्पारुष्यभेदानाह—

हुङ्कारः कासनं चैव लोके यच्च विगर्हितम् ।
अनुकुर्यादनुब्रूयाद्वाक्पारुष्यं तथोच्यते ॥
योऽगुणान् कीर्तयेत्क्रोधान्निर्गुणे वा गुणज्ञताम् ।
अन्यसंज्ञानुयोगी वा वाग्दुष्टं तं नरं विदुः ॥

इति । व्यासस्तु दण्डपारुष्यस्वरूपमाह—

भस्मादीनां प्रक्षिपणं मोडनं च करादिना ।
आवेष्टनं चांशुकाद्यैर्दण्डपारुष्यमुच्यते ॥

बृहस्पतिरपि—

हस्तपाषाणलगुडैर्भस्मकर्दमपांसुभिः ।
आयुधैश्च प्रहरणं दण्डपारुष्यमुच्यते ॥

प्रहरणं परगात्रेष्विति शेषः । तथाच नारदः—

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥

परगात्रेषु स्थावरजङ्गममूर्तिषु । दण्डो द्रोहः । पारुष्यं निष्ठुरता । एतदपि पदं त्रिविधमित्याह स एव—

तस्यापि दृष्टं त्रैविध्यं हीनमध्योत्तमक्रमात् ।
अवगूरणनिश्शङ्कपातक्षतजदर्शनैः ॥

हीनमध्यमोत्तमानां तु द्रव्याणां समतिक्रमादिति कर्तुर्व्यापारतारतम्यात्, कर्मीभूतद्रव्यवैशिष्टयतारतम्याच्च प्रथममध्यमोत्तमभावेन त्रैविद्यमित्यर्थः । ननु—पारुष्यद्वयस्य साहसविशेषत्वात् पदान्तरत्वेनोक्तिरयुक्ता, मैवम्, सहसा क्रियमाणस्य साहसविशेषत्वं छलेन पुनः क्रियमाणस्य पदान्तरत्वमेव, साहसलक्षणाभावात् । तथाचोक्तं तेनैव—

तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र तूच्यते ।
आधिस्साहसमाक्रम्य स्तेयमाधिः छलेन तु ॥

आधिः क्लेशः, स आक्रम्यार्थहरणद्वारा क्रियमाणः साहसम् । छलेन पुनरर्थग्रहणद्वारा क्रियमाणं स्तेयमित्यर्थः । ननु अनेन स्तेयस्य भेद उक्तो न पारुष्यस्य । सत्यं, अपृथगुद्दे

ष्टस्यापि भेद उक्ते पृथगुद्दिष्टस्य सुतरामेव भेदो लक्ष्यत इति स्ते-यमात्रस्योक्त इत्यविरोधः । अतः पदान्तरत्वेनाप्युक्तिर्युक्तैव ।

अत एव सङ्ग्रहकारः—

मनुष्यमारणादीनि क्रियन्ते प्रसभं यदि ।
साहसानीति कथ्यन्ते यथाख्यान्यन्यथा पुनः ॥

अन्यथा पुनर्यद्यप्रसभं कृतानि तदा यथाख्यानि स्तेयस्त्रीसङ्ग्रहणवाक्पारुष्यदण्डपारुष्याख्यानीत्यर्थः । नन्वेवं स्त्रीस्तेयसङ्ग्रहणयोरपि साहसात् पृथगुद्देशनं कार्यम् । सत्यम्, तत एवमनुना

स्तेयं च साहसं चैव स्त्रीसंग्रहणमेव च ॥

इति पृथगुद्दिष्टम्। नारदेन तु तयोश्छलेनैव क्रियमाणत्वात् पदान्तरत्वं स्फुटमेवेति साहसान्तर्भाव एवोद्देशदशायां दर्शितः। पारुष्यद्वयस्य तु प्रायेण प्रसभं क्रियमाणत्वात् पदान्तरत्वमव्यक्तमिति पृथगप्युद्देशः कृत इति सर्वमनवद्यम्। स्तेयस्य साहसात् भेदमुक्त्वा त्रैविध्यमप्युक्तं नारदेन—

तदपि त्रिविधं ज्ञेयं द्रव्यापेक्षं मनीषिभिः ।
क्षुद्रमध्योत्तमानां तु द्रव्याणामपहारतः ॥

क्षुद्रादिद्रव्याण्यपि तेनैव दर्शितानि—

मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादि यत् ।
शमीधान्यं कृतान्नं च क्षुद्रद्रव्यमुदाहृतम् ॥
वासः कौशेयवर्जं तु गोवर्जं पशवस्तथा ।

हिरण्यवर्जं लोहं च मध्यं व्रीहियवादि च ॥
हिरण्यरत्नकौशेयस्त्रीपुंगोगजवाजिनाम् ।
देवब्राह्मणराज्ञां च विज्ञेयं द्रव्यमुत्तमम् ॥
उपायैर्विविधैरेषां वञ्चयित्वाऽपकर्षणम् ।
सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः ॥

इति। शमीधान्यं कोशवेष्टितं माषमुद्गादि । कौशेयं क्रिमिकोशजाततन्तुनिर्मितम् । स्त्रीसङ्ग्रहणस्य तु त्रैविध्यमाह बृहस्पतिः—

पापमूलं संग्रहणं त्रिप्रकारं निबोधत ।
बलोपाधिकृते द्वे तु तृतीयमनुरागजम् ॥

सङ्ग्रहणं परस्त्रिया सह पुरुषस्य सम्बन्धः । तथाच नारदः—

परस्त्रिया सहाकालेऽदेशे वा पुरुषस्य तु ।
स्थानसंभाषणामोदास्त्रयस्संग्रहणक्रमाः ॥

इति । स्वोक्तत्रिप्रकारलक्षणमाह बृहस्पतिः—

अनिच्छन्त्या यत्क्रियते सुप्तोन्मत्तप्रमत्तया।
प्रलपन्त्या वा रहश्च बलात्कारकृतं तु तत् ॥
छद्मना गृहमानीय दत्वा वा मद्यकार्मणम् ।
संयोगः क्रियते यस्यां तत्तूपाधिकृतं विदुः ॥
अन्योन्यचक्षूरागेण दूतीसंप्रेषणेन वा ।
कृतं रूपार्थलोभेन ज्ञेयं तदनुरागजम् ॥

कार्मणं वशीकरणम् । तथा प्रथममध्यमोत्तमभावेनापि त्रैविध्यलक्षणमाह स एव—

तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमोत्तमम् ।
अपाङ्गावेक्षणं हास्यं दूतीसंप्रेषणं तथा ॥
स्पर्शो भूषणवस्त्राणां प्रथमस्संग्रहः स्मृतः ।
प्रेषणं गन्धमाल्यानां धूपमध्वन्नवाससाम् ॥
संभाषणं रहसि च मध्यमं संग्रहं विदुः ।
एकशय्यासनक्रीडाचुम्बनालिङ्गनं तथा ॥
एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः ।

इति । व्यासोपि—

सङ्ग्रहस्त्रिविधो ज्ञेयः प्रथमो मध्यमस्तथा ।
उत्तमश्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥
अदेशकालसंभाषा निर्जने च परस्त्रिया ।
कटाक्षावेक्षणं हास्यं प्रथमस्संग्रहः स्मृतः ॥
प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् ।
प्रलोभनं चान्नपानैर्मध्यमस्सङ्ग्रहः स्मृतः ॥
शय्यासनं विविक्ते तु परस्परमुपाश्रयः ।
केशाकेशिग्रहैश्चैव ज्ञेय उत्तमसङ्ग्रहः ॥

विविक्ते रहसि । केशाकेशिग्रहैः परस्परकेशग्रहणपूर्वकक्रीडाभिः । कात्यायनोपि संग्रहभेदानाह—

दूतोपचारयुक्तश्चेदवेलास्थानसंस्थितिः ।
कण्ठकेशाञ्चलग्राहः कर्णनासाकरादिषु ॥

एकस्थानासनाहाराः संग्रहो नवधा स्मृतः ।

अञ्चलं वस्त्रप्रान्तम् । तथा—

परस्त्रियाऽभिभाषेत तीर्थेऽरण्ये गृहेऽपि वा ।
नदीनां चैव संभेदे स सङ्ग्रहणमाप्नुयात् ॥

सम्भेदस्सङ्गमः । तथा—

उपकाराक्रिया केळिः स्पर्शो भूषणवाससाम् ।
सहखट्वासनं चैव सर्वं संग्रहणं स्मृतम् ॥

उपकाराक्रिया ताम्बूलादिदानेनोपकारकरणम् । केळिः परिहासः । तथा च—

स्त्रियं स्पृशेददेशे यः स्पृष्टो वा मर्षयेत्तया ।
परस्परस्यानुमते सर्वं सङ्ग्रहणं स्मृतम् ॥

अदेशः स्तनादिप्रदेशः । नारदोपि—

पाणौ यां च निगृह्णीयात् वेण्यां वस्त्राञ्चलेऽपि वा ।
तिष्ठतिष्ठेति वा ब्रूयात्सर्वं संग्रहणं स्मृतमिति ॥

तथा द्यूतसमाह्वयाख्यस्यापि पदस्य स्वरूपभेदबोधनार्थमाह स एव—

अक्षवर्ध्र[1]शलाकाद्यैः देवनं जिह्मकारितम् ।
पणक्रीडावयोभिश्च पदं द्यूतसमाह्वयम् ॥

वर्ध्रः चर्ममयपट्टिका । आद्यशब्देन कपर्दिकादयो गृह्यन्ते । अक्षादिभिः पणपूर्वकं देवनं क्रीडनं जिह्मकारितं कौटिल्येन कृतं

[1] अक्षब्रध्न इति पाठान्तरम्.

यत् तत् द्यूताख्यम् । तथा वयोभिः कुक्कुटादिभिः पणपूर्वकं देवनं समाह्वयाख्यम् । तद्द्वयं मिलितं द्यूतसमाह्वयाख्यमेकमेव पदमित्यर्थः । वयोग्रहणं प्राण्युपलक्षणार्थम् । अत एव मनुः—

अप्राणिभिर्यत्क्रियते तल्लोके द्यूत उच्यते ।
प्राणिभिः क्रियमाणस्तु स विज्ञेयस्समाह्वयः ॥

बृहस्पतिरपि—

अन्योन्यं परिगृहीताः पक्षिमेषवृषादयः ।
प्रहरन्ते कृतपणाः तद्वदन्ति समाह्वयम् ॥

इति । प्रकीर्णकस्य लक्षणाभेदौ तु नारदेनोक्तौ—

प्रकीर्णके पुनर्ज्ञेया व्यवहारा नृपाश्रयाः ।
राज्ञामाज्ञाप्रतीघातः तत्कर्मकरणं तथा ॥
पुरप्रधानसंभेदः प्रकृतीनां तथैव च ।
पाषण्डिनैगमश्रेणीगणधर्मविपर्ययाः ॥
पितापुत्रविवादश्च प्रार्याश्चत्तव्यतिक्रमः ।
प्रतिग्रहविलोपश्च लोप आश्रमिणामपि ॥
वर्णसङ्करदोषश्च तद्वृत्त्यनियमस्तथा ।
न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात्प्रकीर्णकम् ।

इति । नृपेण यद्यत्स्वाज्ञाव्यतिक्रमादौ प्रतिवादित्वमास्थाय निर्णेतव्यम्, यच्च ऋणादानादिपूर्वोक्तपदेषु नोक्तम्, तत्सर्वं प्रकीर्णकाख्यं पदमित्यर्थः । बृहस्पतिः—

कुसीदनिध्याधेयाख्यं संभूयोत्थानमेव च ।
भृत्यादानमशुश्रूषा भूवादोऽस्वामिविक्रयः ॥
क्रयाविक्रयानुशयः समयातिक्रमस्तथा ।
स्त्रीपुंसयोगः स्तेयं च दायभागोऽक्षदेनवम् ॥
एतान्यर्थसमुत्थानि पदानि तु चतुर्दश ।
पुनरेवं प्रभिन्नानि क्रियाभेदादनेकधा ॥
पारुष्ये द्वे वधश्चैव परस्त्रीसङ्ग्रहस्तथा ।
हिंसोद्भवानि चत्वारि पदान्याह बृहस्पतिः ॥
हीनमध्योत्तमत्वेन प्रभिन्नानि पृथक्पृथक् ।
विशेष एषां निर्दिष्टः चतुर्णामप्यनुक्रमात् ॥
पदान्यष्टादशैतानि धर्मशास्त्रोदितानि तु ।
मूलं सर्वविवादानां ये विदुस्ते परीक्षकाः ॥

इति स्मृतिचान्द्रिकायामष्टादशपदनिरूपणम्

## अथ व्यवहारभेदाः

उक्तं स्वरूपान्तर्गतविषयभेदतो व्यवहारस्य बहुविधत्वम् । अथ तस्यैवेदानीं पणादिवशात् भेदः प्रतिपाद्यते । अत्र याज्ञवल्क्यः—

सपणश्चेद्विवादस्स्यात्तत्र हीनं तु दापयेत् ।

इति । पराजिते मयैतावत् राज्ञे दीयत इति दर्पवशादभ्युपगतं धनं पणं तेन सहितः सपणः । चेच्छब्दादपणोपि, तेन द्विविधो व्यवहारः । तथा चोक्तं नारदेन—

सोत्तरोऽनुत्तरश्चेति स विज्ञेयो द्विलक्षणः ।
सोत्तरोऽभ्याधिको यत्र विलेखापूर्वकः पणः ॥

प्रतिज्ञाविलेखनात्पूर्वं यत्र व्यवहारे दण्डादभ्यधिकः पण उभाभ्यामुपेयते अन्यतरेण वा स सोत्तरो व्यवहार इत्यर्थः। तथाऽन्येऽपि भेदास्तेनोक्ताः—

स चतुष्पाच्चतुस्स्थानः चतुस्साधन एव च ।
चतुर्हितश्चतुर्व्यापी चतुष्कारी च कीर्त्यते ॥
अष्टाङ्गोऽष्टादशपदः शतशाखस्तथैव च ।
त्रियोनिर्द्व्यभियोगश्च द्विद्वारो द्विगतिस्तथा ॥

इति। स्वयमेव चैतान् प्रकारान् व्याचष्टे—

धर्मश्च व्यवहारश्च चरित्रं राजशासनम् ।
चतुष्पाद्व्यवहारोऽयं उत्तरः पूर्वबाधकः ॥

ननु—प्रतिज्ञोत्तरप्रमाणनिर्णयानां व्यवहारपदत्वं न धर्मादीनामिति किमिदमुक्तम्? उच्यते—निर्णयपादो धर्माद्यनुसारेण चतुर्विधः। तत्र यदनुसारेण यो निर्णयः सः तच्छब्देन निर्दिश्यते। तेन धर्मादिभिरपि चतुष्पात्त्ववर्णनं युक्तमेव। तथाच बृहस्पतिः—

धर्मेण व्यवहारेण चरित्रेण नृपाज्ञया ।
चतुष्प्रकारोऽभिहितस्सन्दिग्धेऽर्थे विनिर्णयः ॥

चतुर्विधानामपि निर्णयानां लक्षणमाह कात्यायनः—

दोषकारी तु कर्तृत्वं धनस्वामी स्वकं धनम् ।
विवादे प्राप्नुयाद्यत्र धर्मेणैव स निर्णयः ॥

दोषो हिंसादिः । कर्तृत्वं तत्कारित्वम् ।

स्मृतिशास्त्रं तु यत्किंचित् प्रथितं धर्मसाधकैः ।
कार्याणां निर्णयार्थे तु व्यवहारः स्मृतो हि सः॥

धर्मशास्त्रनिरूपितप्रतिज्ञोत्तराद्यनुसारेण निर्णयो व्यवहाराख्य इत्यर्थः ।

यद्यदाचर्यते येन धर्म्यं वाऽधर्म्यमेव वा ।
देशस्याचरणान्नित्यं चरित्रं तत्प्रकीर्तितम् ॥

तदनुसारीतिं निर्णयोपि तथैव प्रकीर्तित इत्यर्थः ।

न्यायशास्त्राविरोधेन देशदृष्टेस्तथैव च ।
यं धर्मं स्थापयेद्राजा न्याय्यं तद्राजशासनम् ॥

अस्यायमर्थः— मानान्तराविरुद्धो राजबुद्धिमात्रपरिकल्पितो निर्णयो राजशासनमित्युच्यते इति । अत्रैकैकप्रकारस्य पुनश्च द्वैविध्यमाह बृहस्पतिः—

एकैको द्विविधः प्रोक्तः क्रियाभेदान्मनीषिभिः ।

इति । द्वैविध्यमपि तेनैव दर्शितम्—

सम्यग्विचार्य कार्यं तु युक्त्या संपरिकल्पितम् ।
परीक्षितं च शपथैः स ज्ञेयो धर्मनिर्णयः ॥
प्रतिवादी प्रपद्येत यत्र धर्मस्स निर्णयः ।
दिव्यैर्वा शोधितस्सम्यक् द्वितीयस्स उदाहृतः ॥

सह तत्त्वानुसरणेन कृतः प्रथमो धर्माख्यनिर्णयः । विना तत्त्वानुसरणं सत्योत्तरेण वा दिव्यप्रमाणेन वा कृतो द्वितीय इत्यर्थः ।

प्रमाणनिश्चितो यस्तु व्यवहारस्स उच्यते ।
वाक्छलानन्तरत्वेन द्वितीयः परिकीर्तितः ॥

प्रमाणमत्र मानुषं विवक्षितम् । दिव्यनिश्चितस्य धर्मनिर्णय-कोटित्वात् ।

अनुमानेन निर्णीतं चरित्रमिति कथ्यते ।
देशास्थित्या द्वितीयस्तु शास्त्रविद्भिरुदाहृतः ॥

अनुमानमुल्काहस्तादि लिङ्गम् ।

प्रमाणरहितो यस्तु राजाज्ञानिर्णयः स्मृतः ।
शास्त्ररीत्यविरोधेन तथा चान्यः प्रकीर्तितः ॥

इति । प्रमाणरहित इत्यस्यार्थो व्यासेन प्रपञ्चितः—

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम् ।
अनुमानं विदुर्हेतुं तर्कश्चेति मनीषिणः ॥
देशस्थितिः पूर्वकृता चरित्रं समुदाहृतम् ।
अर्थानुरूपाश्शपथाः स्मृत्यस्सत्यपदादयः ॥
तेषामभावे राजाज्ञां निर्णयं तु विदुर्बुधाः ।

इति । नन्वेवं तर्हि— 'उत्तरः पूर्वबाधकः' इति नारदवचन-मसम्बद्धं, तत्त्वार्थानुगुण्यातिशयेन पूर्वस्यैवोत्तरबाधकत्वात्,

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।

इति याज्ञवल्क्येनोक्तत्वाच्च, उच्यते–सत्यम्, उत्सर्गतस्सर्वत्रैवं, क्व-चिद्विषये तूत्तरः पूर्वबाधको भवत्येव । तद्विषयं च नारदवचनम् । तथाहि—यदा केनचिद्विशिष्टेन राजन्यादिना मोहात्कथञ्चित्

राजदारादेः स्पर्शनादिकं कृतम्, कृत्वा च स्वप्राणभयान्मिथ्या करोति साक्षिणश्च सन्ति ते च राज्ञा पृष्टास्सन्तो वधोऽस्य माभूदिति नायमस्य कर्मणः कर्तेति मिथ्यासाक्ष्यं ब्रूयुः तदा दोषकारिणस्तत्कर्तृत्वाप्राप्तेर्धर्मो व्यवहारेण बाध्यते। युक्तं चात्र धर्मबाधनं 'वर्णिनां तु वधो यत्र' इति साक्षिणां मिथ्याभिधानविधानात्। यदा पुनः परदाराभिगमनं कृतमनेन साक्षिणो विद्यन्त इति कश्चिदाभीरादिः केनचिदभियुक्तो ब्रूते—सत्यमेतत् साक्षिभाषितं तथाऽपि नाहं दण्ड्यः चरित्रबलान्मयैतत्कृतम्। निवेशितं च पुस्तके राज्ञा तदिति चरित्रेण व्यवहारो बाध्यते, व्यवहारतः प्राप्तस्य दण्डस्य चरित्रतो निवृत्तत्वात्। युक्तं चात्र चरित्रेण बाधनम्—

ग्रामगोष्ठपुरश्रेणीसार्थसेनानिवासिनाम्।
व्यवहारश्चरित्रेण निर्णेतव्यो बृहस्पतिः॥

इति वचनात्। चरित्रमपि क्वचिद्राजाज्ञया बाध्यते—कुलगृहाभ्यन्तरे न केनचिद्राजपुरुषेण प्रवेष्टव्यमिति चरित्रमीदृशं कृतम्। ततो राज्ञा कश्चिदपराधी गृहं प्रविष्टो ज्ञातः, ततो राज्ञा कश्चिद्राजपुरुष आज्ञप्तः गृहाभ्यन्तरमपि प्रविश्य स दुष्ट आनेतव्य इति तदा चरित्रमपि राजशासनेन बाध्यते। दुष्टनिग्रहस्यावश्यकत्वेन चरित्रतो राजशासनस्य बलीयस्त्वात्। एवंविधमेव विषयं मनसि निधाय बृहस्पतिनाऽप्युक्तम्—

शास्त्रं केवलमाश्रित्य क्रियते यत्र निर्णयः।
व्यवहारस्स विज्ञेयः धर्मस्तेनापहीयते॥

देशस्थित्याऽनुमानेन नैगमानुगतेन च ।
क्रियते निर्णयस्तत्र व्यवहारस्तु बाध्यते ॥
विहाय चरिताचारं यत्र कुर्यात् पुनर्नृपः ।
निर्णयं सा तु राजाज्ञा चरित्रं बाध्यते तया ॥

इति । प्रकृतमुच्यते—चतुस्स्थानव्याख्यानार्थमाह—

तत्र सत्ये स्थितो धर्मो व्यवहारस्तु साक्षिषु ।
चरित्रं पुस्तकरणे राजाज्ञायां तु शासनम् ॥

साक्षिग्रहणं धर्मशास्त्रस्थदिव्यतरप्रमाणस्य चोपलक्षणार्थम् । पुस्तकरणं लेख्यम् ।

चतुस्साधनमाह—

सामाद्युपायसाध्यत्वाच्चतुस्साधन उच्यते ।

विप्रतिपन्नार्थिप्रत्यर्थिनोस्सामाद्युपायसाध्यत्वादिसभिप्रायः ।

चतुर्हितमाह---

चतुर्णामाश्रमाणां तु रक्षणाच्च चतुर्हितः ।

आश्रमग्रहणं वर्णानामपि प्रदर्शनार्थम् ।

चतुर्व्यापिनमाह—

कर्तॄंस्तथा साक्षिणश्च सभ्यान्राजानमेव च ।
व्याप्नोति पादशो यस्माच्चतुर्व्यापी ततस्स्मृतः ॥

सम्यगसम्यक् दृष्टो धर्माधर्मफलेन कर्त्रादीन् पादशो व्याप्नोतीत्यर्थः ।

चतुष्कारिणमाह—

धर्मस्यार्थस्य यशसो लोकसक्तेस्तथैव च ।
चतुर्णां करणादेषां चतुष्कारी प्रकीर्त्यते ॥

लोकसक्तिः लोकानुरागः ।

अष्टाङ्गमाह—

राजा सपुरुषास्सभ्याः शास्त्रं गणकलेखकौ ।
हिरण्यमग्निरुदकमष्टाङ्गं समुदाहृतम् ॥

एतेषां तूपयोगमुपरिष्टाद्वक्ष्यामः । अष्टादशपदशतशाखयोर्व्याख्यानं पूर्वप्रकरणयोर्दर्शितमिहानुसंधेयम् ।

त्रियोनिमाह—

कामात्क्रोधाच्च लोभाच्च त्रिभ्यो यस्मात्प्रवर्तते ।
त्रियोनिः कीर्त्यते तेन त्रयमेतद्विवादकृत् ॥

यथासम्भवं सर्वत्रेति शेषः ॥

द्व्यभियोगमाह—

द्व्यभियोगस्तु विज्ञेयः शङ्कातत्वाभियोगतः ।

अत्रैवोदाहरणमाह—

शङ्काऽसतां तु संसर्गात्तत्त्वं होढादिदर्शनात् ।

कितवस्तेनाद्यसद्भिस्संसर्गात् साधावपि स्तेयादिशङ्का भवति । होढादिदर्शनमपहृतैकदेशादिलिङ्गोपलम्भः, प्रत्यक्षदर्शनं वा । उदाहरणमात्रमसतां संसर्गस्सतामप्याढ्यानां संसर्गे सति निक्षे-

पादिशङ्कासम्भवात् । अतो नैतल्लक्षणं शङ्काभियोगस्य ॥

द्विद्वारमाह—

पक्षद्वयाभिसम्बन्धात् द्विद्वारस्समुदाहृतः ।
पूर्ववादस्तयोः पक्षः प्रतिपक्षस्तदुत्तरः ॥

वाद इति शेषः । द्वारं कार्यारम्भप्रवृत्तिः ॥

द्विगतिमाह—

भूतच्छलानुसारित्वात् द्विगतिस्समुदाहृता ।
भूतं तत्त्वार्थसंयुक्तं प्रमादाभिहितं छलमिति ॥

हारीतोपि कांश्चिद्भेदानाह—

एकमूलो द्विरुत्थानो द्विस्कन्धो द्विफलस्तथा ॥

इति । कात्यायनस्त्वेतान्व्याचष्टे—

साध्यवादस्य मूलं स्याद्वादिना यन्निवेदितम् ।
देयाप्रदानं हिंसा चेत्युत्थानद्वयमुच्यते ॥
धर्मशास्त्रार्थशास्त्रे तु स्कन्धद्वयमुदाहृतम् ।
जयश्चैवावसायश्च द्वे फले समुदाहृते ॥

इति । अवसायः पराजयः ।

तथाऽन्योपि भेदस्तेनैव दर्शितः—

पूर्वपक्षश्चोत्तरश्च प्रत्याकलितमेव च ।
क्रियापादश्च तेनायं चतुष्पात्समुदाहृतः ॥

इति । प्रत्याकलितमुत्तराङ्गीकारानन्तरमपि विवदमानयोः कस्य अत्र क्रियोपन्यसनं न्याय्यमिति प्राड्विवाकादीनां विमर्शनम् ।

क्रिया लिखितादिप्रमाणं, तन्निर्देशः क्रियापादः। विवादात्मक-व्यवहारपर्यवसानभागतया प्रत्याकलितक्रिययोरपि व्यवहारत्वा च्चतुष्पात्समुदाहृत इत्युक्तम् ॥

अत एव सङ्ग्रहकारेणापि पर्यवसानभागस्यापि व्यव हारत्वमुक्तम्—

परस्परं मनुष्याणां स्वार्थविप्रतिपत्तिषु।
वाक्यान्न्याय्यव्यवस्थानं व्यवहार उदाहृतः ॥

इति। केचित्—उपन्यस्ते प्रमाणे प्रमाणाभावशङ्कापनोदकं जयपराजयनिर्णयफलकं विमर्शनं प्रत्याकलितमाहुः। तन्मते पाद-सङ्ख्यैव हि विवक्षिता, न तु क्रमः। प्रत्याकलितपादस्य तुरीयत्वापातात्। यत्तु याज्ञवल्क्येनोक्तम्—

तत्सिद्धौ सिद्धिमाप्नोति विपरीतमतोऽन्यथा।

इति। तत्रापि सिद्धिशब्देन सिद्धिफलकं प्रत्याकलितमुच्यते। न पुनर्जयपराजयावधारणरूपम्, तस्य संप्रतिपत्त्युत्तरेऽपि सत्त्वात्, द्विपात्संप्रतिपत्तिष्विति वचनविरोधप्रसङ्गात्। तस्मात्तत्कात्यायनवचनसमानार्थतैव याज्ञवल्कीयस्य। अन्ये पुनरस्य वचनस्य—

भाषोत्तरक्रियासाध्यसिद्धिभिः क्रमवर्तिभिः।
आक्षिप्तचतुरंशस्तु चतुष्पादभिधीयते ॥

इति स्मृत्यन्तरवचनेन समानार्थतां वर्णयन्ति। संप्रतिपत्त्यु त्तरे तु साधनानिर्देशात्, प्रतिज्ञातार्थस्य असाध्यत्वाच्च न

साध्यसिद्धिलक्षणः पादोऽस्तीति द्विपात्संप्रतिपत्तिष्विति वचनविरोधोपि नास्तीति च वदन्ति।

अत्र मते पादक्रमोपि स्मृत्यन्तरे दर्शितः—

भाषापादस्तु तत्राद्यो द्वितीयश्चोत्तरस्तथा।
क्रियापादस्तथा चान्यः चतुर्थो निर्णयः स्मृतः ॥

इति। इति स्मृतिचन्द्रिकायां व्यवहारभेदाः.

अथ निर्णेतृनिर्णयः

अत्र बृहस्पतिः—

एकस्त्वनेकधा प्रोक्तो व्यवहारो मनीषिभिः।
तस्य निर्णयकृद्राजा ब्राह्मणश्च बहुश्रुतः ॥

इति। ब्राह्मणः प्राड्विवाकाख्यः। तथाच स एव—

विवादे पृच्छति प्रश्नं प्रतिप्रश्नं तथैव च।
प्रियपूर्वं प्राग्वदति प्राड्विवाकस्ततस्तु सः ॥

इति। पूर्वोत्तरपक्षौ पृच्छतीति प्राट्। निर्णयं च विशेषेण वक्तीति विवाक इति यौगिकी तस्य सञ्ज्ञेत्यर्थः।

नारदेनापि ब्राह्मणे बहुश्रुतत्वं प्रपञ्चयता विधानान्तरेण इयं संज्ञा दर्शिता—

अष्टादशपदाभिज्ञः तद्भेदाष्टसहस्रवित्।
आन्वीक्षक्यादिकुशलः श्रुतिस्मृतिपरायणः ॥
विवादसंश्रुतं धर्मं पृच्छति प्रकृतं मतम्।
विवेचयति यस्तस्मात्प्राड्विवाकस्तु स स्मृतः ॥

इति । एवमुभाभ्यामपि यौगिक्याख्योक्स्यैवार्थादस्य कार्य-मप्युक्तम् ।

उक्तं च साक्षादपि नारदेन—

यथा शल्यं भिषक्कायादुद्धरेद्यन्त्रयुक्तितः ।
प्राड्विवाकस्तथा शल्यमुद्धरेद्व्यवहारतः ॥

इति । ब्राह्मणश्चेति चशब्दो निर्णेत्रन्तरसमुच्चयार्थः ।

अत एव मनुः—

येषु स्थानेषु भूयिष्ठं विवादं चरतां नृणाम् ।
धर्मं शाश्वतमाश्रित्य कुर्युस्तेषां विनिर्णयम् ॥

इति । येषु स्थानेष्वष्टादशपदेष्वित्यर्थः ।

कात्यायनोपि—

सप्राड्विवाकस्सामात्यः सब्राह्मणपुरोहितः ।
ससभ्यः प्रेक्षको राजा स्वर्गे तिष्ठति धर्मतः ॥

इति । प्राड्विवाकः पूर्वोक्तलक्षणः तेन सह वर्तमानः सप्राड्विवाकः । एवं सामात्य इत्यादावपि वक्ष्यमाणसङ्ख्यानुसारेण विग्रहः ।

अमात्यस्य पुनर्लक्षणमुक्तं व्यासेन—

सर्वशास्त्रार्थवेत्तारमलुब्धं न्यायभाषिणम् ।
विप्रं प्राज्ञं क्रमायातममात्यं स्थापयेद्द्विजम् ॥

इति । सत्यापि विप्रग्रहणे पुनर्द्विजग्रहणमुक्तलक्षणान्वितविप्राभावे

तल्लक्षणं क्षत्रियं वैश्यं वाऽमात्यं स्थापयेत् । न तु शूद्रमिति दर्शयितुम् ।

यत आह स एव—

द्विजान्विहाय यः पश्येत्कार्याणि वृषलैस्सह ।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोशं च नश्यति ॥

इति । अमात्यमित्येकवचनमुपलक्षणमात्रं उद्देश्यगतत्वात्,

मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम् ।

इति मनुना बहुभिर्मन्त्रिभिस्सह सभाप्रवेशविधानाच्च । मन्त्रज्ञैरिति विशेषणोपादानं कार्यदर्शनोपयोगिमन्त्रालोचकत्वेन तेषामस्त्यत्रोपयोग इति प्रतिपादयितुम् ।

तथा ब्राह्मणेऽपि बहुत्वमुक्तं तेनैव—

व्यवहारादिदृक्षुस्तु ब्राह्मणैस्सह पार्थिवः ।

इति पूर्वार्धेन । ब्राह्मणैर्विद्वद्भिरिति शेषः ।

तथाच याज्ञवल्क्यः—

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैस्सह ।

इति । यद्यप्येषां विद्वत्तया ब्राह्मणत्वबहुत्वाभ्यां सभायां च साधुत्वेन सर्वेभ्यो न भेदः । तथाऽप्यनियुक्तत्वेन तेभ्यो भेदो व्यवसेयः । ते हि नियुक्ताः ।

अत एव वासिष्ठः—

नियुक्तो वाऽनियुक्तो वा धर्मज्ञो वक्तुमर्हति ।
दैवीं वाचं स वदति यश्शास्त्रमुपजीवति ॥

यत्तु नारदेनोक्तम्—

नानियुक्तेन वक्तव्यं व्यवहारे कथंचन ।
नियुक्तेन तु वक्तव्यमपक्षपतितं वचः ॥

इति । तद्यदृच्छया कार्यान्तरवशाद्वा आगतानियुक्तविषयम् । अन्यथा पूर्वोक्तवचनविरोधात्, ब्राह्मणानां सहायत्वनिर्वाहाय कार्यान्तराक्षेपापत्तेश्च । पुरोहितस्त्वेक एव ।

तथाच व्यासः—

राजा पुरोहितं कुर्यादुदीच्यं ब्राह्मणं हितम् ।
श्रुताध्ययनसम्पन्नमलुब्धं सत्यवादिनम् ॥

इति । एकत्वमत्र विवक्षितं, यूपं छिनत्तीतिवदुत्पाद्यगतत्वात् । हितमिति वदन् राज्ञ उच्छृङ्खलप्रवृत्तिर्दण्ड्यादण्ड्येषु पुरोहितेन निवार्येति दर्शयति । अत एव वसिष्ठेन राज्ञो दण्डशास्त्रार्थातिक्रमे पुरोहितस्यापि प्रायश्चित्तमुक्तम्—

"दण्ड्योत्सर्गे राजैकरात्रमुपवसेत्, त्रिरात्रं पुरोहितः । कृच्छ्रं अदण्ड्यदण्डने पुरोहितः, त्रिरात्रं राजा" इति ।

सभ्याः पुनर्बहवः इति । तथाच नारदः—

राजा तु धार्मिकान् सभ्यान् कुर्वीत सुपरीक्षितान् ।
व्यवहारधुरं वोढुं ये शक्तास्सद्गवा इव ॥

इति । सभ्यान् कुर्वीत व्यवहारदर्शनार्थम् । सभायां स्थितिं यथा न त्यजन्ति तथाऽर्थदानमानप्रभृत्युपायेन नियुञ्जीतेत्यर्थः । व्यवहारधुरं वोढुं के शक्ता इत्यपेक्षिते याज्ञवल्क्यः—

श्रुताध्ययनसंपन्ना धर्मज्ञास्सत्यवादिनः ।
राज्ञा सभासदः कार्याः रिपौ मित्रे च ये समाः ॥

इति । तेऽपि ब्राह्मणा एव ।

तथा च कात्यायनः—

स तु सभ्यैः स्थिरैर्युक्तः प्राज्ञैः मौलैर्द्विजोत्तमैः ।
धर्मशास्त्रार्थकुशलैरर्थशास्त्रविशारदैः ॥

इति । अत्रवर्जनीयानाह बृहस्पतिः—

देशाचारानभिज्ञा ये नास्तिकाश्शास्त्रवर्जिताः ।
उन्मत्तक्रुद्धलुब्धार्ताः न प्रष्टव्या विनिर्णये ॥

इति । तथसा ङ्ख्यानियममप्याह स एव—

लोकवेदाङ्गधर्मज्ञाः सप्त पञ्च त्रयोपि वा ।
यत्रोपविष्टा विप्रास्स्युः सा यज्ञसदृशी सभा ॥

इति । अत्र प्राड्विवाकादीनामर्थार्थितया ऋत्विग्वत्सहायमात्रं, नाधिकारः । अधिकारस्तु व्यवहारदर्शने राज्ञ एवेति मन्तव्यम् । अत एवात्र सप्राड्विवाक इत्यादिना तस्यैवाप्राधान्येन निर्देशो नेतरेषाम्, फलसम्बन्धोपि तस्यैवोक्तो न त्वन्येषाम् । तथाऽकरणे दोषः, स्मृतिबलान्नित्याधिकारोपि राज्ञ एव ।

अदण्ड्यान् दण्डयन् राजा दण्ड्यांश्चैवाप्यदण्डयन् ।
अयशो महदाप्नोति नरकं चैव गच्छति ॥

इति मनुना राज्ञ एव दोषस्मरणात् । अत एव च राजेतरेषां सभाप्रवेशनियमः तेनैव दर्शितः—

सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।
अब्रुवन् विब्रुवन् वाऽपि नरो भवति किल्बिषी ॥

राज्ञः पुनस्सभाप्रवेशनियमो बृहस्पतिना दर्शितः—

राजा कार्याणि संपश्येत् सद्भिरेव त्रिभिर्वृतः ।
सभामेव प्रविश्याग्र्यामासीनस्स्थित एव वा ॥

इति। सभ्यैस्त्रिभिरेव वृतो न त्वेकेन द्वाभ्यां वा वृत इत्यर्थः। अतो न प्रागुक्तसभ्यसङ्ख्याविरोधः । अतो राजसूय इव व्यवहारदर्शने राज्ञ एवाधिकार इति सिद्धम् । राजशब्देन चात्र क्षत्रजातीयो वाऽन्यजातीयो वाऽभिषिक्तो वा अनभिषिक्तो वा प्रजापरिपालनादिराज्यकर्ता गौणवृत्त्या प्रतिपाद्यते, न पुनः राज्ञः कर्म राज्यमिति शाब्दस्मृतेः, बाहुजजातौ राजशब्दो मुख्य इत्यवेष्टिन्यायाद्राजा राजसूयेनेतिवत् क्षत्रिय एव । आर्याणां मन्वादीनां राजशब्दप्रयोगो राज्यकर्तरि गौण इत्यवेष्ट्यधिकरण एवोक्तत्वादत एव बृहस्पतिना नृपतिमात्रस्य सभाप्रवेशोऽभिहितः—

प्रातरुत्थाय नृपतिः शौचं कृत्वा विधानतः ।
गुरून् ज्योतिर्विदो वैद्यान् देवान्विप्रान्पुरोहितान् ॥
यथार्हमेतान् संपूज्य सुपुष्पाभरणाम्बरैः ।
अभिवन्द्य च गुर्वादीन् सुमुखः प्रविशेत्सभाम् ॥

इति। अत एव याज्ञवल्क्येनापि व्यवहारदर्शनं तस्यैव विहितम्—व्यवहारान्नृपः पश्येदिति । यत्तु प्रजापतिनोक्तम्—

राजाऽभिषेकसंयुक्तो ब्राह्मणो वा बहुश्रुतः ।
धर्मासनगतः पश्येद्व्यवहाराननुल्बणः ॥

इति, अनुल्बणः अनुद्धत इत्यर्थः । एतदपि राज्ञोऽभिषिक्तस्य व्यवहारदर्शनं कर्तव्यमिति विधानार्थं न पुनरितरस्य प्रतिषेधार्थं, तथात्वे परिसङ्ख्यापत्तेः । अत एवानन्तरमेवोक्तं तेनैव—

एवं क्षत्रियसामन्ताः स्वदेशेषु पृथक्पृथक् ।
इतरेषां नृपाणां तु कुर्याद्ब्राह्मणपुंगवः ॥

इति । धर्मासनगता अनुल्बणास्सन्तः क्षत्रियसामन्ताः व्यवहारं पश्येयुः । इतरे पुनः नृपाः ब्राह्मणवैश्यादिजातीयाः स्वाधिकारसिद्धये ब्राह्मणश्रेष्ठमेव सदा व्यवहारद्रष्टारं कुर्युरित्यर्थः । यत्पुनस्तेन—'ब्राह्मणो वा बहुश्रुतः' इति पक्षान्तरमुक्तं, तदपि न ब्राह्मणस्याधिकारप्रतिपादनपरं, किंतु—विनाऽपि राज्ञा बहुश्रुतः प्राड्विवाको राजनियोगात् पश्येदित्येवंपरं, ब्राह्मणस्य नास्त्याधिकारो व्यवहारदर्शन इति प्रागेव दर्शितत्वात् । अत एव विष्णुः—

'व्यवहारदर्शने ब्राह्मणं वा नियुञ्ज्यात्'

इति । अनेनैवाभिप्रायेण बृहस्पतिरपि—

राजा कार्याणि संपश्येत् प्राड्विवाकोऽथवा द्विजः ।
न्यायाङ्गान्यग्रतः कृत्वा सभ्यशास्त्रमते स्थितः ॥

इति । एतच्च पक्षान्तरं यदा नृपतिः स्वयं न पश्यति तदैव ।

तथाच मनुः—

यदा स्वयं न कुर्यात्तु नृपतिः कार्यदर्शनम् ।
तदा नियुञ्ज्याद्विद्वांसं ब्राह्मणं कार्यदर्शने ॥

इति । विद्वांसं बहुश्रुतमित्यर्थः । अत एव कात्यायनः—

एकशास्त्रमधीयानो न विद्यात्कार्यनिश्चयम् ।
तस्माद्बह्वागमः कार्यो विवादेषूत्तमो नृपैः ॥

इति । बह्वागमग्रहणं गुणान्तरस्यापि प्रदर्शनार्थम् । तथा चोक्तम्—

शूरो मधुरस्स्निग्धः क्रमायातो विचक्षणः ।
उत्साहवानलुब्धश्च वादे योज्यो नृपेण तु ॥

इति । कात्यायनेनापि—

यदा न कुर्यान्नृपतिः स्वयं कार्यविनिर्णयम् ।
तदा तत्र नियुञ्जीत ब्राह्मणं शास्त्रपारगम् ॥
दक्षं कुलीनमध्यस्थमनुद्वेगकरं स्थिरम् ।
परत्रभीरुं धर्मिष्ठमुद्युक्तं क्रोधवर्जितम् ॥

इति । यदा कार्यान्तरविशेषादिति शेषः । तथाच याज्ञवल्क्यः—

अपश्यता कार्यवशात् व्यवहारान्नृपेण तु ।
सभ्यैस्सह नियोक्तव्यो ब्राह्मणस्सर्वधर्मवित् ॥

इति । व्यवहारदर्शनात् गुरुतरकार्यान्तरव्यग्रत्वेन व्यवहारानपश्यता नृपेण सभ्यैस्त्रिभिरेव सह नियोक्तव्यः प्राड्विवाको नामामात्यादिभिस्सहेत्यर्थः । अत एव मनुः—

सोऽस्य कार्याणि संपश्येत् सभ्यैरेव त्रिभिर्वृतः ।
सभामेव प्रविश्याग्र्यामासीनः स्थित एव वा ॥

इति । सभ्यैरेवेत्यवधारणमन्यनिवृत्त्यर्थम् । त्रिभिरिति च पञ्चसप्तसङ्ख्यानिवृत्त्यर्थम् । अनेनैवाभिप्रायेण व्यासोपि—

विवादानुगतं दृष्ट्वा ससभ्यस्तं प्रयत्नतः ।
विचारयति येनासौ प्राड्विवाकस्ततस्स्मृतः ॥

इति । अत्र कात्यायनः —

ब्राह्मणो यत्र न स्यात्तु क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥

इति । ब्राह्मणो विद्वानिति शेषः । तथाच स एव—

यत्र विप्रो न विद्वान् स्यात् क्षत्रियं तत्र योजयेत् ।
वैश्यं वा धर्मशास्त्रज्ञं शूद्रं यत्नेन वर्जयेत् ॥

इति । क्षत्रियमित्यत्र विद्वांसमिति विद्वद्ब्राह्मणस्थाने विधानाद्गम्यते । यत्नेनेति वदन्नवर्जने गुर्वी हानिर्भवतीति दर्शयति । उदिता च सा मनुना—

यस्य राज्ञस्तु कुरुते शूद्रो धर्मविवेचनम् ।
अस्य सीदति तद्राष्ट्रं पङ्के गौरिव पश्यतः ॥

इति । तेन धर्मशास्त्रज्ञक्षत्रियवैश्ययोरलाभेऽपि शूद्रो वर्ज्यः । तथाचतेनैवोक्तम्—

जातिमात्रोपजीवी वा कामं स्याद्ब्राह्मणब्रुवः ।

धर्मवक्ता तु नृपतेः न तु शूद्रःकथंचन ॥

इति । जातिमात्रोपजीवी न विद्याव्रतोपजीवी ।
व्यासस्त्वमात्यादिस्थानेऽपि शूद्रपरिग्रहे दोषमाह—

द्विजान् विहाय यः पश्येत् कार्याणि वृषलैस्सह ।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोशं च नश्यति ॥

इति । अतस्तद्दोषपरिहारायामात्यादिस्थानेऽपि शूद्रान्वर्जयेदित्यभिप्रायः । तथा राष्ट्ररञ्जनार्थं राज्ञा कतिपयैर्वणिग्भिरपि सह संसदि स्थातव्यमित्याह कात्यायनः—

कुलशीलवयोवृत्तिवित्तवद्भिरमत्सरैः ।
वणिग्भिः स्यात्कातिपयैः कुलभूतैरधिष्ठितम् ॥

इति । कुलभूतैः वृन्दभूतैरित्यर्थः । तथा तेषां कार्यमप्याह स एव—

श्रोतारो वणिजस्तत्र कर्तव्या न्यायदर्शने ॥

इति । तथा राज्ञा गणकलेखकावपि कर्तव्यावित्याह बृहस्पतिः—

शब्दाभिधानतत्त्वज्ञौ गणनाकुशलौ शुची ।
नानालिपिज्ञौ कर्तव्यौ राज्ञा गणकलेखकौ ॥

इति । व्यासोपि—

त्रिस्कन्धज्यौतिषाभिज्ञं स्फुटप्रत्ययकारकम् ।
श्रुताध्ययनसम्पन्नं गणकं योजयेन्नृपः ॥
स्फुटलेखं नियुञ्जीत शब्दक्षेपणिकं शुचिम् ।
स्पष्टाक्षरं जितक्रोधमलुब्धं सत्यवादिनम् ॥

इति । त्रिस्कन्धज्यौतिषाभिज्ञं होरा गणितं संहितेतिस्कन्धत्रयसहितज्योतिश्शास्त्राभिज्ञमित्यर्थः । श्रुताध्ययनसंपन्नमिति विशेषणं गणकस्य द्विजातित्वख्यापनार्थम् । शूद्रादेस्तदसम्भवात् । लेखकोपि तत्साहचर्याद्द्विज एव । अत एव साध्यपालस्य द्विजत्वपरिहारार्थं

साध्यपालस्तु कर्तव्यो राज्ञा साध्यस्य साधकः ।
क्रमायातो दृढश्शूद्रः सभ्यानां च मते स्थितः ॥

इति शूद्रग्रहणं तेनैव कृतम् । साध्यस्यार्थिप्रत्यर्थिसाक्ष्यादिनामाह्वानकार्यस्येत्यर्थः । तथाच बृहस्पतिः —

आकारणे रक्षणे च साक्ष्यर्थिप्रतिवादिनाम् ।
सभ्याधीनस्सत्यवादी कर्तव्यस्तु स्वपूरुषः ॥

इति । आकारणमाह्वानम् । स्वपूरुषः क्रमायातो यस्स सभ्याधीनः कर्तव्यो राज्ञेत्यर्थः । एवमेते श्रेष्ठनिर्णयस्थाने मन्वादिभिरुक्ते । भृगुणा तु जघन्यान्यपि निर्णयस्थानान्युक्तानि—

दश स्थानानि वादानां पञ्च चैवाब्रवीद्भृगुः ।
निर्णयं येन गच्छन्ति विवादं प्राप्य वादिनः ॥

इति । तानि च पञ्चदश स्थानानि तेनैव दर्शितानि—

आरण्यास्तु स्वकैः कुर्युः सार्थिकास्सार्थिकैस्स्मृताः ।
सैनिकास्सैनिकैरेव ग्रामेऽप्युभयवासिभिः ॥
उभयानुमतं चैव गृह्यते स्थानमीप्सितम् ।
कुलिकास्सार्थमुख्याश्च पुरग्रामनिवासिनः ॥

ग्रामपौरगणश्रेण्यः चातुर्विद्यश्च वर्गिणः ।
कुलानि कुलिकाश्चैव नियुक्ता नृपतिस्तथा ॥

इति । अत्राद्यानि पञ्च स्थानान्यारण्यादिजनविशेषाणामेव । ग्रामाकारेणावस्थिते जनविवादे समीपवासिभिर्निर्णयः । अर्थिप्रत्यर्थिनोरननुशयानुमतास्थानकुलिकसार्थमुख्यपुरग्रामवासिनो गृह्णते । ग्रामादीनि दश स्थानानि साधारणानि । ग्रामो ग्रामाकारेणावस्थितो जनः । पौरः पुरवासिनां समूहः । गणः कुलानां समूहः ।

कुलानां हि समूहस्तु गणस्संपरिकीर्तितः ॥

इति कात्यायनस्मरणात् । श्रेण्यो रजकाद्यष्टादशहीनजातयः । चातुर्विद्यः आन्वीक्षक्यादिविद्याचतुष्टयोपेतः । चातुर्विद्यश्चेति चशब्दो विद्वद्भिः पुरुषान्तरैस्सह चातुर्विद्यस्य समुच्चयार्थः ।

तस्मान्न वाच्यमेकेन विधिज्ञेनापि धर्मतः ।

इति पितामहेनैकस्य धर्मकथननिषेधात् । वर्गिणो गणप्रभृतयः—

गणाः पाषण्डपूगाश्च व्राताश्च श्रेणयस्तथा ।
समूहस्थाश्च ये चान्ये वर्गाख्यास्ते बृहस्पतिः ॥

इति कात्यायनस्मरणात् । बृहस्पतिग्रहणं गणादिविषयेयमाख्या पूर्वमेव प्रसिद्धेति दर्शयितुम् । आयुधधराणां समूहो व्रातः ।

नानायुधधरा व्रातास्समवेतास्तु कीर्तिताः ।

इति तेनैवोक्तत्वात् । कुलान्यर्थिप्रत्यर्थिनोस्सगोत्राणि । कुलिकाः केचनार्थिप्रत्यर्थिगोत्रजा वृद्धाः । नियुक्ताः प्राड्विवाकसहिताख्रयस्सभ्याः । नृपतिर्ब्राह्मणादिसहितः ।

अत्र बृहस्पतिः —

प्रतिष्ठिताऽप्रतिष्ठता मुद्रिता शास्त्रिता तथा ।
चतुर्विधा सभा प्रोक्ता सभ्याश्चैव तथाविधाः ॥

इति । आरण्यकादिस्थानत्रये या सभा सा अप्रतिष्ठिता । प्रायेण देशान्तरगमनयोग्यत्वादुभयवासिप्रभृतिषु दशसु स्थानेषु तदभावात् प्रतिष्ठिता । नियुक्तस्थानेपुनः मुद्राहस्ताध्यक्षसाहित्या मुद्रिता । नृपस्थाने तु शास्त्रनियन्तृकत्वाच्छास्त्रिता ॥

अयं च सभाविभागस्तेनैव दर्शितः—

प्रतिष्ठिता पुरे ग्रामे चला नामाऽप्रतिष्ठिता ।
मुद्रिताऽध्यक्षसंयुक्ता राजयुक्ता तु शास्त्रिता ॥

इति । अध्यक्षः प्राड्विवाकः । व्यवहारदर्शनेऽधिकृतत्वात् । तस्य च हस्ते राज्ञा स्वमुद्रा प्रतिवाद्यानयनार्थंदेयेयत एवावगम्यते । तत्र प्रतिष्ठिता अप्रतिष्ठिता च सभा निर्णयार्थिभिरेव प्रार्थनार्थं दानमाननादिभिः कार्या । शास्त्रप्रयुक्त्या नृपतिप्रयुक्त्यभावात् सभासिद्ध्भावात् । मुद्रिता शास्त्रिता च स्वाधिकारवशाद्राज्ञैव क्रियते, तेन तत्र निर्णयार्थिनां तत्समीपगमनमेव न सभाकरणम् ॥

अत्र च शास्त्रितसभायां सभान्तरेभ्यः प्राबल्यमाह पितामहः—

पूर्वस्थानगता वादाः धर्मतोऽधर्मतोऽपि वा ।
नृपस्थानं समाश्रित्य पूर्ववादं भजन्ति ते ॥

इति । पूर्ववादं पूर्वपक्षमित्यर्थः । नृपस्थानग्रहणं प्रबलस्थानोप-लक्षणार्थम् ॥ यतस्स एवाह—

ग्रामे दृष्टः पुरं यायात् पुरे दृष्टस्तु राजनि ।
राज्ञा दृष्टः कुदृष्टो वा नास्ति तस्य पुनर्भवः ॥

इति । नारदोऽपि—

कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः ।
प्रतिष्ठा व्यवहाराणां गुर्वेषामुत्तरोत्तरम् ॥

इति स्मृतिचन्द्रिकायां निर्णेतृनिर्णयः

अथ धर्मस्थाने अवस्थानम्.

तत्र कात्यायनः—

धर्मशास्त्रविचारेण मूलसारविवेचनम् ।
यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत् ॥

यत्र स्थाने मूलस्यावेदितस्य सारविवेचनं तत्र निष्कर्षो धर्मशास्त्र-विचारेण निर्णेतृभिरधिक्रियते प्रस्तूयते, तत् स्थानं धर्मशास्त्रैर-धिक्रियते। मूलसारविवेचनमत्रेति व्युत्पत्त्या धर्माधिकरणमिति। हिः प्रसिद्ध्यर्थः । एतच्च धर्माधिकरणं प्राच्यां दिशि कार्यम् ।

तथाच शङ्खः—

'धर्मस्थानं प्राच्यां दिशि तच्चाग्न्युदकैस्समवेतं स्यात्'

इति। प्राच्यां दिशि राजमन्दिरादिति शेषः । अत एव बृहस्पतिः—

दुर्गमध्ये गृहं कुर्यात् जलमध्योच्छ्रितं पृथु ।

प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम् ॥
माल्यधूपासनोपेतां बीजरत्नसमन्विताम् ।
प्रतिमालेख्यदेवैश्च युक्तामग्न्यम्बुना तथा ॥

इति । एवं कल्पितां प्रातर्हुत्वा प्रविशेत् । तथा च मनुः—

उत्थाय पश्चिमे यामे कृतशौचस्समाहितः ।
हुत्वाऽग्निं[1] ब्राह्मणानर्च्य प्रविशेद्वै शुभां सभाम् ॥

अत्रार्च्येत्यसमासेऽपि त्वाप्रत्ययस्य ल्यबादेशश्छान्दसत्वादाविरुद्धः । प्रविशेन्नृपतिरिति शेषः । अत एव बृहस्पतिः—

प्रातरुत्थाय नृपतिः शौचं कृत्वा समाहितः ।
गुरून् ज्योतिर्विदो वैद्यान् देवान् विप्रान् पुरोहितान् ॥
यथार्हमेतान् संपूज्य सुपुष्पाभरणाम्बरैः ।
अभिवाद्य च गुर्वादीन् सुमुखः प्रविशेत्सभाम् ॥

अत्र नृपतिः प्रविशेदित्यन्वयः । पुरोहितानिति बहुवचनं पाशानितिवत् कर्मत्वमात्रस्याभिधायकं, न तु बहुत्वस्यापि, पुरोहितस्यैकत्वात् । नृपतिरपि ब्राह्मणादिसहितः प्रविशेत् ।
तथाच मनुः—

व्यवहारादिदृक्षुस्तु ब्राह्मणैस्सह पार्थिवः ।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम् ॥

---

[1] भुक्त्वाऽन्नं.
व

इति । पूर्ववादं पूर्वपक्षमित्यर्थः । नृपस्थानग्रहणं प्रबलस्थानोप-लक्षणार्थम् ॥ यतस्स एवाह—

ग्रामे दृष्टः पुरं यायात् पुरे दृष्टस्तु राजनि ।
राज्ञा दृष्टः कुदृष्टो वा नास्ति तस्य पुनर्भवः ॥

इति । नारदोऽपि—

कुलानि श्रेणयश्चैव गणाश्चाधिकृतो नृपः ।
प्रतिष्ठा व्यवहाराणां गुर्वेषामुत्तरोत्तरम् ॥

इति स्मृतिचन्द्रिकायां निर्णेतृनिर्णयः

## अथ धर्मस्थाने अवस्थानम्.

तत्र कात्यायनः—

धर्मशास्त्रविचारेण मूलसारविवेचनम् ।
यत्राधिक्रियते स्थाने धर्माधिकरणं हि तत् ॥

यत्र स्थाने मूलस्यावेदितस्य सारविवेचनं तत्र निष्कर्षो धर्मशास्त्र-विचारेण निर्णेतृभिरधिक्रियते प्रस्तूयते, तत् स्थानं धर्मशास्त्रैर-धिक्रियते। मूलसारविवेचनमत्रेति व्युत्पत्त्या धर्माधिकरणमिति। हिः प्रसिद्ध्यर्थः । एतच्च धर्माधिकरणं प्राच्यां दिशि कार्यम् ।

तथाच शङ्खः—

'धर्मस्थानं प्राच्यां दिशि तच्चाग्न्युदकैस्समवेतं स्यात्'

इति। प्राच्यां दिशि राजमन्दिरादिति शेषः । अत एव बृहस्पतिः—

दुर्गमध्ये गृहं कुर्यात् जलमध्योच्छ्रितं पृथु ।

प्राग्दिशि प्राङ्मुखीं तस्य लक्षण्यां कल्पयेत्सभाम् ॥
माल्यधूपासनोपेतां बीजरत्नसमन्विताम् ।
प्रतिमालेख्यदेवैश्च युक्तामग्न्यम्बुना तथा ॥

इति । एवं कल्पितां प्रातर्हुत्वा प्रविशेत् । तथा च मनुः—

उत्थाय पश्चिमे यामे कृतशौचस्समाहितः ।
हुत्वाऽग्निं[1] ब्राह्मणानर्च्य प्रविशेद्वै शुभां सभाम् ॥

अत्रार्च्येत्यसमासेऽपि त्वाप्रत्ययस्य ल्यबादेशश्छान्दसत्वादविरुद्धः । प्रविशेन्नृपतिरिति शेषः । अत एव बृहस्पतिः—

प्रातरुत्थाय नृपतिः शौचं कृत्वा समाहितः ।
गुरून् ज्योतिर्विदो वैद्यान् देवान् विप्रान् पुरोहितान् ॥
यथार्हमेतान् संपूज्य सुपुष्पाभरणाम्बरैः ।
अभिवाद्य च गुर्वादीन् सुमुखः प्रविशेत्सभाम् ॥

अत्र नृपतिः प्रविशेदित्यन्वयः । पुरोहितानिति बहुवचनं पाशानितिवत् कर्मत्वमात्रस्याभिधायकं, न तु बहुत्वस्यापि, पुरोहितस्यैकत्वात् । नृपतिरपि ब्राह्मणादिसहितः प्रविशेत् ।
तथाच मनुः—

व्यवहारादिदृक्षुस्तु ब्राह्मणैस्सह पार्थिवः ।
मन्त्रज्ञैर्मन्त्रिभिश्चैव विनीतः प्रविशेत्सभाम् ॥

---

[1] भुक्त्वाऽन्नं.

इति। चशब्दोत्र प्राड्विवाकपुरोहितसभ्यवणिग्गणकलेखकसाध्यपालहिरण्यधर्मशास्त्रैरपि सहेति ज्ञापनार्थः । तेषामपि ब्राह्मणादिवत् दर्शनोपयोगित्वात् । तत्र केषांचिदुपयोगो निर्णेतृनिर्णये दर्शितः। अत्र केषांचिदुपयोगो वक्ष्यते ॥ सभाप्रवेशे विशेषमाह संवर्तः—

लोकपालान्नमस्कृत्य प्रविश्य विपुलां सभाम् ।
प्रजानां रक्षणं कुर्यान्नृपतिः कार्यदर्शने ॥

निमित्तार्थे चेयं सप्तमी । कार्यदर्शनरूपानिमित्तेन प्रजारक्षणं कुर्यादित्यर्थः । निमित्तत्वं च तस्य प्रजारक्षणोपयोगिदुष्टपरिज्ञानहेतुत्वेन परम्परया द्रष्टव्यम् ॥

एवं सभाप्रविष्टानामर्थसिद्धोपवेशनमनूद्य केषाञ्चिद्दिङ्नियममाह बृहस्पतिः—

पूर्वामुखस्तूपविशेद्राजा सभ्या उदङ्मुखाः ।
गणकः पश्चिमास्यस्तु लेखको दक्षिणामुखः ॥
हिरण्यमग्निमुदकं धर्मशास्त्राणि चैत्र हि ।
तन्मध्ये स्थापयेद्राजा पुण्यानि च हितानि च ॥

इति । अन्येषां पुनर्यथासौकर्यमुपवेशनम् । नियमाभावात् । एवं राजादिभिर्दशभिर्व्यवहारसाधकाङ्गैरध्यासिता सभा यज्ञसमेत्याह स एव—

नृपाधिकृतसभ्याश्च स्मृतिर्गणकलेखकौ ।
हेमाग्न्यम्बुस्वपुरुषास्साधनाङ्गानि वै दश ॥

एतद्दशाङ्गं करणं यस्यामध्यास्य पार्थिवः ।
न्यायात्पश्येत्कृतमतिः सा सभाऽध्वरसंमिता ॥

अधिकृतः प्राड्विवाकः स्वपुरुषस्साध्यपालः । साधनाङ्गानां कार्यमप्याह स एव—

दशानामपि चैतेषां कर्म प्रोक्तं पृथक्पृथक् ।
वक्ताऽध्यक्षो नृपश्शास्ता सभ्याः कार्यपरीक्षकाः ।
स्मृतिर्विनिर्णयं ब्रूते जयं दानं दमं तथा ॥
शपथार्थे हिरण्याग्नी तृषितक्षुब्धयोः जलम् ।
गणको गणयेदर्थं लिखेन्न्यायं च लेखकः ॥
प्रत्यर्थिसभ्यानयनं साक्षिणां च स्वपूरुषः ।
कुर्यादलग्नकौ रक्षेदर्थिप्रत्यर्थिनौ तदा ॥

वक्ताऽध्यक्ष इत्येतत्प्रकर्षाभिप्रायेण । 'सभ्यादिनाऽपि धर्मज्ञेनावश्यं वक्तव्यम्' इति वसिष्ठेनोक्तत्वात् । नृपश्शास्तेत्येतदप्यर्थवधदण्डकारित्वाभिप्रायेण । 'वाग्दण्डधिग्दण्डाभ्यां शासनं प्राड्विवाकेन कार्यम्' इति तेनैवाभिधानात् । तथाच— 'तस्य निर्णयकृद्राजा ब्राह्मणश्च बहुश्रुतः' इत्याभिधायाभिहितम्—

वाग्दण्डो धिग्दमश्चैव प्रायश्चित्तावुभौ स्मृतौ ।
अर्थदण्डवधावुक्तौ राजायत्तावुभावपि ॥

इति । प्रतिष्ठिताप्रतिष्ठितसभ्यानां तु धर्मस्थाने विशेषविध्यभावादनियत एव । शुभे स्थान उपविश्य विनिर्णयमात्रं कृत्वा

तैरुपरन्तव्यम् । दण्डदापनेऽर्थदापने वा तेषां अधिकाराभावात् । साहसविवादे तु तैर्निर्णमात्रमपि न कार्यम् ।

अत आह बृहस्पतिः—

> राज्ञा ये विदितास्सम्यक्कुलश्रेणीगणादयः ।
> साहसन्यायवर्ज्यानि कुर्युः कार्याणि ते नृणाम् ॥

इति । मुद्रिता तु सभा ब्रह्मसभातुल्येत्याह मनुः—

> यस्मिन् देशे निषीदन्ति विप्रा वेदविदस्त्रयः ।
> राज्ञश्च प्रकृतो विद्वान् ब्रह्मणस्तां सभां विदुः ॥

प्रकृतोऽधिकृतः प्राड्विवाक इति यावत् । सभ्येष्वप्यर्थ्यादिरञ्जकस्सभास्तारोऽखिललोकश्लाघ्यो भवतीत्याह व्यासः—

> अर्थिप्रत्यर्थिनौ सभ्यान् लेखकं प्रेक्षकांश्च यः ।
> धर्म्यवाक्यै रञ्जयति स सभ्यश्श्लाघ्यतामियात् ॥

तथा विवादिनां संशयहन्ता सभ्यस्तेषां प्राणद इत्याह स एव—

> परस्परविसंवादं सन्देहात् कुर्वतो नरान् ।
> यस्तेषां संशयच्छेत्ता स सभ्यः प्राणदः स्मृतः ॥

नरान्विवादतो निवार्येति शेषः ।

प्राणदस्य फलमाह वसिष्ठः—

> यत्पुण्यमुद्धृते विप्रे म्रियमाणे जलाशयात् ।
> तत्पुण्यं संशयारूढे व्यवहारात्समुद्धृते ॥

म्रियमाण इति दार्ष्टान्तिकेऽप्यनुषज्यते ।

तथा सभ्यविशेषे फलविशेषमाह बृहस्पतिः—

अज्ञानतिमिरोपेतान् सन्देहपटलान्वितान् ।
निरामयान् यः कुरुते शास्त्राञ्जनशलाकया ॥
इह कीर्तिं राजपूजां लभते स्वर्गतिं च सः ।
लोभद्वेषादिकं त्यक्त्वा यः कुर्यात्कार्यनिर्णयम् ।
शास्त्रोदितेन विधिना तस्य यज्ञफलं भवेत् ॥

ये पुनः शास्त्रोदितविधिमतिक्रम्य निर्णयं कुर्युः तेषां दोषमाह कात्यायनः—

न्यायशास्त्रमतिक्रम्य सभ्यैर्यत्र विनिश्चितम् ।
तत्र धर्मो ह्यधर्मेण हतो हन्ति न संशयः ॥

तथा अन्यायप्रवृत्तनृपत्यनिवारणेऽपि दोषस्तेनैव दर्शितः—

अधर्मतः प्रवृत्तं तु नोपेक्षेरन् सभासदः ।
उपेक्षमाणास्सनृपाः नरकं यान्त्यधोमुखाः ॥

अतस्तत्र तदनुसरणं सभासाद्भिर्न कार्यमित्याह स एव—

अन्यायेनापि तं यान्तं येऽनुयान्ति सभासदः ।
तेऽपि तद्भागिनस्तस्मात् बोधनीयश्शनैर्नृपः ॥

शनैरिति वचनात्तदैव तत्प्रतिकूलबोधनं न पापभयात् कार्यम् । किन्तु सति कालान्तरे । अत एवोक्तं तेनैव—

न्यायमार्गादपेतं तु ज्ञात्वा चित्तं महीपतेः ।
वक्तव्यं तत्प्रियं तत्र न सभ्यः किल्बिषी मतः ॥

इति । मनुस्तन्यायेन निर्णीयमाने प्रतिषेधमकुर्वतामपि सभ्यानां-
दोषमाह—

यत्र धर्मो ह्यधर्मेण सत्यं चैवानृतेन वा ।
हन्यते प्रेक्षमणानां हतास्तत्र सभासदः ॥

प्रेक्षमाणानामित्यनादरे षष्ठी ।

अथ कांश्चित्सभ्याननादृत्य धर्मानिर्णेतॄणां सभ्यानामपि दोषस्ते-
नैव दर्शितः—

धर्मो विद्धस्त्वधर्मेण सभां यत्रोपतिष्ठति ।
शल्यं चास्य न कृन्तन्ति हतास्तत्र सभासदः ॥

शल्यानिकृन्तनं सर्वसभ्यसंमत्यभावेऽपि निश्चयः ।

तथा च नारदः—

यत्र सभ्यो जनस्सर्वः साध्वेतदिति मन्यते ।
स निश्शल्यो विवादस्स्यात्सशल्यस्स्यादतोऽन्यथा ॥

अत आत्मरक्षणार्थं सर्वथा धर्मो न हन्तव्य इत्याह मनुः—

धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतो वधीत् ॥

तथा वृषलत्वपरिहारार्थमपि धर्माप्रतिहतिः कार्येत्याह स एव—

वृषो हि भगवान् धर्मः तस्य यः कुरुते त्वलम् ।
वृषलं तं विदुर्देवास्तस्माद्धर्मं न लोपयेत् ॥

अलं वारणम् । हारीतस्तु वृषलस्य नरकमाह—

अन्धो मत्स्यानिवाश्नाति निरपेक्षः सकण्टकान् ।

परोक्षमर्थं वैकल्यात् भाषते यस्सभागतः ॥

इति । अत्र नारदः—

तस्मात्सभ्यस्सभां प्राप्य रागद्वेषविवर्जितः ।

वचस्तथाविधं ब्रूयात् यथा न नरकं व्रजेत् ॥

कीदृग्विधं वचो नरकपरिहारार्थं वाच्यमित्यत आह स एव—

शुद्धेषु व्यवहारेषु शुद्धिं यान्ति सभासदः ।

शुद्धिश्च धर्मात्तेषां हि धर्ममेव वदेत्ततः ॥

तेषां व्यवहाराणाम् । कात्यायनोऽपि—

सभ्येनावश्यवक्तव्यं धर्मार्थसहितं वचः ।

शृणोति यदि नो राजा स्यात्तु सभ्यस्ततोऽनघः ॥

अर्थसहितमर्थशास्त्रमर्थोपेतम् । मनुरपि—

राजा भवत्यनेनास्तु मुच्यन्ते हि सभासदः ।

एनो गच्छति कर्तारं निन्दार्हो यत्र निन्द्यते ॥

सभा वा न प्रवेष्टव्या वक्तव्यं वा समञ्जसम् ।

अब्रुवन्विब्रुवन्वाऽपि नरो भवति किल्बिषी ॥

यत्पुनस्तेनोक्तम्—

सत्यं ब्रूयात् प्रियं ब्रूयात् न ब्रूयात्सत्यमप्रियम् ।

इति तन्निर्णेतृव्यतिरिक्तविषयम् । तत्र पक्षपातेनाप्रियोक्तिरपि कार्यैवेत्युक्तत्वात् । एवं हिताहितप्राप्तिपरिहारोपायोपदर्शनेऽपि योऽसन्तोत्कटरागादिवशात् सभ्यस्स्मृत्याचारविरुद्धं वादनि-

र्णयं [illegible]ख्याति तस्य दण्डमाह नारदः—

रागादज्ञानतो वाऽपि यो लोभादन्यथा वदेत् ।
सभ्योऽसभ्यस्स विज्ञेयः तं पापं विनयेद्भृशम् ॥

कात्यायनोऽपि—

स्नेहादज्ञानतो वाऽपि मोहाद्वा लोभतोपि वा ।
तत्र सभ्योऽन्यथावादी दण्ड्योऽसभ्यस्स्मृतो हि सः

स्नेहो रागः। मोहः विपरीतज्ञानम्। अत्र रागलोभवशात् भयाद्वा अन्यथावादी विवादपराजयनिबन्धनदमाद्द्विगुणं दमं दण्ड्य इत्याह याज्ञवल्क्यः—

रागाल्लोभाद्भयाद्वाऽपि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक्पृथग्दण्ड्याः विवादाद्द्विगुणं दमम् ॥

विवादे यो दमो भवति पराजये तद्द्विगुणं दाप्य इति बहुव्याख्यातृसंमतोऽर्थो ग्राह्यः, न पुनर्विवादास्पदीभूताद्द्रव्याद्द्विगुणमिति कस्यचिद्व्याख्यातुरर्थः अयुक्तत्वात्। अयुक्तत्वं च बहुव्याख्यातृभिरुक्तं, विस्तरभयान्नोच्यते। एवं मोहवशादप्यन्यथावादिनो दण्ड्या इत्याह कात्यायनः—

कार्यस्य निर्णयं सम्यक् ज्ञात्वा सभ्यस्ततो वदेत् ।
अन्यथा नैव वक्तव्यं वक्ता द्विगुणदण्डभाक् ॥

अज्ञानक्रोधवशादन्यथा वादिनस्तु विशेषोक्त्यभावात् सामान्येन सभ्यसम्बन्धितया बृहस्पत्युक्तं तत्र व्यवतिष्ठते—

अन्यायवादिनस्सभ्यास्तथैवोत्कोचजीविनः ।

विश्वस्तवञ्चकाश्चैव निर्वास्यास्सर्वे एव ते ॥

इति । उत्कोचजीविन इत्येतत्सभ्येतरविषयम् ।

'कूटसाक्षिणां सर्वस्वापहारः, उत्कोचजीविनां सभ्यानां च' इति विष्णुना सभ्यविषये सर्वस्वापहारस्योक्तत्वात् । यत्तु कैश्चिदज्ञानादिनाऽन्यथावादे 'मोहात्सहस्रं दण्ड्यस्तु' इत्यादिमनुवचनोक्तद्विशतादिदण्डवैचित्र्यमुक्तं तद्याज्ञवल्क्यवचनतो रागादावेव द्विगुणो दम इति नियमादज्ञानादौ दण्डान्तरं मृग्यमित्येवंपरं, न पुनर्मनुवचनबलेन द्विशतादिदण्डप्रतिपादनार्थम् ।

एतानाहुः कौटसाक्ष्ये प्रोक्तान् दण्डान् मनीषिणः ।

इत्युपसंहारतो मनुवचनस्य साक्ष्यपराधविषयत्वात् । तस्मादज्ञानादौ बार्हस्पत्यवचनविहितो दमः सभ्यविषये त्वनुसंधेयः । प्राड्विवाकस्सभ्या वा व्यवहारनिर्णयात् पूर्वं विजनेऽर्थिना सह संभाषणमात्रादपि दण्ड्या इत्याह कात्यायनः—

अनिर्णीते तु यद्यर्थे संभाषेत रहोऽर्थिना ।

प्राड्विवाकोऽथ दण्ड्यस्स्यात् सभ्याश्चैव न संशयः ॥

निर्णयादूर्ध्वं सभ्यदोषपरिज्ञाने तु दमं दाप्य इत्याह स एव—

सभ्यदोषात्तु यन्नष्टं देयं सभ्येन तत्तदा ।

कार्यं तु कार्यिणामेव निश्चितं न विचालयेत् ॥

दुष्टसभ्येनापि निर्णीतं कार्यं न परावर्तयेत्, किंतु दौष्ट्यात् नष्टं दापयेदित्यर्थः । सभ्यदोषानाह नारदः—

र्णयं [illegible]थाति तस्य दण्डमाह नारदः—

रागादज्ञानतो वाऽपि यो लोभादन्यथा वदेत् ।
सभ्योऽसभ्यस्स विज्ञेयः तं पापं विनयेद्भृशम् ॥

कात्यायनोऽपि—

स्नेहादज्ञानतो वाऽपि मोहाद्वा लोभतोपि वा ।
तत्र सभ्योऽन्यथावादी दण्ड्योऽसभ्यस्स्मृतो हि सः

स्नेहो रागः। मोहः विपरीतज्ञानम्। अत्र रागलोभवशात् भयाद्वा अन्यथावादी विवादपराजयनिबन्धनदमाद्विगुणं दमं दण्ड्य इत्याह याज्ञवल्क्यः—

रागाल्लोभाद्भयाद्वाऽपि स्मृत्यपेतादिकारिणः ।
सभ्याः पृथक्पृथग्दण्ड्याः विवादाद्विगुणं दमम् ॥

विवादे यो दमो भवति पराजये तद्विगुणं दाप्य इति बहुव्याख्यातृसंमतोऽर्थो ग्राह्यः, न पुनर्विवादास्पदीभूताद्द्रव्याद्विगुणमिति कस्यचिद्व्याख्यातुरर्थः अयुक्तत्वात्। अयुक्तत्वं च बहुव्याख्यातृभिरुक्तं, विस्तरभयान्नोच्यते। एवं मोहवशादप्यन्यथावादिनो दण्ड्या इत्याह कात्यायनः—

कार्यस्य निर्णयं सम्यक् ज्ञात्वा सभ्यस्ततो वदेत् ।
अन्यथा नैव वक्तव्यं वक्ता द्विगुणदण्डभाक् ॥

अज्ञानक्रोधवशादन्यथा वादिनस्तु विशेषोक्त्यभावात् सामान्येन सभ्यसम्बन्धितया बृहस्पत्युक्तं तत्र व्यवतिष्ठते—

अन्यायवादिनस्सभ्यास्तथैवोत्कोचजीविनः ।

विश्वस्तवञ्चकाश्चैव निर्वास्याः सर्वे एव ते ॥

इति । उत्कोचजीविन इत्येतत्सभ्येतरविषयम् ।

'कूटसाक्षिणां सर्वस्वापहारः, उत्कोचजीविनां सभ्यानां च' इति विष्णुना सभ्यविषये सर्वस्वापहारस्योक्तत्वात् । यत्तु कैश्चिदज्ञानादिनाऽन्यथावादे 'मोहात्सहस्रं दण्ड्यस्तु' इत्यादिमनुवचनोक्तद्विशतादिदण्डवैचित्र्यमुक्तं तद्याज्ञवल्क्यवचनतो रागादावेव द्विगुणो दम इति नियमादज्ञानादौ दण्डान्तरं मृग्यमित्येवंपरं, न पुनर्मनुवचनबलेन द्विशतादिदण्डप्रतिपादनार्थम् ।

एतानाहुः कौटसाक्ष्ये प्रोक्तान् दण्डान् मनीषिणः ।

इत्युपसंहारतो मनुवचनस्य साक्ष्यपराधविषयत्वात् । तस्मादज्ञानादौ बार्हस्पत्यवचनविहितो दमः सभ्याविषये त्वनुसंधेयः । प्राड्विवाकस्सभ्या वा व्यवहारनिर्णयात् पूर्वं विजनेऽर्थिना सह संभाषणमात्रादपि दण्ड्या इत्याह कात्यायनः—

अनिर्णीते तु यद्यर्थे संभाषेत रहोऽर्थिना ।
प्राड्विवाकोऽथ दण्ड्यस्स्यात् सभ्याश्चैव न संशयः ॥

निर्णयादूर्ध्वं सभ्यदोषपरिज्ञाने तु दमं दाप्य इत्याह स एव—

सभ्यदोषात्तु यन्नष्टं देयं सभ्येन तत्तदा ।
कार्यं तु कार्यिणामेव निश्चितं न विचालयेत् ॥

दुष्टसभ्येनापि निर्णीतं कार्यं न परावर्तयेत्, किंतु दौष्ट्यात् नष्टं दापयेदित्यर्थः । सभ्यदोषानाह नारदः—

एते सभ्यास्सभां गत्वा तूष्णीं ध्यायन्त आसते ।
यथाप्राप्तं न चेद्ब्रूयुः सर्वे तेऽनृतवादिनः ॥

प्राप्तं युक्तमित्यर्थः । तथा—

न सा सभा यत्र न सन्ति वृद्धाः
वृद्धा न ते ये न वदन्ति धर्मम् ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनानुविद्धम् ॥

इति स्मृतिचन्द्रिकायां धर्मस्थानेऽवस्थानम् .

अथ दर्शनविधिः

तत्र कात्यायनः—

विनीतवेषो नृपतिः सभां गत्वा समाहितः ।
आसीनः प्राङ्मुखस्स्थित्वा पश्येत्कार्याणि कार्यिणाम् ।
सह त्रैविद्यवृद्धैश्च मन्त्रज्ञैश्चैव मन्त्रिभिः ॥

अत्रासनस्थित्योः युगपत्कर्तुमशक्यत्वाद्विकल्पः । अत एव मनुः—

तत्रासीनस्स्थितो वाऽपि पाणिमुद्यम्य दक्षिणम् ।
विनीतवेषाभरणः पश्येत्कार्याणि कार्यिणाम् ॥

अयं चासनास्थित्योर्विकल्पः शयनचङ्क्रमणनिषेधार्थः । 'दक्षिणं पाणिमुद्यम्य' इति प्रावरणार्थं वस्त्रमप्युपवीतवदेव ब्राह्मणसभायां धार्यमिति नियमार्थम् । तथाच स्मृत्यन्तरम्—'ब्राह्मणानां तु संसदि' इति, 'दक्षिणं बाहुमुद्धरेत्' इति । 'विनीतवेषाभरणः' इत्यौद्धत्यनिषेधार्थम् । तथाच प्रजापतिः—

राजाऽभिषेकसंयुक्तो ब्राह्मणो वा बहुश्रुतः ।
धर्मासनगतः पश्येद्व्यवहाराननुल्बणः ॥

अनुल्बणोऽनुद्धतः, उल्बणग्रहणं मत्सरस्यापि प्रदर्शनार्थम् । तथाच नारदः—

तस्माद्धर्मासनं प्राप्य राजा विगतमत्सरः ।
समस्स्यात्सर्वभूतेषु बिभ्रद्वैवस्वतं व्रतम् ॥

वैवस्वतं व्रतं यमव्रतम् । तच्च तेनैव दर्शितम्—

यथा यमः प्रियद्वेष्यौ प्राप्ते काले नियच्छति ।
तथा राज्ञा नियन्तव्याः प्रजास्तद्धि यमव्रतम् ॥

याज्ञवल्क्योपि—

तस्माद्यम इव स्वामी स्वयं हित्वा प्रियाप्रिये ।
वर्तेत धर्म्यया वृत्त्या जितक्रोधो जितेन्द्रियः ॥

क्रोधग्रहणं लोभस्यापि प्रदर्शनार्थम् । तथाच स एव—

व्यवहारान्नृपः पश्येद्विद्वद्भिर्ब्राह्मणैस्सह ।
धर्मशास्त्रानुसारेण क्रोधलोभविवर्जितः ॥

धर्मशास्त्रानुसारेणेत्येतदौशनसाद्यर्थशास्त्रानुसारस्य निवृत्त्यर्थं, न पुनर्धर्मशास्त्रान्तर्गतराजनीत्याद्यर्थशास्त्रानुसरणस्यापि, यत आह नारदः—

धर्मशास्त्रार्थशास्त्राभ्यामविरोधेन पार्थिवः ।
समीक्षमाणो निपुणं व्यवहारगतिं नयेत् ॥

धर्मशास्त्राणि च पितामहेन दर्शितानि—

वेदास्साङ्गास्तु चत्वारो मीमांसा स्मृतयस्तथा ।
एतानि धर्मशास्त्राणि पुराणं न्यायदर्शनम् ॥

प्रमाणान्तरदृष्टार्थविषया स्मृतिरर्थप्रधानत्वादर्थशास्त्रतयाऽभिप्रेता, सा च भविष्यत्पुराणे दर्शिता—

षाड्गुण्यस्य प्रयोगश्चाप्रयोगः कार्यगौरवात् ।
सामादीनामुपायानां योगो व्याससमासतः ॥
अध्यक्षाणां च निक्षेपः कण्टकानां निरूपणम् ।
दृष्टार्थेयं स्मृतिः प्रोक्ता ऋषिभिर्गरुडाग्रज ॥

इति । दृष्टार्थायाः स्मृतेरुदाहरणमात्रमेतत् । एवंच सन्धिविग्रहादिदृष्टार्थविषया स्मृतिरर्थशास्त्रमित्यर्थः । एतच्चोभयविधशास्त्रानुसरणं तयोः मिथो विरोधाभाव एव । तथाच नारदः—

यत्र विप्रतिपत्तिस्स्याद्धर्मशास्त्रार्थशास्त्रयोः ।
अर्थशास्त्रोक्तमुत्सृज्य धर्मशास्त्रोक्तमाचरेत् ॥

अतो यत्रैकस्य जयेऽवधार्यमाणेऽर्थशास्त्रोक्तमित्रलब्धिधर्मशास्त्रोक्तमार्गविरोधेन भवति तत्र मित्रलब्धिविरोधेनापरस्यैव जयावधारणं कार्यम् । यत्र पुनर्धर्मस्मृत्योर्विरोधस्तत्रोक्तं याज्ञवल्क्येन—

स्मृत्योर्विरोधे न्यायस्तु बलवान् व्यवहारतः ।

इति । श्रुतिमूलस्मृत्योर्विरोधे वृद्धव्यवहारावगतसावकाशनिरवकाशत्वादितर्कबलेन यथा व्यवस्थितविषयता तयोर्ज्ञायते तथा

गृहीतव्यमित्यर्थः। एवमविरोधेऽपि न्यायावधारितशास्त्रार्थस्यै-वानुसरणं कार्यमित्याह बृहस्पतिः—

केवलं शास्त्रमाश्रित्य न कर्तव्यो विनिर्णयः।
युक्तिहीने विचारे तु धर्महानिः प्रजायते ॥

अतस्तर्कानुगृहीतमेव शास्त्रार्थमाश्रित्य निर्णेतव्यमित्यर्थादुक्तं भवति। उक्तं च गौतमेन—

'न्यायाधिगमे तर्कोऽभ्युपायः, तेनाभ्यूह्य यथास्थानं गमयेत्'

न्यायाधिगमो धर्माधिगम इत्यर्थः। तथाच स्मृत्यन्तरम्—

यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः।

इति। अतो न सहसा निश्चिनुयादित्याह पितामहः—

असत्यास्सत्यसङ्काशास्सत्याश्चासत्यसन्निभाः।
दृश्यन्ते भ्रान्तिजनकास्तस्माद्युक्तं परीक्षणम् ॥

नारदोपि—

तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव।
न तलं विद्यते व्योम्नि न खद्योतो हुताशनः ॥
तस्मात्प्रत्यक्षदृष्टेऽपि युक्तमर्थात्परीक्षितुम्।
परीक्ष्य ज्ञापयन्नर्थान् न धर्मात् परिहीयते ॥
यात्यचोरोपि चोरत्वं चोरश्चायात्यचोरताम्।
अचोरश्चोरतां प्राप्तो माण्डव्यो व्यवहारतः ॥
सूक्ष्मो हि भगवान् धर्मो दुष्प्रेक्षो दुर्विचारणः।
अतः प्रत्यक्षमार्गेण व्यवहारगतिं नयेत् ॥

तलमवनितलं, व्यवहारतः व्यवहाराख्यनिर्णयविशेषे इत्यर्थः। प्रत्यक्षमार्गः स्पष्टमार्गः। मनुरपि—

यथा नयत्यसृक्पातैः मृगस्य मृगयुः पदम्।
नयेत्तथाऽनुमानेन धर्मस्य नृपतिः पदम्॥
बाह्यैर्विभावयेल्लिङ्गैर्भावमन्तर्गतं नृणाम्।
स्वरवर्णेङ्गिताकारैश्चक्षुषा चेष्टितेन च॥

याज्ञवल्क्योपि—

असाक्षिके हते चिह्नैर्युक्तिभिश्चागमेन च।
द्रष्टव्यो व्यवहारस्तु कूटचिह्नकृताद्भयात्॥

असाक्षिकहतविषये न क्षतादिचिह्नदर्शनमात्रेण निश्चिनुयात्, कृत्रिमक्षतादिसंभवात्। किंतु युक्त्यादिभिः परीक्षणीयमित्यर्थः। तथाच नारदः—

कश्चित्कृत्वाऽऽत्मनश्चिह्नं द्वेषात्परमुपद्रवेत्।
युक्तिहेत्वर्थसम्बन्धैस्तत्र युक्तं परीक्षणम्॥

चिह्नं व्रणादि। युक्तिरर्थापत्तिः। हेतुरनुमानम्। अर्थः प्रयोजनम्। सम्बन्धस्सन्निधिः, पूर्वकलहो वा। परीक्षणं भूतेन व्यवहारनयनार्थम्। अत एव याज्ञवल्क्यः—

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः।
भूतमप्यनुपन्यस्तं हीयते व्यवहारतः॥

लिखितादिप्रमाणस्य यथार्थानुसारित्वनियमाभावाद्वादिप्रतिवाद्यनुपन्यस्तं परमार्थतो विद्यमानमपि व्यवहारवशाद्धीयते। यत

एव तेन प्रयत्नतो भूतानुसरणं कार्यमित्यर्थः । नारदोऽपि—

न तु शिष्टं छलं राजा मर्षयेद्धर्मसाधनः ।
भूतमेव प्रपद्येत धर्ममूला यतश्श्रियः ॥

शिष्टं अर्थिप्रत्यर्थिभिरभिहितम् । नात्र जल्पमार्गवत् पुरुषप्रतिभा अन्वेषणीया, किंतु तत्त्वानुसरणं सति संभवे कार्यमिति तात्पर्यार्थः । यदा तु सर्वदा भूतानुसरणं न शक्यते कर्तुं तदा छलानुसारेणापि साक्ष्यादिप्रमाणाधीनो निर्णयः कार्य एव । तथाच तेनैवोक्तम्—

भूतच्छलानुसारित्वात् द्विगतिस्समुदाहृता ।

इति । गौतमेनाप्युक्तम्—

'विप्रतिपत्तौ साक्षिनिमित्ता सत्यव्यवस्था'

इति । साक्षिनिमित्तेति प्रमाणोपलक्षणार्थम् । अत एव मनुः—

प्रत्यहं देशदृष्टैश्च शास्त्रदृष्टैश्च हेतुभिः ।
अष्टादशसु मार्गेषु निबन्धानि पृथक्पृथक् ॥

देशदृष्टैः तत्तद्देशव्यवस्थितधर्माचारैः शास्त्रप्रसिद्धैः साक्षिद्रव्यादिदृष्टादिप्रमाणैः प्रत्यहं ऋणादानाद्यष्टादशपदेषु पृथक्पृथक् निबन्धानि कार्याणि पश्येदित्यर्थः । तत्र शास्त्रदृष्टानामभावे देशदृष्टैर्द्रष्टव्यम् । तथाच कात्यायनः—

अस्वर्ग्यलोकनाशाय परानीकभयावहा ।
आयुर्वीर्यहरा राज्ञः सति वाक्ये स्वयं कृतिः ॥
तस्माच्छास्त्रानुसारेण राजा कार्याणि साधयेत् ।

वाक्याभावेषु सर्वेषां देशदृष्टं मतं नयेत् ॥

इति । परानीकभयावहा परसैन्यतो भीत्युत्पादिका । वाक्यं शास्त्रम् । देशदृष्टस्य लक्षणमप्याह स एव—

यस्य देशस्य यो धर्मः प्रवृत्तस्सार्वकालिकः ।
श्रुतिस्मृत्यविरोधेन देशदृष्टस्स उच्यते ॥

स च राज्ञा पुस्तके निवेशितव्य इत्याह स एव—

देशस्यानुमतेनैव व्यवस्था या निरूपिता ।
लिखिता तु सदा धार्या मुद्रिता राजमुद्रया ॥
शास्त्रवद्यत्नतो रक्ष्या तां निरीक्ष्य विनिर्णयेत् ।

इति । तामिति कुलाद्यनुमताया अपि व्यवस्थायाः प्रदर्शनार्थम् । अत एव पितामहः—

यद्यदाचरति श्रेष्ठो धर्म्यं वाऽधर्म्यमेव वा ।
कुलादिदेशाचरणाच्चरित्रं तत्प्रकीर्तितम् ॥
ग्रामगोष्ठपुरश्रेणीसार्थसेनानिवासिनाम् ।
व्यवहारश्चरित्रेण निर्णेतव्यो बृहस्पतिः ॥

ग्रामादिनिवासिनां मिथोविवादविषयमेतत् । अन्यैस्सह तेषां विवादे तु शास्त्रदृष्टैरेव निर्णेतव्यम् । तथाच स एव—

देशपत्तनगोष्ठेषु पुरग्रामेषु वासिनाम् ।
तेषां स्वसमयैर्धर्मशास्त्रतोऽन्येषु तैस्सह ॥

इति । यत्र चैते हेतवो न विद्यन्ते तत्र पार्थिववचनान्निर्णय इत्याह स एव—

लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोऽस्ति प्रमाणं तत्र पार्थिवः ॥
निश्चेतुं ये न शक्यास्स्युर्वादास्संदिग्धरूपिणः ।
तेषां नृपः प्रमाणं स्यात् स सर्वस्य प्रभुर्यतः ॥

इति । अत्र हारीतः—

धर्मशास्त्रार्थशास्त्रोक्तशिष्टाचारादिलक्षणः ।
छलेन च व्यपेतो यो व्यवहारस्स धार्मिकः ॥

धार्मिको धर्मादनपेतः । एवं पश्यतो नृपतेः फलमाह नारदः—

धर्मेणोद्धरतो राज्ञो व्यवहारान् कृतात्मनः ।
सम्भवन्ति गुणास्सप्त सप्त वह्नेरिवार्चिषः ॥

वह्नेस्सप्तार्चिष इव सप्त गुणास्सम्भवन्तीत्यर्थः । तान् गुणानाह स एव—

धर्मश्चार्थश्च कीर्तिश्च लोकपक्तिरुपग्रहः ।
प्रजाभ्यो बहुमानश्च स्वर्गस्थानं च शाश्वतम् ॥

लोकपक्तिर्लोकानुरागः । उपग्रह आश्रयणीयत्वम् ।

निग्रहेण च पापानां साधूनां सङ्ग्रहेण च ॥
द्विजातय इवेज्याभिः पूयन्ते सततं नृपाः ॥

याज्ञवल्क्योपि—

यो दण्ड्यान् दण्डयेद्राजा सम्यग्वध्यांश्च घातयेत् ।
इष्टं स्यात्क्रतुभिस्तेन सहस्रशतदक्षिणैः ॥

इति संचिन्त्य नृपतिः क्रतुतुल्यफलं पृथक् ।
व्यवहारान् स्वयं पश्येत् सभ्यैः परिवृतोऽन्वहम् ॥

अन्वहमित्येतच्चतुर्दश्यादिव्यतिरिक्ताहर्विषयम् । तथा च संवर्तः—

चतुर्दशी ह्यमावास्या पौर्णमासी तथाऽष्टमी ।
तिथिष्वासु न पश्येत्तु व्यवहारांस्तु नित्यशः ॥

आभ्योऽन्यास्वपि तिथिष्वावर्तनान् पूर्वमेव । तथा च बृहस्पतिः—

पूर्वाह्णे तामधिष्ठाय वृद्धामात्यानुजीविभिः ।
पश्येत्पुराणधर्मार्थशास्त्राणि शृणुयात्तथा ।
राजा कार्याणि संपश्येत् सभ्यैरेव त्रिभिर्वृतः ॥

इति । तामुक्तलक्षणां सभामित्यर्थः । पूर्वाह्णेऽप्याद्यघटिकाचतुष्टया-दूर्ध्वमेव, तस्याग्निहोत्राद्यर्थत्वात् । अत एव कात्यायनः—

आद्यादह्नोऽष्टभागाद्यदूर्ध्वं भागत्रयं भवेत् ।
स कालो व्यवहाराणां शास्त्रदृष्टः परं स्मृतः ॥

इति । अस्मिन् भागत्रयपरिमिते काले सततं पश्येत् । तथाच पितामहः—

लेखको गणकश्शास्त्रं साध्यपालस्सभासदः ।
हिरण्यमग्निरुदकमष्टाङ्गं करणं स्मृतम् ॥
तदध्यास्यानिशं पश्येत् पौरैः कार्यं निवेदितम् ।

पौरग्रहणं स्वराष्ट्रगताखिलजनोपलक्षणार्थम् । तथाच मनुः—

तत्र स्थितः प्रजास्सर्वाः प्रतिनन्द्य विसर्जयेत् ।

तत्र सभायामित्यर्थः । प्रजास्वापि स्वयं विवादमुत्पाद्य दर्शनं न कार्यम् । तथाच पितामहः—

न तु पश्येत्समुत्प्रेक्ष्य स्वयं वा पुरुषेण वा ।

पुरुषेण वेति राजप्रेरितस्य पुरुषोत्प्रेक्षितस्य प्रातिषेधोऽयं, न पुनः पुरुषमात्रोत्प्रेक्षितस्य । तथात्वेऽर्थितत्सम्बन्धिपुरुषोत्प्रेक्षितस्यापि व्यवहारदर्शनमेव प्रतिषिद्धं स्यात् । अत एव मनुना पुरुषो विशेषितः—

नोत्पादयेत् स्वयं कार्यं राजा नाप्यस्य पूरुषः ।

इति । अविवादिनां नराणामिति शेषः । तथाच नारदः—

न तु राजा वशित्वेन धनलोभेन वा पुनः ।
उत्पादयेत्तु कार्याणि नराणामविवादिनाम् ॥

कार्याणि विवादानीत्यर्थः । तथा प्रजाभ्य एवोत्पन्नमपि कार्यं कार्यिणा तत्सम्बन्धिना वा अनिवेदितं कथंचिदवगम्य न ग्राह्यमित्याह मनुः—

न चाप्रापितमन्येन ग्रसेतार्थं कथंचन ।

इति । अप्रापितमनावेदितं कथंचन रागादिनेत्यर्थः । अत एव पितामहः—

न रागेण न लोभेन न क्रोधेन ग्रसन्नृपः ।
परैरप्रापितानर्थान् न चापि स्वमनीषया ॥

इति । परैरावेदकैः । अत्रापवादमाह स एव—

छलानि चापराधांश्च पदानि नृपतेस्तथा ।
स्वयमेतानि गृह्णीयान्नृपस्त्वावेदकैर्विना ॥

तत्र छलान्याह स एव—

पथिभङ्गी कराक्षेपी प्राकारोपरि लङ्घकः ।
निपानस्य विनाशी च तथा चायतनस्य च ॥
परिघापूरकश्चैव राजच्छिद्रप्रकाशकः ।
अन्तःपुरं वासगृहं भाण्डागारं महानसम् ॥
प्रविशत्यनियुक्तो यो भोजनं च निरीक्षते ।
विण्मूत्रश्लेष्मवातानां क्षेप्तुकामो नृपाग्रतः ॥
पर्यङ्कासनबन्धा चाप्यग्रस्थाननिरोधकः ।
राज्ञोऽतिरिक्तवेषश्च विधृतः प्रविशेत्तु यः ॥
यश्चापद्वारेण विशेदवेलायां तथैव च ।
शय्यासने पादुके च शयनासनरोहणम् ॥
राजन्यासन्नशयने यस्तिष्ठति समीपतः ।
राज्ञो विद्विष्टसेवी वाऽप्यदत्तविहितासनः ॥
वस्त्राभरणयोश्चैव सुवर्णपरिधायकः ।
स्वयंग्राहेण ताम्बूलं गृहीत्वा भक्षयेत्तु यः ॥
अनियुक्तप्रभाषी च नृपाक्रोशक एव च ।
एकवासास्तथाऽभ्यक्तः मुक्तकेशोऽवकुण्ठितः ॥
विचित्रिताङ्गस्स्रग्वी च परिधानविधूनकः ।

शिरःप्रच्छादनश्चैव छिद्रान्वेषणतत्परः ॥
आसङ्गी मुक्तकेशश्च यश्च कर्णाक्षिकर्शकः ।
दन्तोल्लेखनकश्चैव कर्णनासाविशोधकः ॥
छलान्येतानि पञ्चाशत् भवन्ति नृपसन्निधौ ॥

इति । राज्ञश्शय्यायां शयनं, तदीयासने चोपवेशनं, तत्पादुकारोहणमिति त्रीणि छलानि । वस्त्राभरणयोश्चैवेत्यत्रादत्तग्राहक इति शेषो विज्ञेयः । मुक्तकेश इति द्विःपाठो मुण्डस्यापि संग्रहार्थः । अवशिष्टं व्यक्तार्थम् । अपराधानाह नारदः—

आज्ञालङ्घनकर्तारः स्त्रीवधो वर्णसङ्करः ।
परस्त्रीगमनं चौर्यं गर्भश्चैव पतिं विना ॥
वाक्पारुष्यमवाच्यं यत् दण्डपारुष्यमेव च ।
गर्भस्य पातनं चैवेत्यपराधा दशैव तु ॥

इति । एतांश्चावेदकं विना स्वयं राजा विचारयेदिति शेषः । तथाच संवर्तः—

आसेधं पथिभङ्गं च यश्च गर्भः पतिं विना ।
स्वयमन्वेषयेद्राजा विना चैव विवादिना ॥
यस्य दृश्यस्य संपत्तिर्न दृश्येतागमः क्वचित् ।
स्वयमन्वेषयेद्राजा विना चैव विवादिना ॥
सभाभङ्गं तरुच्छेदं सस्यन्याघातमेव च ।
स्वयमन्वेषयेद्राजा विना चैव विवादिना ॥

कन्यापहारकं पापं विप्रं च पतितं तथा ।
परार्थवादसंयुक्तं स्वयं राजा विचारयेत् ॥
षड्भागकरशुल्कार्थे मार्गभेदकमेव च ।
स्वराष्ट्रचौर्यभीतिं च परदाराभिमर्शनम् ॥
गोब्राह्मणनिहन्तारं सस्यानां चैव घातुकम् ।
दशैतानपराधांश्च स्वयं राजा विचारयेत् ॥

एतानासेधादीन् दशापराधान् स्वयं राजा विचारयेदित्यर्थः। अत्र पथिभङ्गग्रहणं छलानां प्रदर्शनार्थं, दशापराधान्तर्गतानां केषांचिद्ग्रहणं तेषां प्रदर्शनार्थम् । सस्यघातुकग्रहणं तु पदानां प्रदर्शनार्थम् । पदानि च समस्तानि पितामहेन दर्शितानि—

उत्कर्ती सस्यघाती चाप्यग्निदश्च तथैव च ।
विध्वंसकः कुमार्याश्च निधानस्योपगोपकः ॥
सेतुकण्टकभेत्ता च क्षेत्रसञ्चारकस्तथा ।
आरामच्छेदकश्चैव गरदश्च तथैव च ॥
राज्ञो द्रोहप्रकर्ता च तन्मुद्राभेदकस्तथा ।
तन्मन्त्रस्य प्रभेत्ता च बद्धस्यैव च मोचकः ॥
भोगदण्डौ च गृह्णाति दानमुत्सेकमेव च ।
पटहाघोषणाच्छादी द्रव्यमस्वामिकं च यत् ॥
राजावलीढं द्रव्यं यद्यच्चैवाङ्गविनाशनम् ।
द्वाविंशतिं पदान्याहुः नृपज्ञेयानि पण्डिताः ॥

इति । एवं छलादीनि साक्षाद्वा स्तोभकसूचकवचनाद्वा ज्ञात्वा राज्ञा द्रष्टव्यानि । अन्यानि पुनः कार्याणि कार्थिणा तत्सम्बन्धिना वा ज्ञात्वा, नान्यथेत्यवगन्तव्यम् । स्तोभकसूचकयोर्लक्षणमाह कात्यायनः—

शास्त्रेण निन्दितं त्वर्थमुख्यश्चार्थप्रचोदितः ।
आवेदयति यः पूर्वं स्तोभकस्स उदाहृतः ॥
नृपेणैव नियुक्तो यः परदोषमवेक्षितुम् ।
नृपस्य सूचयेज्ज्ञात्वा सूचकस्स उदाहृतः ॥

अर्थमुख्योऽर्थप्रधान इत्यर्थः । अत्र हारीतः—

शास्त्राणि वर्णधर्मांस्तु प्रकृतीनां च भूपतिः ।
व्यवहारस्वरूपं च ज्ञात्वा तत्सर्वमाचरेत् ॥

प्रकृतयः पुनः पितामहेन दर्शिताः—

रजकश्चर्मकारश्च नटो वुरुड एव च ।
कैवर्तकश्च विज्ञेया म्लेच्छभिल्लौ तथैव च ॥
वेमरस्थिराविव्याधहस्तलाक्षद्रुघट्टकाः ।
कोसेदकाभीरपद्मातङ्गाण्डोपगोपकाः ॥
एताः प्रकृतयः प्रोक्ताः अष्टादश मनीषिभिः ।
वर्णानामाश्रमाणां च सर्वदा तु वहिस्स्थिताः ॥

इति । व्यवहारस्वरूपं च आद्यप्रकरण एव निरूपितम् । मनुरपि—

जातिजानपदान् धर्मान् श्रेणीधर्मांश्च शाश्वतान् ।
समीक्ष्य कुलधर्मांश्च स्वे वर्गे प्रतिपादयेत् ॥

श्रेणीधर्माः वणिक्कारुकादीनां स्वे स्वे वर्गे इदमस्मिन् अहनि न विक्रेयं इदं चानयैव श्रेण्या विक्रेयमित्येवमादयः । अस्मिन् कुले पञ्चमेऽह्नि पञ्चमे वाऽब्दे कर्णवेधः कर्तव्य इत्यादयः कुल धर्माः । प्रतिपादयेत् बोधयेत् । अकुर्वतश्चानापदि बलात्कारेण कारयेत् । तथाच याज्ञवल्क्यः—

कुलानि प्रकृतीश्चैव श्रेणीजानपदानापि ।
स्वधर्माच्चलितान् राजा विनीय स्थापयेत्पथि ॥

नारदस्तु कार्यदर्शनप्रकारमाह—

धर्मशास्त्रं पुरस्कृत्य प्राड्विवाकमते स्थितः ।
समाहितमतिः पश्येत् व्यवहाराननुक्रमात् ॥

अनुक्रमात् अर्थिवचनश्रवणादनुक्रमेणेत्यर्थः । तथाच स एव—

आगमः प्रथमः कार्यो व्यवहारपदं ततः ।
विचारो निर्णयश्चेति दर्शनं स्याच्चतुर्विधम् ॥

आगमोऽर्थिवचनश्रवणं, तदादौ कर्तव्यम् । ततस्तद्वचनमृणा-दानाद्यन्यतमास्मिन् पदेऽन्तर्भाव्यम् । ततः प्रतिज्ञोत्तरप्रमाणा-नां विचारः, ततः प्रमाणतो जयावधारणं एवं तदीयभाष्ये व्याख्यातम् । तत्र मनुः—

क्षन्तव्यं प्रभुणा नित्यं क्षिपतां कार्यिणां नृणाम् ।
बालवृद्धातुराणां च कुर्वता हितमात्मनः ॥
यत् क्षिप्तो मर्षयत्यार्तैः तेन स्वर्गे महीयते ।
यस्त्वैश्वर्यान्न क्षमते नरकं तेन गच्छति ॥

इति स्मृतिचन्द्रिकायां दर्शनविधिः

अथासेधविधिः

तत्र नारदः—

वक्तव्येऽर्थे ह्यतिष्ठन्तमुत्क्रामन्तं च तद्वचः ।
आसेधयेद्विवादार्थी यावदाह्वानदर्शनम् ॥

संदिग्धेऽप्यर्थे निर्णयोदासीनं निर्णयाय प्रवर्तितव्यमित्यादि चार्थिनो वचनमवमन्यमानमासेधयेद्राजाज्ञया निरुन्ध्याद्व्यवहारदर्शनार्थाह्वानपर्यन्तं विवादनिर्णयार्थीत्यर्थः । चतुर्विधश्चायमासेध इत्याह स एव—

स्थानासेधः कालकृत प्रवासात् कर्मणस्तथा ।
चतुर्विधस्स्यादासेधस्तमासिद्धो न लङ्घयेत् ॥

स्थानासेधो गृहदेवकुलादिस्थानान्न चलितव्यमित्यवरोधनम् । कालकृतः पञ्चम्यादावात्मा दर्शयितव्यो नो चेद्राजाज्ञामुल्लङ्घितवानित्येवंविधः । प्रवासादासेधो यात्रावारणम् । कर्मण आसेधः पण्यप्रसारणादेः वारणं, न पुनर्निरीक्षणादेः । यदाह कात्यायनः—

यस्त्विन्द्रियनिरोधेन व्याहारोच्छ्वसनादिभिः ।
आक्षेधयेदनासेध्यं स दण्ड्यो न त्वतिक्रमी ॥

इन्द्रियनिरोधादेस्सङ्कटत्वात् न तत्र राजाज्ञातिक्रमो दोषमावहतीत्यर्थः । अत एव नदीसन्तरणादिसङ्कटविपयेऽपि अपराधो नास्तीत्याह नारदः—

नदीसंतारकान्तारदुर्देशोपप्लवादिषु ।

आसिद्धस्तं परासेधमुत्क्रामन्नापराध्नुयात् ॥

नद्यास्संतरणं नदीसन्तारः । कान्तारो दुर्गमो मार्गः । दुष्टचोरव्याघ्रादिदेशो दुर्देशः । उपप्लवः परबलादिभिर्व्याकुलता । एवमादावाज्ञातिक्रमेऽपि नापराधः । अन्यत्र त्वपराधमाह पितामहः—

राजाज्ञा लङ्घिता येन करणीया विशेषतः ।
सप्ताङ्गस्य तु राज्यस्य द्रौह्यं तेन कृतं भवेत् ॥

यत्र त्वाज्ञातिक्रमेऽपराधः तत्र दण्डमाह व्यासः—

आसेधयोग्य आसिद्ध उत्क्रामन्दण्डमर्हति ।

इति । नारदोऽपि—

आसेधकाल आसिद्ध आसेधं योऽतिवर्तते ।
स विनेयोऽन्यथा कुर्वन्नासेद्धा दण्डभाग्भवेत् ॥

अन्यथा कुर्वन् अनासेध्यमासेधयन्निसर्थः । तथा च व्यासः-

आसेधयंस्त्वनासेध्यान् राज्ञा शास्य इति स्थितिः ।

इति । अनासेद्ध्यानाह कात्यायनः—

वृक्षपर्वतमारूढा हस्त्यश्वरथनौस्थिताः ।
विषमस्थाश्च ते सर्वे नासेद्धयाः कार्यसाधकैः ॥
व्याध्यार्ता व्यसनस्थाश्च यजमानास्तथैव च ।
अनुत्तीर्णाश्च नासेध्या मत्तोन्मत्तजडास्तथा ॥
न कर्षको बीजकाले सेनाकाले तु सैनिकः ।

प्रतिज्ञाय प्रयातश्च कृतकालश्च नान्तरा ॥
उद्युक्तः कर्षकस्सस्ये तोयस्यागमने तथा ।
आरम्भात्संग्रहं यावत् तत्कालं न विवादयेत् ॥

अनासेधकालत्वादित्यभिप्रायः । बृहस्पतिरपि—

सत्रोद्वाहोद्यतो रोगी शोकार्तोन्मत्तबालकाः ।
मत्तो वृद्धो नियुक्तश्च नृपकार्योद्यतो व्रती ॥
आसन्ने सैनिकस्सङ्ख्ये कर्षको वापसङ्ग्रहे ।
विषमस्थाश्च नासेध्याः स्त्रीसनाथास्तथैव च ॥

सङ्ख्ये सङ्ग्रामे । नारदोऽपि—

निर्वेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथाऽन्येन राजकार्योद्यतस्तथा ॥
गवां प्रचारे गोपालाः सस्यारम्भे कृषीवलाः ।
शिल्पिनश्चापि तत्काल अयुधीयाश्च विग्रहे ॥
अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती ।
विषमस्थाश्च नासेध्या न चैतानाह्वयेन्नृपः ॥

निर्वेष्टुकामो विवाहाभिमुखः । गवां प्रचारोऽटवीमुखः । अप्राप्तव्यवहारोऽपूर्णषोडशवर्षः । विषमस्थाः चोराद्यपहृतसर्वस्वाः । व्यासोऽपि—

रोगी यियक्षुरुन्मत्तो धर्मार्थी व्यवसनी व्रती ।
दानोन्मुखो नाभियोज्यो नासेध्यो नाह्वयेच्च तम् ॥

अत्र विशेषमाह बृहस्पतिः—

वणिग्विक्रीतपण्यस्तु सस्ये जाते कृषीवलः ।
सत्रोद्यताश्चापि तथा प्रापणीयाः कृतक्रियाः इति ॥

इति स्मृतिचन्द्रिकायामासेध..

अथ दर्शनोपक्रमः.

तत्र मनुः—

धर्मासनमधिष्ठाय संवीताङ्गस्समाहितः ।
प्रणम्य लोकपालेभ्यः कार्यदर्शनमारभेत् ॥

शास्त्रोक्तकाले इति शेषः । तथाच कात्यायनः—

काले कार्यार्थिनं पृच्छेत् प्रणतं पुरतस्स्थितम् ।
किं कार्यं का च ते पीडा मा भैषीर्ब्रूहि मानव ॥

किं कार्यमिति देयाप्रदानस्य ज्ञानार्थं प्रश्नः, का च पीडेति हिंसायाः । तथा तयोः कर्तृदेशकालकारणपरिज्ञानार्थं सभापतिना प्रश्नचतुष्टयं कार्यमित्याह स एव—

केन कस्मिन् कदा कस्मात् पृच्छेदेवं सभां गतः ॥

इत्येवं पृष्टः कार्यार्थी ततस्तस्मै वक्तव्यजातं विज्ञापयेत् । तथाच याज्ञवल्क्यः—

स्मृत्याचारव्यपेतेन मार्गेणाधर्षितः परैः ।
आवेदयति चेद्राज्ञे व्यवहारपदं हि तत् ॥

अनेन वादी परकृतमुपद्रवमावेदयेदित्यर्थादुक्तम् । चेच्छब्दोऽत्रावेदकरुच्यैवावेदनं कार्यम्, न तु राजाज्ञयेति ज्ञापनार्थः ।

परैरिति बहुवचनमुपलक्षणार्थम् । अत एव कात्यायनेनापराध कर्तृप्रश्नः केनेत्येकवचनान्तेन दर्शितः । आधर्षितग्रहणं विवादेऽधिकारिणः अभिधानार्थं, न तु कर्तुः—

अर्थिना संनियुक्तो वा प्रत्यर्थिप्रहितोपि वा ।
यो यस्यार्थे विवदते तयोर्जयपराजयौ ॥

इति कात्यायनेन विवादे नियुक्तस्यापि कर्तृत्वाभिधानात् । नियुक्तग्रहणं तदीयानामप्युपलक्षणार्थम् । अत एव पितामहः—

पिता भ्राता सुहृच्चापि बन्धुस्सम्बन्धिनोपिं वा ।
यदि कुर्युरुपस्थानं वादं तत्र प्रवर्तयेत् ॥
यत्किंचित्कारयेत्किंचित् नियोगाद्येन केनचित् ।
तत्तेनैव कृतं ज्ञेयमनिवर्त्यं हि तत्स्मृतम् ॥

इति । एवंचार्थिना वा तदीयेन वा पुरुषेणावेदनं कार्यं न त्वन्येनेत्यनुसंधेयम् । अत एव नारदः—

यो न भ्राता न च पिता न पुत्रो न नियोगकृत् ।
परार्थवादी दण्ड्यस्स्याद्व्यवहारेषु विब्रुवन् ॥

कात्यायनोपि—

दासाः कर्मकराश्शिष्याः नियुक्ता बान्धवास्तथा ।
वादिनो न च दण्ड्यास्स्युः यस्त्वतोऽन्यस्स दण्डभाक् ॥

एवमावेदनकर्ताऽप्यावेदनसमये अविनीतो वदन् दण्ड्य इत्याहोशना—

सशस्त्रोऽनुत्तरीयश्च मुक्तकेशस्ससाधनः ।

वामहस्तेन च स्रग्वी वदन् दण्डमवाप्नुयात् ॥

अतोऽनेवंभूतो वदेदित्यभिप्रायः । ततस्तद्वचनं सर्वं फलकादौ लेखको लिखेत् । तथाच नारदः—

रागादीनां यदेकेन कोपितः करणे वदेत् ।
तदोमिति लिखेत्सर्वमर्थिनः फलकादिषु ॥

करणे राजादिसन्निधावित्यर्थः । तच्च लिखितं जन्मान्तरे मयाऽस्मै धनं दत्तं तदसौ न प्रयच्छतीतिवद्विचारायोग्यं यदि न स्यात् तदा तत्प्रत्यर्थ्यानयनाय मुद्राप्रदानादिकं कुर्यात् । तथाच कात्यायनः—

एवं पृष्टस्स यद्ब्रूयात्तत्सभ्यैर्ब्राह्मणैस्सह ।
विमृश्य कार्यं न्याय्यं चेदाह्वानार्थमतःपरम् ॥
मुद्रां वा निक्षिपेत्तस्मिन् पुरुषं वा समादिशेत् ।

तस्मिन्नावेदके । पुरुषः साध्यपालः । न्याय्यं योग्यम् । आह्वानार्थमभियुक्तस्येति शेषः । तथा च बृहस्पतिः—

यस्याभियोगं कुरुते तथ्येनाशङ्कयाऽथवा ।
तमेवानाययेद्राजा मुद्रया पुरुषेण वा ॥

उत्तरदाने तस्यैवाधिकारादित्यभिप्रायः । अत एव कात्यायनः—

अधिकारोऽभियुक्तस्य नेतरस्यास्त्यसङ्गतेः ।

इति । इतरस्यानभियुक्तस्य तस्मिन्विवादे सम्बन्धाभावान्नास्त्युत्तरदानेऽधिकार इत्यर्थः । अतः इतरस्योत्तरवादित्वं, न स्वतः, किंतु अभियुक्तेन प्रतिवादित्वकरणात् । प्राड्विवाके वा स्वका

र्थकरणत्वेन समर्पणादर्थिना वा स्वरुच्या प्रतिवादित्वाङ्गीकारात्। नान्यथा, तदाह स एव—

इतरोऽप्यभियुक्तेन प्रतिरोधीकृतो मतः ।

समर्पितोऽर्थिना योऽन्यः परो धर्माधिकारिणि ॥

प्रतिवादी स विज्ञेयः प्रतिपन्नश्च यस्स्वयम् ।

अयमर्थः—इतरो विवादासम्बद्धोऽपि अभियुक्तेन प्रतिरोधीकृतः-प्रतिवादीकृतः मन्वादीनामुत्तरवादित्वेन संमतः। तथा अन्यो द्वितीयः स विज्ञेयः, यः परो विवादासंबन्धी धर्माधिकारिणि प्राड्विवाकेऽभियुक्तेन समर्पितः अर्थिना वा स्वयमेव यः प्रतिपन्नः प्रतिवादित्वेनाङ्गीकृत इति। एतच्चानधिकारिणः प्रतिवादित्वमकल्याद्यधिकारिविषये वेदितव्यम् । तत्राधिकारिणः साक्षात्कर्तृत्वस्य दुष्करत्वात् । अत एव बृहस्पतिः—

अप्रगल्भजडोन्मत्तवृद्धस्त्रीबालरोगिणाम् ।

पूर्वोत्तरं वदेद्बन्धुः नियुक्तोऽन्योऽथवा नरः ॥

अत एव च तेषामाह्वानप्रतिषेधो हारीतादिभिस्स्मर्यते—

अकल्यबालस्थविरविषमस्थक्रियाकुलान् ।

कार्यातिपातिव्यसनिनृपकार्योत्सवाकुलान् ॥

मत्तोन्मत्तप्रमत्तार्तभृत्यान्नाह्वापयेन्नृपः ॥

अकल्यो व्याधितः । विषमस्थ उत्पन्नसङ्कटः । क्रियाकुलः नित्यनैमित्तिककर्मकरणव्यग्रः । यस्य त्वागच्छतो गुरुतरकार्यहानिस्स कार्यातिपाती । व्यसनमिष्टवियोगादिजं दुःखं, तद्वान्

व्यसनी । मत्तो दुत्तूरादिमदनीयद्रव्येण स्खलितबुद्धिः । उन्मत्तो ग्रहपित्तादिभिः । प्रमत्तस्सर्वत्रावधानहीनः । आर्तो विषादिना दुःखितः । भृत्यग्रहणमस्वतन्त्रस्त्रीणामप्युपलक्षणार्थम् । अत एव कात्यायनः—

धर्मोत्सुकानभ्युदये रोगिणोऽथ जडानपि ।
अस्वस्थमत्तोन्मत्तार्तास्त्रियो नाह्वापयेन्नृपः ॥

स्त्रियोऽत्र परतन्त्रा विवक्षिताः । आह स एव—

न हीनपक्षां युवतिं कुले जातां प्रसूतिकाम् ।
सर्ववर्णोत्तमां कन्यां ताः ज्ञातिप्रभुकास्स्मृताः ॥
तदधीनकुटुम्बिन्यः स्वैरिण्यो गणिकाश्च याः ।
निष्कुला याश्च पतितास्तासामाह्वानमिष्यते ॥

इति । हीनपक्षा मन्दकुला, युवतीतितस्या एव विशेषणम् । कुले जाता सत्कुले जाता, सर्ववर्णोत्तमा वाद्यपेक्षयोत्तमवर्णा । ताः पूर्वोक्ताः पञ्च ज्ञातिप्रभुकाः परतन्त्राः । नेतराः । तेन तदधीनकुटुम्बिन्यादीनामाह्वानं मन्वाद्यभीष्टमित्यर्थः । नारदोपि केषुचिदाह्वानं प्रतिषेधति—

निर्वेष्टुकामो रोगार्तो यियक्षुर्व्यसने स्थितः ।
अभियुक्तस्तथाऽन्येन राजकार्योद्यतस्तथा ॥
गवां प्रचारे गोपालाः सस्यारम्भे कृषीवलाः ।
शिल्पिनश्चापि तत्काल आयुधीयाश्च विग्रहे ॥
अप्राप्तव्यवहारश्च दूतो दानोन्मुखो व्रती ।

विषमस्थाश्च नासेध्याः न च तानाह्वयेन्नृपः ॥

निर्वेष्टुकामो विवाहाभिमुखः । व्यासोपि—

रोगी यियक्षुरुन्मत्तो धर्मार्थी व्यसनी व्रती ।
दानोन्मुखो नाभियोज्यो नासेध्यो नाह्वयेच्च तम् ॥

इति । अतोऽकल्यादिविषय एव प्रतिनिधिविधानं व्यवतिष्ठत इति स्थितम् । यदा त्वकल्यादिप्रहितप्रतिनिधिना न कार्यनिष्पत्तिः तदाऽकल्यादीनामप्याह्वानं कार्यम् । तथा च हारीतः—

देशं कालं च विज्ञाय कार्याणां च बलाबलम् ।
अकल्यादीनपि शनैर्यानैराह्वापयेन्नृपः ॥

इति । यदा तु गुरुतरकार्येष्वभियोगः तदाऽभियुक्तस्यैवाह्वानमावश्यकं, तत्र प्रतिनिधिनिषेधात् । तथाच कात्यायनः—

ब्रह्महत्यासुरापानस्तेयगुर्वङ्गनागमे ।
अन्येष्वसभ्यवादेषु प्रतिवादी न दीयते ॥

असभ्यवादानापि स एवाह—

मनुष्यमारणे स्तेये परदाराभिमर्शने ।
अभक्ष्यभक्षणे चैव कन्याहरणदूषणे ॥
पारुष्ये कूटकरणे नृपद्रोहे तथैव च ।
प्रतिवादी न दाप्यस्स्यादर्थिप्रत्यर्थिनोरपि ॥

वादिप्रतिवादिनोः प्रतिनिधिः प्रतिवादी, स सर्वथा गुरुकार्येष्वेवमादिषु न ग्राह्यः । अत एव हारीतः—

ज्ञात्वाऽभियोगं येऽपि स्युर्वने प्रव्रजितादयः ।
तानप्याह्वपयेद्राजा गुरुकार्येष्वकोपयन् ॥

अत्राकोपयन्निति वदन् प्राकृतजने निष्ठुरगिराऽप्याह्वानं कार्यमिति ज्ञापयति । स्पष्टीकृतं चैतद्व्यासेन—

उत्पादयति यो हिंसां देयं वा न प्रयच्छति ।
याचमानाय दौश्शील्यादाकृष्योऽसौ नृपाज्ञया ॥

यस्तु नृपाज्ञयाऽपि नागच्छति तस्य दण्डमाह बृहस्पतिः—

आहूतो यस्तु नागच्छेत् दर्पाद्बन्धुबलान्वितः ।
अभियोगानुरूपेण तस्य दण्डं प्रकल्पयेत् ॥

कात्यायनोपि—

आहूतस्त्ववमन्येत यश्शक्तो राजशासनम् ।
तस्य कुर्यान्नृपो दण्डं विधिदृष्टेन कर्मणा ॥
हीने कर्मणि पञ्चाशत् मध्यमे द्विशतावरः ।
गुरुकार्येषु दण्ड्यस्स्यान्नित्यं पञ्चशतावरः ॥

पणानां सङ्ख्येयम् ॥

कल्पितो यस्य यो दण्डस्त्वपराधस्य यत्नतः ।
पणानां ग्रहणं तु स्यात्तन्मूल्यं वाऽथ राजनि ॥

इति तेनैवाभिधानात् । पणपरिमाणमुत्तरत्र वक्ष्यमाणमनुसन्धेयम् । शक्त इति वचनादापदादिविषये न दण्डप्रकल्पनं, किंतु तन्निवृत्तौ पुनराह्वानं कार्यम् । अत एव व्यासः—

परानीकहते देशे दुर्भिक्षे व्याधिपीडिते ।

कुर्वीत पुनराह्वानं दण्डं न परिकल्पयेत् ॥

हारीतोपि—

राजिकं दैविकं कार्यमभियुक्तस्य तत्त्वतः ।

स्थाने वाऽप्यन्तराळे वा यासेवं तु न दोषभाक् ॥

तत्त्वतः परमार्थतः । अपरमार्थं चेद्दण्डयित्वा पश्चान्न्यायेन वर्तयेत् । तथाच स एव—

प्रतिष्ठाप्यं तु यत्नेन सोऽन्यथा दण्डभाग्भवेत् ।

दण्डयित्वा पुनः पश्चाद्राजा न्याये प्रवर्तयेत् ॥

एवं येनकेनाप्युपायेन नीतमभियुक्तं अभियोक्त्रा सह सभायाः पुरतोऽन्यत्र वाऽपेक्षितस्थाने स्थापयेत् । तथाच पितामहः—

सभायाः पुरतस्स्थाप्योऽभियोगी वादिनां तथा ।

ईप्सितेऽन्यत्र वा स्थाने प्रमाणं सोऽन्यथा न तु ॥

यत्र स्थिते दुष्टलक्षणप्रच्छादनमशक्यं तत्रावस्थाप्य इत्यर्थः । ततो राज्ञा पृष्टोऽभियोगी स्वोपयोगिवृत्तान्तमावेदयेत् । अभियोक्तृकृतावेदनमात्रतो भूतान्वेषणानुपपत्तेः । अत एव भूतान्वेषणविधावुक्तं मनुना—

स्वरवर्णेङ्गिताकारैश्चक्षुषा भाषितेन च ।

इति । छलव्यवहारेऽपि पूर्वपक्षलेखनादर्वाक् छलवादित्वावधारणायाभियुक्तस्य वृत्तान्तस्तन्मुखेनावगन्तव्यः । द्वयोश्छलवादित्वे निश्चिते पश्चाच्छलानुसारेण दर्शनाविधिः । तस्मादभि-

युक्तस्यापि वृत्तान्तावेदनमस्तीत्यवगन्तव्यम्। विवादिनोः छलित्वनिश्चयानन्तरं याज्ञवल्क्यः—

उभयोः प्रतिभूर्ग्राह्यः समर्थः कार्यनिर्णये ॥

साधितधनदण्डधनयोरनायासेन प्राप्तिः कार्यनिर्णयः, तत्करण समर्थः प्रतिभूरर्थिप्रत्यर्थिनोर्द्वयोरपि ग्राह्यो व्यवहारद्रष्ट्रेत्यर्थः। अत्र वर्जनीयानाह कात्यायनः—

न स्वामी न च वै शत्रुस्स्वामिनाऽधिकृतस्तथा।
निरुद्धो दण्डितश्चैव संशयस्थाश्च न क्वचित् ॥
नैव रिक्थी न रिक्तश्च न चैवात्यन्तवासिनः।
राजकार्यनियुक्तश्च ये च प्रव्रजिता नराः ॥
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम्।
नाविज्ञातो ग्रहीतव्यः प्रतिभूत्वक्रियां प्रति ॥

संशयस्थाः अभिशस्ताः। अत्यन्तवासिनः नैष्ठिकब्रह्मचारिणः। तत्समं विवादास्पदीभूतद्रव्यसमम्। विहितदण्डोपलक्षणार्थमेतत्। यदि वादी विवादप्रतिभुवं दातुमसमर्थः तदाऽपि तेनैवोक्तं—

अथ चेत्प्रतिभूर्नास्ति वादयोग्यस्य वादिनः।
स रक्षितो दिनस्यान्ते दद्याद्भृताय वेतनम् ॥

दूताय साध्यपालाय। तथा परित्याजितगृहीतद्रव्य एव विवादी न्याये प्रवर्त्य इत्याह स एव—

गृहीतग्रहणो न्याये न प्रवर्त्यो महीभृता।

तस्य वा तत्समर्प्यं स्यात् स्थापयेद्वा परस्य तत् ॥

इति । परस्य मध्यस्थस्य, समीप इति शेषः । तथाऽभियोक्त्रादीनामुक्तिक्रमोऽपि तेनैवोक्तः—

तत्राभियोक्ता प्राक् ब्रूयादभियुक्तस्त्वनन्तरम् ।
तयोरन्ते सदस्यास्तु प्राड्विवाकस्ततः परम् ॥

प्राग्ब्रूयात् प्रतिज्ञां कुर्यादित्यर्थः । तथाच नारदः—

आज्ञालेख्यै पट्टके शासने वा
आधौ पत्रे विक्रये वा क्रये वा ।
राज्ञे कुर्यात्पूर्वमावेदनं यः
तस्य ज्ञेयः पूर्ववादो विधिज्ञैः ॥

विवादे सर्वत्राभियोक्तुरेव प्रतिज्ञावादित्वमित्यर्थः । अत्रापवादमाह स एव—

यस्य वाऽभ्यधिका पीडा कार्यं वा ह्यधिकं भवेत् ।
तस्यार्थिवादो दातव्यो न यः पूर्वं निवेदयेत् ॥

अर्थिवादः पूर्वपक्षः । तथाच कात्यायनः—

यस्य स्यादधिका पीडा कार्यं वाऽप्यधिकं भवेत् ।
पूर्वपक्षो भवेत्तस्य न यः पूर्वं निवेदयेत् ॥

एवंविधविषये अर्थिप्रत्यर्थिभावस्य वैपरीत्यं परीक्षकैः कार्यमित्यर्थः । यत्रोभयोरपि परस्परमार्थित्वं प्रत्यर्थित्वं च साध्यभेदात् युगपद्भवति तत्रोत्कृष्टजातेः बहुपीडस्य वा अर्थिवादः पूर्वं द्रष्टव्यः । तथाच बृहस्पतिः—

अहंपूर्विकया तावदर्थिप्रत्यर्थिनौ यदा ।
वादो वर्णानुपूर्व्येण ग्राह्यः पीडामवेक्ष्य वा ॥

समानवर्णत्वे पीडापेक्षया ग्राह्यः । अनेकवादियुग्मानां युगपदुपस्थाने तु दर्शनक्रममाह मनुः—

अर्थानर्थावुभौ बुद्ध्वा धर्माधर्मौ च केवलौ ।
वर्णक्रमेण सर्वाणि पश्येत्कार्याणि कार्थिणाम् ॥

इति स्मृतिचन्द्रिकायां दर्शनोपक्रमः.

## अथ प्रतिज्ञावादः.

तत्र बृहस्पतिः—

उपस्थिते ततस्तस्मिन् वादी पक्षं प्रकल्पयेत् ।

इति । समीपस्थे प्रत्यर्थिनि पक्षं लेखयेदित्यर्थः । तथाच याज्ञवल्क्यः—

प्रत्यर्थिनोऽग्रतो लेख्यं यथाऽऽवेदितमर्थिना ॥

इति । यथाऽऽवेदितमिति यत्साध्यमावेदितं तदेव लेख्यं, न साध्यान्तरमिति प्रतिपादनार्थं, न पुनर्यावदावेदितं तावदेव लेख्यमिति । यतोऽनावेदितस्यापि वत्सरादिविशेषस्येदानीं लेखनं कार्यमिति स एवाह—

समामासतदर्धाहर्नामजात्यादिचिह्नितम् ।

इति । समा संवत्सरः । स च धनप्रयोगादिकालीनो लेखनीयः। मासादिरपि तत्कालीन एव । आदिशब्दसंगृहीतानि विशेषणानि कात्यायनेन दर्शितानि—

निवेश्य कालं वर्षं च मासं पक्षं तिथिं तथा ।
वेलां प्रदेशं विषयं स्थानं जात्याकृती वयः ॥
साध्यद्रव्यप्रमाणं च सङ्ख्यां नाम तथाऽऽत्मनः ।
राज्ञां च क्रमशो नाम निवासं साध्यनाम च ॥
क्रमात्पितॄणां नामानि पीडामाहर्तृदायकौ ।
क्षमालिङ्गानि चान्यानि पक्षं सङ्कीर्त्य कल्पयेत् ॥

इति । कालो धनप्रयोगादिकालः वर्तमानेन राज्ञोपलक्षितः । वर्षं देववर्षमित्यादि । वेला भुज्यादिक्रियोपलक्षितः कालः । प्रदेशः साध्यक्षेत्रादेः स्थलविशेषः । विषयोऽन्तर्वेद्यादिदेशः । स्थानं विवादास्पदस्य गृहादेर्ग्रामादिः । आकृतिः अवयवसंस्थानविशेषः । वयस्तारुण्यादि । प्रमाणं परिमाणं दण्डतुलाप्रस्थादिकम् । आत्मनोऽर्थिनः । राज्ञां क्षेत्रादिभुक्तिकालीनानाम् । निवासो वासस्थानं गृहगोष्ठादि । पितरोऽर्थिप्रत्यर्थिनोर्जनकादयः । पीडा प्रतिभुवा धनिकेन कृता । आहर्ता प्रतिग्रहाद्यागमकर्ता । दायको दाता । क्षमालिङ्गानि आत्मीयधनादेः परोपभोगासहननिमित्तानि । अन्यानि प्रदर्शितेभ्योऽधिकान्यपि वृद्ध्यागमादीनि । तथाच बृहस्पतिः—

निरवद्यं सप्रतिज्ञं प्रमाणागमसंयुतम् ।
द्रव्यसङ्ख्योदयं पीडां क्षमालिङ्गं च लेखयेत् ॥

तथा लक्षणान्तराण्यपि स एवाह—

अल्पाक्षरः प्रभूतार्थो निस्सन्दिग्धस्त्वनाकुलः ।

युक्तो विरोधिकरणैर्विरोधिप्रतिषेधकः ॥
एवमादिगुणान् सम्यगालोच्य च सुनिश्चितः ।
पक्षः कृतस्समादेयः पक्षाभासस्ततोऽन्यथा ॥

इति । सङ्ग्रहकारोऽपि—

अर्थवद्धर्मसंयुक्तं परिपूर्णमनाकुलम् ।
साध्यवद्वाचकपदं प्रकृतार्थानुबन्धि च ॥
प्रसिद्धमविरुद्धं च निश्चितं साधनक्षमम् ।
संक्षिप्तं निखिलार्थं च देशकालाविरोधि च ॥
वर्षर्तुमासपक्षाहोवेलादेशप्रदेशवत् ।
स्थानावसथसाध्याख्याजात्याकारवयोयुतम् ॥
साध्यप्रमाणसङ्ख्यावदात्मप्रत्यर्थिनामवत् ।
परात्मपूर्वजानेकराजनामभिरङ्कितम् ॥
क्षमालिङ्गात्मपीडावत् कथिताहर्तृदायकम् ।
यदावेदयते राज्ञे तद्भाषेत्यभिधीयते ॥

इति । अर्थवत् प्रयोजनवत् । धर्मसंयुक्तं अल्पाक्षरत्वप्रभूतार्थवत्त्वादिगुणान्वितम् । परिपूर्णं अध्याहारानपेक्षम् । अनाकुलं असंदिग्धाक्षरकम् । साध्यवत् सिषाधयिषितार्थाहीनम् । वाचकपदं गौणलाक्षणिकरहितम् । प्रकृतार्थानुबन्धि प्रागावेदितार्थाविरोधि । प्रसिद्धं लोकप्रसिद्धवस्तुविषयम् । अविरुद्धं पुरराष्ट्रप्राड्विवाकनृपाद्यविरुद्धम् । तथा पूर्वापराविरुद्धं प्रत्यक्षादिप्रमाणाविरुद्धं व्यावहारिकधर्माविरुद्धं च । निश्चितमर्थान्तरश-

ङ्काराहितम् । साधनक्षमं साधनार्हम् । संक्षिप्तं अनतिविस्तृतम् । निखिलार्थं अनवशेषितवक्तव्यम् । देशकालाविरोधि मध्यदेशीयं क्रमुकक्षेत्रं, शरत्कालीनमाम्रफलसहस्रमपहृतमित्येवमादिरहितम् । परात्मपूर्वजानेकराजनामभिराङ्कितम्, परः प्रतिवादी । आत्मा वादी । पूर्वजाः तयोः पित्रादयः । अनेके राजानो भुक्तिकालीनाः । तेषां नामानि परात्मपूर्वजानेकराजनामानि, तैश्चिह्नितम् । शिष्टमुक्तार्थम् । अर्थवत्त्वादीनि देशकालाविरोधित्वान्तान्यर्थिप्रत्यर्थिनामसहितानि सर्वव्यवहारभाषोपयोगीनि । तेन तैस्सर्वत्र भाषायामवश्यंभवितव्यम् । तैर्विना क्वचिदपि साध्यसिद्धेः सुखेन कर्तुमशक्यत्वात् । वर्षादीनि पुनर्विशेषणानि सर्वाणि न सर्वत्रोपयोगीनि, कतिपयैर्विनाऽपि तत्र तत्र साध्यसिद्धिसम्भवात् । अतो यत्र येषामुपयोगस्तत्रैव तेषां निवेशनं कार्यं, नेतरत्रापि, प्रयोजनाभावात् । तत्र वर्षादिकालानां वृद्धिमद्धनद्वैगुण्यादिविवादे प्रतिग्रहक्रयाध्यादीनां पौर्वापर्यविवादे चोपयोगः । देशप्रदेशस्थानानां तथा परात्मपूर्वजानेकराजनामधेयानामाहर्तृदायककथनस्य च स्थावरविवादेषूपयोगः । साध्याख्याजात्याकारवयसां चौर्यास्वामिविक्रयादावर्थविवादेऽप्युपयोगः । प्रमाणसंख्ययोर्मेयतुलिमगणिमादिद्रव्यविवादे चौर्यविवादे चोपयोगः । क्षमालिङ्गानां उपेक्षितस्थानादिविवादेषूपयोगः । आत्मपीडायाः ऋणिकलग्नकविवादादावुपयोग इत्येषा दिक् । एवंचार्थवत्त्वादिभिस्सह वर्षादीनां यथो-

पयोगं क्वचित्क्वचिन्निवेशनमिति मन्तव्यम् । अत एव कात्यायनः—

देशश्चैव तथा स्थानं सन्निवेशस्तथैव च ।
जातिस्संज्ञा निवासश्च प्रमाणं क्षेत्रनाम च ॥
पितृपैतामहश्चैव पूर्वराजानुकीर्तनम् ।
स्थावरेषु विवादेषु दशैतानि निवेशयेत् ॥

इति । तेषां तत्रोपयोगादित्यभिप्रायः । हारीतोपि—

आसनं शयनं यानं ताम्रं कांस्यमयोमयम् ।
धान्यमश्ममयं वस्त्रं द्विपदं च चतुष्पदम् ॥
मणिमुक्ताप्रवाळानि हीरकं रूप्यकाञ्चनम् ।
यदि द्रव्यसमूहस्स्यात् सङ्ख्या कार्या तथैव च ॥
यस्मिन् देशे च यद्द्रव्यं येन मानेन मीयते ।
तेन तस्मिन् तथा सङ्ख्या कर्तव्या व्यवहारिभिः ॥

इति । हीरकं वज्रं, तेन मानेन मित्वा सङ्ख्या कर्तव्येत्याह । एवंच यत्र यदुपयुज्यते तत्र तदभावे साध्यसिद्धेः कर्तुमशक्यत्वादनादेय एवोपयोगिविहीनः पक्षः । अत एव कात्यायनः—

देशकालविहीनश्च द्रव्यसङ्ख्याविवर्जितः ।
क्रियाप्रमाणहीनश्च पक्षो नादेय इष्यते ॥

क्रियाप्रमाणं साध्यपरिमाणम् । तथा प्रयोजनवत्त्वादिलक्षण हीनोऽपि पक्षो हेय एव ।

अप्रसिद्धं निराबाधं निरर्थं निष्प्रयोजनम् ।
असाध्यं वा विरुद्धं वा पक्षं राजा विवर्जयेत् ॥

तत्राप्रसिद्धो बृहस्पतिना निरूपितः—

न केनचित्कृतो यस्तु सोऽप्रसिद्ध उदाहृतः ।

इति । अत्रोदाहरणं पलसहस्रकृतं स्थालं गृहीतमिति । निराबाधो निरुपद्रवः, यथा अस्मद्भवनस्थप्रदीपप्रभया स्वगृहे व्यवहरतीति । निरर्थनिष्प्रयोजनौ बृहस्पतिना दर्शितौ—

स्वल्पापराधस्स्वल्पार्थो निरर्थक इति स्मृतः ।
कार्यबाधविहीनस्तु विज्ञेयो निष्प्रयोजनः ॥

तत्र निरर्थकस्योदाहरणं—अहमनेन सस्मितं निरीक्षितः, मामकी लाक्षाऽनेनापहृतेति वा । निष्प्रयोजनस्य तु यथा—यज्ञदत्तोऽस्मद्गृहसमीपे श्लाघमानः पठतीति । प्रकारान्तरेणाप्येतौ तेनैव दर्शितौ—

कुसीदाद्यैः पदैर्हीनो व्यवहारो निरर्थकः ।
वाक्पारुष्यादिभिश्चैव विज्ञेयो निष्प्रयोजनः ॥

ऋणादानाद्यष्टादशपदानन्तर्भूतो निरर्थकः । वाक्पारुष्यादिभिस्साध्यसिद्ध्यनुपयुक्तैस्सहितः पक्षो निष्प्रयोजन इत्यर्थः । असाध्यविरुद्धावपि तेनैव दर्शितौ—

ममानेन प्रदातव्यं शशशृङ्गकृतं धनुः ।
असम्भाव्यमसाध्यं तं पक्षमाहुर्मनीषिणः ॥
यस्मिन्नावेदिते पक्षे प्राड्विवाके च राजनि ।

पुरे राष्ट्रे विरोधस्स्याद्विरुद्धस्सोऽभिधीयते ॥

इति । नारदोऽपि भाषादोषान् दर्शयति—

अन्यार्थमर्थहीनं च प्रमाणागमवर्जितम् ।
लेख्यहीनाधिकं भ्रष्टं भाषादोषा उदाहृताः ॥

स्वयमेव व्याचष्टे—

अर्थे साधारणेऽप्येको वाद्यर्थे वाऽनियुक्तकः ।
लेखयेद्यस्तु भाषायामन्यार्थां तां विदुर्बुधाः ॥

एक एव गणी गणस्य कार्यमेकस्य वा कार्यमनियुक्तोऽसम्बन्धी वा लेखयेद्यस्यां भाषायामित्यर्थः ।

ब्रह्महाऽयमिति ज्ञेयो द्वेषान्मोहाद्वदेत्तु यः ।
साध्यं च मोचयेत्तत्र द्रव्यहीनां तु तां विदुः ॥

उक्तं साध्यवादिना यस्यां त्यज्यते सा च भाषाऽर्थहीनेत्यर्थः ।

गणिमे तुलिमे मेये तथा क्षेत्रगृहादिके ।
यत्र सङ्ख्या न निर्दिष्टा सा प्रमाणविवर्जिता ॥
विद्यया प्राप्तमाध्याप्तं लब्धं क्रीतं क्रमागतम् ।
न त्वेवं लिख्यते यत्र सा भाषा स्यादनागमा ॥
समा मासस्तथा पक्षास्तिथिर्वारस्तथैव च ।
यत्रैतानि न लिख्यन्ते लेख्यहीनां तु तां विदुः ॥
लेखयित्वा तु यो भाषामनिर्दिष्टे तथोत्तरे ।
उद्दिशेत्साक्षिणं पूर्वमधिकां तां विनिर्दिशेत् ॥
यत्र स्यादुभयं सर्वं निर्दिष्टं पूर्ववादिना ।

संदिग्धमिव लिख्येत भ्रष्टां भाषां तु तां विदुः ॥

इति । यत्र पक्षद्वयमखिलं प्रतिज्ञावादिनैव निर्दिष्टं स्यादित्यर्थः । तथाऽन्यानपि पक्षाननादेयानाह स एव—

भिन्नक्रमो व्युत्क्रमार्थः प्रकीर्णार्थो निरर्थकः ।
अतीतकालो द्विष्टश्च पक्षोऽनादेय इष्यते ॥

तत्र भिन्नक्रमस्तेनैव व्याख्यातः—

यथास्थाननिवेशेन नैव पक्षार्थकल्पना ।
शस्यते न स पक्षस्तु भिन्नक्रम उदाहृतः ॥

व्यस्ताक्षरसंस्थानो भिन्नक्रम इत्यर्थः । व्युत्क्रमार्थो व्यवहितान्वयेनार्थबोधकः । प्रकीर्णार्थः संकलितार्थः । निरर्थकादीन् स एवाचष्टे—

मूलमर्थं परित्यज्य तद्गुणो यत्र लिख्यते ।
निरर्थकः स वै पक्षो भूतसाधनवर्जितः ॥
भूतकालमतिक्रान्तं द्रव्यं यत्र विलिख्यते ।
अतीतकालः पक्षोऽसौ प्रमाणे सत्यपि स्मृतः ॥
यस्मिन् पक्षे द्विधा साध्यं भिन्नकालविमर्शनम् ।
विमृश्यते क्रियाभेदात्स पक्षो द्विष्ट उच्यते ॥

इति । भूतसाधनं मूलभूतधनसाधनम् । भूतकालोऽवधिभूतः कालः । क्रियाभेदात् प्रमाणभेदात् । तथाऽपरानपि पक्षाभासानाह स एव—

अन्याक्षरनिवेशेन अन्यार्थगमनेन च ।

आकुलं तु भवेल्लेख्यं क्रिया चैवाकुला भवेत् ॥
उपेक्षा यत्र साध्यस्य विंशतिर्दश वा समाः ।
शक्तेनापि कृता वादे तस्य पक्षो मृषा भवेत् ॥
साहसं सह साध्येन निर्दिष्टं यत्र लेखयेत् ।
उक्तिक्रमविहीनत्वात् सोपि पक्षो न सिद्ध्यति ॥

क्रिया साध्यं, साधनं प्रमाणम् । हारीतोपि—

प्रक्रान्तसाधनोऽर्थस्तु द्विधा यस्मिन्निवेश्यते ।
स्वसाध्याद्वा विभिन्नो वा सोपि पक्षो मृषा भवेत् ॥

प्रक्रान्तः साधयितुमुपक्रान्तोऽर्थो द्विधा द्विप्रकारेण साध्यतयाऽथवाऽऽवेदितात्साध्याद्विधान्तरेण तद्विरोधितया वा यत्र पक्षे निवेश्यते सोपि पक्षाभास इत्यर्थः । भृगुरपि—

उत्सृष्टं यत्र हीनेन कल्प्यं वाऽप्येकमेकतः ।
तत्र पक्षो न साध्यस्स्याच्छास्त्रशिष्टविवर्जितः ॥
विरुद्धश्चाविरुद्धश्च द्वावप्यर्थौ निवेशितौ ।
एकस्मिन् यत्र दृश्येते तं पक्षं दूरतस्त्यजेत् ॥

हीनेन हीनवादिना । पितामहोपि—

परस्परविरुद्धानि यः पदानि निवेशयेत् ।
विरुद्धपदसङ्कीर्णा भाषा तस्य न सिद्ध्यति ॥

कात्यायनोपि—

न्यायस्थं नेच्छते कर्तुं अन्याय्यं वा करोत्ययम् ।
न लेखयति यस्त्वेवं तस्य पक्षो न सिद्ध्यति ॥

न्यायागतं मदीयं धनं गृहीत्वा न ददातीतिवत् प्रतिषेधरूपेण वा मदीयं क्षेत्रादिकमपहरतीतिवद्विधिरूपेण वा न लेखयतीत्यर्थः । तथा—

पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः ।
अनेकपदसंकीर्णः पूर्वपक्षो न सिद्ध्यति ॥

पुरराष्ट्राचारविरुद्धो राजत्यक्तशुल्कशालादिविषयस्सर्वथा न सिद्ध्यति । ऋणादानाद्यनेकपदसङ्कीर्णस्तु क्रियाभेदाद्यौगपद्येन न सिद्ध्यतीत्यर्थः । यत्पुनस्तेनोक्तम्—

बहुप्रतिज्ञं यत्कार्यं व्यवहारे सुनिश्चितम् ।
कामं तदपि गृह्णीयाद्राजा तत्त्वबुभुत्सया ॥

इति, तदनेकपदसङ्कीर्णस्य कालभेदेनोपादेयत्वप्रतिपादनार्थं, अथवा ऋणादानाद्येकपदान्तर्गतानेकजातीयानां हिरण्यवस्त्रपशुधान्यानामेकजातीयानां सङ्ख्यापरिमाणदेशकालवृद्ध्यादिभेदेन गृहीतानां यथावृत्तकथनार्थं भेदेन प्रतिज्ञाय पुनस्तत्सर्वं प्रतिदेयमित्येककार्यतयोपसंहृतं ग्राह्यमित्येवं प्रतिपादनार्थम्, अतो न प्राचीनवचनेन विरोधः । तथा—

आगमः परिभोगश्च व्युच्छित्तिः प्रार्थना तथा ।
एतच्चतुष्टयं प्राहुः भाषादोषास्त्वकारणाः ॥

आगमो धनागमननिमित्तं प्रतिग्रहादिः । परिभोगो यथेष्टविनियोगानिवृत्तिः । व्युच्छित्तिः देशविप्लवादिना भोगविच्छित्तिः। प्रार्थना युक्तिभिर्भोगागमकीर्तनम् । एतदागमादिचतुष्टयं भा-

षागुणा इति प्राहुः । ये पुनरागमादयः अकारणाः विना निवेशकारणं भाषायां निविष्टास्ते भाषादोषा इति प्राहुरित्यर्थः । अतोऽत्राकाङ्क्षितस्यात्रापः कार्योऽनाकाङ्क्षितस्य बोद्धारः। तथाच स एव—

अधिकान् छेदयेदर्थान् न्यूनांश्च प्रतिपूरयेत् ।
भूमौ निवेशयेत्तावत् यावदर्थो न निश्चितः ॥

छेदयेदुद्धरेदित्यर्थः । भूमावित्युपलक्षणार्थः । तथाच स एव—

पूर्वपक्षं स्वभावोक्तं प्राड्विवाकोऽभिलेखयेत् ।
पाण्डुलेखेन फलके ततः पत्रे विशोधितम् ॥

स्वभावोक्तं भयाद्युपाधिराहित्येनोक्तम् । विशोधितं अन्यूनानतिरिक्तमप्रसिद्धत्वादिदूषणरहितं च । तथाच बृहस्पतिः—

प्रतिज्ञादोषनिर्मुक्तं साध्यतत्कारणान्वितम् ।
निश्चितं लोकसिद्धं च पक्षं पक्षविदो विदुः ॥

लोकसिद्धं व्यावहारिकधर्माविरुद्धमित्यर्थः, लोकप्रसिद्धमित्येवंविधार्थस्य प्रतिज्ञादोषनिर्मुक्तमित्यनेनैवार्थादुक्तत्वात् । अत एव मनुः—

सभ्या भाषा न भवति यद्यपि स्यात् प्रतिष्ठिता ।
बहिश्चेद्भाष्यते धर्मात् नियताद्व्यावहारिकात् ।

सर्वदोषरहिताऽपि भाषा व्यावहारिकधर्मविरुद्धा चेत् सभासद्भिर्न ग्राह्येत्यर्थः । एवमुक्तलक्षणः पक्षश्चतुर्विध इत्याह बृहस्पतिः—

शङ्काऽभियोगस्तथ्यं च लब्धेऽर्थेऽभ्यर्थनं तथा ।
वृत्ते वादे पुनर्न्यायः पक्षो ज्ञेयश्चतुर्विधः ॥

अत्र नारदः—

शोधयेत्पूर्ववादं तु यावन्नोत्तरदर्शनम् ।
अवष्टब्धस्योत्तरेण निवृत्तं शोधनं भवेत् ॥

न चात्र शङ्खवेलान्यायेनोत्तरदानयोग्यकालातीते शोधननिवृत्तिरिति शङ्कनीयम् । यत आह स एव—

भाषाया उत्तरं यावत्प्रत्यर्थी न निविशयेत् ।
अर्थी तु लेखयेत्तावद्यावद्वस्तु विवक्षितम् ॥

इति । केचिन्निर्दिष्टेऽप्युत्तरे शोधनमिच्छन्ति तदनवस्थाप्रसङ्गात् पूर्वोक्तवचनविरोधाच्च हेयम् । अत एव सङ्ग्रहकारः—

भाषान्यूनातिरिक्तेषु सम्यक्सूत्रणकारिभिः ।
पुनः प्रतिसमाधाय शृणुयादुत्तरं ततः ॥
यस्मात्प्रत्यर्थिनाऽऽरब्ध उत्तरेऽर्थिप्रभाषितम् ।
उपयोग्यपि नादेयं तस्यात्रसरवर्जनात् ॥

आरब्धे दत्त इत्यर्थः । दीयमानेऽप्युत्तरे प्रतिसमाधानस्येष्टत्वात् तथाच कात्यायनः—

मोहाद्वा यदि वा शाठ्याद्यन्नोक्तं पूर्ववादिना ।
उत्तरान्तर्गतं वाऽपि तद्ग्राह्यमुभयोरपि ॥

उत्तरान्तर्गतमुत्तरे कथ्यमानेऽपि वादिना प्रोच्यमानमित्यर्थः । उभयोः अर्थिप्रत्यर्थिनोः । प्रत्यर्थिनस्तु क्रियापाद उत्तरः ।

यदा पूर्वपक्षमशोधयित्वैव सभ्यैरुत्तरं गृहीतं, तदा सभ्यदण्डनं कृत्वा प्रतिज्ञापूर्वकं कार्यं द्रष्टव्यम् । यदा त्वर्थी सपदि प्रतिज्ञां कर्तुमसमर्थः तदा बृहस्पतिराह—

अभियोक्ताऽप्रगल्भत्वात् वक्तुं नोत्सहते यदा ।
तस्य कालः प्रदातव्यः कार्यशक्त्यनुरूपतः ॥

इति स्मृतिचन्द्रिकायां प्रतिज्ञापादः

अथोत्तरपादः

तत्र बृहस्पतिः—

विनिश्चिते पूर्वपक्षे ग्राह्याग्राह्यविशेषिते ।
प्रतिज्ञार्थे स्थिरीभूते लेखयेदुत्तरं ततः ॥

वादिना निश्चितस्यापि पक्षस्य पुनः प्राड्विवाकादिभिर्विचार्य कृते स्थैर्ये ततस्तत्पक्षस्योत्तरं प्रतिवादी लेखयेदित्यर्थः । नारदोपि-

यदा त्वेवंविधः पक्षः कल्पितः पूर्ववादिना ।
दद्यात्तत्पक्षसंबन्धं प्रतिवादी तदोत्तरम् ॥

एवंविध इत्यस्यार्थो हारीतेन विवृतः—

स्वल्पवर्णोऽर्थबहुलः प्रतिज्ञादोषवर्जितः ।
साक्षिमान् कारणोपेतो निरवद्यस्सुनिश्चितः ॥
ईदृशः पूर्वपक्षस्तु लिखितो यत्र वादिना ।
दद्यात्तत्पक्षसम्बद्धं प्रतिवादी तदोत्तरम् ॥

साक्षिमान् प्राड्विवाकादिप्रत्यवेक्षणवान् । यदा त्वनीदृशस्तदा न

दद्यादित्यर्थसिद्धं स्पष्टयितुं पक्षाभासमेकमुदाहृत्य तस्योत्तरं न देयमित्याह स एव—

साधारणी च या भूमिर्यच्च द्रव्यं गणाश्रितम् ।
एकस्य प्रार्थयानस्य न वदेदुत्तरं बुधः ॥

इति । अतः परीक्षितपूर्वपक्षस्यैव प्रतिवादिना उत्तरं लेख्यमित्याह याज्ञवल्क्यः—

श्रुतार्थस्योत्तरं लेख्यं पूर्वावेदकसन्निधौ ।

इति । श्रुतभाषार्थस्य प्रत्यर्थिन इत्यक्षरार्थः । सङ्ग्रहकारोऽपि—

अनन्यार्थमहीनार्थं न्यायागमसमन्वितम् ।
अन्यूनानधिकादृष्टमनन्याक्षरसम्भवम् ॥
भाषायामिति पत्रेषु लिखितायामनन्तरम् ।
प्रत्यर्थिनश्श्रुतार्थस्य कालोऽयं दातुमुत्तरम् ॥

इति । अनन्यार्थमित्यादिलक्षणजातं यथा भवति तथा भाषायां लिखितायामित्यर्थः । अयं च कालनियमो गवादिविवादेष्वेव । तथाच नारदः—

गोभूहिरण्यस्त्रीस्तेयपारुष्यात्ययिकेषु च ।
साहसेष्वभिशापे च सद्य एव विवादयेत् ॥

अभिशापः पापाभिशंसनम् । तस्य पारुष्यभेदत्वेऽप्यादरार्थं पुनर्वचनम् । आत्ययिकं कात्यायनेनोक्तं—

व्यपैति गौरवं यत्र विनाशस्त्याग एव वा ।
कालं तत्र न कुर्वीत कार्यमात्ययिकं हि तत् ॥

तथाऽन्येष्वपि कार्येषु सद्य एवोत्तरं कार्यमित्याह स एव—

धेनावनडुहि क्षेत्रे स्त्रीषु प्रजनने तथा ।
न्यासे याचितके दत्ते तथैव क्रयविक्रये ॥
कन्याया दूषणे स्तेये कलहे साहसे निधौ ।
उपधौ कौटसाक्ष्ये च सद्य एव विवादयेत् ॥

उपाधिः भयादिवशादभ्युपगमः । याज्ञवल्क्योपि—

साहसस्तेयपारुष्यगोऽभिशापात्यये स्त्रियाम् ।
विवादयेत्सद्य एव कालोऽन्यत्रेच्छया स्मृतः ॥

अन्यत्र ऋणादानादाविसर्थः । तथाच नारदः—

गहनत्वाद्विवादानामसामर्थ्यात्स्मृतेरपि ।
ऋणादिषु हरेत्कालं कामं तत्त्वबुभुत्सया ॥

ऋणादिषु ऋणादानादिविवादपदेष्वित्यर्थः । अत एव पितामहः—

ऋणोपनिधिनिक्षेपदानसम्भूयकर्मणाम् ।
समये दायभागे च कालः कार्यः प्रयत्नतः ॥

एवमादिष्वपि कालदानं विस्मृत्यादिकारणतः प्रत्यर्थिनः कालार्थित्व एव । तथाच कात्यायनः—

श्रुत्वा लेख्यगतं त्वर्थं प्रत्यर्थी कारणाद्यदि ।
कालं विवादे याचेत तस्य देयो न संशयः ॥

सद्यःकृतेषु कार्येषु स्मृतिसंभवात्सद्य एव विवाद इत्याह स एव—

सद्यः कृतेषु कार्येषु सद्य एव विवादयेत् ।
कालातीतेषु वा कालं दद्यात्प्रत्यर्थिने प्रभुः ॥

प्रत्यर्थिन इत्युपलक्षणार्थम् । अत एव नारदः—

मतिर्नोत्सहते यस्य विवादे वक्तुमिच्छतः ।
दातव्य एव कालस्स्यादर्थिप्रत्यर्थिनोरपि ॥

दातव्यश्च कालः कियानित्यपेक्षिते स एवाह—

सद्य एकाहपञ्चाहौ त्र्यहं वा गुरुलाघवात् ।
लभेन्मासं त्रिपक्षं वा सप्ताहं वा ऋणादिषु ॥

गौतमोपि 'संवत्सरं प्रतीक्षेत' इति । अत्र व्यवस्थामाह कात्यायनः—

कालं शक्तिं विदित्वा तु कार्याणां च बलाबलम् ।
अल्पं वा बहु वा कालं दद्यात्प्रत्यर्थिने प्रभुः ॥

कालः अर्थसम्बन्धादेः । शक्तिः कार्यिणाम् । कार्याणां साध्यभूतार्थानाम् । श्लोकस्यार्थस्तु तेनैव प्रपञ्चितः—

सद्यः कृते सद्य एव मासातीते दिनं भवेत् ।
षडाब्दिके त्रिरात्रं स्यात् सप्ताहं द्वादशाब्दिके ॥
विंशत्यब्दे दशाहं तु मासार्धं वा लभेत सः ।
मासं त्रिंशत्समातीते त्रिपक्षं परतो भवेत् ।

शक्तितो व्यवस्थां च प्रदर्शयति—

कालं संवत्सरादर्वाक् स्वयमेव यथेप्सितम् ।
संवत्सरं जडोन्मत्तमनस्के व्याधिपीडिते ॥
दिगन्तरप्रपन्ने वा अज्ञातार्थे च वस्तुनि ।
मूलं वा साक्षिणो वाऽथ परदेशे स्थिता यदा ॥

तत्र कालो भवेत्पुंसामा स्वदेशसमागमात् ।

संवत्सरादर्वाग्दिनादिनानापक्षास्त्रिपक्षान्ताः कार्याणां शक्त्यनुसारतः सभापतिना व्यवस्थापनीयाः । मूलं विवादाध्यासितं धनम् । तथा कार्यापेक्षया व्यवस्थां स्पष्टयति—

दिनं मासार्धमासौ वा ऋतुस्संवत्सरोपि वा ।
क्रियास्थित्यनुरूपस्तु देयः कालः परेण तु ॥

क्रियास्थितिः कार्यगुरुलाघवस्थितिः । एवं व्यवस्थापितान्यतमकाले संप्राप्ते पूर्वपक्षाक्षरार्थस्यान्यूनानतिरिक्तमुत्तरं लेख्यमित्याह बृहस्पतिः—

एककाले समानीते प्रत्यर्थी सभ्यसन्निधौ ।
पूर्वपक्षाक्षरसमं लेखयेदुत्तरं ततः ॥

अत्र नृपं प्रत्याह कात्यायनः—

यावान् यस्मिन् समाचारः पारंपर्यक्रमागतः ।
तं प्रतीक्ष्य यथान्यायमुत्तरं दापयेन्नृपः ॥

उत्तरलक्षणं त्वाह प्रजापतिः—

पक्षस्य व्यापकं सारमसन्दिग्धमनाकुलम् ।
अव्याख्यागम्यमित्येतदुत्तरं तद्विदो विदुः ॥

पक्षस्य व्यापकं कृत्स्नपक्षाच्छादकम् । सारं प्रागभियोगोत्तरक्षमम् । असंदिग्धं खण्डश्लेषादिरहितम् । अनाकुलं अन्वितार्थम् । अव्याख्यागम्यं सुबोधम् । हारीतोपि—

पूर्वपक्षार्थसम्बद्धमनेकार्थमनाकुलम् ।

अनल्पमव्यस्तपदं व्यापकं नातिभूरि च ॥

सारभूतमसंदिग्धमपक्षैकांशसम्भवम् ।

अर्थिश्रवमगूढार्थं देयमुत्तरमीदृशम् ॥

पूर्वपक्षार्थसम्बद्धं अभियोगानुगतम् । अनेकार्थं निष्कृष्टार्थजातम् । अव्यस्तपदं निश्चितप्रतिज्ञापूर्वकम् । अपक्षैकांशसंभवं अनन्वेषितस्वपक्षैकदेशम् । अर्थिश्रवं पूर्वावेदकश्रुतम् । अगूढार्थं अवक्रोक्तिप्रसिद्धपदैकवेद्यम् । एवंलक्षणमुत्तरं चतुर्विधं ज्ञेयम्—

चतुर्विधः पूर्वपक्षः प्रतिपक्षस्तथैव च ।

इति बृहस्पतिस्मरणात् । कथं पुनः प्रतिपक्षचातुर्विध्यमित्यपेक्षिते नारदः—

मिथ्या सम्प्रतिपत्त्या वा प्रत्यवस्कन्दनेन वा ।

प्राङ्न्यायविधिसिद्ध्या वाऽप्युत्तरं स्याच्चतुर्विधम् ॥

इत्थंभूतलक्षणा चेयं तृतीया । तत्र मिथ्यासंप्रतिपत्त्योर्लक्षणमाह कात्यायनः—

अभियुक्तोऽभियोगस्य यदि कुर्यात्तु निह्नवम् ।

मित्थ्या तत्तु विजानीयात् उत्तरं व्यवहारतः ॥

साध्यस्य तथ्यवचनं प्रतिपत्तिरुदाहृता ।

इति । प्रत्यवस्कन्दनस्य च लक्षणं नारदेनोक्तम्—

अर्थिना लिखितो योऽर्थः प्रत्यर्थी यदि तत्तथा ।

प्रपद्य कारणं ब्रूयात् प्रत्यवस्कन्दनं स्मृतम् ॥

इति । प्राङ्न्यायस्य लक्षणमाह हारीतः—

अस्मिन्नर्थे ममानेन वादः पूर्वमभूत्तदा ।
जितोऽयमिति चेद्ब्रूयात् प्राङ्न्यायं स्यात्तदुत्तरम् ॥

इति । एवमुक्तलक्षणान्युत्तराणि स्पष्टीकर्तुं प्रजापतिनाऽप्युक्तानि—

यावदावेदितं किंचित् मत्सम्बन्धमिहार्थिना ।
तावत्सर्वमसद्भूतमिति मिथ्योत्तरं स्मृतम् ॥
अस्यैव देयमेवैतत्[1] नासद्भाषितमर्थिना ।
इति संप्रतिपत्त्याख्यं द्वितीयमिदमुत्तरम् ॥
दत्तमेवं ममानेन किं त्वस्यापि मया पुनः ।
प्रतिदत्तमितीदृक्च प्रत्यवस्कन्दनं स्मृतम् ॥
अस्मिन्नर्थान्तरे पूर्वमारब्धोऽस्म्यहमर्थिना ।
जितश्चायं मया तत्र प्राङ्न्यायविधिरुच्यते ॥

अयं च प्राङ्न्यायस्त्रिप्रकार इत्याह कात्यायनः—

विभावयामि कुलिकैः साक्षिभिर्लिखितेन वा ।
जितश्चैव मयाऽयं प्राक् प्राङ्न्यायस्त्रिप्रकारकः ॥

कुलिकैरिति प्रकृतव्यवहारद्रष्टॄणामुपलक्षणार्थम् । तथा मिथ्या चतुर्विधेत्याह स एव—

मिथ्यैतन्नाभिजानामि तदा तत्र न संनिधिः ।
अजातश्चास्मि तत्काल इति मिथ्या चतुर्विधा ॥

इति । एवं संप्रतिपत्तेरपि गृहीतं, सत्यं, यथाऽयं वक्ति तथैवेत्येवमादयो भेदा यथासम्भवमूहनीयाः । प्रत्यवस्कन्दनस्यापि गृही-

---

[1] अस्यैतदेवमेवैतत् ॥ पा ॥

तं प्रतिदत्तं, प्रतिग्रहेण वा लब्धमित्यादयो भेदा द्रष्टव्याः। अत्र बृहस्पतिः—

प्रत्यर्थिविधिराख्यातः सङ्गतार्थप्रपादने।
चतुर्विधस्याप्यधुना यन्न ग्राह्यं तदुच्यते॥
प्रस्तुतादन्यमध्यस्थं न्यूनाधिकमसंगतम्।
अव्याप्यसारं संदिग्धं प्रतिपक्षं न लेखयेत्॥

प्रस्तुतादन्यत् अर्थिलिखिताभियोगापरिहारकम्। मध्यस्थं प्रतिपक्षभावराहितम्। असंगतं अभियोगाननुगतम्। कात्यायनोऽपि—

अप्रसिद्धं विरुद्धं यदत्यल्पमतिभूरि च।
संदिग्धासम्भवाव्यक्तमन्यार्थं चातिदोषवत्॥
अव्यापकं व्यस्तपदं निगूढार्थं तथाऽऽकुलम्।
व्याख्यागम्यमसारं च नोत्तरं शस्यते बुधैः॥

इति। अत्राद्यान् पञ्चोत्तराभासान् स एव व्याचष्टे—

चिह्नाकारसहस्रं तु समयं चाविजानता।
भाषान्तरेण वा प्रोक्तमप्रसिद्धं तदुत्तरम्॥

लाञ्छनावयवसंस्थानसङ्ख्यासमयानभिज्ञोक्तमदेशभाषयोक्तं चाप्रसिद्धमित्यर्थः।

प्रतिदत्तं मया बाल्ये प्रतिदत्तं मया न हि।
यदेवमाह विज्ञेयं विरुद्धं तादिहोत्तरम्॥

पूर्वापरविरुद्धाभिधानं विरुद्धोत्तरमित्यर्थः।

जितः पुरा मयाऽयं च त्वर्थेऽस्मिन्निति भाषितुम्।

पुरा मयाऽयमिति यत्तदूनं चोत्तरं स्मृतम् ॥

अस्मिन्नर्थे पुराऽयं मया जित इति वक्तव्ये पुरा मयेत्येतावन्मात्रमुत्तरमत्यल्पमित्यर्थः ।

गृहीतमिति वाच्यं तु कार्यं तेन कृतं मया ।
पुरा गृहीतं यद्द्रव्यमिति यच्चातिभूरि तत् ॥

गृहीतमित्येतावन्मात्रेण सत्योत्तरे वक्तव्ये कार्यं तेनेत्यादिकमुत्तरमतिभूरीत्यर्थः ।

देयं मयेति वक्तव्ये मयादेयमितीदृशम् ।
संदिग्धमुत्तरं ज्ञेयं व्यवहारे बुधैस्तथा ॥

मयादेयमित्यत्र त्वकारप्रश्लेषसम्भवाददेयमित्यप्यवगमात् संदिग्धमेवंविधमित्यर्थः । असम्भव अस्माभिर्देयं धनमस्मत्प्रपौत्र· पुत्रेण दत्तमित्येवंविधमुत्तरम् । अव्यक्तं एतदुत्तरमिति सुखेनाभिधातुमशक्यम् । एतौ चोत्तराभासौ स्पष्टाविति न तेन व्याख्यातौ । अन्यार्थं व्याचष्टे—

बलाबलेन चैतेन साहसं स्थापितं पुरा ।
अनुक्तमेतन्मन्यन्ते तदन्यार्थमितीरितम् ॥

अर्थिनो यदसद्वृत्तकथन एव पर्यवसितं मिथोविरुद्धपदवच्च तदन्यार्थमित्यर्थः । अतिदोषवत् अत्युक्तया दोषवत्, शतं देयमित्युक्ते द्विशतं दत्तमित्यादि । अव्यापकादिचतुष्टयं तेनैव व्याख्यातम्—

अस्मै दत्तं मया सार्धं सहस्रमिति भाषिते ।
प्रतिदत्तं तदर्धं यत् तदिहाव्यापकं स्मृतम् ॥
पूर्ववादी क्रियां यावत्सम्यङ्नैव निवेशयेत् ।
मया गृहीतं पूर्वं नो तद्व्यस्तपदमुच्यते ॥

पूर्वपक्षनिश्चयादर्वाक् दीयमानं मिथ्यावाद्युत्तरं व्यस्तपदमित्यर्थः ।

तत्किं तामरसं कश्चिदगृहीतं प्रदास्यति ।
निगूढार्थं तु तत् ज्ञेयमुत्तरं व्यवहारतः ॥

अगृहीतं पद्ममतो न प्रददामीत्युदाहृतोत्तराभासस्यार्थः । सार्वभौमप्रयोगासिद्धतामरसादिपदवद्वक्रोक्त्यादिमच्चोत्तरं निगूढार्थं विज्ञेयमिति श्लोकार्थः ।

किं तेनैव सदादेयं मयादेयं भवेदिति ।
एतदाकुलमित्युक्तमुत्तरं तद्विदो विदुः ॥

अनन्वितानेकपदार्थवदाकुलमित्यर्थः । व्याख्यागम्यं स्वतो दुरवबोधम् । असारं तेनोक्तम्—

काकस्य दन्ता नो सन्ति सन्तीत्यादि यदुत्तरम् ।
असारमिति तत्त्वेन सम्यङ्नोत्तरमिष्यते ॥

काकदन्तसमुद्भवोत्तरवन्निष्प्रयोजनमसारमित्यर्थः । तथैकस्यां भाषायां सत्यमिथ्याद्यनेकोत्तरमनुत्तरमित्याह स एव—

पक्षैकदेशे यत्सत्यमेकदेशे च कारणम् ।
मिथ्या चैवैकदेशे च सङ्करात्तदनुत्तरम् ॥

ननु साङ्कर्येऽपि तेन तेनोत्तरेण तस्य तस्यांशस्य निरसनद्वारो-

त्तरसमुदायस्य कृत्स्नपक्षव्यापकत्वसंभवात् कथमनुत्तरता? सत्यं, अत एवानुत्तरत्वसमर्थनार्थमुक्तं तेनैव—

न चैकस्मिन् विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।
न चार्थसिद्धिरुभयोः न चैकत्र क्रियाद्वयम् ॥

इति । अयमर्थः— क्रिया लिखितादिप्रमाणं, तत्प्रत्यवस्कन्दने प्राङ्न्याये च प्रत्यर्थिन एव भवति, मिथ्योत्तरे त्वर्थिन एव । सत्ये तु न कस्यापीति वक्ष्यते । एवंच यत्र सत्येतरेषां त्रयाणां सङ्करः तत्र प्रत्यर्थिनः प्रमाणद्वयमर्थिनश्चैकं प्रमाणं प्राप्नोति । यत्र सत्यामिथ्येतरयोर्द्वयोस्तत्र प्रत्यर्थिन एव प्रमाणद्वयम् । यत्र पुनर्मिथ्याकरणयोर्मिथ्याप्राङ्न्याययोर्वा तत्रार्थिप्रत्यर्थिनोरेकमेकं प्रमाणम् । न च यथा प्राप्तं तथैवास्त्विति वाच्यम्, प्रमाणं हि साध्यसिद्ध्यर्थं क्रियते, एकस्मिन्व्यवहारे चैकमेव साध्यमेकस्यैव वादिनः, तेन तत्र नोभयोः प्रमाणं, एकस्य वा प्रमाणद्वयं भवितुमर्हति, उभयोस्साध्याभावात् । एकस्य साध्यस्य चैकेन प्रमाणेन सिद्धावन्यस्य वैय्यर्थ्यात् । सत्यस्य त्वितरैस्सङ्करे यद्यपि नायं दोषः, तथाऽप्येकस्मिन् व्यवहारे पादचतुष्टये तदर्धे च समाप्तिर्विरुद्धेति तत्राप्यनुत्तरत्वमेव । तस्माद्युक्तमुक्तं 'सङ्करात्तदनुत्तरम्' इति । एवंच सर्वत्र व्यवहारे पक्षव्याप्येकमेवोत्तरं ग्राह्यम् । यत्र पुनः सर्वथा तथाविधमुत्तरं न लभ्यते, किंतु एकैकांशव्यापकमनेकमुत्तरं तत्रागत्योत्तरवशेन नानाप्रतिज्ञाः पक्षदोषपरिहाराय कृत्वा क्रमेणैकैकप्रतिज्ञाया एकै-

कमुत्तरं ग्राह्यम्। अन्यथा तत्र निर्णयाभाव एव स्यात्। अत एवोक्तं 'सङ्कराच्चदनुत्तरम्' इति। उक्तविधया सङ्करे निराकृते स्यादेवोत्तरमित्यभिप्रायः। अत एव चास्मिन्नेव विषये हारी तेनोत्तरग्रहणे पौर्वापर्यं प्रश्नपूर्वकमुक्तम्—

मिथ्योत्तरं कारणं च स्यातामेकत्र चेदुभे।
सत्यं वाऽपि सहान्येन तत्र ग्राह्यं किमुत्तरम्॥

पूर्वमिति शेषः। पूर्वं यद्ग्राह्यं तदाह—

यत्प्रभूतार्थविषयं यत्र वा स्यात् क्रियाफलम्।
उत्तरं तत्र तत् ज्ञेयमसङ्कीर्णमतोऽन्यथा॥

अयमर्थः—सत्येतरोत्तरानेकत्वे बह्वर्थविषयमग्रे ग्राह्यम्। सह सत्येनानेकत्वे बह्वर्थमपि सत्यं विहायोत्तरान्तरमेवादावुपादेयम्, सत्येक्रियाफलाभावादिति। न चैवं क्रमवाचिपदाध्याहारापत्ते-र्यत्रोत्तरकाले पक्षव्यापकानेकोत्तरोपन्यासः, यथा—केनचिन्मानवेन मदीया गौर्नष्टा दृष्टाऽस्य सद्मनीत्यभियुक्तो वक्ति मिथ्यैतदस्मद्भवन एव सा सम्भूतेत्येवमादि। तद्विषयमेवेदं वचनमिति वाच्यम्। यत उक्तं 'असङ्कीर्णमतोऽन्यथा' इति, तस्यायमर्थः—असङ्कीर्णमुत्तरं एवंक्रमे भवति, अतोऽन्यथा यौगपद्ये सङ्कीर्णमेव स्यादिति। पक्षव्यापकानेकोत्तरे तु विकल्पविषये न जातुचित्सङ्करावसरः। तस्मात्सङ्करोत्तरविषयमेवेदं वचनम्। अत एव पक्षव्यापकानेकोत्तरविषये वचनान्तरमारब्धं तेनैव—

'मिथ्याकरणयोर्वाऽपि ग्राह्यं कारणमुत्तरम्'

इति। कारणोत्तरस्य अनन्यथासिद्धत्वादिना मिथ्यातो गुरुतरत्वादित्यभिप्रायः। अतो मिथ्याकारणयोरुदाहरणमात्रत्वादुत्तरान्तरसन्निपातेऽपि गुरुतरं ग्राह्यमित्यूह्यम्। यत्र पुनः सङ्करोत्तरे तुल्यबलतया न पूर्वोक्तक्रमहेतुरस्ति तत्राप्यैच्छिकक्रमेणोत्तरं ग्राह्यं निर्णयस्यावश्यकत्वात्। एवं निरूपितमुत्तरं प्रतिवादिना स्वयमेव देयम्। तथा च हारीतः—

तत्राभियोगानुगतमुत्तरं प्रतिवादिना।
निष्कृष्टार्थं प्रदेयं स्यात् दोषसंज्ञाविवर्जितम्॥

यदा पुनस्स्वयमेव न ददाति उत्तरं, प्रदानकालश्चातिक्रान्तः तदाऽप्याह स एव—

पूर्वपक्षे यथार्थं तु न दद्यादुत्तरं यदा।
प्रत्यर्थी दापनीयस्स्यात्सामादिभिरुपक्रमैः॥

दापनीयो नृपेणेति शेषः। तथाच नारदः—

यथार्थमुत्तरं दद्याददद्दापयेन्नृपः।
सामभेदादिभिर्मार्गैर्यावत्सोर्थस्समुद्धृतः॥

सामादयो हारीतेन दर्शिताः—

प्रियपूर्वं वचस्साम भेदस्तु भयदर्शनम्।
अर्थापकर्षणं दानं दण्डस्ताडनबन्धनम्॥

तथा वसिष्ठेनापि—

कौटिल्यं सामभेदौ च दण्डश्चेति चतुष्टयम्।

मायोपेक्षेन्द्रजालानि सप्तोपायाः प्रकीर्तिताः ॥

इति । एतैरप्युपायैरसाध्यं प्रत्याह स एव—

उपायैश्चोद्यमानस्तु न दद्यादुत्तरं तु यः ।
अतिक्रान्ते सप्तरात्रे जितोसौ दातुमर्हतीति ॥

इति स्मृतिचन्द्रिकायामुत्तरपादः.

अथ विवादविषयाणि कानिचिद्वचनानि लिख्यन्ते

तत्र याज्ञवल्क्यः—

अभियोगमनिस्तीर्य नैनं प्रत्यभियोजयेत् ।

इति । अनिस्तीर्य अपरिहृत्येत्यर्थः । अत्रापवादमाह स एव—

कुर्यात्प्रत्यभियोगं तु कलहे साहसेषु च ।

इति । प्रत्यपराधसम्भव इति शेषः । कलहे पारुष्यद्वय इत्यर्थः । अभियोक्तारं च प्रत्याह स एव—

अभियुक्तो न चान्येन नोक्तं विप्रकृतिं नयेत् ।

इति । अन्येनार्थिनाऽभियुक्तं तदभियोगपरिहारादर्वागन्योऽर्थी नाभियुञ्जीत । तथाऽभियोक्तुमुक्तं सत्क्वाऽन्यथा न वक्तव्यमित्यर्थः । यः पुनरन्यथा वक्ति सोऽन्यथावादित्वेन हीनो भवति । तथा च नारदः—

अन्यवादी क्रियाद्वेषी नोपस्थाता निरुत्तरः ।
आहूतविपलायी च हीनः पञ्चविधः स्मृतः ॥

इति । तत्रान्यवादितया हीनस्तेन निरूपितः—

पूर्ववादं परित्यज्य योऽन्यमालम्बते पुनः ।
वादसङ्क्रमणात् ज्ञेयो हीनवादी स वै नरः ॥

पूर्ववाद आवेदनम् । तथा च कात्यायनः—

श्रावयित्वा यथाकार्यं त्यजेदन्यद्वदेदसौ ।
अन्यपक्षाश्रयस्तेन कृतो वादी स हीयते ॥

तथा परमभियुज्य नाहमभियुनज्मि इत्येवं विरुद्धं यो वदेत् सोऽप्यन्यवादितया हीन इत्याह स एव—

न मयाऽभिहितं कार्यमभियुज्य परं वदेत् ।
विब्रुवंश्च भवेदेवं हीनं तमपि निर्दिशेत् ॥

तथाच पत्रलिखितं पूर्वपक्षमन्यथा कुर्वन्नप्यन्यथावादितया हीन इत्याह स एव—

लेखयित्वा तु यो वाक्यं हीनं वाऽप्यधिकं पुनः ।
वदेद्वादी स हीयेत नाभियोगं तु सोऽर्हति ॥

लेखयित्वा पत्र इति शेषः, भूम्यादावावापोद्धारस्य तेनैवोक्तत्वात् । अभियोगः पूर्वपक्षः तं कर्तुं नार्हतीत्यर्थः । एतच्चानर्हत्वमुत्तरे निवृत्ते सति वदतो द्रष्टव्यम् । अनिवृत्ते तूत्तरे हीनतैव, नानर्हत्वं, औत्तरनिवृत्तेः पूर्वपक्षशोधनस्य मोहादावगत्याऽभ्यनुज्ञानात् । तथा क्रियाद्वेषितयाऽनुपस्थायितया च हीनस्तेनैव निरूपितः—

सभ्याश्च साक्षिणश्चैव क्रिया ज्ञेया मनीषिभिः ।
तां क्रियां द्वेष्टि यो मोहात् क्रियाद्वेषी स उच्यते ॥

आह्वानादनुपस्थानात् सद्य एव प्रहीयते ।

इति । आह्वानानन्तरमनागमने तदानीमेव हीनो भवतीत्यर्थः । तथा निरुत्तरतया हीनं निरूपयितुमाह स एव—

ब्रूहीत्युक्तोऽपि न ब्रूयात् सद्यो बन्धनमर्हति ।
द्वितीयेऽहनि दुर्बुद्धेर्विद्यात्तस्य पराजयम् ॥

पराजयो हीनता । अत एव हारीतः—

सापदेशं हरेत्कालमब्रुवंश्चापि संसदि ।
उक्त्वा वचो विब्रुवंश्च हीयमानस्य लक्षणम् ॥

सापदेशं सव्याजम् । तथाच कात्यायनः—

व्याजेनैव तु यत्रासौ दीर्घकालमभीप्सति ।
सापदेशं तु तं विद्याद्वादहानिकरं स्मृतम् ॥

इति । आहूतविपलायी तु अभियोगपरिहारार्थमाह्वानं बुद्ध्वा प्रच्छन्नचारी । एतेषां तूत्तरोत्तरस्य हीनता गुर्वीति ज्ञापयितुं हीनः पञ्चविध इत्युक्तं, न पुनः पञ्चविध एव हीन इत्यवधारयितुं, विधान्तरतोऽपि हीनानां स्मरणात् । हीनताया गुरुत्वज्ञापनं तूत्तरोत्तरस्य दण्डभूयस्त्वज्ञापनार्थम् । उक्तं च तथा कात्यायनेन—

अन्यवादी पणान् पञ्च क्रियाद्वेषी पणान् दश ।
नोपस्थाता दश द्वौ च षोडशैव निरुत्तरः ॥
आहूतविपलायी च पणान् ग्राह्यस्तु विंशतिम् ।

अत्र तृतीयपञ्चमयोः दण्डप्राप्तौ विशेषमाह स एव—

त्रिराहूतमनायान्तमाहूतविपलायिनम् ।
पञ्चरात्रमतिक्रान्तं विनयेत्तं महीपतिः ॥

तथा प्रकारान्तरेणापि हीनस्तेन दर्शितः—

आवितव्यवहाराणामेकं यत्र प्रभेदयेत् ॥
वादिनं लोभयेच्चैव हीनं तामिति निर्दिशेत् ॥

बृहस्पतिनाऽपि—

भयं करोति भेदं वा भीषणं वा निरोधनम् ।
एतानि वादिनोऽर्थस्य व्यवहारे स हीयते ॥

अर्थव्यवहारे भयादीनि समस्तान्यसमस्तानि वा येन वादिना कृतानि स हीयत इत्यर्थः । भीषणं मुखान्तरेण भीत्युत्पादनम् । मनुनाऽपि—

अदेश्यं यश्च दिशति निर्दिश्यापह्नुते च यः ।
यश्चाधरोत्तरानर्थान्विहीनान्नावबुध्यते ॥
अपदिश्यापदेशं च पुनर्यस्त्वपधावति ।
सम्यक्प्राणिहितं चार्थं पृष्टस्सन्नाभिनन्दति ॥
सन्ति ज्ञातार इत्युक्त्वा दिशेत्युक्तो दिशेन्न यः ।
धर्मस्थः कारणैरेतैर्हीनोऽसाविति निर्दिशेत् ॥

इति । अयमर्थः—

अदेश्यं निर्णयसमयासम्भविनं साक्षिणं यो निर्दिशति, सम्भविनं वा निर्दिश्य योऽपह्नुते न मया निर्दिष्ट इति, यश्चात्मनो वचनगतक्रमविरोधं न जानाति, यः पुनरप-

देशं मम पीडा वर्तत इत्यादिव्याजमपदिश्य अपसरति, सम्यक्प्रणिहितं सुष्ठूक्तमर्थमनूद्यात्र किं ब्रवीषीति पृष्टो यो न किंचिदुत्तरं प्रस्तौति, यश्च साक्षिणः सन्तीत्युक्त्वा कथय तानित्युक्तोपि न कथयति असौ हीन इति धर्माधिकरणस्थः पूर्वोक्तकारणैर्निर्दिशेदिति । एतेष्वपि हीनेषु दोषानुरूपो दण्डो ग्राह्यः । तथा च हीनाधिकारे कात्यायनः—

दोषानुरूपं संग्राह्यः पुनर्वादो न विद्यते ।

इति । प्रकृतार्थसिद्ध्यर्थमिति शेषः । अयं च प्रतिषेधो मन्युकृतविवाद एव, यत आह नारदः—

सर्वेष्वर्थविवादेषु वाक्छले नावसीदति ।
पशुस्त्रीभूम्यृणादाने शास्योप्यर्थान्न हीयते ॥

पश्वादिसर्वार्थविवादेषु वाक्छले प्रमादाभिधाने कृतेऽपि नावसीदति नात्यन्तं हीयते, यतस्तत्र दण्ड्यस्यापि न प्रकृतार्थहानिरित्यर्थः । अत्रापवादमाह कात्यायनः—

उभयोर्लिखिते वाक्ये प्रारब्धे कार्यनिश्चये ।
अनुक्तं तत्र यो ब्रूयात् तस्मादर्थात्स हीयते ॥

याज्ञवल्क्योपि—

संदिग्धार्थं स्वतन्त्रो यः साधयेद्यश्च निष्पतेत् ।
न चाहूतो वदेत् किंचिद्धीनो दण्ड्यश्च स स्मृतः ॥

स्वतन्त्रः परीक्षकनिरपेक्षः । निष्पतेत् देयमदत्वा निष्पत्य तिष्ठेत्, पलायेत वा । दण्डग्रहणेनैव हीनत्वसिद्धेः पुनर्हीनग्रह-

णं प्रकृतादर्थाद्धीन इति ज्ञापनार्थम् । अत एव नारदः—

आनिवेद्य तु यो राज्ञे संदिग्धेऽर्थे प्रवर्तते ।
प्रसह्य स विनेयस्स्यात् स चाप्यर्थो न सिद्ध्यति ॥

इति । बृहस्पतिरपि—

आहूतप्रपलायी च मौनी साक्षिपराजितः ।
स्ववाक्यप्रतिपन्नश्च हीनवादी चतुर्विधः ॥

स्ववाक्यप्रतिपन्नः स्ववाचैव संप्रतिपन्नः । अत्रापि चतुर्विधग्रहण-मेतेषामुत्तरोत्तरस्याचिरं प्रकृतादर्थाद्धीनत्वं भवतीति ज्ञापयितुं न पुनः प्रकृतादर्थाद्धीनश्चतुर्विध एवेति नियन्तुं, विधान्तरस्याप्यु-क्तत्वात् । तत्र कदा कस्य हीनत्वमित्यपेक्षिते आह स एव—

प्रपलायी त्रिपक्षेण मौनकृत्सप्तभिर्दिनैः ।
साक्षिभिन्नस्तत्क्षणेन प्रतिपन्नश्च हीयते ॥

तथा निर्दिष्टान् साक्षिपुरुषानवादयतोऽप्येवंविधहीनत्वं चि-रेण भवतीत्याह स एव—

साक्षिणस्तु समुद्दिश्य यस्तु तान्न विवादयेत् ।
त्रिंशद्रात्रात् त्रिपक्षाद्वा तस्य हानिः प्रजायते ॥

न वादयेत्कामत इति शेषः । तथाच कात्यायनः—

साक्षिणो यस्तु निर्दिश्य कामतो न विवादयेत् ।
स वादी हीयते तस्मात् त्रिंशद्रात्रात्परेण तु ॥

इति । अकामतश्चेन्न हीयते । अत एव बृहस्पतिः—

आचारकरणे दिव्ये कृत्वोपस्थाननिश्चयम् ।

नोपस्थितो यदा कश्चिच्छलं तत्र न कारयेत् ॥
दैवराजकृतो दोषस्तस्मिन् काले यदा भवेत् ।
अवधित्यागमात्रेण न भवेत्स पराजितः ॥

इति । 'छलं तत्र न कारयेत्' इति वदन् अन्यत्रार्थहानिप्रतिपादकवचनच्छलानिरसनेनापि व्यवहारनयनं कार्यमिति ज्ञापयति । एवंचार्थविवादेषु यत्र नार्थहानिवचनं तत्रैव हीनस्य वादो ग्राह्यो नान्यत्रेत्यवगन्तव्यम् । अत एव कात्यायनः—

पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य तु ॥

इति । पलायनादाववधिभूतकालातिक्रमणेनागमनादिकर्तुरर्थहान्यभावाद्वादो ग्राह्य इत्यर्थः । तत्र यदि हीनेनेतरस्य पराजयः तदा विशेषस्तेनैव दर्शितः—

यो हीनवाक्येन जितस्तस्योद्धारं विदुर्बुधाः ।
स्ववाक्यहीनो यस्तु स्यात्तस्योद्धारो न विद्यते ॥

इति । याज्ञवल्क्यस्तु दुष्टवादिपरिज्ञानार्थमाह—

देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगेऽथ साक्ष्ये च दुष्टस्स परिकीर्तितः ॥

णं प्रकृतादर्थाद्धीन इति ज्ञापनार्थम्। अत एव नारदः—

आनिवेद्य तु यो राज्ञे संदिग्धेऽर्थे प्रवर्तते।
प्रसह्य स विनेयस्स्यात् स चाप्यर्थो न सिद्ध्यति॥

इति। बृहस्पतिरपि—

आहूतप्रपलायी च मौनी साक्षिपराजितः।
स्ववाक्यप्रतिपन्नश्च हीनवादी चतुर्विधः॥

स्ववाक्यप्रतिपन्नः स्ववाचैव संप्रतिपन्नः। अत्रापि चतुर्विधग्रहणमेतेषामुत्तरोत्तरस्याचिरं प्रकृतादर्थाद्धीनत्वं भवतीति ज्ञापयितुं न पुनः प्रकृतादर्थाद्धीनश्चतुर्विध एवेति नियन्तुं, विधान्तरस्याप्युक्तत्वात्। तत्र कदा कस्य हीनत्वमित्यपेक्षिते आह स एव—

प्रपलायी त्रिपक्षेण मौनकृत्सप्तभिर्दिनैः।
साक्षिभिन्नस्तत्क्षणेन प्रतिपन्नश्च हीयते॥

तथा निर्दिष्टान् साक्षिपुरुषानवादयतोऽप्येवंविधहीनत्वं चिरेण भवतीत्याह स एव—

साक्षिणस्तु समुद्दिश्य यस्तु तान्न विवादयेत्।
त्रिंशद्रात्रात् त्रिपक्षाद्वा तस्य हानिः प्रजायते॥

न वादयेत्कामत इति शेषः। तथा च कात्यायनः—

साक्षिणो यस्तु निर्दिश्य कामतो न विवादयेत्।
स वादी हीयते तस्मात् त्रिंशद्रात्रात्परेण तु॥

इति। अकामतश्चेन्न हीयते। अत एव बृहस्पतिः—

आचारकरणे दिव्ये कृत्वोपस्थाननिश्चयम्।

नोपस्थितो यदा कश्चिच्छलं तत्र न कारयेत् ॥
दैवराजकृतो दोषस्तस्मिन् काले यदा भवेत् ।
अवधित्यागमात्रेण न भवेत्स पराजितः ॥

इति । 'छलं तत्र न कारयेत्' इति वदन् अन्यत्रार्थहानिप्रतिपादकवचनच्छलानिरसनेनापि व्यवहारनयनं कार्यमिति ज्ञापयति । एवंचार्थविवादेषु यत्र नार्थहानिवचनं तत्रैव हीनस्य वादो ग्राह्यो नान्यत्रेत्यवगन्तव्यम् । अत एव कात्यायनः—

पलायनानुत्तरत्वादन्यपक्षाश्रयेण च ।
हीनस्य गृह्यते वादो न स्ववाक्यजितस्य तु ॥

इति । पलायनादाववधिभूतकालातिक्रमणेनागमनादिकर्तुरर्थहान्यभावाद्वादो ग्राह्य इत्यर्थः । तत्र यदि हीनेनेतरस्य पराजयः तदा विशेषस्तेनैव दर्शितः—

यो हीनवाक्येन जितस्तस्योद्धारं विदुर्बुधाः ।
स्ववाक्यहीनो यस्तु स्यात्तस्योद्धारो न विद्यते ॥

इति । याज्ञवल्क्यस्तु दुष्टवादिपरिज्ञानार्थमाह—

देशाद्देशान्तरं याति सृक्किणी परिलेढि च ।
ललाटं स्विद्यते चास्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथोष्ठौ निर्भुजत्यपि ॥
स्वभावाद्विकृतिं गच्छेन्मनोवाक्कायकर्मभिः ।
अभियोगेऽथ साक्ष्ये च दुष्टस्स परिकीर्तितः ॥

इति । स्रक्विणी ओष्ठप्रान्तौ । निर्भुजति कुटिलीकरोति । स्वभावाद्विकृतिं गच्छेत् स्वाभाविकधर्माद्वैपरीत्यमेवं गच्छेदित्यर्थः । मनुरपि—

आकारैरिङ्गितैर्गत्या चेष्टया भाषितेन च ।
नेत्रवक्त्रविकारैश्च गृह्यतेऽन्तर्गतं मनः ॥

इति । दुष्टस्येति शेषः । एवं दुष्टान्तःकरणतया ज्ञातस्यापि न दण्डो न प्रकृतार्थाद्धानिर्वा । तयोर्मुनिभिरनभिधानात् । अदुष्टस्यापि कथंचिदेवंविधचिह्नान्वयसम्भवात् । दुष्टाभिधायकवचनानां च तद्रक्षणादाववधानविधानार्थत्वेनावैयर्थ्यात् । ये पुनरेकान्तपराजयभयादर्वाक् प्रमाणकरणात् स्वतोऽपि वादतो निवर्तन्ते ते दण्ड्या इत्याह बृहस्पतिः—

पूर्वोत्तरे संनिविष्टे विचारे सम्प्रवर्तिते ।
प्रशमं ये मिथो यान्ति दाप्यास्ते द्विगुणं दमम् ॥

इति । मिथो यान्ति नृपं वञ्चयित्वेति शेषः । अत एव कात्यायनः—

आवेद्य प्रगृहीतार्थाः प्रशमं यान्ति ये मिथः ।
सर्वे द्विगुणदण्ड्यास्स्युः विप्रलम्भान्नृपस्य ते ॥

इति । एवंचावञ्चनया प्रशान्तानां न दण्डः । अत एव बृहस्पतिः—

पूर्वोत्तरेऽभिलिखिते प्रक्रान्ते कार्यनिर्णये ।
द्वयोस्संतप्तयोस्सन्धिस्स्यादयःखण्डयोरिव ॥

साक्षिसभ्यविकल्पस्तु भवेत्तत्रोभयोरपि ।
डोळायमाने यौ सन्धिं प्रकुर्यातां विचक्षणौ ॥
प्रमाणसमतो यत्र भेदश्शास्त्रचरित्रयोः ।
तत्र राजाज्ञया सन्धिरुभयोरपि शस्यते ॥

इति । एकस्य वादिनः एकान्तपराजयादर्वाक् यौ सन्धिं प्रकुर्यातां तौ विचक्षणावित्यर्थः ।

इति स्मृतिचन्द्रिकायां विवादविषयाणि.

अथ प्रत्याकलितपादः.

तत्र बृहस्पतिः—

ये तु तिष्ठन्ति करणे तेषां सभ्यैर्विभावना ।
कथयित्वोत्तरं सम्यक् दातव्यैकस्य वादिनः ॥

तेषां धर्माधिकरणस्थानां मध्ये एकस्यार्थिनः प्रत्यर्थिनो वा विभावना क्रिया सभ्यैर्निर्धारयितव्येत्यर्थः । तथाच कात्यायनः—

शोधिते लिखिते सम्यगिति निर्दोष उत्तरे ।
प्रत्यर्थिनोऽर्थिनो वाऽपि क्रियाकरणमिष्यते ॥

अर्थिनः प्रत्यर्थिनो वा यस्य साध्यमस्ति असौ तत्साध्यसिद्धये सदुत्तरानन्तरमेव प्रमाणलेखनं कुर्यादित्यर्थः । तथाच याज्ञवल्क्यः—

ततोऽर्थी लेखयेत्सद्यः प्रतिज्ञातार्थसाधनम् ।

इति । उत्तरसिद्धिसमनन्तरमेव साध्यवान् वादी प्रमाणमुद्भावयेदित्यर्थः । किं तत्प्रमाणमित्यपेक्षिते स एवाह—

प्रमाणं लिखितं भुक्तिः साक्षिणश्चेति कीर्तितम् ।
एषामन्यतमाभावे दिव्यान्यतममुच्यते ॥

दिव्यं धटादिः । तथाच नारदः—

क्रिया तु द्विविधा प्रोक्ता मानुषी दैविकी तथा ।
मानुषी लेख्यसाक्षिभ्यां धटादिर्दैविकी स्मृता ॥

लेख्यसाक्षिभ्यां भुक्त्या च प्रोक्ता मानुषीत्यर्थः । भुक्तेरपि मनुष्यसम्बन्धित्वात् । अत एव बृहस्पतिः—

साक्षिलेख्यानुमानं च मानुषी त्रिविधा स्मृता ।

इति । अनुमानं भुक्तिः, स्वत्वानुरूपकत्वात् । धटादिरपि तेनैव दर्शितः—

धटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमम् ।
षष्ठं च तण्डुलाः प्रोक्तं सप्तमं तप्तमाषकम् ॥
अष्टमं फालमित्युक्तं नवमं धर्मजं भवेत् ।
दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयंभुवा ॥

इति । अन्यानि तु दिव्यानि नारदेन निर्दिष्टानि—

सत्यं वाहनशस्त्राणि गोबीजकनकानि च ।
देवतापितृपादाश्च दत्तानि सुकृतानि च ॥

इति । चशब्दोऽन्येषामपि पुत्रशिरस्स्पर्शनादीनां सङ्ग्रहणार्थः । एते च धटादयः सत्यादयश्च दिवि देवैः कृतत्वाद्दिव्यदैविकसंज्ञाद्वयशालिनः । तथाच पितामहः—

यस्माद्देवैः प्रयुक्तानि पुष्करार्थे मनीषिभिः ।

परस्परविशुद्ध्यर्थं तस्माद्दिव्यानि नामतः ॥

अत्रोपक्रमसामर्थ्याद्दैविकानि नामत इति लभ्यते, देवैः प्रयुक्तानीति निमित्तदर्शनात्। उपसंहारसामर्थ्याद्दिवि संभवनिमित्तानीति गम्यते, दिव्यानि नामत इयुक्तत्वात्। तेन श्रुत्यर्थाभ्यामनेन वचनेन धटादीनामाजिगमनादाज्यमितिवद्यौगिकं नामद्वयमुक्तम्। शपथनाम नारदेनैव तेषामेव दर्शितं—

सप्तर्षयस्तथेन्द्राद्याः पुष्करार्थे तपोधनाः।
शेपुश्शपथमव्यग्राः परस्परविशुद्धये ॥

इति। व्यासोपि—

अर्थानुरूपाश्शपथाः स्मृतास्सप्तधटादयः।

इति। यत्तु बृहस्पतिनोक्तं—

धटाद्या धर्मजान्ता च दैवी नवविधा स्मृता।

इति, तत्र स्वयंभुवेति शेषो द्रष्टव्यः। नारदस्मृतसत्यादिभिस्सह दैव्या वस्तुतो बहुविधत्वात्। या पुनर्नारदीये दिव्यशपथयोः भेदेनोक्तिः—

यदा साक्षी न विद्येत विवादं वदतां नृणाम्।
तदा दिव्यैः परीक्षेत शपथैर्वा पृथग्विधैः ॥

इति, सा गुरुषु दिव्यशब्दो लघुषु शपथशब्दः प्रायिक इति दर्शयितुं, न पुनस्तयोरर्थभेदकथनाय, लोके तयोः पर्यायशब्दत्वात्। साक्षी न विद्यते इति लिखितादित्रयाभावोपलक्षणार्थः। याज्ञवल्क्येनाशेषमानुषाभावे दिव्यस्मरणात्। अत एव—

सम्भवे साक्षिणां प्राज्ञो दैविकीं वर्जयेत् क्रियाम् ।
संभवे तु प्रयुञ्जानो दैविकीं हीयते ततः ॥

इति । कात्यायनवचनेऽपि साक्षिग्रहणं मानुषोपलक्षणार्थमिति मन्तव्यम् । तथा—

दिवाकृते कार्यविधौ ग्रामेषु नगरेषु च ।
संभवे साक्षिणां चैव दैवी न भवति क्रिया ॥

इति नारदवचनेऽपि दिवाकृतादिसंकीर्तनं मानुषप्रमाणसंभवे दिव्यनिषेधार्थमवगन्तव्यम् । अत एव कात्यायनः—

यद्येकदेशव्याप्ताऽपि क्रिया विद्येत मानुषी ।
सा ग्राह्या न तु पूर्णाऽपि दैविकी वदतां नृणाम् ॥

विशिष्टसाध्ये विशेष्यांशे मानुषसंभवे विशिष्टार्थसाधकमपि न दिव्यं ग्राह्यमित्यर्थः । विशेषणांशसिद्धिस्तु विभावितैकदेशन्यायादल्पशपथेन वा कार्येत्यभिप्रायः । न च वाच्यं एकदेश इत्यविशेषवचनाद्विशेषणांशे विशेष्यांशे वा मानुषसंभवे दिव्यं निषिध्यत इति । यत आह स एव—

सारभूतं पदं मुक्त्वा असाराणि बहून्यपि ।
संसाधयेत् क्रिया या तु तां जह्यात् सारवर्जिताम् ॥

इति । तथा विवादिनोः कथंचिद्दैवमानुषयोरन्यतरत् प्रमाणमन्यतरेण वादिना कृतं निर्णायकमित्यङ्गीकारेऽपि मानुषसंभवे तदेव निर्णायकं न दैविकमित्याह स एव—

यद्येको मानुषीं ब्रूयात् अन्यो ब्रूयात्तु दैविकीम् ।

मानुषीं तत्र गृह्णीयान्न तु दैवीं क्रियां नृपः ॥

एवं च सर्वथा मानुषासम्भवे दिव्यमित्युत्सर्गः। क्वचिदस्यापवादमाह स एव—

प्रक्रान्ते साहसे वादे पारुष्ये दण्डवाचिके।
बलोद्भवेषु कार्येषु साक्षिणो दिव्यमेव वा ॥

अयं च विकल्पो गूढसाहसिकेतरविषयः। तत्र मानुषासंभवेन विकल्पासम्भवात्। अत एवोक्तं तेनैव—

गूढसाहासिकानां तु प्राप्तं दिव्यैः परीक्षणम्।
युक्तिचिह्नेङ्गिताकारवाक्चक्षुश्चेष्टितैर्नृणाम् ॥

गूढसाहासिकानां मुखवेष्टनादिवशादलक्ष्यमूर्तीनामित्यर्थः। युक्तिचिह्नादेरप्यभावे तेषां दिव्यं, न पुनः साक्ष्याद्यभावमात्र इति दर्शयितुं पुनर्वचनारम्भः। तथोत्तमसाहसिकानां प्रकटानामपि दिव्येनैव परीक्षणमित्याह स एव—

उत्तमेषु च सर्वेषु साहसेषु विचारयेत्।
सद्भावं दिव्यदृष्टेन सत्सु साक्षिषु वै भृगुः ॥

ऋणविवादेषु तु विशेषमाह नारदः—

प्रमादाद्धनिनो यत्र न लेख्यं न च साक्षिणः।
अर्थं चापह्नुते वादी तस्योक्तः त्रिविधो विधिः ॥

वादी गृहीतधनः। विधिः धनसाधनोपायः। सोपि तेनैव दर्शितः—

चोदना प्रतिकालं च युक्तिलेशस्तथैव च।

तृतीयश्शपथः प्रोक्तः तै ऋणं साधयेत् क्रमात् ॥

प्रतिकालं चोदना प्रत्यर्पणकालो यदा यदा प्राप्तस्तद। तदा मदीयं दीयतामिति त्रिश्चतुःपञ्चकृत्वो वा मध्यस्थजन-समक्षं अन्येनाप्रतिहता प्रतिदानप्रेरणा, सा प्रथम उपायः। तदसंभवे युक्तिलेशः अमुष्मिन्देशे अमुष्मिन्कालेऽमुनाऽर्थसंबन्धेन इयत्परिमाणमेतत्कर्मार्थं ऋणं गृहीतं त्वया इत्यादि द्वितीयोपायः। तस्याप्यसंभवे तृतीयोपायः शपथ इत्यर्थः। अयं चार्थः तेनैव दर्शितः—

अभीक्ष्णं चोद्यमानोऽपि प्रतिहन्यान्न तद्वचः ।
त्रिश्चतुःपञ्चकृत्वो वा परतोऽर्थं समाचरेत् ॥
चोदनाप्रतिघाते तु युक्तिलेशैस्समन्वियात् ।
देशकालार्थसंबन्धपरिमाणक्रियादिभिः ॥
युक्तिष्वप्यसमर्थासु शपथैरेव निर्णयेत् ।
अर्थकालबलापेक्षैरग्न्यम्बुसुकृतादिभिः ॥

कात्यायनोऽपि—

ऋणे लेख्यं साक्षिणो वा युक्तिलेशादयोऽपि वा ।
दैविकी वा क्रिया प्रोक्ता प्रजानां हितकाम्यया ॥

तथा विवादमात्रं प्रत्याह स एव—

प्रमाणैर्हेतुना वाऽपि दिव्येनैव तु निश्चयम् ।
सर्वेष्वेव विवादेषु सदा कुर्यान्नराधिपः ॥
सर्वाभावे तु यत्नेन नान्यथैव कदाचन ॥

इति । प्रमाणशब्दहेतुशब्दयोरर्थमाह व्यासः—

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम् ।
अनुमानं विदुर्हेतुस्तर्कश्चेति मनीषिणः ॥

इति । एवं च दृष्टप्रमाणेनासिद्धावदृष्टं प्रमाणमाश्रयणीयं नान्यथेति तात्पर्यार्थः । क्वचित् दृष्टेनासिद्धावप्यदृष्टं नाश्रयणीयमित्याह बृहस्पतिः—

प्रथमे वा तृतीये वा प्रमाणं दैवमानुषम् ।
उत्तरे स्याच्चतुर्थे तु ससाक्षिजयपत्रकम् ॥

प्राङ्न्यायोत्तरे साक्षिजयपत्रयोरन्यतरेणासाधयन्वादी न प्राग्विजयीत्यभिप्रायः । अनेनैवाभिप्रायेण व्यासोपि—

प्राङ्न्याये जयपत्रेण प्राड्विवाकादिभिस्तथा ।
सत्यं वादी समाप्नोति यद्यत्तेन निवेदितम् ॥

वादी प्रत्यर्थी, तस्यैव तत्र साध्यवादित्वात् । अत एव बृहस्पतिः-

प्राङ्न्याये प्रत्यवस्कन्दे प्रत्यर्थी साधयेत्स्वयम् ।
उत्तरार्थं प्रतिज्ञार्थं अर्थी मिथ्योत्तरे पुनः ॥

मिथ्योत्तरेऽभ्युपगमाभावेन भाषार्थस्य साध्यताहानात् प्रतिज्ञातार्थमर्थ्येव साधयेदित्यर्थः । कारणोत्तरे तु भाषार्थस्याभ्युपगमादेव साध्यत्वाद्धानान्न प्रतिज्ञावादिनः प्रतिज्ञातार्थसाधनं, किं तूत्तरार्थे अर्थिना यदनभ्युपगतं कारणं तदेव प्रत्यर्थिना प्रमाणेन साध्यम् । अत एव कात्यायनः—

प्रपद्य कारणं पूर्वमन्यद्धुरुतरं यदि ।

प्रतिवाक्यगतं ब्रूयात्साध्यते तद्धि नेतरत् ॥

पूर्वं प्रतिज्ञावादिनोक्तं प्रपद्य अङ्गीकृत्य अन्यद्गुरुतरमङ्गीकृतप्रतिज्ञातार्थोपमर्दनक्षमं कारणं प्रत्यर्पणादिकं प्रतिवाक्यगतमुत्तरवाक्यस्थं यदि प्रत्यर्थी ब्रूयात् तदा तदेव किल तेन साध्यते, अर्थिनाऽनङ्गीकृतत्वात् । नेतरत् प्रत्यर्थिनाऽङ्गीकृतं प्रतिज्ञातार्थजातं आर्थिना साध्यत इत्यर्थः । प्रपद्येत्युपलक्षणार्थं, तेन प्रप्रतिज्ञावादिनोक्तं मिथ्येत्युक्त्वा कारणाभिधानेऽपि कारणमेव साध्यते ।

मिथ्याकारणयोर्वाऽपि ग्राह्यं कारणमुत्तरम् ।

इति हारीतस्मरणात् । तथा सत्योत्तरे न कस्यापि वादिनः क्रियेत्याह स एव—

प्राङ्न्यायकारणोक्तौ तु प्रत्यर्थी निर्दिशेत्क्रियाम् ।
मिथ्योक्तौ पूर्ववादी तु प्रतिपत्तौ न सा भवेत् ॥

भाषायामुत्तरे च साध्यार्थाभावादित्यभिप्रायः । अतः सम्प्रतिपत्तौ द्विपात्त्वव्यवहारः । तथाच कात्यायनः—

मिथ्योक्तौ स चतुष्पात् स्यात् प्रत्यवस्कन्दने तथा ।
प्राङ्न्याये च स विज्ञेयो द्विपात्सम्प्रतिपत्तिषु ॥

तेन सम्प्रतिपत्तौ क्रियानिर्देशाद्यभावादुत्तरान्त एव व्यवहारः समाप्यते । एवंच मिथ्याकारणयोर्मानुषी दैविकी क्रिया, प्राङ्न्याये तु मानुष्येव सत्ये न काचिदित्यनुसन्धेयम् । मिथ्याकारणयोरपि क्वचिन्न दैविकीत्याह बृहस्पतिः—

वाक्पारुष्ये महीवादे निषिद्धा दैविकी क्रिया ।

इति । तेन तां तत्र न कल्पयेदित्यभिप्रायः । अत एव कात्यायनः—

वाक्पारुष्ये च भूमौ च दिव्यं न परिकल्पयेत् ।

इति । नन्वनेनैव वाक्पारुष्ये दिव्यमुक्तं 'प्रक्रान्ते' इत्यादिना । सत्यमुक्तं तत्तु महापारुष्यविषयं, इदं त्वल्पपारुष्यविषयमिति न किंचिद्विरुद्धम् । भूमाविति स्थावरोपलक्षणार्थम् । अत एव पितामहः—

स्थावरेषु विवादेषु दिव्यानि परिवर्जयेत् ।

साक्षिभिर्लिखितेनाथ भुक्त्या चैतान् प्रसाधयेत् ॥

अत्र मानुषासंभवे हेतुना निर्णयः, तदसम्भवे राजाज्ञयेति मन्तव्यम् । तथा क्वचिद्दिव्यनियमार्थमाह स एव—

महाशापाभिशापेषु निक्षेपहरणे तथा ।

दिव्यैः कार्यं परीक्षेत राजा सत्स्वपि साक्षिषु ॥

कात्यायनोपि—

समत्वं साक्षिणां यत्र दिव्यैस्तत्रापि शोधयेत् ।

प्राणान्तिकाविवादे वा विद्यमानेषु साक्षिषु ॥

दिव्यमालम्बते वादी न पृच्छेत्तत्र साक्षिणम् ।

इति । बृहस्पतिरपि—

लिखिते साक्षिवादे च संदेहो जायते यदा ।

अनुमाने च सम्भ्रान्ते तत्र दैवं विशोधनम् ॥

अनुमानं भुक्तिः उल्काहस्तत्वादियुक्तिश्च । व्यासोपि—

मयैतन्न कृतं लेख्यं कूटमन्येन कारितम् ।
अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥

निर्णेतव्येऽर्थे निर्णयं दिव्येन कुर्यादित्यर्थः । कात्यायनोपि—

यत्र स्यात्सोपधं लेख्यं तद्राज्ञश्श्रावितं यदि ।
दिव्येन शोधयेत्तत्र राजा धर्मासनस्थितः ॥

तथा क्वचिल्लेख्यस्य क्वचिद्भुक्तेः क्वचित्साक्षिणश्च सति सम्भवे नियमार्थमाह स एव—

पूगश्रेणीगणादीनां या स्थितिः परिकीर्तिता ।
तस्यास्तु साधनं लेख्यं न दिव्यं न च साक्षिणः ॥
द्वारमार्गक्रियाभोगजलवाहादिके तथा ।
भुक्तिरेव हि गुर्वी स्यात् न लेख्यं न च साक्षिणः ॥
दत्तादत्तेऽथ भृत्यानां स्वामिना निर्णये सति ।
विक्रयादानसम्बन्धे क्रीत्वा धनमयच्छति ॥
द्यूते समाह्वये चैव विवादे समुपस्थिते ।
साक्षिणस्साधनं प्रोक्तं न दिव्यं न च लेख्यकम् ॥

इति । एवमुक्ता प्रमाणस्य व्यवस्था परीक्षकैः परिपालनीयेत्याह नारदः—

प्रमाणानि प्रमाणज्ञैः परिपाल्यानि यत्नतः ।
सीदन्ति हि प्रमाणानि प्रमाणैरव्यवस्थितैः ॥

अव्यवस्थितैः प्रमाणैः प्रमाणकर्तारो यतो विनश्यन्ति अतः

कस्यात्र किं प्रमाणं लेख्यमिति प्रत्याकलनकुशलैः प्रत्याकलयितव्यमित्यर्थः । अत्र कैश्चित् पण्डितंमन्यैः—न स्थावरेषु लिखितादिकथनं प्रमाणनियमाय, किंतु प्रायिकत्वप्रदर्शनार्थं, अन्यथा कथंचिल्लेख्यादिनाशे निर्णयाभावः स्यादित्युक्तं, तदयुक्तम्—नियमार्थत्वेऽपि युक्तिभिः पार्थिववचनाद्वा निर्णयसम्भवात् । अत एव पितामहः—

लेख्यं यत्र न विद्येत न भुक्तिर्न च साक्षिणः ।
न च दिव्यावतारोस्ति प्रमाणं तत्र पार्थिवः ॥

निश्चेतुं ये न शक्यास्स्युर्वादास्संदिग्धरूपिणः ।
तेषां नृपः प्रमाणं स्यात् स सर्वस्य प्रभुर्यतः ॥

इति । अत एव दृष्टादृष्टप्रमाणमुक्त्वा उक्तं व्यासेन—

एषामभावे राजाज्ञा निर्णयं तु विदुर्बुधाः ।

इति । प्रमाणानां स्वरूपतो निषेधवशाद्वा असम्भवे निर्णयो राजाज्ञया भवतीत्यर्थः ।

इति स्मृतिचन्द्रिकायां प्रत्याकलितपादः

## अथ क्रियापादः

तत्र बृहस्पतिः—

श्रुत्वा पूर्वोत्तरं सभ्यैः निर्दिष्टा यस्य भावना ।
विभावयेत्प्रतिज्ञातं सोऽखिलं लिखितादिना ॥

भावना क्रिया । नारदोपि—

पूर्ववादेऽभिलिखिते यथाऽक्षरमशेषतः ।
अर्थी तृतीयपादे तु क्रियया प्रतिपादयेत् ॥

पूर्ववादो भाषा । अभिलिखितं पूर्वपक्षाभिभावकतया लिखितमुत्तरमिति यावत् । तृतीयपादः प्रत्याकलिताख्यः । तस्मिन् सति क्रिया प्रमाणम् । एवं चायमर्थः—भाषोत्तरप्रत्याकलिताख्यपादत्रये सति क्रियया प्रतिपादयेत् स्वकार्यमर्थी प्रमाणेन साधयेदिति । कार्यक्रियाशब्दयोरर्थमाह व्यासः—

कार्यं हि साध्यमित्युक्तं साधनं हि क्रियोच्यते ।
द्विभेदा सा पुनर्ज्ञेया मानुषी दैविकी तथा ॥

साधनं प्रमाणम् । बृहस्पतिरपि क्रियाभेदमाह—

द्विप्रकारा क्रिया प्रोक्ता मानुषी दैविकी तथा ।
एकैकाऽनेकधा भिन्ना मुनिभिस्तत्त्ववेदिभिः ॥

कात्यायनोपि—

पञ्चप्रकारं दैवं स्यान्मानुषं त्रिविधं स्मृतम् ।

इति । पञ्चप्रकारमिति नावधारणार्थम् । तण्डुलतप्तमाषादिविधान्तरस्यापि दैविकस्य स्मृत्यन्तरे दर्शनात् । त्रिविधमिति नियमार्थमेव, स्मृत्युत्तराविसंवादात् । अत एवात्र त्रिविधं स्मृतमित्यर्थः । यत्पुनर्नारदेनोक्तं—

लिखितं साक्षिणश्चात्र द्वौ विधी परिकीर्तितौ ।

इति, न तत्सङ्ख्यानियमार्थम् । तथात्वे—

लिखितं साक्षिणो भुक्तिः प्रमाणं त्रिविधं स्मृतम् ।

इति स्ववचनेन विरोधापत्तिस्स्यादतो भुक्तितो बहुविषयत्वमितरयोरिति वक्तुं 'द्वौ विधी परिकीर्तितौ' इत्युक्तमित्यवगन्तव्यम् ।

इति स्मृतिचन्द्रिकायां क्रियाभेदाः,

## अथ लेख्यनिरूपणम्

तत्र वसिष्ठः—

लौकिकं राजकीयं च लेख्यं विद्यात् द्विलक्षणम् ।

इति । लौकिकं जानपदम् । तथाच सङ्ग्रहकारः—

राजकीयं जानपदं द्विविधं लिखितं स्मृतम् ।

इति । तत्र राजकीयं शासनादिभेदेन चतुर्विधमित्याह वसिष्ठः—

शासनं प्रथमं ज्ञेयं जयपत्रं तथाऽपरम् ।

आज्ञाप्रज्ञापनापत्रं राजकीयं चतुर्विधम् ॥

तत्र शासनं निरूपयितुमाह याज्ञवल्क्यः—

दत्वा भूमिं निबन्धं वा कृत्वा लेख्यं तु कारयेत् ।

आगामिभद्रनृपतिपरिज्ञानाय पार्थिवः ॥

निबन्धः वाणिज्यादिकारिभिः प्रतिवर्षं प्रतिमासं वा किंचिद्धनमस्मै ब्राह्मणायास्यै देवतायै वा देयमित्यादिप्रभुसमयलभ्योऽर्थः। अत्र यद्यपि धनदातृत्वं वाणिज्यादिकर्तुः, तथाऽपि निबन्धकर्तुरेव पुण्यं, तदुद्देशेनैवेतरस्य प्रवृत्तेः । भूमिमिति ग्रामारामादीनामुपलक्षणार्थम् । अत एव बृहस्पतिः—

दत्वा भूम्यादिकं राजा ताम्रपट्टे तथा पटे ।

शासनं कारयेद्धर्म्यं स्थानवंशादिसंयुतम् ॥

कारयेत् सन्धिविग्रहाद्यधिकारिणेति शेषः । तस्यैवात्र लेखने कर्तृत्वनियमात् । तथाच व्यासः—

राज्ञा तु स्वयमादिष्टः सन्धिविग्रहलेखकः ।

ताम्रपट्टे पटे वाऽपि विलिखेद्राजशासनम् ॥

क्रियाकारकसम्बन्धं समासार्थक्रियान्वितम् ।

इति । क्रियाकारकयोः सम्बन्धो यस्मिन् शासने तत्तथोक्तम् । समासार्थक्रियान्वितं संक्षिप्तार्थोपन्यासक्रियया समन्वितमित्यर्थः । ताम्रपट्टादौ लेखनीयमर्थमाह याज्ञवल्क्यः—

अभिलेख्यात्मनो वंश्यानात्मानं च महीपतिः ।

प्रतिग्रहपरीमाणदानच्छेदोपवर्णनम् ॥

इति । उद्धृतमहीमण्डलस्य श्रीपतेर्वराहवपुषः वरदानप्रतिपादकमाशीर्वादमादावाचारप्राप्तमभिलेख्यानन्तरमात्मनो वंश्यान् प्रपितामहपितामहपित्राख्यान् त्रीनुक्तक्रमेण शौर्यादिगुणवर्णनद्वाराऽऽत्मानं चतुर्थमभिलेख्य प्रतिग्रहपरिमाणादिकं लेखयेदित्यर्थः । प्रतिगृह्यत इति प्रतिग्रहो भूम्यादिः निबन्धश्च । तस्य परिमाणमियत्ता । दानच्छेदो दीयमानभूम्यादेर्मर्यादा । व्यासोपि—

समामासतदर्धाहर्नृपनामोपलक्षितम् ।

प्रतिग्रहीतृजात्यादिसगोत्रब्रह्मचारिकम् ॥

इति । संप्रदानस्यासाधारणत्वावबोधकं जातिकुलशाखादिकमपि लेखनीयमित्युत्तरार्धस्यार्थः । तथाऽन्यदपि लेखनीयं स एवाह—

स्थानं वंशानुपूर्व्यं च देशं ग्राममुपागतम् ।

ब्राह्मणस्य तथा चान्यान् मान्यानधिकृतान् लिखेत् ॥

कुटुम्बिनोऽथ कार्यस्थदूतवैद्यमहत्तरान् ।
म्लेच्छचण्डालपर्यन्तान् सर्वान् संबोधयन्निति ॥

मातापित्रोरात्मनश्च पुण्यायामुकसूनवे ।
दत्तं मयाऽमुकायाथ दानं सब्रह्मचारिणे ॥

इति । बृहस्पतिरपि—

अनाच्छेद्यमनाहार्यं सर्वभाव्यविवर्जितम् ।
चन्द्रार्कसमकालीनं पुत्रपौत्रान्वयानुगम् ॥

दातुः पालयितुस्स्वर्गं हर्तुर्नरकमेव च ।
षष्टिं वर्षसहस्राणि दानच्छेदफलं लिखेत् ॥

इति । आगामिनृपादिबोधनार्थमिति शेषः । अत एव व्यासः—

षष्टिं वर्षसहस्राणि दानच्छेदफलं तथा ।
आगामिनृपसामन्तबोधनार्थं नृपो लिखेत् ॥

तथा श्लोकान्तरमपि लेखनीयं तेनैव पठितं—

सामान्योऽयं धर्मसेतुर्नृपाणां
काले काले पालनीयो भवद्भिः ।
सर्वानेतान् भाविनः पार्थिवेन्द्रान्
भूयो भूयो याचते रामभद्रः ॥

इति । ततो राजा स्वयं स्वहस्तं लिखेत् । तथाच स एव—

संनिवेशं प्रमाणं च स्वहस्तं च लिखेत्स्वयम् ।

इति । मतं मेऽमुकपुत्रस्य अमुकस्य महीपतेर्यदत्रोपरि लिखितमिति स्वयं लिखेदित्यर्थः । लेखकश्च स्वनाम लिखेत् तथाच स एव—

सन्धिविग्रहकारी च भवेद्यश्चापि लेखकः ।
स्वयं राज्ञा समादिष्टः स लिखेद्राजशासनम् ॥
स्वनाम तु लिखेत्पश्चात् मुद्रितं राजमुद्रया ।
ग्रामक्षेत्रगृहादीनामीदृक् स्याद्राजशासनम् ॥

इति । एतच्च प्रतिग्रहीतुरर्पणीयं, तस्योपयोगित्वात् । अत एव विष्णुः—

'पटे वा ताम्रपट्टे वा लिखितं समुद्राङ्कं चागामि-
नृपतिपरिज्ञानार्थं दद्यात्'

इति । सङ्ग्रहकारोपि—

राजस्वहस्तचिह्नेन राजादेशेन संयुतम् ।
युक्तं राजाभिधानेन मुद्रितं राजमुद्रया ॥
स्वलिप्यनपशब्दोक्तिसंपूर्णावयवाक्षरम् ।
शासनं राजदत्तं स्यात् सन्धिविग्रहलेखकैः ॥

इति । सन्धिविग्रहलेखकैः लिखितमुक्तविधमन्यस्मै राज्ञा दत्तं शासनाख्यं स्यादित्यर्थः । एतच्च शासनं न दानसिद्ध्यर्थं, तस्य प्रतिग्रहेणैव सिद्धेः, किंतु दत्तस्य स्थैर्यकरणार्थं, स्थिरत्वे अक्षय-फलश्रुतेः । तथाहि—

रुणद्धि रोदसी चास्य यावत् कीर्तिस्तरस्विनी ।
तावत् किलायमध्यास्ते सुकृती वैबुधं पदम् ॥

अनेनैवाभिप्रायेण याज्ञवल्क्येनाप्युक्तम्—

स्वहस्तकालसंपन्नं शासनं कारयेत् स्थिरम् ।

इति । कालसंपन्नं वत्सरादिविशेषितदानादिनोपेतम् ।

तथाच व्यासः—

ज्ञातं मयेति लिखितं दात्राऽध्यक्षाक्षरैर्युतम् ।

अब्दमासतदर्धाहोराजमुद्राङ्कितं तथा ॥

अनेन विधिना लेख्यं राजशासनकं लिखेत् ।

इति । तथाच स एव जयपत्रं निरूपयितुमाह—

व्यवहारान् स्वयं दृष्ट्वा श्रुत्वा वा प्राड्विवाकतः ।

जयपत्रं ततो दद्यात् परिज्ञानाय पार्थिवः ॥

कस्मै दद्यादित्यपेक्षिते स एवाह—

जङ्गमं स्थावरं येन प्रमाणेनात्मसात्कृतम् ।

भागाभिशापसंदिग्धो यस्सम्यग्विजयी भवेत् ॥

तस्मै राज्ञा प्रदातव्यं जयपत्रं सुनिश्चितम् ॥

बृहस्पतिरपि—

पुर्वोत्तरक्रियायुक्तं निर्णयान्तं यदा नृपः ।

प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥

पूर्वोत्तराक्रियायुक्तामिति वृत्तान्तोपलक्षणार्थम् । यत आह स एव—

यद्वृत्तं व्यवहारे तु पूर्वपक्षोत्तरादिकम् ।

क्रियावधारणोपेतं जयपत्रेऽखिलं लिखेत् ॥

व्यासोऽपि—

पूर्वोत्तराक्रियापादं प्रमाणं तत्परीक्षणम् ।

निगदं स्मृतिवाक्यं च यथासभ्यं विनिश्चितम् ॥
एतत्सर्वं समासेन जयपत्रे विलेखयेत् ॥

इति । क्रियापादं क्रियाभिमर्शनपादं प्रत्याकलितपादमिति यावत् । निगदं साक्षिवचनम् । यथासभ्यं सभ्यानतिक्रमेण । समासेन संक्षेपेण । कात्यायनोऽपि—

आर्थिप्रत्यर्थिवाक्यानि प्रतिज्ञा साक्षिवाक्तथा ।
निर्णयश्च यथा तस्य यथा चावधृतं स्वयम् ॥
एतद्यथाक्षरं लेख्ये यथापूर्वं निवेशयेत् ॥

इति । यथापूर्वमित्येतत्तेनैव प्रपञ्चितम्—

अभियोक्त्रभियुक्तानां वचनं प्राङ्निवेशयेत् ।
सभ्यानां प्राड्विवाकस्य कुलानां वा ततःपरम् ॥
निश्चयं स्मृतिशास्त्रस्य मतं तत्रैव लेखयेत् ॥

इति । मतं नृपादीनामिति शेषः । मतलेखनं तु स्वहस्तेन, परहस्ततो मतलेखनस्य 'यथा चावधृतं स्वयं' इत्यनेनैव पूर्वमेव विहितत्वात् । अत एवोक्तं तेनैव—

सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः ॥
सभासदश्च ये तत्र स्मृतिशास्त्रविदः स्थिताः ।
यथा लेख्यविधौ तद्वत् स्वहस्तं तत्र दापयेत् ॥

इति । राजा तान् सभ्यान् जानपदलेख्यवज्जयपत्रे स्वहस्तं दापयेदित्यर्थः । वृद्धवसिष्ठोऽपि—

प्राड्विवाकादिहस्ताङ्कं मुद्रितं राजमुद्रया ।
सिद्धेऽर्थे वादिनो दद्याज्जयिने जयपत्रकम् ॥

एवमुक्तं जयपत्रं पश्चात्काराख्यमित्याह कात्यायनः—

अनेन विधिना लेख्यं पश्चात्कारं विदुर्बुधाः ।

इति । अयं च पश्चात्कारो निर्णयविशेष एव न सर्वत्रेत्याह स एव—

निरस्ता तु क्रिया यत्र प्रमाणेनैव वादिना ।
पश्चात्कारो भवेत्तत्र न सर्वासु विधीयते ॥

क्रिया साध्यम् । प्रमाणेनैवेति वदंश्चतुष्पाद्व्यवहार एव पश्चात्कारो न द्विपाद्व्यवहार इति कथयति । स्पष्टीकृतं चैतत् बृहस्पतिना—

साधयेत् साध्यमर्थं तु चतुष्पादन्वितं जये ।
राजमुद्रान्वितं चैव जयपत्रकमिष्यते ॥

इति । द्विपाद्व्यवहारे तु भाषोत्तरान्वितं जयपत्रमस्त्येव, पश्चात्कारस्यैव तत्रासदनुवादकत्वेन प्रतिषेधात् । अन्यदपि जयपत्रं तेनैवोक्तं—

अन्यवाद्यादिहीनेभ्य इतरेषां प्रदीयते ।
वृत्तानुवादसंसिद्धं तच्च स्याज्जयपत्रकम् ॥

इतरेषां हीनवादिनामित्यर्थः । आज्ञाप्रज्ञापनापत्रे द्वे वसिष्ठेन दर्शिते—

सामन्तेष्वथ भृत्येषु राष्ट्रपालादिकेषु वा ।
कार्यमादिश्यते येन तदाज्ञापत्रमुच्यते ॥

ऋत्विक्पुरोहिताचार्यमान्येष्वभ्यर्हितेषु तु ।
कार्ये निवेद्यते येन पत्रं प्रज्ञापनाय तत् ॥

इति । बृहस्पतिरन्यदपि राजकीयं प्रसादलेख्याख्यं पत्रमाह—

देशादिकं यस्य राजा लिखितेन प्रयच्छति ।
सेवाशौर्यादिना तुष्टः प्रसादलिखितं हि तत् ॥

इति । अतो राजकीयं पञ्चविधं चतुर्विधमित्यनास्थयोक्तमिति मन्तव्यम् । जानपदं पुनर्व्यासेन निरूपितम्—

लिखेज्जानपदं लेख्यं प्रसिद्धस्थानलेखकः ।
राजवंशक्रमयुतं वर्षमासार्धवासरैः ॥

युतमित्यनुषज्यते । वासरः दिनम् । अन्यदपि लेखयितव्यमित्याह स एव—

पितृपूर्व्ये नामजाती धनिकर्णिकयोर्लिखेत् ।
द्रव्यभेदप्रमाणं च वृद्धिं चोभयसम्मताम् ॥

उभयसम्मतिः द्रव्यादेरपि विशेषणम् । अत एव याज्ञवल्क्यः—

यः कश्चिदर्थो निष्णातः स्वरुच्या तु परस्परम् ।
लेख्यं तु साक्षिमत्कार्यं तस्मिन् धनिकपूर्वकम् ॥

साक्षिमत् निष्णातार्थज्ञातृभूतमध्यस्थजननामान्वितम् । तथा कालधनिकऋणिकसाक्ष्यादिलेखनीयस्य यावता विशेषणेन विशेषनिष्ठत्वसिद्धिः तावद्विशेषणान्वितं कार्यमित्याह स एव—

समामासतदर्धाहर्नामजातिस्वगोत्रकैः ।
सब्रह्मचारिकात्मीयपितृनामादिचिह्नितम् ॥

सब्रह्मचारिकं बह्वृचः कठः इत्यादिशाखाप्रयुक्तं गुणनाम, आत्मीयपितृनाम, धनिकऋणिकसाक्षिणां पितृनाम। आदिशब्देन देशाचारावाप्तवारादि गृह्यते। अत एव व्यासः—

देशस्थित्या क्रियाधानप्रतिग्राहविचिह्नितम्।

देशस्थित्या क्रिया देशाचारानुसारेण करणम्। आधानं आधिः। नारदोऽपि—

लेख्यं तु साक्षिमत्कार्यमविलुप्तक्रमाक्षरम्।
देशाचारस्थितियुतं समग्रं सर्ववस्तुषु॥

वसिष्ठोऽपि—

कालं निवेश्य राजानं स्थानं निवसितं तथा।
दायकं ग्राहकं चैव पितृनाम्ना च संयुतम्॥
जातिं स्वगोत्रं शाखां च द्रव्यमाधिं ससंख्यकम्।
वृद्धिं ग्राहकहस्तं च विदितार्थौ च साक्षिणौ॥

इति। ग्राहकहस्तनिवेशनप्रकारमाह स एव याज्ञवल्क्यः—

समाप्तेऽर्थे ऋणी नाम स्वहस्तेन निवेशयेत्।
मतं मेऽमुकपुत्रस्य यदत्रोपरि लेखितम्॥

उपरीति वदन् पूर्वलिखिताक्षरसंस्थानादधस्तात्स्वहस्ताक्षरसंस्थानमिति दर्शयति। ऋणीति साक्षिणामपि प्रदर्शनार्थम्। तथाच स एव—

साक्षिणं च स्वहस्तेन पितृनामकपूर्वकम्।
अत्राहममुकस्साक्षी लिखेयुरिति ते समाः॥

यत्र लेख्ये विलिखितास्साक्षिणस्तेऽप्यमुकपुत्रोऽमुकोऽत्रार्थे साक्षीति प्रत्येकं लिखेयुः। ते च द्वित्वादिसमसंख्यया विशिष्टा भवेयुः। न त्रित्वादिविषमसंख्ययेत्यर्थः। केनचिदकारप्रश्लेषकल्पनया साक्षिसंख्यानियमो वैपरीत्येन वर्णितः। स यस्मिन् देशे तथैवाचारः तत्रैव ग्राह्यः नान्यत्र स्वरसार्थत्वात्। साक्षिण इति बहुवचनं गुरुतरकार्यलेख्यविषयम्।

उत्तमर्णाधमर्णौ च साक्षिणौ लेखकस्तथा।
समवायेन चैकेषां लेख्यं कुर्वीत नान्यथा॥

इति हारीतेन लेख्यमात्रे साक्षिणावित्युक्तत्वात्। एवंचान्यकृतलेख्यस्योत्तमर्णाधमर्णसाक्षिद्वयलेखकरूपपञ्चपुरुषारूढत्वात् पञ्चारूढं पत्रमिति लोके व्यवहारः। साक्षिसङ्ख्याधिकत्वे त्वयं व्यवहारो गौण इति मन्तव्यम्। लेख्यमात्रं प्रकृत्य व्यासेनाप्युक्तम्—

ऋणिहस्तं नामयुतं साक्षिभ्यां पितृपूर्वकम्।

इति। अतो द्विप्रभृतिभिस्समैर्भवितव्यमिति नियमो देशाचाराविरोधेनानुसंधेयः। यदा तु लिप्यनभिज्ञः साक्षी ऋणी वा तदा नारद आह—

अलिपिज्ञो ऋणी यस्स्याल्लेखयेत्स्वमतं तु सः।
साक्षी वा साक्षिणाऽन्येन सर्वसाक्षिसमीपतः॥

विजातीयलिपिज्ञोपि स्वयमेव लिखेत् लिपिज्ञत्वात्,

सर्वे जानपदान् वर्णान् लेख्ये तु विनिवेशयेत्॥

इति कात्यायनस्मरणाच्च। साक्षिस्वहस्तलेखनानन्तरं याज्ञवल्क्यः—

उभयाभ्यर्थितेनैतन्मया ह्यमुकसूनुना।
लिखितं ह्यमुकेनेति लेखकोऽन्ते ततो लिखेत्॥

व्यासोऽपि—

मयोभयाभ्यर्थितेनामुकेनामुकसूनुना।
स्वहस्तयुक्तं स्वं नाम लेखकस्त्वन्ततो लिखेत्॥
एवं जानपदे लेख्ये व्यासेनाभिहितो विधिः।

इति। अन्ततो लेख्यस्येति शेषः। एवमुक्तलेख्यमष्टविधमित्याह स एव—

चिरकं च स्वहस्तं च तथोपगतसंज्ञितम्।
आधिपत्रं चतुर्थं च पञ्चमं क्रयपत्रकं॥
षष्ठं तु स्थितिपत्राख्यं सप्तमं संधिपत्रकम्।
विशुद्धिपत्रकं चैवमष्टधा लौकिकं स्मृतम्॥

इति। नात्र सङ्ख्या विवक्षिता। विभागपत्रादेरपि लौकिकत्वात्। तत्र चिरकस्य लक्षणमाह सङ्ग्रहकारः—

चिरकं नाम लिखितं पुराणैः पौरलेखकैः।
अर्थिप्रत्यर्थिनिर्दिष्टैः यथासंभवसंस्तुतैः॥
स्वकीयैः पितृनामाद्यैरर्थिप्रत्यर्थिसाक्षिणाम्।
प्रतिनामभिराक्रान्तमर्थिसाक्षिस्वहस्तवत्॥
स्पष्टावगमसंयुक्तं यथास्मृत्युक्तलक्षणम्।

इति। संस्तुतैः प्रशस्तैरित्यर्थः। कात्यायनस्तु स्वहस्तमाह—

ग्राहकेण स्वहस्तेन लिखितं साक्षिवर्जितम् ।
स्वहस्तलेख्यं विज्ञेयं प्रमाणं तत्स्मृतं बुधैः ॥

एवमेव दायकेन लिखितं ग्राहकेणाभ्युपगतं लेख्यं उपगताख्यं विज्ञेयम् । आधिपत्रमाह नारदः—

आधिं कृत्वा तु यो द्रव्यं प्रयुङ्क्ते स्वधनं धनी ।
यत्तत्र क्रियते लेख्यमाधिपत्रं तदुच्यते ॥

अन्वाधिलेख्ये विशेषमाह प्रजापतिः—

धनी धनेन तेनैव परमाधिं नयेद्यदि ।
कृत्वा तदाधिलिखितं पूर्वं चास्य समर्पयेत ॥

क्रयपत्रं पितामहेनोक्तम्—

क्रीते क्रयप्रकाशार्थं द्रव्ये यत्क्रियते क्वचित् ।
विक्रेत्राऽनुमतं क्रेत्रा ज्ञेयं तत्क्रयपत्रकम् ॥

स्थितिपत्रादीनि पुनः कात्यायनेनोक्तानि—

चातुर्विद्यपुरश्रेणीगणपौरादिकास्थितिः ।
तत्सिद्ध्यर्थं तु यल्लेख्यं तद्भवेत् स्थितिपत्रकम् ॥
अभिशापे समुत्तीर्णे प्रायश्चित्ते कृते जनैः ।
विशुद्धिपत्रकं ज्ञेयं तेभ्यस्साक्षिसमन्वितम् ॥

इति । बृहस्पतिरपि लेख्यविभागमाह—

भागदानक्रयाधानसंविद्दासऋणादिभिः ।
सप्तधा लौकिकं लेख्यं त्रिविधं राजशासनम् ॥

अत्रापि न सङ्ख्या विवक्षिता, अधिकानामपि लेख्यानामेतेभ्यो

दर्शितत्वात्। अत एवात्रादिग्रहणं कृतं, अन्यथा गणितैरेव सप्तविधत्वसिद्धेरादिग्रहणमपार्थं स्यात्। तेनैतत् ज्ञायते लेख्यसङ्ख्या नावधारणार्थेति। अतो विविधसङ्ख्यावद्वचनानामविरोधः। भागलेख्यादिकं स्वयमेव व्याचष्टे—

भ्रातरस्संविभक्ता ये स्वरुच्या तु परस्परम्।
विभागपत्रं कुर्वन्ति भागलेख्यं तदुच्यते॥
भूमिं दत्वा तु यत्पत्रं कुर्याच्चन्द्रार्ककालिकम्।
अनाच्छेद्यमनाहार्यं दानलेख्यं तु तद्विदुः॥
गृहक्षेत्रादिकं क्रीत्वा तुल्यमूल्याक्षरान्वितम्।
पत्रं कारयते यत्तु क्रयलेख्यं तदुच्यते॥
जङ्गमं स्थावरं बन्धं दत्वा लेख्यं करोति यः।
गोप्यभोग्यक्रियायुक्तमाधिलेख्यं तदुच्यते॥
ग्रामो देशश्च यत्कुर्यान्मतं लेख्यं परस्परम्।
राजाविरोधि धर्मार्थं संवित्पत्रं वदन्ति तत्॥
वस्त्रान्नहीनः कान्तारे लिखितं कुरुते तु यत्।
कर्माणि ते करिष्यामि दासपत्रं तदुच्यते॥
धनं वृद्ध्या गृहीत्वा तु स्वयं कुर्याच्च कारयेत्।
उद्धारपत्रं तत्प्रोक्तं ऋणलेख्यं मनीषिभिः॥

इति। अन्यदपि लौकिकं लेख्यमाह कात्यायनः—

सीमाविवादे निर्णीते सीमापत्रं विधीयते।

इति । याज्ञवल्क्योपि—

दत्वर्णं पाटयेत्पत्रं शुद्धौ वाऽन्यत्तु कारयेत् ॥

इति । लेख्यप्रयोजनमाह मरीचिः —

स्थावरे विक्रयाधाने विभागे दान एव च ।
लिखितेनाप्नुयात्सिद्धिमविसंवादमेव च ॥

आधानमाधिः । आद्यश्चशब्दः ऋणादिनिष्णातार्थसङ्ग्रहार्थः । अविसंवादः कालान्तरेऽपि निष्णातार्थस्यानन्यथाभावः । एवंच स्थावरादावप्यविसंवादेन सिद्धिमालोच्य राजवंशवर्षादिलेखनीयानामावापोद्वापौ कार्यौ, तेषां दृष्टार्थत्वात् । अतो न दानादिलेख्ये धनिकऋणिकादि लेखनीयम् । नापि ऋणादिलेख्ये प्रतिग्रहादिकम् । एवमन्यत्रापि लेख्ये लेखनीयमूहनीयं, दृष्टप्रयोजनत्वाल्लेख्यस्य। अत एवाकृतप्रयोजनस्य लेख्यस्य कार्याक्षमत्वे नाशे वा लेख्यान्तरमुत्पाद्यम् । अत एवाह याज्ञवल्क्यः—

देशान्तरस्थे दुर्लेख्ये नष्टोन्मृष्टे हृते तथा ।
भिन्ने दग्धे तथा छिन्ने लेख्यमन्यत्तु कारयेत् ॥

देशान्तरस्थे सर्वथाऽऽनेतुमशक्यस्थानस्थे । दुर्लेख्ये दुरवबोधाक्षरे । भिन्ने द्विधा जाते । छिन्ने शीर्णे । कात्यायनोपि—

मलैर्यत् भेदितं दग्धं छिद्रितं वीतमेव वा ।
तदन्यत्कारयेल्लेख्यं स्वेदेनोल्लिखितं तथा ॥

वीतं विगतम् । उल्लिखितं उन्मृष्टम् । यत्पुनर्नारदेनोक्तम्—

लेख्ये देशान्तरन्यस्ते शीर्णे दुर्लिखिते हृते ।

सतस्तत्कालकरणमसतो दृष्टदर्शनम् ॥

इति, तत्तदैव धनदानोद्यतऋणिकविषयम् । तत्र लेख्यान्तरकरणे प्रयोजनाभावात् । कालकरणं, आनयनार्थं तस्य पत्रस्यानयनयोग्यकालकल्पनम् । दृष्टदर्शनं पत्रलभ्यपत्रार्थज्ञातृज्ञापनं धनप्रतिपादने कार्यमित्यर्थः । एतच्च पत्रपाटनासम्भवेऽपि साक्षिणां साक्षित्वनिवृत्तये कार्यम् । प्रतिपादनप्रकाशार्थं च प्रतिदत्तपत्रं ग्राह्यम् । कालान्तरे तु धने देये लेख्यान्तरं कार्यमेव । अत एवोक्तं तेनापि—

छिन्नभिन्नहृतोन्मृष्टदग्धदुर्लिखितेषु च ।
कर्तव्यमन्यल्लेख्यं स्यादेष लेख्यविधिस्स्मृतः ॥ इति ॥

इति स्मृतिचन्द्रिकायां लेख्यनिरूपणम्.

## अथ लेख्यपरीक्षा.

तत्र कात्यायनः—

राजा क्रियां समाहूय यथान्यायं विचारयेत् ।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः ॥

सुव्यक्तवर्णवाक्यादिको लेख्याचारः । सोपि तेनैव दर्शितः—

वर्णवाक्यक्रियायुक्तमसंदिग्धं स्फुटाक्षरम् ।
अहीनक्रमचिह्नं च लेख्यं तत्सिद्धिमाप्नुयात् ॥

क्रिया साध्यम् । चिह्नं मुद्रा सा राजकीयलेख्य एव । तथाच नारदः—

राज्ञा स्वहस्तसंयुक्तं स्वमुद्राचिह्नितं तथा ।
राजकीयं स्मृतं लेख्यं सर्वेष्वर्थेषु साक्षिमत् ॥

तथा जानपदं प्रकृत्याह स एव—

लेख्यं तु द्विविधं प्रोक्तं स्वहस्तान्यकृतं तथा ।
असाक्षिमत्साक्षिमच्च सिद्धिर्देशस्थितेस्तयोः ॥

देशस्थितेः देशाचारानुसारेण । तयोस्सिद्धिः प्रामाण्यमित्यर्थः ।
स्वहस्तकृते तु विशेषमाह याज्ञवल्क्यः—

विनाऽपि साक्षिभिर्लेख्यं स्वहस्तलिखितं तु यत् ।
तत्प्रमाणं स्मृतं सर्वं बलोपाधिकृतादृते ॥

विनाऽपीत्यपिशब्दात् ससाक्षिकमपि स्वहस्तलिखितमस्तीति गम्यते। अन्यकृतं तु साक्षिमदेव प्रमाणम् । तथाच पितामहः —

वादिभ्यामभ्यनुज्ञातं लेखकेन ससाक्षिकम् ।
लिखितं सर्वकार्येषु तत्प्रमाणं स्मृतं बुधैः ॥

कात्यायनोपि—

देशाचारयुतं वर्षमासपक्षादिवृद्धिमत् ।
ऋणिसाक्षिलेखकानां हस्ताङ्कं लेख्यमुच्यते ॥

वृद्धिग्रहणमाधेरुपलक्षणार्थम् । अत एव नारदः—

देशाचारविरुद्धं यत् व्यक्ताधिविधिलक्षणम् ।
तत्प्रमाणं स्मृतं लेख्यमविलुप्तक्रमाक्षरम् ॥

व्यक्तं आधिविधेराधिकरणस्य लक्षणं यस्मिन् लेख्ये तत्तथोक्तम् । यल्लेख्यमविलुप्तक्रमाक्षरादिलक्षणान्वितं तत्प्रमाणं का

लान्तरेऽपि वस्तुतत्त्वावबोधकमित्यर्थः । अनेवंविधमप्रमाणमित्यर्थादेव सिद्धम् । तथाऽपि स्पष्टार्थमाह कात्यायनः—

स्थानभ्रष्टास्त्वपङ्क्तिस्थाः संदिग्धा लक्षणच्युताः ।
यदा तु संस्थिता वर्णाः कूटलेख्यं तदा भवेत् ॥
देशाचारविरुद्धं यत्संदिग्धं क्रमवर्जितम् ।
कृतं च स्वामिना यच्च साध्यहीनं च दुष्यति ॥

इति । हारीतोपि—

यच्च काकपदाकीर्णं तल्लेख्यं कूटतामियात् ।
बिन्दुमात्राविहीनं यत्संहितं चिरितं च यत् ॥

बृहस्पतिरपि—

यदुज्ज्वलं चिरकृतं मलिनं स्वल्पकालिकम् ।
भग्नोन्मृष्टाक्षरयुतं लेख्यं कूटत्वमाप्नुयात् ॥
मुमूर्षुशिशुभीतार्तस्त्रीमत्तव्यसनातुरैः ।
निशोपाधिबलात्कारकृतं लेख्यं न सिध्यति ॥

इति । नारदोपि—

मत्ताभियुक्तस्त्रीबालबलात्कारकृतं तु यत् ।
तदप्रमाणं लिखितं भयोपाधिकृतं तथा ॥

कात्यायनोपि—

मत्तेनोपाधिभीतेन तथोन्मत्तेन पीडितैः ।
स्त्रीभिर्बालास्वतन्त्रैश्च कृतं लेख्यं न सिध्यति ॥

मुमूर्ष्वादिकृतं अयथार्थशङ्कया न प्रमाणतां प्रतिपद्यत इति

बार्हस्पत्यादिवचनानां तात्पर्यार्थः। एवं साक्ष्यादिवैगुण्येऽपि न प्रमाणम्। तथाच व्यासः—

दूषितः कर्मदुष्टो वा साक्षी यत्र निवेशितः।
कूटलेख्यं तु तत्प्राहुः लेखको वाऽपि तद्विधः॥

कात्यायनोपि—

साक्षिदोषाद्भवेद्दुष्टं पत्रं वै लेखकस्य वा।
धनिकस्यापि वा दोषात्तथा धारणकस्य वा॥

अत्र ये गूढदोषास्ते विवादिना वक्तव्याः। ये पुनः प्रकटास्ते सभ्यैरित्याह स एव—

प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना।
गूढास्तु प्रकटास्सभ्यैः काले शास्त्रप्रदर्शनात्॥

प्रमाणस्य प्रमाणतया कीर्तितस्य। काले प्रमाणपरीक्षाकाल इत्यर्थः। कालातिक्रमणोक्तास्तु दोषा न प्रामाण्यं विघ्नन्तीत्याह बृहस्पतिः—

लेख्यदोषास्तु ये केचित् साक्षिणां चैव ये स्मृताः।
वादकाले तु वक्तव्याः पश्चादुक्तान्न दूषयेत्॥

पश्चादुक्तात् प्रमाणपरीक्षापर्यवसानात्पश्चान्न दूषयेदित्यर्थः। गूढदोषोद्भावनप्रकारमाह कात्यायनः—

साक्षिलेखककर्तारः कूटतां यान्ति ते तथा।
तथा दोषाः प्रयोक्तव्या दुष्टैर्लेख्यं प्रदुष्यति॥

अथवा-आरूढलेखकेन न लिखितमारूढसाक्षिभिर्वा न दृष्टं दुष्ट-मित्युद्भावनीयमित्याह स एव—

न लेखकेन लिखितं न दृष्टं साक्षिभिस्तथा ।
एवं प्रत्यर्थिनोक्ते तु कूटलेख्यं प्रकीर्तितम् ॥

उक्तेनार्थेनेति शेषः । तथाच स एव—

नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगे दण्ड्यस्स्यात् साध्यार्थाच्चापि हीयते ॥

एवं दूषणवाद्युदितदोषसम्भवे तान् दोषानितरस्य सभापतिः निरूपयेत् । तथाच स एव—

एवं दुष्टं नृपस्थाने यस्मिन् तद्धि विचार्यते ।
विमृश्य ब्राह्मणैस्सार्धं पत्रदोषान्निरूपयेत् ॥

तत्र यदीतरेण ते दोषा न परिहृताः तदा दुष्टं लेख्यं, परिहृता-श्चेददुष्टमित्याह स एव—

येन ते कूटतां यान्ति साक्षिलेखककारकाः ।
तेन दुष्टं भवेल्लेख्यं शुद्धैश्शुद्धिं विनिर्दिशेत् ॥

उपगताख्यलेख्यस्य त्वधमर्णसंमत्या शुद्धिर्नो चेन्नेत्याह स एव—

धनिकेन स्वहस्तेन लिखितं साक्षिवर्जितम् ।
भवेत्कूटं न चेत्कर्ता कृतं हीति विभावयेत् ॥

कर्ता धनिकोऽधमर्णानुमत्या कृतमिति यदि न विभावयेत् न साधयेत्तदा न जानामीत्यधमर्णेन दूषितं लेख्यं कूटं भवेदित्यर्थः ।

यदा पुनः स्वहस्तानिह्नवेन लिखितं दूषयति तदा तदारूढसाक्ष्यादितो दुष्टमदुष्टं वेति निश्चेतव्यम्। तथाच स एव—

दत्तं लेख्ये स्वहस्तं तु ऋणिको यदि निह्नुते।
पत्रस्थैस्साक्षिभिर्वाच्यो लेखकस्य मतेन वा॥

अकृतत्वेन दूषितेऽप्ययमेव निश्चय इत्याह स एव—

कृताकृतविवादेषु साक्षिभिः पत्रनिर्णयः।

इति। साक्षिग्रहणमुपलक्षणम्।

दूषिते पत्रके वादी तदारूढांस्तु निर्दिशेत्।

इति तेनैवोक्तत्वात्। यत्पुनर्नारदेनोक्तम्—

यस्मिंस्तु संशयो लेख्ये भूताभूतकृतः क्वचित्।
तत्स्वहस्तक्रियाचिह्नयुक्तिप्राप्तिभिरुद्धरेत्॥

इति, यदपि याज्ञवल्क्येन—

संदिग्धलेख्यशुद्धिस्स्यात् स्वहस्तलिखितादिभिः।
युक्तिप्राप्तिक्रियाचिह्नसंबन्धागमहेतुभिः॥

इति तदसाक्षिकस्वहस्तकृतलेख्यविषयम्। तत्र साक्ष्यादिस्पष्टनिर्णायकाभावात्। अत एव हारीतः—

ऋणिस्वहस्तसंदेहे जीवतो वा मृतस्य वा।
तत्स्वहस्तकृतैरन्यैः पत्रैस्तल्लेख्यनिर्णयः॥

स्वहस्तकृतैरिति पूर्वोक्तक्रियाद्युपलक्षणार्थम्। यत्र पुनरस्ति ससाक्षिकस्वहस्तकृतलेख्यादौ साक्ष्यादि स्पष्टनिर्णायकं न तत्र लेख्यान्तरसादृश्यात् स्पष्टनिर्णायकेन निर्णयः।तदाह कात्यायनः—

प्रत्यक्षमनुमानेन न कदाचित्प्रबाध्यते ।
तस्माल्लेख्यस्य दुष्टस्य वचोभिस्साक्षिणां भवेत् ॥
निर्णयस्स्वधनार्थं हि पत्रं दूषयति स्वयम् ।

इति । साक्षिणां वचोभिर्न पुनरधमर्णवचनतः, तस्याशयदोषसम्भवादित्यर्थः । अनेनैवाभिप्रायेण नारदेनाप्युक्तम्—

लिखितं लिखितेनैव साक्षिमत्साक्षिभिर्हरेत् ।

इति । अविद्यमानसाक्ष्यादिकं लिखितं तत्सजातीयलिखितादिना शोधयेदित्यर्थः । यत्पुनस्तेनोक्तम्—

साक्षिभ्यो लिखितं ज्ञेयं लिखितान्न तु साक्षिणः ।

इति, तल्लेख्यानारूढसाक्षिविषयम् । अतस्साक्ष्यादिमतो लेख्यारूढसाक्ष्यादिभिर्निर्णयः । असाक्षिमतस्स्वहस्तकृतलेख्यान्तरसादृश्यादिभिरित्यनुसन्धेयम् । कथं तर्हि मृतसाक्ष्यादिमतः निर्णय इत्यपेक्षिते कात्यायनः—

अथ पञ्चत्वमापन्नो लेखकस्सह साक्षिभिः ।
तत्स्वहस्तादिभिस्तेषां विशुध्येत्तु न संशयः ॥

तेषां मृतसाक्ष्यादीनाम् । तत्स्वहस्तादिभिः पत्रान्तरप्रसिद्धहस्तगोत्रवर्णसादृश्यप्रभृतिभिरित्यर्थः । विष्णुरपि—

यत्रर्णी धनिको वाऽपि साक्षी वा लेखकोपि वा ।
म्रियते तत्र तल्लेख्यं तत्स्वहस्तैः प्रसाधयेत् ॥

इति । राजकीयं प्रत्याह कात्यायनः—

पश्चात्कारनिबद्धं यत्तद्यत्नेन विचारयेत् ।

यदि स्याद्युक्तियुक्तं तु प्रमाणं लिखितं तदा ॥
अन्यथा दूरतः कार्यं पुनरेव विनिर्णयेत् ।
अतथ्यं तथ्यभावेन स्थापितं ज्ञानविभ्रमात् ॥
निवर्त्यं तत्प्रमाणं स्यात् यत्नेनापि कृतं नृपैः ।

पश्चात्कारनिबद्धं पश्चात्काराख्यजयपत्रनिवेशितमित्यर्थः । तथा-

समुद्रे तु यथा लेख्ये मृतास्सर्वेऽपि तत्स्थिताः ।
लिखितं तत्प्रमाणं तु मृतेष्वपि हि तेषु वै ॥

प्रमाणं मुद्रादिभिरिति शेषः । अत एव शासनं मुद्रामुदाहृत्याह प्रजापतिः—

कार्यो यत्नेन महता निर्णयो राजशासने ।
राज्ञा स्वहस्ततन्मुद्रालेखकाक्षरदर्शनात् ॥

कात्यायनोपि—

मुद्राशुद्धं क्रियाशुद्धं भुक्तिशुद्धं सचिह्नकम् ।
राज्ञस्स्वहस्तसंशुद्धं शुद्धिमायाति शासनम् ॥

क्रियाशुद्धं अपशब्दानन्वयादिरहितम् । जानपदलेख्यमपि क्वचिद्भुक्त्या शुद्धिमायातीत्याह स एव—

शक्तस्य सन्निधावर्थो येन लेख्येन भुज्यते ।
वर्षाणि विंशतिं यावत्तत्पत्रं दोषवर्जितम् ॥

स्मृत्यन्तरेऽप्युक्तम्—

अथ विंशतिवर्षाणि आधिर्भुक्तिस्सुनिश्चितम् ।
येन लेख्येन तत्सिद्धं लेख्यं दोषविवर्जितम् ॥
सीमाविवादे निर्णीते सीमापत्रं विधीयते ।

तस्य दोषाः प्रयोक्तव्या यावद्वर्षाणि विंशतिम् ॥

आधानसहितं पत्रमृणलेख्यनिवेशितम् ।

मृतसाक्षि प्रमाणं तु स्वल्पभोगेऽपि तद्विदुः ॥

आधानमाधिः । मृतसाक्षि प्रमीतसाक्ष्यादिकम् । तथाच नारदः—

मृतास्स्युस्साक्षिणो यत्र धनिकर्णिकलेखकाः ।

तदप्यनर्थं लिखितं न चेदाधिस्स्थिराश्रयः ॥

आश्रयो भुक्तिः । अथवा लिखितबलायातकिंचिद्वृद्ध्यादिधनलब्ध्याऽधमर्णस्य पुरस्तात्तल्लेख्यख्यापनेन वा शुद्धिरित्याह स एव—

यदि लब्धं भवेत्किंचित् प्रज्ञप्तिर्वा कृता भवेत् ।

प्रमाणमेव लिखितं मृता यद्यपि साक्षिणः ॥

प्रज्ञप्तिमेव प्रपञ्चयति—

दर्शितं प्रतिकालं यच्छ्रावितं स्मारितं तथा ।

लेख्यं सिध्यति सर्वत्र मृतेष्वपि हिं साक्षिषु ॥

प्रजापतिरपि—क्वचिद्भुक्त्या शुद्धिमाह—

हेत्वन्तरकृते पत्रे आरूढो यत्र निह्नुते ।

लेख्यं यस्य भवेद्धस्ते तस्य भोगं विनिर्दिशेत् ॥

निर्णायकत्वेनेति शेषः । भोगग्रहणमुपलक्षणार्थम् । अत एव नारदः—

लेख्यं यच्चान्यनामाङ्कं हेत्वन्तरकृतं भवेत् ।

विप्रत्यये परीक्ष्यं तत्संबन्धागमहेतुभिः ॥

हेत्वन्तरकृतं दायादेर्वञ्चनार्थं कृतम्। विप्रत्ययो विप्रतिपत्तिः। संबन्धः प्राचीनो धनदानप्रतिदानादिलक्षणः। आगमः एतावतो धनस्य सम्भवोऽस्यास्ति नेत्येवमात्मकः। हेतुरनुमानम्। एवं धनिनामाङ्कं लेख्यमपि वञ्चनादिहेतुकृतं परीक्ष्यम्। तथाच बृहस्पतिः—

स्त्रीबालार्तान् लिप्यविज्ञान्वञ्चयन्ति स्वबान्धवाः।
लेख्यं कृत्वा स्वनामाङ्कं ज्ञेयं युक्त्यागमैस्तु तत्॥
ज्ञात्वा कार्यं देशकालकुशलाः कूटकारकाः।
कुर्वन्ति सदृशं लेख्यं तद्यत्नेन विचारयेत्॥

लिप्यविज्ञो लिप्यनभिज्ञः। कात्यायनोपि—

दर्पणस्थं यथा बिम्बमसत्सदिव दृश्यते।
तथा लेख्यस्य बिम्बानि कुर्वन्ति कुशला जनाः॥

व्यासोपि—

लेख्यमालेख्यवत्केचित् लिखन्ति कुशला नराः।
तस्मान्न लेख्यसामर्थ्यात् सिद्धिरैकान्तिकी मता॥

तेन सम्यक्परीक्षणीयमित्यभिप्रायः। अत एव नारदः—

पुरुषास्सन्ति ते लोभात्कार्यं ये ब्रूयुरन्यथा।
सन्ति चान्ये दुरात्मानः कूटलेख्यकृतो जनाः॥
परीक्ष्यमेतदुभयं स्वयं राज्ञा विशेषतः।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः॥

इति। लेख्याचारेण प्रागुदितशुद्धिहेतुजातेनेत्यर्थः। यत्पुनस्त-

द्धेतुजानेन न शुद्धिमायाति लेख्यं तदप्रमाणमेव, तेन तत्परित्यज्य दिव्येन निर्णयं कुर्यात् ।

अलेख्यसाक्षिके दैवीं व्यवहारे विनिर्दिशेत् ।

इति कात्यायनस्मरणात् । तथा हारीतेनाप्यनेनैवाभिप्रायेणोक्तं—

न मयैतत्कृतं लेख्यं कूटमन्येन कारितम् ।
अधरीकृत्य तत्पत्रमर्थे दिव्येन निर्णयः ॥

इति । यत्र लेख्ये सर्वथा कूटशङ्काऽनपगमः तत्र साध्यार्थनिर्णयो दिव्येनेति तात्पर्यार्थः । उदाहरणतयोक्तस्वहस्तलेख्यस्यानादरणीयत्वात् । तेन स्वहस्तगोत्रचिह्नादिसम्भवेऽपि प्रतिवादिनो दृढविप्रतिपत्त्या कूटशङ्काऽनपगमो यत्र भवेत् तत्रापि दिव्येन निर्णयः । तथाच प्रजापतिः—

यन्नामगोत्रैस्तत्तुल्यरूपं लेख्यं क्वचिद्भवेत् ।
अगृहीते धने तत्र कार्यो दिव्येन निर्णयः ॥

तत्तुल्यरूपं अविप्रतिपन्नलेख्यान्तरतुल्यरूपम् । अगृहीते धने प्रतिवादिनि दृढ इत्यर्थः । यत्पुनर्नारदेनोक्तम्—

दुष्टे पत्रे स्फुटं दोषं नोक्तवान् ऋणिको यदि ।
ततो विंशतिवर्षाणि क्रान्तं पत्रं स्थिरं भवेत् ॥

इति, तस्यायमर्थः—दौष्ट्यचिरकालभोगाभ्यां संदिग्धप्रामाण्यकं लेख्यं दिव्येन साधितार्थं स्थिरं भवेदिति चिरकालत्वमात्रेण स्थैर्यासंभवात् । यः पुनः लेख्यदोषान् न परिहरति तस्य दण्डमाह कात्यायनः—

कूटोक्तौ साक्षिणां वाक्यं लेखकस्य च पत्रकम् ।
नयेच्छुद्धिं न यः कूटं स दाप्यो दण्डमुत्तमम् ॥

साक्षिणां वाक्यं लेखकस्य पत्रं च प्रति कूटोक्तावुक्तविधया यो वादी कूटं शुद्धिं न नयेत्, स उत्तमसाहसदण्ड्य इत्यर्थः । स्थावरादौ तु दण्डान्तरमाह स एव—

स्थावरे विक्रयाधाने लेख्यं कूटं करोति यः ।
स सम्यग्भावितः कार्यो जिह्वापाण्यङ्घ्रिवर्जितः ॥

तेनान्यलेख्यधारकेणैतल्लेख्यागमनकारणमुद्भावनीयमित्याह व्यासः—

यत्रान्यस्य कृतं लेख्यमन्यहस्ते प्रदृश्यते ।
अवश्यं तेन वक्तव्यं पत्रं पत्रागमं ततः ॥

ततो लेख्यस्वामिनस्सकाशादित्यर्थः । तथा लेख्यानां मिथो विरोधे बाध्यबाधकनिर्णयार्थमाह स एव—

स्वहस्तकाज्जानपदं तस्मात्तु नृपशासनम् ।
प्रमाणतरमिष्टं हि व्यवहारार्थमागतम् ॥

जानपदपदेनात्र गोबलीवर्दन्यायात् स्वहस्तकृतादन्यदुच्यते । नृपशब्देनापि लक्षणया शासनेतरद्राजकीयं, तेनान्यकृतं स्वहस्तकृतात् बलवत्, तस्मादपि राजकीयं, ततोऽपि शासनमित्यर्थः । बलवत्त्वं चोत्तरोत्तरस्य कूटत्वासम्भवतारतम्यतोऽवगन्तव्यम् । अत एवोपगताख्यलेख्यादसाक्षिकं स्वहस्तकृतं, तस्माच्च ससाक्षिकं स्वहस्तकृतं बलवदित्यवगन्तव्यम् । अत एव

लेख्यमात्रं साक्षिवचनतो बलवदित्याह संवर्तः—

लेख्यस्योपरि यत्साक्ष्यं कूटं तदभिधीयते ।
अधर्मस्य हि तद्द्वारमतो राजा विवर्जयेत् ॥

लेख्यविरुद्धं यत् साक्ष्यं ततो दुर्बलमित्यर्थः । बृहस्पतिरपि—

वाचकैर्यत्र सामर्थ्यमक्षराणां विहन्यते ।
क्रियाणां सर्वनाशस्स्यादनवस्था च जायते ॥

क्रियाणां लेख्यक्रियाणाम् । कात्यायनोपि—

न दिव्यैस्साक्षिभिर्वाऽपि हीयते लिखितं क्वचित् ।
लेख्यधर्मस्सदा श्रेष्ठो ह्यतो नान्येन हीयते ॥

लेख्येन तु हीयत इत्याह स एव—

तद्युक्तप्रतिलेख्येन तद्विशिष्टेन वा सदा ।
लेख्यक्रिया निरस्येत निरस्यान्येन न क्वचित् ॥

अन्येन साक्ष्यादिनेत्यर्थः । अत एव बृहस्पतिः—

न जातु हीयते लेख्यं साक्षिभिश्शपथेन वा ।
अदर्शनाश्राविताभ्यां हानिं प्राप्नोत्युपेक्षया ॥

बहुकालव्यापिन्येति शेषः । तथाच व्यासः—

अदृष्टाश्रावितं लेख्यं प्रमीतधनिकर्णिकम् ।
अबद्धलग्नकं चैव बहुकालं न सिध्यति ॥

इति । अबद्धलग्नकं आधिप्रतिभूरहितम् । बहुकालं बहुकालीनं, न सिध्यति स्वत इत्यभिप्रायः । कात्यायनोपि—

लेख्यं त्रिंशत्समातीतमदृष्टाश्रावितं च यत् ।

न तत्सिद्धिमवाप्नोति तिष्ठत्स्वपि हि साक्षिषु ॥

अदर्शनेऽपि विशेषमाह स एव—

प्रयुक्ते शान्तलाभे तु लिखितं यो न दर्शयेत्।
न याचते च ऋणिकं तत्संदिग्धत्वमाप्नुयात् ॥

ऋणिकमासन्नमाढ्यं चेति शेषः। तथाच बृहस्पतिः—

आढ्यस्य निकटस्थस्य यच्छक्तेन न याचितम् ।
शुद्धं न शङ्कया तत्र लेख्यं दुर्बलतामियात् ॥

एवमविशेषेणादर्शनादितो लेख्यहानिप्राप्तावपवादमाह स एव—

उन्मत्तजडबालानां राजभीतप्रवासिनाम् ।
अप्रगल्भभयार्तानां न लेख्यं हानिमाप्नुयात् ॥

संवर्तस्तु लेख्याभासा अपि बहुकालीना विचारविषयतां भजन्त इत्याह—

बलोपाधिकृतं चैव मत्तोन्मत्तकृतं तथा ।
एते चान्ये च बहवः चिरस्था वादहेतवः ॥

तेनैवमादिषूक्तशुद्धिविधिरनुसंधेयो निर्णेतृभिरित्यभिप्रायः ।

अत एव कात्यायनः—

द्रव्यं गृहीत्वा यल्लेख्यं परस्मै सम्प्रदीयते ।
छन्नमन्येन चारूढं संयतं चान्यवेश्मनि ॥
दत्ते वृत्तेऽथवा द्रव्ये क्वचिल्लिखितपूर्वके ।
एष एव विधिर्ज्ञेयो लेख्यशुद्धिविनिर्णये ॥ इति ॥

इति स्मृतिचन्द्रिकायां लेख्यपरीक्षा

अथ भुक्तिनिरूपणम्.

तत्र नारदः—

श्रुत्वोत्तरं क्रियापादे लेख्यं साधनमुद्दिशेत्।
सामन्तलक्षणोपेता भुक्तिर्वा चिरकालिकी ॥

साधनशब्देनात्र गोबलीवर्दन्यायात् साक्षिण उच्यन्ते, तेनायमर्थः—लिखितं साक्षिणो वा गृहक्षेत्रादिविवादेषु उद्दिशेत् भुक्तिर्वा कीर्तनीयेति। अत एवानेन साक्षिषु विशेषो वर्णितः।

गृहक्षेत्रादिवादेषु सामन्तेभ्यो विनिर्णयः।
नगरग्रामगणिनो ये च वृद्धतमा नराः ॥
यद्वदन्ति नियोगस्थाः तद्ग्राह्यं व्यावहारिकम् ॥

एतदुक्तं भवति—क्षेत्रादिस्थावरविवादे मानुषप्रमाणानामन्यतमं प्रमाणमुद्दिशेत् न जातु दिव्यमिति। तत्रापि लिखितभुक्ती श्रेष्ठे इत्याह कात्यायनः—

लिखितं साक्षिणो भुक्तिः प्रमाणत्रयमिष्यते।
प्रमाणेषु स्मृता भुक्तेस्सल्लेख्यसमता नृणाम् ॥

नृणां प्रमाणेष्विसन्वयः। मानुषप्रमाणेष्वित्यर्थः। सल्लेख्यमनवद्यलेख्यम्। क्वचिद्भुक्तेरेव श्रैष्ठ्यमितराभ्यामाह स एव—

रथ्यानिर्गमनद्वारजलवाहादिसंशये।
भुक्तिरेव तु गुर्वी स्यात् प्रमाणेष्विति निश्चयः ॥

रथ्यादिव्यतिरिक्तविषयेऽपि भुक्त्यनुग्रहमन्तरेण नेतरयोर्गुरुत्वमित्याह नारदः—

विद्यमानेऽपि लिखिते जीवत्स्वपि हि साक्षिषु ।
विशेषतस्स्थावराणां यन्न भुक्तं तदस्थिरम् ॥

याज्ञवल्क्योऽपि—

आगमेऽपि बलं नैव भुक्तिस्स्तोकाऽपि यत्र नो ।

इति । आगमे लिखितसाक्षिपरिज्ञेयक्रयादावित्यर्थः । अनेनागमलेख्यादेर्दोषशङ्काऽपनोदकतया स्तोकभुक्तिरनुग्राहकमात्रमेव न प्रमाणमित्यर्थादुक्तम् । उक्तं च कात्यायनेन—

शक्तस्य सन्निधावर्थो यस्य लेख्येन भुज्यते ।
दश वर्षाण्यतिक्रान्तं तल्लेख्यं दोषवर्जितम् ॥

बृहस्पतिनाऽपि—

यस्यैकशासने ग्रामक्षेत्रारामाश्च लेखिताः ।
एकदेशोपभोगेऽपि सर्वे भुक्ता भवन्ति ते ॥

इति । यत्पुनर्लेख्यमनिवारितप्रतिकूलदानस्य स्वामिनः तद्विफलमेवेत्याह स एव—

पश्यन्नन्यस्य ददतः क्षितिं यो न विचालयेत् ।
स्वामी सताऽपि लेख्येन न पुनस्तां समाप्नुयात् ॥

सताऽपि समीचीनेनापीत्यर्थः । क्षितिमिति देयद्रव्योपलक्षणार्थम् ।
यदाह स एव—

रिक्थिभिर्वा परैर्द्रव्यं समक्षं यस्य दीयते ।

अन्यस्य भुञ्जतः पश्चात् न स तल्लब्धुमर्हति ॥

समक्षदानेनाप्रतिषिध्यमानेन स्वाम्यनुमतिपूर्वकत्वसूचकेन स्वामिनो यदागमलेख्यं तस्य स्वत्वसाधकत्वे प्रतिहतिर्भवतीत्यर्थः। अनेनार्थलेख्येन स्वार्थसिद्धिमिच्छता स्वामिना समक्षदानं प्रतिषेद्धव्यं यत्नत इत्युक्तं भवति । एवं समक्षभोगाप्रतिषेधेऽपि द्रष्टव्यम् । तथा च व्यासः—

वर्षाणि विंशतिं यस्य भुक्ता पृथ्वीपरैरिह ।
सति राज्ञि समर्थस्य तस्य सेह न सिध्यति ॥

सताऽपि लेख्येनेति शेषः । अत एव संवर्तः—

भुज्यमाने गृहक्षेत्रे विद्यमाने तु राजनि ।
भुक्तिर्यस्य भवेत्तस्य न लेख्यं तत्र कारणम् ॥

तस्य भोक्तुर्भुज्यमानं भवेत् यतस्तत्रोपेक्षकस्यागमलेख्यं न कारणं न साधनं, भोगोपेक्षया स्वत्वापत्तिसूचिकया लेख्यसाधकत्वस्य प्रतिहतत्वादित्यर्थः । एतच्च लेख्यवैयर्थ्यकथनार्थमुक्तं न पुनर्भोक्तुस्स्वामित्वप्रतिपादनार्थं तस्य भोगमात्रेण स्वामित्वासिद्धेः । अत एव कात्यायनः—

नोपभोगबलं कार्यमाहर्त्रा तत्सुतेन वा ।
पशुस्त्रीपुरुषादीनामिति धर्मो व्यवस्थितः ॥

अत एव व्यासेन धेनुदृष्टान्तो दत्तः—

उपेक्षिता यथा धेनुर्विना पालेन नश्यति ।
पश्यतोऽन्यैस्तथा भूमिर्भुक्ता तेन तु हीयते ॥

याज्ञवल्क्येनापि एवमुपेक्षकस्याहानिरेवाभिहिता, न पुनर्भो-क्तुस्स्वत्वापत्तिः—

पश्यतोऽब्रुवतो भूमेः हानिर्विंशतिवार्षिकी ।
परेण भुज्यमानाया धनस्य दशवार्षिकी ॥

इति । हानिश्चात्र लिखितबलेनात्मीयत्वप्रसाधनमात्रस्याभि-प्रेता, न पुनर्भूम्यादौ तत्फले वा स्वत्वस्य, नोपेक्षामात्रेण स्वत्वमपैतीत्युक्तत्वात् । तेनात्र न धर्माख्यनिर्णयवशादुपेक्ष कस्य हानिः, तद्वशेनात्मीयत्वप्रसाधनसम्भवात् । नैवं व्यव हाराख्यनिर्णयवशेन, लेख्यवैगुण्यस्योक्तत्वात्, किंतु द्विती-यव्यवहाराख्यनिर्णयात् भोक्तुरनिन्द्यत्वं स्वामिनो निरुत्तर-त्वेनास्वामिनो जितत्वात् । तदाह मनुः—

अजडश्चेदपौगण्डो विषये चास्य भुज्यते ।
भग्नं तद्व्यवहारेण भोक्ता तद्धनमर्हति ॥

इति । व्यवहारशब्दार्थमाह बृहस्पतिः—

प्रमाणनिश्चितो यस्तु व्यवहारस्स उच्यते ।
वाक्छलानुत्तरत्वेन द्वितीयः परिकीर्तितः ॥

इति । प्रमाणनिश्चितो मानुषप्रमाणनिश्चितः । वाक्छलव्यवहा-रेण निरुत्तरत्वेन वा भग्नस्यापि वास्तवो व्यवहारो भव त्येव । प्रमाणराहित्येन भोक्तुर्जयस्य शिथिलत्वात्—

छलं निरस्य भूतेन व्यवहारान्नयेन्नृपः ।

इति याज्ञवल्क्येनाप्युक्तत्वात् । एवं प्रतिकूलदानभोगयोरप्र-

तिषेधे साक्षिणामपि वैयर्थ्यं दण्डापूपन्यायसिद्धं बोद्धव्यम्। अत एव नारदः—

उपेक्षां कुर्वतस्तस्य तूष्णींभूतस्य तिष्ठतः।
कालेऽतिपन्ने पूर्वोक्ते व्यवहारो न सिध्यति॥

मानुषप्रमाणात्तस्य स्वार्थो न सिध्यतीत्यर्थः। सङ्ग्रहकारोपि—

अभुक्तिरागमो मोघो भुज्यमाने परैरपि।

इति। आगमशब्देनात्र तत्प्रमाणभूतलिखितसाक्षिणावुक्तौ। अत एव प्रायेण साक्षिसाध्येष्वपि हानिमाह मरीचिः—

धेनुवाह्यालङ्करणं याचितं प्रीतिकर्मणा।
चतुःपञ्चाब्दिकं देयमन्यथा हानिमाप्नुयात्॥

अत्रापवादमाह मनुः—

सम्प्रीत्या भुज्यमानानि न नश्यन्ति कदाचन।
धेनुरुष्ट्रो वहन्नश्वो यश्च दम्यः प्रयुज्यते॥

दम्यो वत्सतरः। याचितके त्वपवादमाह व्यासः—

याच्ञाधर्मेण यद्भुक्तं श्रोत्रियै राजपूरुषैः।
सुहृद्भिर्बान्धवैर्वाऽपि न तद्भोगेन हीयते॥

यत् अलङ्करणादीत्यर्थः। अहानौ कारणमप्याह स एव—

धर्मोक्षयश्श्रोत्रिये स्यात् भयं स्याद्राजपूरुषे।
स्नेहस्सुहृद्बान्धवेषु भुक्तमेतैर्न हीयते॥

भुक्तं पञ्चवर्षादूर्ध्वमपीति शेषः। अनेन सकारणोपेक्षायां न कदाचिद्धानिरित्युक्तम्। तेन दशवार्षिकविंशतिवार्षिकहान्यो-

रपि अपवादस्सकारणोपेक्षायां द्रष्टव्यः । अत एव मनुः—

आधिस्सीमा बालधनं निक्षेपोपनिधिस्त्रियः ।
राजस्वं श्रोत्रियद्रव्यं नोपभोगेन नश्यति ॥

सीम्नि तत्रत्यचिह्नैस्सुसाधनत्वमुपेक्षाकारणम् । स्त्रीष्वप्राग-ल्भ्यम् । राजश्रोत्रिययोर्दृष्टादृष्टकार्यवैयग्रयम् । अत्रशिष्टेषूपे-क्षाकारणं व्यक्तम् । एवं सम्बन्धरूपोपेक्षाकारणसम्भवेऽप्य-हानिः । तथाच व्यासः—

सनाभिभिर्बान्धवैर्वा भुक्तं यत्स्वजनैस्तथा ।
भोगे तत्र न सिद्धिस्स्याद्भोगमन्यत्र कल्पयेत् ॥

तत्र सनाभ्यादिभोगे सम्बन्धित्वेनोपेक्षासम्भवात् । भूम्या दिहानेर्न सिद्धिस्स्यादित्यर्थः । पितामहोपि—

भुक्तिर्बलवती तत्र भोक्ता यत्र परो भवेत् ।
स्वगोत्रे भोगिनां भुक्तिर्न शक्ता शाश्वती नृणाम् ॥

बलवती स्वप्रतिकूललेख्यादेर्वैयर्थ्यकर्त्री । स्वगोत्रे स्वमातापि-तृबन्धुष्वित्यर्थः । तथाच कात्यायनः—

न भोगं कल्पयेत् स्त्रीषु देवराजधनेषु च ।
बालश्रोत्रियवित्ते च मातृतः पितृतः क्रमात् ॥

देवानामनिराकर्तृस्वभावत्वात् तद्धनस्यान्यभोगे न हानिः । श्रोत्रियग्रहणमन्यासक्तोपलक्षणार्थम् । अत एव नारदः—

ब्रह्मचारी चरेत्कश्चित् व्रतं षट्त्रिंशदाब्दिकम् ।
अर्थार्थी वाऽन्यविषये दीर्घकालं वसेन्नरः ॥

समावृत्तो व्रती कुर्यात्स्वधनान्वेषणं ततः ।
पञ्चाशदाब्दिको भोगस्तद्धनस्यापहारकः ॥
प्रतिवेदं द्वादशाब्दः कालो विद्यार्थिनां स्मृतः ।
शिल्पविद्यार्थिनां चैव ग्रहणान्तः प्रकीर्तितः ॥
सुहृद्भिर्बन्धुभिश्चैषां यत्सम्भुक्तमपश्यताम् ।
नृपापराधिनां चैव न तत्कालेन हीयते ॥

इति । एतच्चापवादजातं भोक्तुरागमाभावे वेदितव्यम् । अत एव बृहस्पति —

न स्त्रीणामुपभोगस्स्याद्विना लेख्यं कथंचन ।
राजश्रोत्रियवित्ते च जडबालधने न च ॥

स्त्रीणां धन इति शेषः । विना लेख्यं विनाऽऽगमप्रमाणम् । नारदोऽपि—

स्त्रीधनं च नरेन्द्राणां न कथंचन जीर्यते ।
अनागमं भुज्यमानं वर्षाणां तु शतैरपि ॥

नरेन्द्राणां च धनमित्यर्थः । तथाच स एव—

प्रत्यक्षपरिभोगाच्च स्वामिनो द्विशतास्समाः ।
आध्यादीन्यपि जीर्यन्ते स्त्रीनरेन्द्रधनादृते ॥

आध्यादीन्यपीति प्रौढिवादः, तेषामपि भोगोपेक्षाकारणसम्भवेन स्त्रीधननरेन्द्रधनतुल्यत्वात् । अनागममिति वदन्नागमसम्भवे जीर्यत एवेति दर्शयति । दर्शितं च हारीतेन—

भटचाटबलाद्भुक्तं हृतं गुप्तमथापि वा ।

स्नेहप्रणयदत्तं च प्रदत्तं भाटकेन वा ॥
तथा वसनरक्षार्थं याचितं प्रणयेन वा ।
एवं बहुविधे भोगे आगमो निर्णयस्स्मृतः ॥

इति । वसनरक्षार्थं गृहरक्षणार्थम् । एवंचोपेक्षाकारणरहिता प्रतिकूला भुक्तिरागमाभावेऽप्युक्तकाला लिखितसाक्षिणोर्वैय· र्थ्यमापादयतीत्यनुसन्धेयम् । अतो लिखितसाक्षिणावनुकूलभुक्तियुक्तौ प्रतिकूलसमक्षदानादिरहितौ गृहक्षेत्रादिविषये प्रमाणतया कीर्तनीयौ । भुक्तिः पुन कीदृग्विधा कीर्तनीयेत्यपेक्षित उक्तं—

सामन्तलक्षणोपेता भुक्तिर्वा चिरकालिकी ।

इति । साध्यभूतक्षेत्रादेस्समन्ततो यत् क्षेत्रादि तत्स्वामिन· स्सामन्ताः, तैर्विज्ञाता सामन्तोपेता । लक्षणोपेता तु पिता· महेन दर्शिता—

सागमा दीर्घकाला च विच्छिन्नोपरवोज्झिता ।
प्रत्यर्थिसन्निधाना च भुक्तिः पञ्चविधा स्मृता ॥

सागमा आगममूलिका । तथाच हारीतः—

न मूलेन विना शाखा अन्तरिक्षे प्ररोहति ।
आगमस्तु भवेन्मूलं भुक्तिश्शाखा प्रकीर्तिता ॥

कः पुनरागम इत्यपेक्षिते नारदः—

लब्धं दानक्रयप्राप्तं शौर्यं वैवाहिकं तथा ।
बान्धवादप्रजाज्जातं षड्विधस्तु धनागमः ॥

लब्धं जन्मना लब्धं पैतृकादि, अथवा दर्शनेन लब्धं निध्यादि। बृहस्पतिरपि—

विद्यया क्रयबन्धेन शौर्याप्तं भार्ययाऽन्वितम्।
सपिण्डस्याप्रजस्यांशः स्थावरं सप्तधाऽऽप्यते॥

बन्ध आधिः। सोपि क्वचित् स्वत्वनिमित्तं भवतीति वक्ष्यामः। दीर्घकाला त्रिंशद्वर्षादनाल्पिका। तथाच स एव—

अध्यासनात्समारभ्य भुक्तिर्यस्याविघातिनी।
त्रिंशद्वर्षा त्वविच्छिन्ना तस्य तां न विचालयेत्॥

अध्यासनं परिग्रहः। एवंच दीर्घकाला भुक्तिरागमानुगृहीतप्रमाणं, अदीर्घकाला चेत्तदनुगृहीतागम इत्यनुसन्धेयम्। अत एव पितामहः—

नागमेन विना भुक्तिः नागमो भुक्तिवर्जितः।
तयोरन्योन्यसम्बन्धात् प्रमाणत्वं व्यवस्थितम्॥

पूर्वोक्तव्यवस्थयेति शेषः। अनेनैवाभिप्रायेण बृहस्पतिरपि—

भुक्त्या केवलया नैव भुक्तिस्सिद्धिमवाप्नुयात्।
आगमेनापि शुद्धेन द्वाभ्यां सिद्ध्यति नान्यथा॥

केवलया अगमरहितयेत्यर्थः। एवं विशेषणान्तररहितयाऽप्यसिद्धिः। अत एव व्यासः—

सागमो दीर्घकालश्च विच्छेदोपरवोज्झितः।
प्रत्यर्थिसन्निधानश्च पञ्चाङ्गो भोग इष्यते॥

पञ्चाङ्ग इति वदन् एकाङ्गवैकल्येऽप्यप्रामाण्यमेव भोगस्येति दर्शयति । दर्शितं च नारदेन—

सम्भोगं केवलं यस्तु कीर्तयेन्नागमं क्वचित् ।
भोगच्छलापदेशेन विज्ञेयस्स तु तस्करः ॥

तेन सभ्यसन्निधावागमाद्यङ्गमपि कीर्तनीयमित्यभिप्रायः । अत एव कात्यायनः—

प्रणष्टागमलेख्येन भोगारूढेन वादिना ।
कालः प्रमाणं दानं च कीर्तनीयानि संसदि ॥

दानग्रहणमागमोपलक्षणार्थम् । चशब्दः सान्तत्यादिविशेषणसङ्ग्रहार्थः । एवं चायमर्थः—भोगप्रमाणवादिना भोगाख्यं प्रमाणं तद्विशेषणानि आगमदीर्घकालादीनि च कीर्तनीयानि, कीर्तितानि च तद्विप्रतिपत्तौ साधनीयानि, कीर्तनमात्रे निश्चयाभावात् । तत्र दीर्घकालादिविशिष्टभुक्तिनिश्चयः साक्ष्यधीन इत्याह सङ्ग्रहकारः—

भुक्तिप्रसाधने मुख्याः प्रथमं तत्कृषीवलाः ।
ग्रामण्यः क्षेत्रसामन्तास्तत्सन्धापयतः क्रमात् ॥

तत्सन्धापयतः दीर्घकालादिविशेषणं भुक्तिं चोद्भावयत इत्यर्थः । आगममुद्भावयतस्तु लिखितादित्रयं प्रमाणमित्याह स एव—

लिखितं साक्षिणो भुक्तिः क्रिया क्षेत्रगृहादिषु ।
आगमः क्रयदानादौ प्रत्याख्याते चिरन्तने ॥

उत्पन्नसत्ताप्रवादे क्रयाद्यागमे प्रत्याख्याते प्रतिवादिना निराकृते

सति क्षेत्रादिष्वागममुद्भावयतो लिखितसाक्षिभुक्तयः प्रमाणमित्यर्थः। ननु कथमागमे भुक्तिः प्रमाणं, अनागममूलाया अपि भुक्तेरपहारादौ दर्शनात्। मैवं—दीर्घकालादिविशिष्टाया भुक्तेर्मूलान्तरादर्शने सत्यागममूलतैवावसीयते मन्त्रादिस्मृतेरिव वेदमूलता। ननु तथाऽपि स्मरणयोग्ये काले भुक्तावुपक्रान्तायां योग्यानुपलब्ध्या मूलभूतागमाभावनिश्चयात्कथं तत्र भुक्तिबलेनैवागमसिद्धिः। सत्यं—अत एव तस्मिन् काले उपक्रान्तायां लिखितसाक्षिभ्यामेवागमोऽध्यवसीयते। स्मरणयोग्यकाले तु उपक्रान्तायां स्वबलेनापीति युक्तं आगमे प्रमाणत्रयाभिधानम्। एतदेव कात्यायनेनाप्युक्तं—

> स्मार्ते काले क्रिया भूमेः सागमा भुक्तिरिष्यते।
> अस्मार्तेऽनुगमाभावात्क्रमात्त्रिपुरुषागता॥

इति। अनुगमाभावात् योग्यानुपलब्ध्यात्मकबाधकाभावादित्यर्थः। एतदुक्तं भवति स्मरणयोग्यपञ्चाधिकशतवर्षपर्यन्तातीतकालमध्ये प्रारब्धा भुक्तिः स्वेतरप्रमाणावगताऽऽगममूलैव स्वत्वे प्रमाणमिष्यते। स्वतस्स्वमूलावगते योग्यानुपलब्ध्या बाध्यमानत्वात्। स्मरणायोग्ये पुनः पञ्चाधिकशतवर्षपर्यन्तातीतकालात्प्राचीनकाले प्रारब्धा स्वदार्ढ्यावगतागममूलिका त्रिनाऽपि मानान्तरावगतागममूलतां स्वत्वे प्रमाणम्, इति। क्रमात् त्रिपुरुषागतेत्यस्य तु व्याख्या सङ्ग्रहकारेण कृता—

स्वतन्त्रैः प्रेतपितृकैः भुक्ता या पूर्वजैस्त्रिभिः ।
भुक्तिस्त्रिपुरुषा ज्ञेया यावज्जीवमनुष्ठिता ॥

इयं च प्रायेणास्मार्तकालोपक्रमभुक्तेरुदाहरणार्थमुदिता, तेन भुक्तेरागमप्रमाणत्वे क्रमात्त्रिपुरुषागतत्वमनुपयोगि, अस्मार्तकालोपक्रमत्वमेवोपयुज्यते । अत एव बृहस्पतिना पुरुषत्रयातिक्रमाभावेऽपि कालत एव भुक्तेस्त्रिपुरुषत्वमुक्तम्—

पिता पितामहो यस्य जीवेच्च प्रपितामहः ।
त्रिंशत्समा या तु भुक्ता भूमिरव्याहता परैः ॥
भुक्तिस्सा पौरुषी ज्ञेया द्विगुणा च द्विपौरुषी ।
त्रिपौरुषी च त्रिगुणा परतस्स्याच्चिरन्तनी ॥

त्रिंशत्समा पञ्चोत्तरेति शेषः ।

वर्षाणि पञ्चत्रिंशत्तु पौरुषो भोग उच्यते ।

इति स्मृत्यन्तर उक्तत्वात् । एवं चागमकर्त्राऽऽगमोद्भावनं लेख्यसाक्षिभ्यामेव कार्यं, भोगस्यास्मार्तकालीनोपक्रमवतोऽसम्भवात् । अत एव बृहस्पतिः—

यत्राहर्ताऽभियुक्तस्स्याल्लेख्यं साक्षी तदा गुरुः ।
तदभावे तु पुत्राणां भुक्तिरेका गरीयसी ॥

तदभावे आहर्तृपुरुषाभावे । अनेनैवाभिप्रायेण कात्यायनोऽपि—

आहर्ता भुक्तियुक्तोपि लेख्यदोषान्विशोधयेत् ।
तत्सुतो भुक्तिदोषांस्तु लेख्यदोषांस्तु नाप्नुयात् ॥

सुतग्रहणं पौत्रस्याप्युपलक्षणार्थं अत एव याज्ञवल्क्यः—

अगमस्तु कृतो येन सोऽभियुक्तस्तमुद्धरेत् ।
न तत्सुतस्तत्सुतो वा भुक्तिस्तत्र गरीयसी ॥

कृतागमेनागमोद्धरणं लेख्यसाक्षिभ्यामेव कार्यम् । भुक्तेः स्मार्तकालीनोपक्रमत्वेनागमोद्भावनेऽपि क्षमत्वात्।एतत्कृतागमस्यागमो भोगात्पृथगेव साध्यः । पुत्रपौत्रयोश्चाचिरन्तनभोगे तु भोगसाधननान्तरीयकतयाऽपीत्यवगन्तव्यम् । तेन चिरन्तनोपभोगे तत्साधनेनैवालमित्याह बृहस्पतिः—

आहर्ता साधयेद्भुक्तिमागमं चापि संसदि ।
तत्सुतो भुक्तिमेवैकां पौत्रादिस्तु न किंचन ॥

तत्पुत्रो भुक्तिमेवैकां चिरन्तनीमाद्यपुरुषेण भोक्तुमुपक्रान्तकालादारभ्य विवादात् प्राचीनकालपर्यन्तमुपरवराहित्येन प्रतिपक्षतार्हपुरुषसमक्षमनुवर्तमानं साधयेदित्यर्थः । पुत्रग्रहणं पौत्रस्यापि प्रदर्शनार्थम् । पौत्रादिरित्यतद्गुणो बहुव्रीहिः । तेन पौत्रस्यापि पुत्रवदेव द्रष्टव्यम् । अत एव स्मृत्यन्तरम्—

आगमस्तु कृतो येन स दण्ड्यस्तमनुद्धरन् ।
न तत्सुतस्तत्सुतो वा भोगहानिस्तयोरपि ॥

चिरन्तनभोगेऽपीति शेषः । अनेन चिरन्तनभोगे प्रपौत्रादीनामागमानुद्धरणेऽपि न भोग्यहानिरित्यर्थादुक्तं भवति । उक्तं च विष्णुना—

त्रिभिरेव तु या भुक्ता पुरुषैर्भूर्यथाविधि ।
लेख्याभावेऽपि तां तत्र चतुर्थस्समवाप्नुयात् ॥

लेख्याभावेऽपि क्रियाद्यागमप्रकाशकप्रमाणाभावेऽपीत्यर्थः । अत एव बृहस्पतिः—

राजान्तरैस्त्रिभिर्भुक्तं प्रमाणेन विनाऽपि यत् ।
ब्रह्मदेयं न हर्तव्यं राज्ञा तस्य कदाचन ॥

प्रमाणेन आगमप्रकाशकप्रमाणेनेत्यर्थः । नारदोपि—

यद्विनाऽऽगममत्यन्तं भुक्तं पूर्वैस्त्रिभिर्भवेत् ।
न तच्छक्यमपाहर्तुं क्रमात्त्रिपुरुषागतम् ॥

अत्यन्तं विनाऽऽगमं भुक्तयाप्युपलभ्यमानमागमं विनेत्यर्थः । शङ्खोपि—

पैत्रं विनाऽप्यागमेन पूर्वपूरुषाभ्यां भुक्तं लभेत ।

पूर्ववचनसमानार्थमेतत् । लभेत चतुर्थादिरिति शेषः । तथाच बृहस्पतिः—

भुक्तिस्त्रैपुरुषी यत्र चतुर्थे संप्रवर्तिता ।
तद्भोगस्स्थिरतां याति न पृच्छेदागमं क्वचित् ॥

उक्तविधभोगे तन्मूलभूतागमं प्रति किमपि प्रमाणं क्वचिदपि न पृच्छेदित्यर्थः । सान्तत्यादिविशिष्टां भुक्तिं प्रति प्रमाणं पृच्छेदेव । तथाच नारदः—

आहर्तैवाभियुक्तस्स्यादर्थानामुद्धरेत्पदम् ।

भुक्तिरेव विशुद्धा स्यात् प्राप्तानां पितृतः क्रमात् ॥

पदं स्थानं आगममिति यावत् । विशुद्धा सान्तत्यादिमत्तया प्रमाणतस्सिद्धा । प्राप्तानां चतुर्थादीनाम् । बृहस्पतिरपि—

अविच्छेदेन यद्भुक्तं पुरुषैस्त्रिभिरेव तु ।
तत्र नैवागमः कार्यो भुक्तिस्तत्र गरीयसी ॥

तत्र चतुर्थादिष्वागमनिश्चयो नावश्यं कार्यः । यतस्तत्र भुक्तिः पूर्वपुरुषत्रयागता सान्तत्यादिविशेषणवत्तया साधिता गरीयसी, विनाऽप्यागमनिश्चयं स्वतन्त्रैव प्रमाणमित्यर्थः । तथा चाह स एव-

स्थावरेषु विवादेषु भुक्तिस्त्रिपुरुषी च या ।
स्वतन्त्रैव हि सा ज्ञेया प्रमाणं साध्यनिर्णये ॥

स्वतन्त्रा स्वमूलभूतागमानिश्चयानपेक्षेत्यर्थः । कात्यायनोपि—

भुक्तिस्तु द्विविधा प्रोक्ता सागमाऽनागमा तथा ।
त्रिपूरुषी या स्वतन्त्राऽनागमाऽल्पा तु सागमा ॥

सागमा निश्चितागमेत्यर्थः । ननु स्वतन्त्राऽपि निश्चितागमैव, स्वदार्ढ्येनैवागमनिश्चयात् । मैवम्, चिरन्तन्याः भुक्तेः अस्मार्तकालीनभोगस्य सान्तत्यादिविशेषणवत्तयोद्भावनाभावेन कृत्स्नाया दार्ढ्याभावात् । न च चतुर्थादीनां तद्भोगस्याप्युद्भावनं कार्यमिति वाच्यं, 'पौत्रादिस्तु न किंचन' इत्यस्मार्तकालीनभोगस्योद्भावननिषेधात् ।

भुक्तिरेव विशुद्धा स्यात् प्राप्तानां पितृतः क्रमात् ।

इति स्मार्तकालीनभोगस्यैवोद्धात्तनविधानाच्च । अतस्स्वतन्त्रा भुक्तिरनिश्चितागमा। कथं तर्हि तस्य स्वत्वे प्रामाण्यं, उच्यते–आगमनिश्चयाभावेऽपि एवं विधायाः प्रामाण्यमिष्यते।सागमपक्षस्यात्यन्तासम्भावितत्वात्, बाधकस्य चानागमनिश्चयस्याभावात्। तथा साहसादौ मिथ्यावादित्वनिश्चयाभावमात्रात् साक्षिणां प्रामाण्यमिष्टम्।

सर्वस्साक्षी संग्रहणे चौर्यपारुष्यसाहसे ।

इति। तथेहापि सर्वं सुस्थम्। अत एव कात्यायनः–

चिरन्तनमविज्ञातं भोगं लोभान्न चालयेत्।

इति। अविज्ञातं अनागमतयेत्यर्थः। एतदुक्तं भवति— यथा छलानुसारेण निर्णीतोऽपि विंशतिवार्षिकभोगस्य पुनर्भूतानुसारेण चालनमिष्टं न तथा चिरन्तनस्येति। हारीतोपि–

अन्यायेनापि यद्भुक्तं पित्रा भ्रात्राऽथवाऽपि च।
न तच्छक्यं पराहर्तुं तृतीयं समुपागतम् ॥

तृतीयमतिक्रम्य समुपागतमित्यर्थः। अत एव नारदः–

अन्यायेनापि यद्भुक्तं पित्रा पूर्वतरैस्त्रिभिः।
न तच्छक्यं पराहर्तुं क्रमात्त्रिपुरुषागतम्॥

पित्रा सह पूर्वतरैस्त्रिभिर्यद्भुक्तं तदन्यायेनेति वक्तुमशक्यं, किं पुनरपहर्तुमित्यर्थः। यत्पुनस्तेनोक्तम्–

आगमेन विशुद्धेन भोगो याति प्रमाणताम्।

अविशुद्धागमो भोगः प्रामाण्यं नैव गच्छति ॥

इति, तदत्रिपुरुषागतभोगविषयं, भोगमात्रविषयत्वे पूर्वोक्तानेकवचनविरोधात्,

आगमोऽभ्यधिको भोगाद्विना पूर्वक्रमागतात् ।

इति याज्ञवल्क्यवचनविरोधाच्च । यत्तु बृहस्पतिनोक्तम्—

यस्य त्रिपुरुषा भुक्तिस्सम्यग्लेख्यसमन्विता ।

एवंविधा ब्रह्मदेया हर्तुं तस्य न शक्यते ॥

इति, तत्स्मार्तकालानतिक्रान्तत्रिपुरुषभोगविषयम् । यत्पुनर्नारदेनोक्तम्—

अनागमं तु यो भुङ्क्ते बहून्यब्दशतान्यपि ।

चोरदण्डेन तं पापं दण्डयेत्पृथिवीपतिः ॥

इति, तद्येनकेनचित् प्रमाणेन निश्चितानागमभोगविषयं, अनागमामिति सिद्धवन्निर्देशात् । निश्चितानागमाश्च भोगास्तेनैव दर्शिताः—

अन्वाहितं भृतन्यस्तं बलावष्टब्धयाचिते ।

अप्रत्यक्षं च यद्भुक्तं षडेतान्यागमं विना ॥

अन्वाहितं अन्यस्मै दातुमर्पितम् । याचितं परकीयद्रव्यमलङ्काराद्यर्थमानीतम् । बलावष्टब्धं राजप्रसादादिबलेन भुक्तम् । एवंविधस्य चिरन्तनस्यापि भोगस्य न प्रामाण्यम् । तथाच स एव—

ग्रामक्षेत्रं गृहं चैव भुक्तं यस्य क्रमागतम् ॥
राजप्रसादादन्यत्र न तद्भुक्तं परं नयेत् ॥

राजप्रसादात् अन्यायभूतादिति शेषः। तथाच संवर्तः—

या राज्ञा क्रोधलोभेन छलन्यायेन वा कृता।
प्रदत्ताऽन्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात् ॥

या खल्वन्यस्य भूः क्रोधादिना राज्ञा परभोग्यतया कृता, तुष्ट्या वाऽन्यस्मै दत्ता, सा चिरन्तनभोगेनापि न भोक्तुस्सिध्यतीत्यर्थः। एवं शासनाविरोधेन भुक्तस्याप्यसिद्धिर्द्रष्टव्या। तथा च बृहस्पतिः—

यस्य त्रिपुरुषा भुक्तिः पारम्पर्यक्रमागता।
न सा चालयितुं शक्या पूर्वकाच्छासनादृते ॥

यत्तु पितामहेनोक्तं—

स्वहस्तकाज्जानपदं तस्मात्तु नृपशासनम्।
ततस्त्रैपुरुषो भोगः प्रमाणतरमिष्यते ॥

इति, तत्प्रवादपरम्परायातप्रसिद्धानिश्चितागमभोगविषयं, अन्यथा पूर्वोक्तवचनाविरोधात्। एवं पूर्वपुरुषप्रसाधितागमाया अपि भुक्तेः प्रमाणतरत्वमवगन्तव्यम्। तथाच बृहस्पतिः—

भुक्तिर्बलवती शास्त्रे ह्यविच्छिन्ना चिरन्तनी।
विच्छिन्नाऽपि हि सा ज्ञेया या तु पूर्वं प्रसाधिता ॥

या चिरन्तनी पूर्वपुरुषप्रसाधितागमा सा विच्छिन्नाऽपि बलवती ज्ञेयेत्यर्थः । व्यासोपि—

आहर्त्रा याऽभियुक्तेन प्रमाणेन प्रसाधिता ।
भूमिस्सा तत्सुतात् प्राप्ता न हर्तव्या कदाचन ॥

तत्सुतात् न हर्तव्येत्यन्वयः । यदा त्वभियुक्तेनाहर्त्रा न साधिता तदा तत्सुतेन चिरन्तनभोगारूढेनाप्याहर्तृवदेव साध्या । तथाच बृहस्पतिः—

उद्धरेल्लेख्यमाहर्ता तत्पुत्रो भुक्तिमेव तु ।
अभियुक्तः प्रमीतश्चेत्तत्पुत्रस्तत्समुद्धरेत् ॥

पूर्वाभियोगेन भुक्तेरदार्ढ्यात्तदुद्धरणमात्रेणात्रागमसिद्ध्यभावादागममप्युद्धरेदित्यर्थः । लेख्यग्रहणं साक्षिणोपि प्रदर्शनार्थम् । तस्याप्याहर्तृकर्तृकागमोद्धरणे प्रमाणत्वात् । नारदोपि—

तथाऽऽरूढविवादस्य प्रेतस्य व्यवहारिणः ।
पुत्रेण सोऽर्थस्संसाध्यो न तद्भोगान्निवर्तते ॥

यथाऽऽहर्त्रा लिखितसाक्षिभ्यामेवागमस्संसाध्यो भवति तथेत्यर्थः । पुत्रग्रहणं धनग्राहिण उपलक्षणार्थम् । अत एव याज्ञवल्क्यः—

योऽभियुक्तः परेतस्स्यात्तस्य रिक्थं तमुद्धरेत् ।
न तत्र कारणं भुक्तिरागमेन विनाकृता ॥

तमागमं चतुर्थादिरप्यवश्यं समुद्धरेत् । यस्मात्स्वतन्त्रा

भुक्तिस्तत्राप्रमाणम्, अविगीतत्वाभावादित्यर्थः। एवंच य यदुक्तं नारदेन—

आदौ तु कारणं दानं मध्ये भुक्तिस्तु सागमा।
कारणं भुक्तिरेवैकं सन्तता या चिरन्तनी॥

इति, तदाहर्तृनिर्णीताभियोगाभावविषयमिति मन्तव्यम्। अक्षरार्थस्तु सङ्ग्रहकारेण दर्शितः—

कृतागमस्योक्तकाले भुक्ते स्यात्प्रभुरागमः।
तस्यैवात्मतृतीयस्य प्रभुर्भुक्तिस्स्फुटागमा॥
भुक्तिर्या सा चतुर्थस्य प्रमाणं सन्ततागता।
परित्यक्तागमा भुक्तिः केवलैव प्रभुर्मता॥

इति। कृतागमस्य आगमकर्तुः। उक्तकाले त्रिंशद्वर्षात्मक इत्यर्थः। प्रभुः प्रधानम्। स्फुटागमा प्रमाणपरिच्छिन्नागमा, या सन्ततागता भुक्तिः चिरन्तनी चतुर्थादेः, प्रमाणं सा परित्यक्तागमनिश्चया। प्रभुः स्वत्वनिर्णयक्षमेति द्वितीयश्लोकार्थः। यत्पुनर्व्यासेनोक्तं—

वर्षाणि विंशतिं भुक्ता स्वामिनाऽव्याहता सती।
भुक्तिस्सा पौरुषी भूमेर्द्विगुणा तु द्विपौरुषी॥
त्रिपौरुषी च त्रिगुणा न ततोऽन्वेष्य आगमः।

इति, तच्चतुर्थादिभुक्तेष्षष्ट्याब्दिक्याः प्रारम्भकालीनपुरुषाणां जीवतामभावे चिरन्तनकालीनभोगतुल्यतापत्तौ सत्यां द्रष्टव्यं, अन्यथा—

स्मार्ते काले क्रिया भूमेस्सागमा भुक्तिरिष्यते ।

इत्यादिवचनविरोधापत्तेः । एवंच पञ्चाधिकशतवर्षपर्यन्तस्य स्मार्तकालत्वाभिधानं प्रायिकाभिप्रायेणेति मन्तव्यम् ।

इति स्मृतिचन्द्रिकायां भुक्तिनिरूपणम्.

---

अथ साक्षिलक्षणानि । तत्र मनुः—

याद्दशा धनिभिः कार्या व्यवहारेषु साक्षिणः ।
ताद्दशांत्सम्प्रवक्ष्यामि यथा वाच्यमृतं च तैः ॥

साक्षिणां लक्षणानि अनुयोजनविधिं च वक्ष्यामीत्यर्थः । तत्रादौ लक्षणानि दर्शयति—

गृहिणः पुत्रिणो मौलाः क्षत्रविट्छूद्रयोनयः ।
अर्थज्ञास्साक्ष्यमर्हन्ति न ये केचिदनापदि ॥

मौलाः प्रतिष्ठिताः । अर्थज्ञाः साध्यमर्थं विदितवन्तः 'समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिद्ध्यति' इति तेनैवोक्तत्वात् । गृहिण इत्यादिषु पुल्लिङ्गनिर्देशो विवक्षितः, उपादेयगतत्वात् । अत एव नारदः—

कुलीना ऋजवश्शुद्धाः जन्मतः कर्मतोऽर्थतः ।
साक्षिणश्शुचयोऽनिन्द्याः पुरुषास्स्युस्सुबुद्धयः ॥

एवंविधाः पुरुषाः ऋणादिषु साक्षिणस्स्युरित्यर्थः । तथाच व्यासः—

धर्मज्ञाः पुत्रिणो मौलाः कुलीनास्सत्यवादिनः ।
श्रौतस्मार्तक्रियायुक्ता विगतद्वेषमत्सराः ॥
श्रोत्रिया नपराधीनाः सूरयश्चाप्रवासिनः ।
युवानस्साक्षिणः कार्याः ऋणादिषु विजानता ॥

इति । श्रोत्रियाः श्रुतिपाठकाः । एवमुक्तविधा न जातु कूटतां प्रतिपद्यन्त इत्याह स एव—

ज्ञात्वा कार्यं देशकालकुशलाः कूटकारकाः ।
कुर्वन्ति सदृशं लेख्यं नैते स्युस्साक्षिणो यथा ॥

कात्यायनोऽपि—

प्रख्यातकुलशीलाश्च लोभमोहविवर्जिताः ।
आप्ताश्शुद्धा विशिष्टा ये तेषां साक्ष्यमसंशयम् ॥

तेषामिति बहुवचनं द्व्येकसङ्ख्यासाक्षिवाक्यमेवं न निश्चाय-कमिति प्रतिपादनार्थम् । अत एव मनुः—

त्र्यवरैस्साक्षिभिर्भाव्यो नृपब्राह्मणसन्निधौ ।

इति । भाव्यः साधनीयः त्रयः अवरा निकृष्टा येषां ते त्र्यवराः, त्रित्वादूनसङ्ख्या साक्षिष्वप्रशस्तेत्यर्थः । यत्तूक्तं बृहस्पतिना—

नव सप्त पञ्च वा स्युश्चत्वारस्त्रय एव वा ।
उभौ वा श्रोत्रियौ ख्यातौ नैकं पृच्छेत्कदाचन ॥

इति, तत्रोभाविति लिखितगूढसाक्षिविषयम् । यतोऽनन्तरमाह स एव—

लिखितौ द्वौ तथा गूढौ त्रिचतुःपञ्च लेखिताः ।
यदृच्छास्मारिताः कुल्यास्तथा चोत्तरसाक्षिणः ॥

इति । लिखितादीनां भेद उपरिष्टाद्वक्ष्यते । यत्पुनस्ते-नोक्तं—

दूतको घटिकाग्राही कार्यमध्यगतस्तथा ।
एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च ॥

इति, घटिकाग्राही गणकः । अध्यक्षः प्राड्विवाकः । यदापि व्यासेन—

शुभक्रियश्च धर्मज्ञस्साक्षी यत्रानुभूतवान् ।
प्रमाणमेकोपि भवेत्साहसेषु विशेषतः ॥

इति, यदपि कात्यायनेन—

अभ्यन्तरस्तु निक्षेपे साक्ष्यमेकोपि वाच्यते ।
आर्थिना प्रहितस्साक्षी भवत्येकोपि दूतकः * ॥
संस्तुतं येन संन्यस्तं तत्तेनैव विभावयेत् ।
एक एव प्रमाणं स विवादे तत्र कीर्तितः ॥

इति, तदेतत्सर्वमुभयानुमतसाक्षिविषयम् । बहुत्ववदुभयसंमत-त्वस्याप्यनाप्तत्वशङ्काव्युदासकत्वात् । अत एव नारदः—

अथवाऽनुमतो यस्य द्वयोर्विवदमानयोः ।
स साक्ष्येकोऽपि साक्षित्वे प्रष्टव्यस्स्यात्तु संसदि ॥

---

* याचते.

इति। एवंच त्र्यवरा इति सङ्ख्यानियमो लिखितगूढोभयानुमतव्यतिरिक्तसाक्षिविषय एवेत्यनुसन्धेयम् । उभयानुमतसाक्षिविषये लिखितगूढसाक्षिविषये च न्यूनसङ्ख्यापक्षस्यापि विहितत्वात्। अत एव सङ्ग्रहकारः—

कर्तव्यास्सर्वकार्येषु त्रिभ्य आरभ्य साक्षिणः।
द्व्येकयोः प्रतिषेधस्स्यादेकोप्युभयसम्मतः ॥

इति। साक्षिणो लिखितगूढव्यतिरिक्ताः । त्रिभ्य आरभ्य कर्तव्या इत्यर्थः। साक्षिण इत्यनुवृत्तौ नारदः—

ब्राह्मणः क्षत्रियो वैश्यश्शूद्रा ये चाप्यनिन्दिताः।
प्रतिवर्णं भवेयुस्ते सर्वे सर्वेषु वा पुनः ॥

सति सम्भवे व्यवहर्तुस्सवर्णास्साक्षिणः इत्यर्थः। एवं वर्णेतरजातावपि व्यवहर्तृसजातीया भवेयुः।

यथाजाति यथावर्णं सर्वे सर्वेषु वा स्मृताः।

इति याज्ञवल्क्यस्मरणात्। जातिग्रहणं श्रेण्यादेरप्युपलक्षणार्थम्। अत एव नारदः—

श्रेणिषु श्रेणिपुरुषास्स्वेषु वर्गेषु वर्गिणः।
बहिर्वासिषु बाह्यास्स्युः स्त्रियः स्त्रीषु च साक्षिणः ॥

इति। अत्रापवादमाह स एव—

श्रेण्यादिषु तु वर्गेषु कश्चिच्चेद्द्वेष्यतामियात्।
तस्य तेभ्यो न साक्ष्यं स्यात् द्वेष्टारस्सर्वे एव ते ॥

श्रेण्यादिषु ये यस्य द्वेषं कुर्वन्ति ते तस्य न साक्षिण इत्यर्थः। श्रेण्यादिग्रहणं वर्णादिप्रदर्शनार्थं, द्वेषग्रहणं चायथार्थकथनकारणवतामुपलक्षणार्थम्। अत एव मनुः—

आप्तास्सर्वेषु वर्णेषु कार्याः कार्येषु साक्षिणः।
सर्वधर्मविदोऽलुब्धाः विपरीतांस्तु वर्जयेत्॥

आप्ताः विप्रलम्भकव्यतिरिक्ताः। विपरीतान् अयथार्थवादकारणोपेतान्वर्जयेदित्यर्थः। तानेवाह स एव—

नार्थसम्बन्धिनो नाप्ता न सहाया न वैरिणः।
न दृष्टदोषाः कर्तव्या नव्याध्यार्ता न दूषिताः॥
न साक्षी नृपतिः कार्यो न कारुककुशीलवौ।
न श्रोत्रियो न लिङ्गस्थो न संघेभ्यो विनिर्गतः॥
नाध्यधीनो न वक्तव्यो न दस्युर्न विकर्मकृत्।
न वृद्धो न शिशुर्नैको नान्त्यो न विकलेन्द्रियः॥
नार्तो न मत्तो नोन्मत्तो न क्षुत्तृष्णोपपीडितः।
न श्रमार्तो न कामार्तो न क्रुद्धो नापि तस्करः॥

इति। अर्थसम्बन्धिनः विप्रतिपद्यमानार्थस्य सम्बन्धिनः। आप्तास्तु कात्यायनेन दर्शिताः—

तद्वृत्तिजीविनो ये च तत्सेवाहितकारिणः।
तद्बन्धुसुहृदो भृत्या आप्तास्ते तु न साक्षिणः॥

इति। सहायाः प्रतिभूप्रभृतयः। वैरिणः विप्रतिपन्नयोरन्य-

तरस्य दृष्टदोषाः कूटसाक्षित्वेनान्यत्र ज्ञाताः । दूषिताः महापातकादिदोषेण । नृपतिः बहुव्यापारव्याकुलत्वात् प्रतिषिध्यते । कारुकः शिल्पोपजीवी हेमकारादिः । कुशीलवः रङ्गावतारी, तयोरर्थप्रवणत्वात् प्रतिषेधः । श्रोत्रियोऽत्र कर्मानुष्ठाननिष्ठो विवक्षितः, न पुनश्श्रुतिपाठकः, तस्य साक्षित्वेनोक्तत्वात् । लिङ्गस्थो ब्रह्मचारी यतिश्च । संघेभ्यो विनिर्गतः वानप्रस्थादिः । एतेषु श्रोत्रियादिष्वयथार्थवादहेत्वभावेऽपि वचनबलेनैव प्रतिषेधोऽध्यवसेयः । आध्यधीनो मानसव्याधिविह्वलः । वक्तव्यः कुष्ठादीना कुत्सितदेहः । दस्युः क्रूरचेष्टः । विकर्मकृत् शास्त्रविरुद्धकर्मकृत् । वृद्धः जरावशेन स्खलितबुद्धिः । शिशुः अपूर्णषोडशवर्षः । एको विवदमानाभ्यामननुमतः । अन्त्यः चण्डालादिः । विकलेन्द्रियो बधिरादिः । आर्तादयो व्यक्ताः । तेषां भेदः पूर्वमुक्तोऽत्राप्यनुसन्धेयः ।

नारदोपि वर्जनीयानाह—

दासनैकृतिकाश्राद्धवृद्धस्त्रीबालचाक्रिकाः ।
मत्तोन्मत्तप्रमत्तार्तकितवग्रामयाजकाः ॥
महापथिकसामुद्रवणिक्प्रव्रजितातुराः ।
युग्मैकश्रोत्रियाचारहीनक्लीबकुशीलवाः ॥
नास्तिकव्रात्यदाराग्नित्यागिनोऽयाज्ययाजकाः ।
एकस्थालिसहायारिचरज्ञातिसनाभयः ॥
प्राग्दृष्टदोषशैलूषविषजीव्याहितुण्डिकाः ।

गरदाग्निदकीनाशशूद्रापत्युपपातकाः ॥
क्लान्तसाहसिकाशान्तनिर्धूतान्तावसायिनः ।
भिन्नवृत्तासमावृत्तजडतैलिकपौपिकाः ॥
भूताविष्टनृपद्विष्टवर्षनक्षत्रसूचकाः ।
अघशंस्यात्मविक्रेतृहीनाङ्गभगवृत्तयः ॥
कुनखी श्यावदन् श्वित्री मित्रध्रुक्शठशौण्डिकाः ।
ऐन्द्रजालिकलुब्धोग्रश्रेणीगणविरोधिनः ॥
वधकच्चित्रकृन्मूर्खः पतितः कूटकारकः ।
कुहकः प्रत्यवसितस्तस्करो राजपूरुपः ॥
मनुष्यविषमांसास्थिमधुक्षीराम्बुसर्पिषाम् ।
विक्रेता ब्राह्मणश्चैव द्विजो वार्धुपिकश्च यः ॥
च्युतस्स्वधर्मात् कुलिकः सूचको हीनसेवकः ।
पित्रा विवदमानश्च भेदकृच्चेत्यसाक्षिणः ॥

इति । नैकृतिकः पररन्ध्रान्वेषणशीलः । चाक्रिको वैतालिकः। सामुद्रवणिक् वहित्रयायी । युग्मौ द्वित्वविशिष्टौ । एकस्थालीत्यस्य द्वेधा विग्रहः, एकपाकसाधनस्थाली यस्य पुरुषस्य, विप्रतिपन्नयोरन्यतरेण पुरुषेण सह यस्य वा एकं भोजनस्थालं स एकस्थाली एकपाकः सहभोजनो वेति यावत्। अरिषु चरतीत्यारिंचरः शत्रुसम्बन्धीति यावत्। सनाभयस्तु कात्यायनेन दर्शिताः—

मातृष्वस्नसुताश्चैव सोदर्यासुतमातुलाः ।
एते सनाभयस्तूक्तास्साक्ष्यं तेषु न योजयेत् ॥

इति । शैलूषो नटः । विषजीवी विषस्य सङ्ग्रहणरक्षणादिव्यापारे नियुक्तः । आहितुण्डिकः सर्पग्राही । गरदो विषदः । अग्निदो गृहदाहकः । कीनाशः कृपणः । क्लान्तः खिन्नः । निर्धूतो बहिष्कृतः । अन्तावसायी प्रतिलोमजः । भिन्नवृत्तो दुराचारः । असमावृत्तो नैष्ठिकब्रह्मचारी । जडो मन्दबुद्धिः । तैलिकस्तिलघाती, महायन्त्रिक इति यावत् । पौपिकः अपूपादिविक्रयी । वर्षसूचको वृष्टिसूचक, नैमित्तिक इति यावत् । नक्षत्रसूचको ज्यौतिषवृत्तिः । अघशंसी परदोषप्रकाशकः । भगवृत्तिः स्ववृत्तये भार्यावेश्यात्वकारी । शौण्डिको मद्यविक्रयी । मूर्खो देवतां गृहीत्वा याचकः । कुहको दाम्भिकः । प्रत्रवसितः प्रव्रज्यातो निवृत्तः । सूचकः परदोषसूचनार्थं राज्ञा नियुक्तः । भेदकृत् पिशुनः । अन्ये प्रसिद्धाः । कात्यायनोपि कतिपयानसाक्षिजनानाह—

कुल्यास्सम्बन्धिनश्चैव विवाह्यो भगिनीपतिः ।
पिता बन्धुः पितृव्यश्च श्वशुरो गुरवस्तथा ॥
नगरग्रामदेशेषु नियुक्ता ये पदेषु च ।
वल्लभाश्च न पृच्छेयुर्भक्तास्ते राजपूरुषाः ॥

इति । ये कुल्यादयो राजपुरुषान्ताः कीर्तिताः ते साक्ष्यं कर्तुं न पृच्छेयुः न साक्षिणस्स्युरित्यर्थः ।

नन्वयमसाक्षिकथनप्रपञ्चो व्यर्थः। लक्षणोक्त्यैवार्थाद्विलक्षणानामसाक्षित्वसिद्धेः, सत्यमेवं तथाऽपि यत्र सर्वथा विहितसाक्षिणामलाभः तत्र मनुष्यमात्रस्य साक्षित्वं 'न येकेचिदनापादि' इति मनुवचनतोऽर्थात्प्राप्तं, तत्र केषांचित्प्रतिषेधार्थं 'नार्थसम्बन्धिनो नाप्ताः' इत्यादिवचनरचना कृतेत्यर्थवानेवायं प्रपञ्चः। एवंच लक्षणान्वितसाक्षिणामलाभे प्रतिषेधराहित्यमात्रशालिनां साक्षित्वं विहितमित्यनुसन्धेयम्। अत एव तेषामपि प्रशंसा व्यासेन कृता—

दिव्यमोषधिभिर्मन्त्रैः प्रायेण व्यभिचार्यते।
न खल्वदोषदुष्टानां व्यभिचारोस्ति साक्षिणाम्॥

इति। यत्पुनर्मनुनोक्तं—

अनुभावी तु यः कश्चित्कुर्यात् साक्ष्यं विवादिनाम्।
अन्तर्वेश्मन्यरण्ये वा शरीरस्यापि वाऽत्यये॥
स्त्रियाऽप्यसम्भवे कार्यं बालेन स्थविरेण वा।
शिष्येण बन्धुना वाऽपि दासेन भृतकेन वा॥

इति। अनुभावी कार्याभिज्ञः। यदपि नारदेन—

असाक्षिणो ये निर्दिष्टाः दासनैकृतिकादयः।
कार्यगौरवमासाद्य भवेयुस्तेऽपि साक्षिणः॥

इति। कार्यगौरवं कार्यस्य प्रशस्तज्ञातुः राहित्यम्। तदेतत्सर्वं साहसाद्यस्थिरकर्मविषयं तत्र प्रशस्तानां दुर्लभत्वात्। अत एव संग्रहकारः—

उत्कृष्टमध्यमाभावे निषिद्धा अपि साक्षिणः ।
साहसादिषु मन्तव्याः कालकार्यानिबन्धनाः ॥

इति । अत्र विशेषमाहोशना—

दासोऽन्धो बधिरः कुष्ठी स्त्रीबालस्थविरादयः ।
एतेऽप्यनभिसम्बन्धाः साहसे साक्षिणो मताः ॥

अनभिसम्बन्धाः मित्रारिभावरहिताः । साहसे साहसादिष्वित्यर्थः । अभिसम्बन्धाश्चेत् साहसादिष्वपि ते वर्जनीया एव । अत एव नारदः—

तेषामपि न बालस्स्यान्नैको न स्त्री न कूटकृत् ।
न बान्धवो न चारातिर्ब्रूयुस्ते साक्ष्यमन्यथा ॥

तेषां दासनैकृतिकादीनां मध्येऽपि व्यक्तानृतहेतुशालिनो बालादयो वर्ज्या इत्यर्थः । व्यक्तानृतहेतवोऽपि तेषु तेन दर्शिताः—

बालोऽज्ञानादसत्यात् स्त्री पापाभ्यासाच्च कूटकृत् ।
विब्रूयाद्बान्धवस्स्नेहाद्वैरनिर्यातनादरिः ॥

असत्यात् असत्यशीलत्वादित्यर्थः । अनेनाज्ञत्वासत्यशीलत्वाद्यधर्मनिष्ठत्वात्यन्तोत्कटरागद्वेषशालित्वादीन्येव व्यक्तानृतहेतवो न पुनर्बालत्वादयः इति दर्शितम् । एवमेकस्मिन्नपि नैकत्वं व्यक्तानृतहेतुः अपितु लुब्धत्वमित्याह मनुः—'एको लुब्धस्त्वसाक्षी स्यात्' इति । एवंचाज्ञत्वासत्यशील-

त्वादिदोषाणां सद्भावे दासादयोऽपि हेयाः, तदभावे तु बालादयोऽप्युपादेयाः इति साहसादिविषयेऽनुसन्धेयम्। यत्पुनर्मनुनोक्तं—

साहसेषु तु सर्वेषु स्तेयसङ्ग्रहणेषु च।
वाग्दण्डयोश्च पारुष्ये न परीक्षेत साक्षिणः॥

इति, यदपि कात्यायनेन—

व्याघातेषु नृपाज्ञायाः सङ्ग्रहे साहसेषु च।
स्तेयपारुष्ययोश्चैव न परीक्षेत साक्षिणः॥

इति, तद्गृहस्थत्वादिगुणगणविषयपरीक्षाया निषेधकं न पुनरज्ञत्वादिदोषविषयपरीक्षाया अपि, पूर्वोक्तवचनविरोधात्। यत्पुनः कात्यायनेनोक्तं—

ऋणादिषु परीक्षेत साक्षिणस्स्थिरकर्मसु।
साहसात्ययिके चैव परीक्षा कुत्रचित् स्मृता॥

इति, यद्यत्र साहसादौ पराजये वधादिगुरुतरदण्डप्राप्तिसम्भावना, तत्र परीक्षाविधानार्थं ऋणादिसाहचर्यादज्ञत्वादिदोषपरीक्षायाः सार्वत्रिकत्वेन कुत्रचिद्विधानासम्भवाच्च। यत्तु याज्ञवल्क्येनोक्तं—

सर्वस्साक्षी सङ्ग्रहणे चौर्यपारुष्यसाहसे।

इति, तदपि गुणपरीक्षामात्रनिवृत्त्यर्थमित्यवगन्तव्यम्।

इति स्मृतिचन्द्रिकायां साक्षिलक्षणानि.

---

अथ साक्षिभेदाः । तत्र कात्यायनः—

लेख्यारूढश्चोत्तरश्च साक्षी मार्गद्वयान्वितः ।

इति । प्रजापतिरपि—

साक्षी द्विभेदो विज्ञेय. कृत एकोऽपरोऽकृतः ।
लेख्यारूढः कृतो ज्ञेय उत्तरोऽकृत उच्यते ॥

लेख्यारूढो लिखितादिरित्यर्थः । तथाच नारदः—

लिखितस्स्मारितश्चैव यदृच्छाभिज्ञ एव च ।
गूढश्चोत्तरसाक्षी च साक्षी पञ्चविधस्स्मृतः ॥

तथा अकृतसाक्षिभेदोपि तेनैव दर्शितः—

अकृतष्षड्विधस्साक्षी सूरिभिः परिकीर्तितः ।
ग्रामश्च प्राड्विवाकश्च राजा च व्यवहारिणाम् ॥
कार्येष्वभ्यन्तरो यस्स्यादर्थिना प्रहितश्च यः ।
कुल्याः कुलविवादेषु भवेयुस्तेऽपि साक्षिणः ॥

इति । तत्र तावत्कृतानां लक्षणमाह बृहस्पतिः—

जातिनामादि लिखितं येन स्वं पित्र्यमेव च ।
निवासश्च स विज्ञेयः साक्षी लिखितसंज्ञिकः ॥
आहूय यः कृतस्साक्षी ऋणन्यासाक्रियादिकं ।
स्मार्यते च मुहुर्यश्च स्मारितस्स उदाहृतः ॥
क्रियमाणे तु कर्तव्ये यः कश्चित्स्वयमागतः ।
अत्र साक्षी त्वमस्माकमुक्तो यादृच्छिकस्तु सः ॥

कुड्यव्यवहितो यस्तु श्राव्यते ऋणिभाषितम् ।
विनिष्कृते तथाभूत * गूढसाक्षी स उच्यते ॥
यत्र साक्षी दिशं गच्छन् मुमूर्षुर्वा यथाश्रुतम् ।
अन्यं संश्रावयेत्तं तु विद्यादुत्तरसाक्षिणम् ॥

इति । लिखिते तु विशेषमाह हारीतः—

सुदीर्घेणापि कालेन लिखितस्सिद्धिमाप्नुयात् ।
आत्मनैव लिखेज्जानन्नज्ञस्त्वन्येन लेखयेत् ॥

यत्पुनस्तेनैवोक्तं—

आष्टमाद्वत्सरात्सिद्धिस्स्मारितस्येह साक्षिणः ।
आपञ्चमात्तथा सिद्धिर्यदृच्छोपगतस्य च ॥
आतृतीयात्तथा वर्षात् सिद्धिर्गूढस्य साक्षिणः ।
आ वत्सरात्तु सिद्धिं च वदन्त्युत्तरसाक्षिणः ॥

इति, तत्पूर्वपक्षत्वेनाभिहितमित्यवगन्तव्यम् । यतोऽनन्तरमाह स एव—

अथवा कालनियमो न दृष्टस्साक्षिणं प्रति ।
स्मृत्यपेक्षं हि साक्षित्वमाहुश्शास्त्रविदो जनाः ॥
यस्य नोपहता बुद्धिः स्मृतिश्श्रोतुश्च साक्षिणः ।
सुदीर्घेणापि कालेन स साक्षी साक्ष्यमर्हति ॥

इति । बृहस्पतिनाऽप्यकृतसाक्षिणो निरूपिताः—

घातितं मुषितं यत्र सीमायाश्च समन्ततः ।

---

* विनिह्नुते तथा भूतं. पा.

अकृतोपि भवेत्साक्षी ग्रामस्तत्र न संशयः ॥
निर्णीते व्यवहारे तु पुनर्न्यायो यदा भवेत् ।
अध्यक्षस्सभ्यसहितः साक्षी स्यात्तत्र नान्यथा ॥
अर्थिप्रत्यर्थिनोर्वाक्यं यच्छ्रुतं भूभृता स्वयम् ।
स एव तत्र साक्षी स्याद्विसंवादे द्वयोरपि ॥
उभाभ्यां यत्र विश्वस्तं कार्यं चापि निवेदितम् ।
गूढधारी स विज्ञेयः कार्यमध्यगतस्तथा ॥
अर्थिप्रत्यर्थिवचनं शृणुयात्प्रेषितस्तु यः ।
उभयोस्संमतस्साधुर्दूतकस्स उदाहृतः ॥
विभागादावपि ऋणे ज्ञातिर्यत्रोपयुज्यते ।
द्वयोस्समानो धर्मज्ञः कुल्यस्स परिकीर्तितः ॥

इति । यत्पुनस्तेनोक्तं—

लिखितो लेखितो गूढः स्मारितः कुल्यदूतकौ ।
याद‍ृच्छिकश्चोत्तरश्च कार्यमध्यगतोऽपरः ॥
नृपोऽध्यक्षस्तथा ग्रामस्साक्षी द्वादशधा स्मृतः ।

इति, तल्लिखितस्यावान्तरभेदं स्वनामादिलिपिकर्तृत्वकारयितृत्वरूपमाश्रित्योक्तम् ।

एकादशविधस्साक्षी शास्त्रे दृष्टो मनीषिभिः ।

इति नारदेनानादृत्योक्तम् ॥

इति स्मृतिचन्द्रिकायां साक्षिभेदाः

---

अथासाक्षिभेदाः । तत्र नारदः—

असाक्ष्यपि हि निर्दिष्टः शास्त्रे पञ्चविधो बुधैः ।
वचनाद्दोषतो भेदात् स्वयमुक्तिर्मृतान्तरः ॥

असाक्षित्वहेतूनां पञ्चविधत्वात्तद्वशेनासाक्ष्यपि पञ्चविधो बुधैर्निर्दिष्ट इत्यर्थः । अत एव सङ्ग्रहकारः—

दुष्टत्वात्प्रतिषिद्धत्वादकृतत्वादनिश्चयात् ।
एकाङ्गविकलत्वाच्च स्यादसाक्ष्यपि पञ्चधा ॥
स्तेनादिश्श्रोत्रियादिश्च स्वयंभूर्भिन्नगीर्मिथः ।
मुमूर्षुश्श्राविताद्न्यः पञ्चमस्स्यान्मृतान्तरः ॥

इति । दुष्टत्वादसाक्षी स्तेनादिः, प्रतिषिद्धत्वाच्छ्रोत्रियादिः । अकृतत्वात स्वयंभूः, अनिश्चयात् मथोभिन्नगीः, एकाङ्गविकलत्वात् मृतान्तर इत्यर्थः । नारदोपि—

स्तेनास्साहासिकाश्चण्डाः कितवा वधकास्तथा ।
असाक्षिणस्ते दुष्टत्वात्तेषु सत्यं न विद्यते ॥
श्रोत्रियास्तापसा वृद्धा ये च प्रव्रजितादयः ।
असाक्षिणस्ते वचनान्नात्र हेतुरुदाहृतः ॥
स्वयमुक्तिरनिर्दिष्टस्स्वयमेवैत्य यो वदेत् ।
सूचीत्युक्तस्स शास्त्रेषु न स साक्षित्वमर्हति ॥
राज्ञा परिगृहीतेषु साक्षिष्वेकार्थनिश्चये ।
वचनं यत्र भिद्येत ते स्युर्भेदादसाक्षिणः ॥

यो-र्थश्श्रावयितव्यस्स्यात्तस्मिन्नसति चार्थिनि ।
क्व तद्वदतु साक्षित्वमित्यसाक्षी मृतान्तरः ॥

इति । सूची सूचकः । योऽर्थ इत्यस्यायमर्थः—अस्मिन्नर्थे मयाऽसौ साक्षी कृत इति योऽर्थोऽर्थिना स्वस्यास्थिरत्वं मन्वानेन श्रावयितव्यः पुत्रादेर्ज्ञापयितव्यः, तस्मिन्नर्थे असत्यज्ञापितेऽर्थिनि चासति मृते, तत्साक्षित्वमर्थिना कृतं साक्षित्वमर्थी पुत्रादिः क्व कस्मिन्नर्थे कस्य पुरुषस्य प्रमाणोक्तिकाले वदत्वित्यनवधृतेरसाक्षी मृतान्तर इति । अर्थिग्रहणं प्रत्यर्थिनोऽप्युपलक्षणार्थम् । अत एव व्यासः—

अर्थी यत्र न विद्येत तत्र साक्षी मृतान्तरः ।
प्रत्यर्थी वा मृतो यत्र तत्राप्येवं प्रकल्पयेत् ॥

अर्थिनि प्रत्यर्थिनि वा मृते तदीयस्साक्षी मुमूर्षुश्राविताद‌न्यो मृतान्तर इत्यर्थः ।

मृतान्तरोऽर्थिनि प्रेते मुमूर्षुश्राविताद्दते ॥

इति नारदस्मरणात् । मुमूर्षुग्रहणं स्वस्थस्याप्युपलणार्थम् । अत एव स्मृत्यन्तरं—

श्रावितोऽनातुरेणापि यस्त्वर्थो धर्मसंहितः ।
मृतेऽपि तत्र साक्षी स्यात् षट्सु त्वन्वाहितादिषु ॥

एवंच यदुक्तं स्मृत्यन्तरं—

न्यासान्वाहितविक्रीते हृते दत्तेऽथ याचिते ।
मुमूर्षुश्रावितर्णे च पृच्छेत्साक्ष्यं मृतान्तरम् ॥

इति, तच्छ्रावितस्य साक्षित्वं मृतेऽपि श्रावितेऽर्थिनि नापैतीति ज्ञापनार्थं, न पुनर्मृतान्तरस्यापि क्वचित्साक्षित्वविधानार्थमित्यवगन्तव्यम्। मृतान्तरस्य साक्षित्वासम्भवात्। यथा श्रावितस्य साक्षित्वं नापगतं तथा साक्षिद्वैधेऽप्युत्कृष्टकोटेस्साक्षित्वमक्षतमेव। तथाच याज्ञवल्क्यः—

द्वैधे बहूनां वचनं समेषु गुणिनां तथा।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः॥

सङ्ग्रहकारस्त्वस्यार्थमाह—

बहुत्वेन गुणानां वा तारतम्येन निश्चयः।
साक्षिविप्रतिपत्तौ स्यात् सर्वसाम्ये प्रमाणता॥

अनिश्चयादसाक्षित्वं कोट्योः विशेषाग्रहण एवेत्यर्थः। यत्तु कात्यायनेनोक्तं—

साक्षिणां लिखितानां तु निर्दिष्टानां च वादिना।
तेषामेकोऽन्यथावादी भेदात्सर्वे न साक्षिणः॥

इति, तत्र सर्वशब्देनान्यथावादिसहितानामेव बहूनामसाक्षित्वमुक्तं न पुनः केवलानामित्यवगन्तव्यं, अन्यथा द्वैधे बहूनां वचनमित्यादिवचनविरोधात्। तथा स्वयमुक्तित्वेनासाक्षित्वं मा भूदिति येन केनचित्साक्षिनिर्देशो न कार्य इत्याह स एव—

अन्येन हि कृतस्साक्षी नैवान्यस्तं विवादयेत्।
तदभावे नियुक्तो वा बान्धवो वा विवादयेत्॥

अर्थी तदीयो वा साक्षिणं निर्दिशेन्नान्य इत्यर्थः। एवंचान्येन निर्दिष्टोऽनिर्दिष्टश्चदेवासाक्षीत्यवगन्तव्यम्। अत्र प्रसङ्गादन्यदपि किंचिदुक्तं नारदेन—

द्वयोर्विवदतोरर्थे द्वयोस्सत्सु च साक्षिषु।
पूर्वपक्षो भवेद्यस्य भवेयुस्तस्य साक्षिणः॥
आधर्यं पूर्वपक्षस्य यस्मिन्नर्थवशाद्भवेत्।
विवादे साक्षिणस्तत्र प्रष्टव्याः प्रतिवादिनः॥

इति। अत्रोदाहरणं—यत्रैकं क्षेत्रं प्रतिग्रहेण प्राप्य भुक्त्वा त्यक्त्वा देशान्तरं सकुटुम्बो गतः, पुनरन्येन लब्धं भुक्तं च, सोऽपि देशविभ्रमादिना देशान्तरं सकुटुम्बो गतः। पुनस्तौ द्वावपि चिरंतनकालापगमे स्ववृत्तिलोभेन स्वस्थानमागत्य क्षेत्रविवादे निर्णयार्थं धर्मस्थानं युगपदागतौ, तत्रैकः प्रतिजानीते—जयतिचन्द्राख्येन राज्ञा स्वराज्यकाले मह्यं दत्तमित्यस्मदीयमेवैतत् क्षेत्रमिति। इतरोऽपि प्रतिजानीते—हरिचन्द्राख्येन राज्ञा जयतिचन्द्राख्यसुतेन राज्यार्थमभिषिक्तेन मह्यं दत्तमस्मदीयमेवैतत् क्षेत्रमिति। अथवा इतरस्यैवं प्रतिज्ञा—सत्यं जयतिचन्द्रेणास्मै दत्तं किंत्वेतस्य हस्ताद्धरिचन्द्रेण तत् क्षेत्रं क्रयेण गृहीत्वा मह्यं दत्तमित्यस्मदीयमेवेति, सन्ति च द्वयोरपि विवादिनोस्साक्षिणः। तत्रेदमुक्तं—'द्वयोर्विवदतोरर्थे' इति। अयमर्थः—यस्य विवदमानस्य पूर्व-

पक्षो भवेत् पूर्वकालिकस्य दानस्य स्वत्वहेतुतयोपन्यासेन पक्षो भवेत् तस्य साक्षिणस्सभ्यैः प्रष्टव्या भवेयुर्नेतरस्य साक्षिणः, तेषामुत्तरकालदानसाक्षित्वेनासाक्षिप्रायत्वात्। यदा पुनरितरप्रतिज्ञातार्थवशेनैतस्य हस्तात् क्रीत्वा मह्यं दत्तमित्यादिना पूर्वदानोपन्यासपक्षस्याथर्यमकिंचित्करत्वं भवेत् तदा पश्चात् प्रतिजानानस्य साक्षिणः प्रष्टव्याः। न पूर्वं प्रतिजानानस्य, सिद्धसाध्यत्वेन वैयर्थ्यात्। किंत्वसाक्षिवदुपेक्षणीयास्त इति ॥

इति स्मृतिचन्द्रिकायामसाक्षिभेदाः.

---

अथ साक्ष्युद्भावनम्—तत्र गौतमः—'विप्रतिपत्तै साक्षिनिमित्ता सत्यव्यवस्था' इति। तेनोत्तरानन्तरमर्थिना साक्षिणस्सन्ति चेन्निर्देष्टव्या इत्यभिप्रायः। ते च निर्दिष्टास्सदोषाश्चेद्दूषयितव्याः। तथा च बृहस्पतिः—

साक्षिणोऽर्थिसमुद्दिष्टान् सत्सु दोषेषु दूषयेत्।
अदुष्टान् दूषयन्वादी तत्समं दण्डमर्हति ॥

तत्समो दुष्टसाक्षिदण्डसमः। यैर्द्वेष्यत्वादिहेतुभिरसाक्षित्वमुक्तं ते साक्षिदोषाः। ते यद्यर्थिनिर्दिष्टसाक्षिषु निगूढास्सन्ति तदा प्रत्यर्थिना प्रख्यापनीया इत्यर्थः। यदि पुनः प्रकटास्सन्ति तदा सभ्यैरेव वक्तव्याः। तथा च कात्यायनः—

प्रमाणस्य हि ये दोषा वक्तव्यास्ते विवादिना ।
गूढास्तु प्रकटास्सभ्यैः काले शास्त्रप्रदर्शनात् ॥

प्रमाणस्य प्रमाणतया निर्दिष्टस्य काले निर्णयकाले इत्यर्थः । तथा च बृहस्पतिः—

साक्षिभिर्गदितैस्सभ्यैः प्रक्रान्ते निर्णये तु यः ।
पुनर्विवादं कुरुते तस्य राजा विचारयेत् ॥

गदितैरर्थिनिर्दिष्टैः प्रकटदोषरहितैः साक्षिभिर्निर्णये प्रक्रान्त इत्यर्थः । प्रक्रान्तग्रहणं निर्णयादूर्ध्वं दूषणाभिधानकाल इति प्रतिपादनार्थम् । अत एव कात्यायनः—

लेख्यदोषास्तु ये केचित् साक्षिणां चैव ये स्मृताः ।
वादकाले तु वक्तव्याः पश्चादुक्तान्न दूषयेत् ॥

उक्तात्पश्चाद्दूषयतो दण्डमाह स एव—

उक्तेऽर्थे साक्षिणो यस्तु दूषयेत् प्रागदूषितान् ।
न च तत्कारणं ब्रूयात् प्राप्नुयात् पूर्वसाहसम् ॥

तथा मिथ्यादोषेण गृहस्थत्वादिगुणाभावेन वा न दूषयेदित्याह स एव—

नातथ्येन प्रमाणं तु दोषेणैव तु दूषयेत् ।
मिथ्याभियोगे दण्डस्स्यात् साध्यार्थाच्चापि हीयते ॥

दोषेणैव तु दूषयेत् न तु गुणाभावेन, तस्य वचनप्रामाण्यविघातकारित्वाभावादित्यभिप्रायः । अत एवापदि गुणर

हितस्यापि निषिद्धेतरस्य ऋणादौ साक्षित्वमुक्तम् । अतो न गुणाभावोद्भावनमात्रेण ऋणादौ निर्दिष्टसाक्षिणामसाक्षित्वसिद्धिः, किन्तु दासत्वादिनिषिद्धनिमित्तोद्भावनेनेत्यवगन्तव्यम् । साहसादौ न तेनापि, किन्त्वज्ञत्वासत्यशीलत्वादिदोषोद्भावनेनैवेत्यनुसन्धेयम् । अत एव व्यासेनापि दोषोद्भावनेनैवासाक्षित्वमुक्तम्—

साक्षिदोषाः प्रयोक्तव्याः संसदि प्रतिवादिना ।
पत्रे विलिख्य तान् सर्वान् वाच्याः प्रत्युत्तरं तु ते ॥
प्रतिपत्तौ न साक्षित्वमर्हन्ति तु कदा चन ।
अतोऽन्यथा भावनीयाः क्रियया प्रतिवादिना ॥

इति । प्रतिपत्तिर्दोषाङ्गीकारः । क्रियया साक्षिव्यतिरिक्तयेति शेषः । तथाच स एव—

अन्यैस्तु साक्षिभिस्साध्ये दूषणे पूर्वसाक्षिणाम् ।
अनवस्था भवेद्दोषः तेषामप्यन्यसम्भवात् ॥

एवं प्रतिवादिना दूषणप्रतिपादनं न प्रकटे दूषणे कार्यं, वैयर्थ्यात् । किन्तु सभ्यैरेव तथाविधदूषणं ग्राह्यमित्याह स एव—

सभासदां प्रसिद्धं यल्लोकसिद्धमथापि वा ।
साक्षिणां दूषणं ग्राह्यमसाध्यं दोपवर्णनात् ॥

ग्राह्यं परीक्षकैरिति शेषः । असाध्यं च प्रतिवादिना तत्र

दूषणं, प्रसिद्धदोषाद्दुर्जनसिद्धेरित्यर्थः। यत्र पुनरप्रसिद्धं दूषणं कीर्तितं तत्र तदसाधयतो दण्डमाह स एव—

असाधयन् दमं दाप्यः प्रत्यर्थी साक्षिणः स्फुटम्।
भाविताससाक्षिणो वर्ज्यास्साक्षिधर्मनिराकृताः॥

स्फुटं यथा भवति तथा साक्षिदोषमसाधयन्नित्यर्थः। दोषत्वेन साधिताः साक्षिणो वर्ज्याः, न तु दण्ड्या इत्यभिप्रायः। वर्जितेषु साक्षिषु यद्यर्थी प्रमाणान्तरं प्रति निराकाङ्क्षस्तदाऽसौ जितो दण्ड्य इत्याह स एव—

जितस्य विनयं दाप्यः शास्त्रदृष्टेन कर्मणा।
यदि वादी निराकाङ्क्षः साक्षिसभ्येष्ववस्थितः॥

निराकाङ्क्षः प्रमाणान्तरं प्रतीति शेषः। यदा तु साकाङ्क्षः तदा मानुषाभावे दिव्येनापि जयावधारणं कार्यमित्यभिप्रायः। यदा तु निर्दोषिणः साक्षिणो भवेयुस्तदा तैरेव जयावधारणं कार्यम्। तथा च बृहस्पतिः—

साक्षिणां दूषणे कार्ये पूर्वं साक्षिविशोधनम्।
शुद्धेषु साक्षिषु ततः पश्चात्कार्यं विशोधयेत्॥

ततः शुद्धसाक्षिभ्य इत्यर्थः। अनेन पूर्वव्यवहारमध्य एव प्रमाणदोषविवादनिर्णयः कार्यः। न पुनर्व्यवहारान्तरनिर्णयवत् पूर्वव्यवहारसमाप्त्यनन्तरकाल इत्युक्तम्। न च व्यवहारमध्ये व्यवहारान्तरनिर्णयस्यानुचितत्वादयुक्तमिति वा-

च्यम् । प्रमाणदोषविवादनिर्णयस्य पूर्वव्यवहारशेषत्वेन तत्रैव कार्यत्वात्, पृथक्फलाभावेन व्यवहारान्तरत्वाभावाच्च । तथा च स एव—

लेख्यं वा साक्षिणो वाऽपि विवादे यस्य दूषिताः ।
तस्य कार्यं न सिध्येत्तु यावत्तन्न विशोधयेत् ॥

व्यासोपि—

अन्तरप्रभवो वादः सर्वसाक्षिसमुद्भवः ।
न याति निर्णयं यावत्तावत्पूर्वं विवर्जयेत् ॥
प्रत्यार्थिनोऽर्थिनो वाऽपि साक्षिदूषणसाधने ।
न तु साक्ष्यभियोगस्स्याद्व्यवहारान्तरं तथा ॥

इति । अतः प्रमाणदोषविवादनिर्णयः पूर्वव्यवहारमध्य एव कर्तव्य इति स्थितम्.

इति स्मृतिचन्द्रिकायां साक्ष्युद्भावनम्.

---

अथ साक्षिपरीक्षा । तत्र कात्यायनः—

राजा क्रियां समाहूय यथान्यायं विचारयेत् ।
लेख्याचारेण लिखितं साक्ष्याचारेण साक्षिणः ॥

इति । साक्ष्याचारेण साक्षिलक्षणजातेनेत्यर्थः । अत्र बृहस्पतिः—

प्रष्टव्याः साक्षिणो ये तु वर्ज्याश्चैव नराधमाः ।
तानहं कथयिष्यामि सांप्रतं शास्त्रचोदितान् ॥

तत्र तावत् प्रष्टव्यानाह—

श्रौतस्मार्तक्रियायुक्ताः लोभद्वेषविवर्जिताः ।
कुलीनास्साक्षिणोऽनिन्द्यास्तपोदानदयान्विताः ॥

इति । तथा वर्ज्यानप्याह—

मातुः पिता पितृव्यश्च भार्याया भ्रातृमातुलौ ।
भ्राता सखा च जामाता सर्ववादेष्वसाक्षिणः ॥
परस्त्रीपानसक्ताश्च कितवाः पूर्वदूषिताः ।
उन्मत्तार्तास्साहसिका नास्तिकाश्च न साक्षिणः ॥

इति । एतच्च साक्ष्यसाक्ष्यभिधानं मनुनारदादिभिरुक्तानां साक्षिणामसाक्षिणां च प्रदर्शनार्थम् । अत एव शास्त्रचोदितानित्युक्तम् । तथा स्वरादितोऽपि साक्षिणः परीक्ष्या इत्याह स एव—

उपास्थिताः परीक्ष्यास्स्युः स्वरवर्णेङ्गितादिभिः ॥

इति । तत्र ये निर्विकारास्ते वस्तुतः साक्षिणो भवन्ति । ये पुनस्सविकारास्ते कूटसाक्षिण इत्यवगन्तव्यम् । अत एव मनुः—

बालवृद्धातुराणां तु साक्ष्येषु वदतां मृषा ।
जानीयादस्थिरां वाचमुत्सिक्तमनसां तथा ॥

उत्सिक्तमनसामधीराणाम् । विष्णुरपि—'स्वभावाद्विकृतौ मुखवर्णविनाशे चासम्बन्धप्रलापे कूटसाक्षिणं विद्यात्' इति । नारदोऽपि—

यस्त्वात्मदोषदुष्टत्वादस्वस्थ इव लक्ष्यते ।
स्थानात् स्थानान्तरं गच्छेदेकैकं चानुधावति ॥
कासत्यकस्माच्च भृशमभीक्ष्णं निश्वसत्यपि ।
विलिखत्यवनीं पद्भ्यां बाहू वासश्च धूनयेत् ॥
भिद्यते मुखवर्णोऽस्य ललाटं स्विद्यते तथा ।
शोषमागच्छतश्चौष्ठावूर्ध्वं तिर्यक्च वीक्षते ॥
त्वरमाण इवात्यर्थमपृष्टो बहु भाषते ।
कूटसाक्षी स विज्ञेयः तं पापं विनयेद्भृशम् ॥

इति । याज्ञवल्क्योऽपि—

देशाद्देशान्तरं याति सृक्विणी परिलेढि च ।
ललाटं स्विद्यते यस्य मुखं वैवर्ण्यमेति च ॥
परिशुष्यत्स्खलद्वाक्यो विरुद्धं बहु भाषते ।
वाक्चक्षुः पूजयति नो तथौष्ठौ निर्भुजत्यपि ॥
स्वभावाद्विकृतिं गच्छेत् मनोवाक्कायकर्मभिः ।
अभियोगे च साक्ष्ये च दुष्टस्स परिकीर्तितः ॥

इति । एवं च दुष्टचिह्नविहीनाः साक्षिलक्षणलक्षिताश्च साक्षिणो यद्युपस्थितास्तदा तैर्निर्णेतव्यम् । अथ विपरीतास्तदा प्रमाणान्तरेणेत्यनुसन्धेयम् ।

इति स्मृतिचन्द्रिकायां साक्षिपरीक्षा.

---

अथ साक्ष्यनुयोजनविधिः। तत्र मनुः—

सभान्तस्साक्षिणस्सर्वानर्थिप्रत्यर्थिसंनिधौ।
प्राड्विवाकोऽनुयुञ्जीत विधिनाऽनेन सान्त्वयन्॥

अनेन वक्ष्यमाणेन विधिना सर्वान् साक्षिणोऽनुयुञ्जीत यथार्थकथनोन्मुखान् कुर्वीतेत्यर्थः। तमेव विधिं दर्शयति—

यद्द्वयोरनयोर्वित्थ कार्येऽस्मिन् चेष्टितं मिथः।
तद्ब्रूत सर्वं सत्येन युष्माकं ह्यत्र साक्षिता॥
समक्षदर्शनात्साक्ष्यं श्रवणाच्चैव सिध्यति।
तत्र सत्यं ब्रुवन् साक्षी धर्मार्थाभ्यां न हीयते॥
सत्यं साक्ष्ये ब्रुवन् साक्षी लोकानाप्नोति पुष्कलान्।
इह चानुत्तमां कीर्तिं वागेषा ब्रह्मपूजिता॥
ब्राह्मणो वा मनुष्याणामादित्यस्तेजसामिव।
शिरो वा सर्वगात्राणां धर्माणां सत्यमुत्तमम्॥
सत्येन पूयते साक्षी धर्मस्सत्येन वर्धते।
तस्मात्सत्यं हि वक्तव्यं सर्ववर्णेषु साक्षिभिः॥
यस्य विद्वान् हि वदतः क्षेत्रज्ञो नातिशङ्कते।
तस्मान्न देवाः श्रेयांसं लोकेऽस्मिन् पुरुषं विदुः॥

इति। ब्राह्मणो वा ब्राह्मण इवेत्यर्थः। एवं शिरो वेत्यत्रापि वाशब्द उपमानार्थोऽवगन्तव्यः। यस्य साक्ष्यं वदतः साक्षिणः विद्वान् क्षेत्रज्ञो नातिशङ्कते, तस्मात् श्रेयां-

समस्मिन् लोके देवा न विदुरित्यन्त्यश्लोकस्यार्थः । नारदोपि—

सत्यमेव परं दानं सत्यमेव परं तपः ।
सत्यमेव परो धर्मो लोकानामिति नः श्रुतिः ॥
सत्यं देवास्समासेन मनुष्यास्त्वनृतं स्मृतम् ॥
इहैव तस्य देवत्वं यस्य सत्ये स्थिता मतिः ॥
नास्ति सत्यात्परो धर्मो नानृतात्पातकं परम् ।
साक्षिधर्मे विशेषेण सत्यमेव वदेदतः ॥

इति । व्यासोपि—

साक्षिभावे नियुक्तानां देवता वियति स्थिताः ।
पितरश्चावलम्बन्ते वितथाख्यानशङ्कया ।
सत्यवाक्यैर्व्रजन्त्यूर्ध्वमधो यान्त्यन्यथाकृते ।
तस्मात्सत्यं प्रवक्तव्यं भवद्भिस्सभ्यसंनिधौ ॥

इति । मनुरपि—

साक्ष्येऽनृतं वदन् पाशैर्बध्यते वारुणैर्नरः ।
विवशश्शतमा जातीस्तस्मात्साक्षी वदेदृतम् ।
आत्मैव ह्यात्मनस्साक्षी गतिरात्मा तथाऽऽत्मनः ।
माऽवमंस्थास्त्वमात्मानं नृणां साक्षिणमुत्तमम् ।
मन्यन्ते वै पापकृतो न कश्चित्पश्यतीति नः ।
तांस्तु देवाः प्रपश्यन्ति यस्यैवान्तरपूरुषाः ।

द्यौर्भूमिरापो हृदयं चन्द्रार्काग्नियमानिलाः ।
रात्रिस्सन्ध्या च धर्मश्च वृत्तज्ञाः सर्वदेहिनाम् ॥

इति । शतमा जातीः शतं यावज्जन्मानि । नारदोपि—

कुबेरादित्यवरुणशक्रवैवस्वतादयः ।
पश्यन्ति लोकपालाश्च नित्यं दिव्येन चक्षुसा ॥

तेन वञ्चनाऽपि न सुकरेत्यभिप्रायः । उचथ्योपि—

यस्साक्षी कौटसाक्ष्यं तु विवदेद्भुवि निर्भयः ।
उभयोस्सप्त गोत्राणामधस्तान्नयति ध्रुवम् ॥
सप्तजन्मकृतं पापं शरीरे यत्तु तिष्ठति ।
गृह्णाति तस्य सर्वस्वं यस्तु साक्ष्यं मृषा वदेत् ॥

इति । बृहस्पतिरपि—

कूटसभ्यः कूटसाक्षी ब्रह्महा च समाः स्मृताः ।
भ्रूणहा वित्तहा चैषां नाधिकस्समुदाहृतः ॥

मनुरपि—

साक्षी दृष्टश्रुतादन्यद्विब्रुवन्नार्यसंसदि ।
अवाङ्नरकमभ्येति प्रेत्य स्वर्गाच्च हीयते ॥

वसिष्ठोपि—

अथ चेदनृतं ब्रूयात् सर्वतोऽमेध्यभक्षणम् ।
मृतो नरकमायाति तिर्यग्गच्छेत्त्वनन्तरम् ॥

अमेध्यभक्षणयुतं नरकं मृतो गच्छतीत्यर्थः । कात्यायनोऽपि—

कालपाशावृतग्रीवं मुद्गराहतिविह्वलम् ।
क्रुद्धः कण्टकिनीं भूमिं तं नयेद्यमकिङ्करः ॥
असिपत्रवनाघातशल्यालिङ्गनातुराः ।
पूयशोणितसंपूर्णां नदीं पास्यन्ति दारुणाम् ॥

इति । कालपाशावृतग्रीवं कृष्णायसपाशबद्धग्रीवम् । नारदोपि—

निरयेषु च ते शश्वज्जिह्वामुत्कृत्य दारुणाः ।
असिभिश्शातयिष्यन्ति बलिनो यमकिङ्कराः ॥
शूले मत्स्यानिवाक्षिप्य क्रोशन्तमपरायणम् ।
अवाक्शिरसमुत्क्षिप्य क्षेप्स्यन्त्यग्नौ ह्रदेषु च ॥
लोहयन्त्रादिपीडाभिः क्षुत्पिपासासुविह्वलः ।
प्रक्षिप्यते तथा घोरे नरके संप्रतापने ॥

इति । उशनाऽपि—

लोहगृध्रमुखोत्खातलोचनार्द्राकृताननाः ।
पतिष्यन्त्यन्धतामिस्रे नरके पापमोहिताः ॥

पितामहोपि—

गृहान्ततप्तसंदंशजिह्वात्रोटनमूर्छितम् ।
किङ्कराः पातयिष्यन्ति महारौरवरौरवे ॥

व्यासोपि—

बध्यन्ते वारुणैः पाशैः साक्षिणोऽनृतवादिनः ।
षष्टिं वर्षसहस्राणि तिष्ठन्ति नरके ध्रुवम् ॥

तेषां वर्षशते पूर्णे पाश एकः प्रमुच्यते ।
कालेऽतीते मुक्तपाशः तिर्यग्योनिषु जायते ॥

इति । नारदोपि—

अपि चेन्नरके कल्पं वसेयुः कूटसाक्षिणः ।
परवित्तहरा ये च राजानश्चाप्यधार्मिकाः ॥
अनुभूय च दुःखार्ताः चिरं नरकवेदनाम् ।
इहायास्यन्त्यभव्यासु गृध्रकाकादियोनिषु ॥

इति । वसिष्ठोपि—

सूकरो दशवर्षाणि शतवर्षाणि गर्दभः ।
श्वा वै द्वादशवर्षाणि भासो वर्षाणि विंशतिः ॥
क्रिमिकीटपतङ्गेषु चत्वारिंशत्तथैव च ।
मृगस्तु दशवर्षाणि जायते मानवः स्मृतः ॥
मानुष्यं तु यदाप्नोति मूकोऽन्धश्च भवेत्तु सः ।
दारिद्र्यं तु भवेत्तस्य पुनर्जन्मनिजन्मनि ॥

इति । व्यासोपि—

मानवो जायते पश्चात् सम्परित्यक्तबान्धवः ।
पङ्ग्वन्धबधिरो मूकः कुष्ठी नग्नः पिपासितः ॥
बुभुक्षितश्शत्रुगृहे भिक्षते भार्यया सह ।
ज्ञात्वा त्वनृततो दोषान् ज्ञात्वा सत्ये च सद्गुणान् ॥
श्रेयस्करमिहामुत्र सत्यं साक्ष्ये वदेदतः ।

इति। एवं सम्बोधनमेतैरेव वचनैः कार्यं, न पुरुषान्तररचितैः। यत आह नारदः—

पौराणैर्धर्मवचनैः सत्यमाहात्म्यकीर्तनैः।

अनृतस्यापवादैश्च भृशमुत्त्रासयेदपि॥

इति। आर्षैस्सस्तुतिकसत्यवादविधिवचनैः साक्षिणां प्रोत्साहनम्, अनृतप्रतिषेधवचनैः दुरितापूर्वफलसहितैरत्यर्थं भीषणमपि कुर्यादित्यर्थः॥

इति स्मृतिचन्द्रिकायां साक्ष्यनुयोजनविधिः.

---

अथ साक्ष्यप्रश्नविधिः। तत्र मनुः—

देवब्राह्मणसान्निध्ये साक्ष्यं पृच्छेदृतं द्विजान्।

उदङ्मुखान् प्राङ्मुखान्वा पूर्वाह्णे वै शुचिश्शुचीन्॥

द्विजानिति साक्षिपुरुषोपलक्षणार्थम्, उपात्तविशेषणत्वात्। अत एव नारदः—

आहूय साक्षिणः पृच्छेन्नियम्य शपथैर्भृशम्।

समस्तान्विदिताचारान्विज्ञातार्थान् पृथक्पृथक्॥

भयावहैश्शपथैस्सत्यनिष्ठान् कृत्वा प्रत्येकं पृच्छेदित्यर्थः। ते च शपथास्तेन दर्शिताः—

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः।

गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः॥

सत्यादीष्टविघातोपदर्शनेन विप्रादीन्, वक्ष्यमाणानिष्टापत्तिदर्शनेन शूद्रं शापयेदित्यर्थः । प्रश्ने तु विशेषो मनुना दर्शितः—

ब्रूहीति ब्राह्मणं पृच्छेत् सत्यं ब्रूहीति पार्थिवम् ।

इति । एवंचान्यथा ब्रुवतस्सत्यं ते नश्यति, अतोऽवधार्य ब्रूहीति ब्राह्मणे । क्षत्रिये तु अन्यथावदतस्तव वाहनायुधानि विफलानि भविष्यन्ति, अतोऽवधार्य सत्यं ब्रूहीति प्रश्नोऽवगन्तव्यः । वैश्ये तु प्रश्ने विशेषास्मृतेः गोबीजकाञ्चनैर्वियोगस्स्यात् यद्यन्यथा ब्रूया इत्येवं शपथेन नियम्य यथाकामं पृच्छेत् । शूद्रे तु प्रश्नवाक्यप्रकारो मनुना प्रपञ्चितः—

ब्रह्मघ्नो ये स्मृता लोकाः ये च स्त्रीबालघातिनः ।
मित्रद्रुहः कृतघ्नस्य ते ते स्युर्वदतो मृषा ॥
जन्मप्रभृति यत्किञ्चित् पुण्यं भद्र त्वया कृतम् ।
तत्ते सर्वं शुनो गच्छेद्यदि ब्रूयास्त्वमन्यथा ॥
एकोऽहमस्मीत्यात्मानं यस्त्वं कल्याण मन्यसे ।
नित्यं स्थितस्ते हृद्येष पुण्यपापेक्षिता मुनिः ॥
यमो वैवस्वतो देवो यस्तवैष हृदि स्थितः ।
तेन चेदविवादस्ते मा गङ्गां मा कुरून् गमः ॥
नग्नो मुण्डः कपालेन भिक्षार्थी क्षुत्पिपासितः ।
आन्धश्शत्रुगृहं गच्छेत् यस्साक्ष्यमनृतं वदेत् ॥
अवाक्छिरास्तमस्यन्धे किल्बिषी नरकं व्रजेत् ।
यत्प्रश्नं वितथं ब्रूयात् पृष्टस्सन् धर्मनिश्चये ॥

अन्धो मत्स्यानिवाश्नाति स नरः कण्टकैस्सह ।
यो भाषतेऽर्थवैकल्यमप्रत्यक्षं सभां गतः ॥
यावतो बान्धवान्यस्मिन् हन्ति साक्ष्येऽनृतं वदन् ।
तावतस्सङ्ख्यया तस्मिन् शृणु सौम्यानुपूर्वशः ॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥
हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदीः ॥
अप्सु भूमिवदित्याहुः स्त्रीणां भोगे च मैथुने ।
अब्जेषु चैव रत्नेषु सर्वेष्वश्ममयेषु च ॥
एतान्दोषानवेक्ष्य त्वं सर्वाननृतभाषणे ।
यथाश्रुतं यथादृष्टं सर्वमेवाञ्जसा वद ॥

इति । कुरुः कुरुक्षेत्रम् । अञ्जसा शुद्धेन हृदयेन। अत्र केचित्— 'नग्नो मुण्डः' इत्यादिश्लोकत्रयमपकृष्यानुयोजनविधौ निवेशनीयम्, अन्यथाऽनन्वयस्स्यादिति मन्यन्ते। तदा 'मा कुरून गमः' इत्यभिधानानन्तरं 'यावतो बान्धवान्' इत्याद्यभिधातव्यमित्यगन्तव्यम् । अयं च शूद्रप्रश्नविधिरनापदि हीनवृत्त्युपजीविनां द्विजानामपि भवति, तेषामल्पशपथेन नियन्तुमशक्यत्वात् । अत एव मनुः—

गोरक्षकान्वाणिजकान् तथा कारुकुशीलवान् ।
प्रेष्यान्वार्धुषिकांश्चैव विप्राञ्छूद्रवदाचरेत् ॥

ये व्यपेताः स्वकर्मभ्यः परपिण्डोपजीविनः ।
द्विजत्वमभिकांक्षन्ति तांश्च शूद्रवदाचरेत् ॥

द्विजत्वमभिकाक्षन्तीति वदन्नद्विजातीनामम्बष्ठादीनां शूद्रवदेव प्रश्नविधिं दर्शयति ॥

इति स्मृतिचान्द्रिकायां साक्ष्यप्रश्नविधिः.

---

अथ साक्ष्यवादाविधिः । तत्र कात्यायनः—

सभान्तस्थैस्तु वक्तव्यं साक्ष्यं नान्यत्र साक्षिभिः ।
सर्वसाक्ष्येष्वयं धर्मो ह्यन्यत्र स्थावरेषु तु ॥

अन्यत्र स्थावरस्योपरीत्यर्थः । तथा च स एव—

अर्थस्योपरि वक्तव्यं तयोरपि विना क्वचित् ।
चतुष्पदेष्वयं धर्मो द्विपदस्थावरेषु च ॥

तयोः पूर्वोक्तस्थानयोः । ते स्थाने विनाऽपि क्वचिद्वधरूपविवादे साक्ष्यं वक्तव्यमित्यर्थः । तथा च स एव—

वधे चेत्प्राणिनां साक्ष्यं वादयेच्छिवसान्निधौ ।
तदभावे तु चिह्नस्य नान्यथैव प्रवादयेत् ॥

चिह्नस्य शृङ्गादेः । साक्ष्यवादप्रकारमाह वसिष्ठः—

प्राङ्मुखोऽवस्थितस्साक्षी शपथैश्शापितस्स्वकैः ।
हिरण्यं गोशकृद्दर्भान् तान् संस्पृश्य वदेद्दतम् ॥

बृहस्पतिरपि—

विहायोपानदुष्णीषं दक्षिणं पाणिमुद्धरेत् ।
हिरण्यगोशकृद्दर्भान् समादाय ऋतं वदेत् ॥

दक्षिणं पाणिमुद्धरेत् प्रावृतं वस्त्रं यज्ञोपवीतवत् कुर्यादित्यर्थः । ऋतं वदेदित्यस्य क्वचिद्विषयेऽपवादमाह मनुः—

शूद्राविट्क्षत्रविप्राणां यत्रोक्ते तु भवेद्वधः ।
तत्र वक्तव्यमनृतं तद्धि सत्याद्विशिष्यते ॥

बृहस्पतिरपि—

सकृत्प्रमादापराधिविप्रं व्यापादि पीडितम् ।
भटादिभिर्वध्यमानं रक्षेदुक्त्वाऽनृतान्यपि ॥

अपिशब्दादत्राप्यनृतोक्त्या किञ्चित्पापं भवतीति गम्यते । अत एव प्रायश्चित्तमाह याज्ञवल्क्यः—

वर्णिनां हि वधो यत्र तत्र साक्ष्यनृतं वदेत् ।
तत्पावनाय निर्वाप्यः चरुस्सारस्वतो द्विजैः ॥

मनुरपि—

वाग्देवत्यैस्तु चरुभिर्यजेरंस्ते सरस्वतीम् ।
अनृतस्यैनसस्तत्र कुर्वाणाः निष्कृतिं पराम् ॥
कूश्माण्डैर्वाऽथ जुहुयात् घृतमग्नौ यथाविधि ।
उदित्यृचा वा वारुण्या तृचेनाब्दैवतेन वा ॥

इति । विष्णुरपि—

तत्पावनाय कूश्मण्डीभिर्द्विजोऽग्नौ जुहुयात्,
शूद्रश्चैकाहिकं गोदशकस्य ग्रासं दद्यात् इति ॥

यत्तु गौतमेनोक्तम्—

नानृतवचने दोषो जीवनं चेत्तदधीनम् ।

इति, यदपि व्यासेन—

न नर्मयुक्तं वचनं हिनास्ति न स्त्रीषु नित्यं न विवाहकाले ।
प्राणात्यये सर्वधनापहारे पञ्चानृतान्याहुरपातकानि ॥

इति । तयोरयमर्थः—'साक्षिधर्मे विशेषेण' इत्यादिभिर्वचनैर्यदधिकपातकमुक्तम्, तदत्र नास्तीति । अन्यत्र तु अस्त्येव । तथा च गौतमः—'नासमवेताः पृष्टाः प्रब्रूयुरवचने च दोषिणस्स्युः' इति । चशब्दादनृतवचने चेत्यवगम्यत इत्युक्तं व्याख्यातृभिः । असमवेतप्रतिषेधः समवेतानां साक्षिभाव एव न सर्वत्र । यत आह वासिष्ठः—

समवेतैस्तु यद्दृष्टं वक्तव्यं तु तथैव तत् ।
विभिन्नेनैव यत्कार्यं वक्तव्यं तत्पृथक्पृथक् ॥
भिन्नकाले तु यत्कार्यं ज्ञातं वा यत्र साक्षिभिः ।
एकैकं वादयेत्तत्र विधिरेष प्रकीर्तितः ॥ इति ॥

इति स्मृतिचन्द्रिकायां साक्ष्यवादविधिः.

---

अथ साक्षिवचोविषयाणि कानिचित् वचनानि लिख्यन्ते । तत्र कात्यायनः—

स्वभावोक्तं वचस्तेषां ग्राह्यं यद्दोषवर्जितम् ।
उक्ते तु साक्षिणो राज्ञा न प्रष्टव्याः पुनःपुनः ॥

स्वभावेनैव यद्ब्रूयुः तद्ग्राह्यं व्यावहारिकम् ।
अतो यदन्यद्विब्रूयुर्धर्मार्थं तदपार्थकम् ॥

नारदोऽप्यपार्थमाह—

निर्दिष्टेष्वर्थजातेषु साक्षी चेत् साक्ष्य आगते ।
न ब्रूयादक्षरसमं न तन्निगदितं भवेत् ॥

साक्ष्य आगते साक्ष्यवादावसरे अक्षरसमं अक्षरानुरूपं पृष्टार्थमिति यावत् ; अनेनापृष्टार्थसमर्पकमपार्थमित्युक्तम् । एवं पृष्टार्थन्यूनाधिकार्थं च व्यर्थं, तथा च स एव—

ऊनमभ्यधिकं वाऽर्थं विब्रूयुर्यत्र साक्षिणः ।
तदप्यनुक्तं विज्ञेयमेष साक्षिविधिः स्मृतः ॥

यत्र ऋणादिस्थिरप्रायविवादेष्वित्यर्थः । तथा च कात्यायनः—

ऋणादिषु विवादेषु स्थिरप्रायेषु निश्चितम् ।
ऊने वाऽप्यधिके वाऽर्थे प्रोक्ते साध्यं न सिध्यति ॥

यावत्प्रतिज्ञातार्थसाधनार्थमुद्दिष्टं साक्षिवाक्यमूनाधिकं चेत् संदेहापादकमेव, न पुनः प्रतिज्ञातार्थैकदेशे साधिते वा प्रतिज्ञातार्थे प्रमाणमित्यर्थः । प्रतिज्ञातार्थैकदेशसाधनार्थमुद्दिष्टं साक्षिवाक्यमपि ततो न्यूनाधिकं चेत् एवमेवाप्रमाणमित्येतस्मादेव वचनादवगन्तव्यम्, साध्यं न सिध्यतीति सामान्येनाभिधानात् । अस्थिरकर्मसु पुनः सिध्यत्येव साध्यमित्याह स एव—

साध्यार्थांशेऽपि गदिते साक्षिभिस्सकलं भवेत् ।

स्त्रीसङ्गे साहसे चौर्ये यत्साध्यं परिकल्पितम् ॥

यत्पुनः तेनोक्तम्—

ऊनाधिकं तु यत्र स्यात्तत्साक्ष्यं तत्र वर्जयेत् ।
साक्षी तत्र न दण्ड्यस्स्यादब्रुवन् दण्डमर्हति ॥

इति, तत् स्थिरकर्मविषयम् । एवं निर्दिष्टार्थैकदेशविसंवादेऽपि विफलं साक्षिवचनमित्याह स एव—

देशं कालं धनं संख्यां रूपं जात्याकृती वयः ।
विसंवदेद्यत्र साक्ष्ये तदनुक्तं विदुर्बुधाः ॥

नारदोऽपि—

देशकालवयोद्रव्यप्रमाणाकृतिजातिषु ।
यत्र विप्रतिपत्तिस्स्यात् साक्ष्यं तदपि विप्लुतम् ॥

एवञ्च—ऋणादौ स्थिरकर्मणि अन्यूनातिरिक्तं पृष्टार्थसमर्पकं साक्षिवचनं प्रमाणं नान्यदित्यनुसन्धेयम् । अत एव व्यासः—

कालाकृतिवयोद्रव्यदेशजातिप्रमाणतः ।
अन्यूनं चेन्निगदितं सिद्धं साध्यं विनिर्दिशेत् ॥

बृहस्पतिरपि—

यत्राशेषः प्रतिज्ञार्थः साक्षिभिः प्रतिवर्णितः ।
स जयी स्यादन्यथा तु साध्यार्थं न समाप्नुयात् ॥

प्रतिवर्णितः सत्यत्वेनेति शेषः । तथा च याज्ञवल्क्यः—

यस्योचुस्साक्षिणस्सत्यां प्रतिज्ञां स जयी भवेत् ।

अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः ॥

साक्षिणस्सर्वे यस्य वादिनः प्रतिवादिनो वा प्रतिज्ञां साध्योक्तिं सत्यामूचुरित्यर्थः । यस्य पुनः प्रतिज्ञां केचित् साक्षिणस्सत्या मूचुः, केचित्त्वन्यथा तत्राह मनुः—

बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥

नारदोपि—

साक्षिविप्रतिपत्तौ तु प्रमाणं बहवो मताः ।
तत्साम्ये शुचयो ग्राह्याः तत्साम्ये स्मृतिमत्तराः ॥
स्मृतिमत्साक्षिसाम्यं तु विवादे यत्र दृश्यते ।
सूक्ष्मत्वात् साक्षिधर्मस्य साक्ष्यं व्यावर्तयेत्ततः ॥

इति । शुचिग्रहणं गृहस्थत्वादिगुणवतामुपलक्षणार्थम् । अत एव याज्ञवल्क्यः—

द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः ॥

अत्र बृहस्पतिः—

लिखिते साक्षिवादे च सन्देहो जायते यदा ।
अनुमाने च संभ्रान्ते तत्र दैवं विशोधनम् ॥

इति स्मृतिचन्द्रिकायां साक्षिविषयाणि.

---

स्त्रीसङ्गे साहसे चौर्ये यत्साक्ष्यं परिकल्पितम् ॥

यत्पुनः तेनोक्तम्—

ऊनाधिकं तु यत्र स्यात्तत्साक्ष्यं तत्र वर्जयेत् ।
साक्षी तत्र न दण्ड्यस्स्यादब्रुवन् दण्डमर्हति ॥

इति, तत् स्थिरकर्मविषयम् । एवं निर्दिष्टार्थैकदेशविसंवादेऽपि विफलं साक्षिवचनमित्याह स एव—

देशं कालं धनं संख्यां रूपं जात्याकृती वयः ।
विसंवदेद्यत्र साक्ष्ये तदनुक्तं विदुर्बुधाः ॥

नारदोऽपि—

देशकालवयोद्रव्यप्रमाणाकृतिजातिषु ।
यत्र विप्रतिपत्तिस्स्यात् साक्ष्यं तदपि विप्लुतम् ॥

एवञ्च—ऋणादौ स्थिरकर्मणि अन्यूनातिरिक्तं पृष्टार्थसमर्पकं साक्षिवचनं प्रमाणं नान्यदित्यनुसन्धेयम् । अत एव व्यासः—

कालाकृतिवयोद्रव्यदेशजातिप्रमाणतः ।
अन्यूनं चेन्निगदितं सिद्धं साक्ष्यं विनिर्दिशेत् ॥

बृहस्पतिरपि—

यत्राशेषः प्रतिज्ञार्थः साक्षिभिः प्रतिवर्णितः ।
स जयी स्यादन्यथा तु साध्यार्थं न समाप्नुयात् ॥

प्रतिवर्णितः सत्यत्वेनेति शेषः । तथा च याज्ञवल्क्यः—

यस्योचुस्साक्षिणस्सत्यां प्रतिज्ञां स जयी भवेत् ।

अन्यथा वादिनो यस्य ध्रुवस्तस्य पराजयः ॥

साक्षिणस्सर्वे यस्य वादिनः प्रतिवादिनो वा प्रतिज्ञां साध्योक्तिं सत्यामूचुरित्यर्थः । यस्य पुनः प्रतिज्ञां केचित् साक्षिणस्सत्यामूचुः, केचित्त्वन्यथा तत्राह मनुः—

बहुत्वं परिगृह्णीयात् साक्षिद्वैधे नराधिपः ।
समेषु च गुणोत्कृष्टान् गुणिद्वैधे द्विजोत्तमान् ॥

नारदोऽपि—

साक्षिविप्रतिपत्तौ तु प्रमाणं बहवो मताः ।
तत्साम्ये शुचयो ग्राह्याः तत्साम्ये स्मृतिमत्तराः ॥
स्मृतिमत्साक्षिसाम्यं तु विवादे यत्र दृश्यते ।
सूक्ष्मत्वात् साक्षिधर्मस्य साक्ष्यं व्यावर्तयेत्ततः ॥

इति । शुचिग्रहणं गृहस्थत्वादिगुणवतामुपलक्षणार्थम् । अत एव याज्ञवल्क्यः—

द्वैधे बहूनां वचनं समेषु गुणिनां तथा ।
गुणिद्वैधे तु वचनं ग्राह्यं ये गुणवत्तराः ॥

अत्र बृहस्पतिः—

लिखिते साक्षिवादे च सन्देहो जायते यदा ।
अनुमाने च संभ्रान्ते तत्र दैवं विशोधनम् ॥

इति स्मृतिचन्द्रिकायां साक्षिविषयाणि.

---

अथान्यान्यपि साक्षिविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र याज्ञवल्क्यः—

न ददाति हि यस्साक्ष्यं जानन्नपि नराधमः ।
स कूटसाक्षिणां पापैस्तुल्यो दण्डेन चैव हि ॥

यो विप्रतिपन्नमर्थं परमार्थतो जानन्नपि दौरात्म्यात् साक्ष्यं नाङ्गीकरोति असौ कूटसाक्षिवत्पापी दण्ड्यश्चेत्यर्थः ।

नारदोपि—

श्रावयित्वा ततोऽन्येभ्यः साक्षित्वं यो विनिह्नुते ।
स विनेयो भृशतरं कूटसाक्ष्यधिको हि सः ॥

यदा पूर्वमहं साक्षीति श्रावितः साक्षिणामागमनकाले अहं न साक्षीत्यपलपति असावत्यर्थं दण्ड्य इत्यर्थः । बृहस्पतिरपि—

अहूतो यस्तु नागच्छेत् साक्षी रोगविवर्जितः ।
ऋणं दमं च दाप्यस्स्यात् त्रिपक्षात् परतस्तु सः ॥

वसिष्ठोपि—

यस्साक्षी नैव निर्दिष्टो नाहूतो नैव चोदितः ।
ब्रूयान्मिथ्येति तथ्यं वा दण्ड्यस्सोपि नराधमः ॥

कात्यायनः—

अपृष्टस्सर्ववचने पृष्टस्याकथने तथा ।
साक्षिणः संनिरोद्धव्याः गर्ह्या दण्ड्याश्च धर्मतः ॥
वाक्पारुष्ये छले वादे दाप्यास्स्युस्त्रिशतं दमम् ।

ऋणादिवादेषु धनं ते स्युर्दाप्या ऋणं तथा ॥

इति । धनं दण्डधनम् । त इति सर्वनाम्ना प्रश्नस्योत्तरमकथयन्त एव प्रत्यवमृश्यन्ते, तेषामस्यर्थं प्रकृतत्वात् । अत एवाह स एव–

साक्षी साक्ष्यं न चे द्ब्रूयात् समदण्डं वहेदृणम् ।
अतोऽन्येषु विवादेषु त्रिशतं दण्डमर्हति ॥

अन्येषु ऋणादितोऽन्योष्वित्यर्थः । तथा च मनुः—

त्रिपक्षादब्रुवन् साक्ष्यमृणादिषु नरोऽगदः ।
तदृणं प्राप्नुयात्सर्वं दशबन्धं च सर्वतः ॥

अगदः स्वस्थः, तदृणं साक्षिरूपप्रमाणसाध्यं धनं, सर्वं सवृद्धिकं प्राप्नुयात् दाप्य इत्यर्थः । तथाच याज्ञवल्क्यः—

अब्रुवन् हि नरस्साक्ष्यमृणं सदशबन्धकम् ।
राज्ञा सर्वं प्रदाप्यष्षट्चत्वारिंशत्तमेऽहनि ॥

दशबन्धशब्धेन दशमोंश उच्यते । स च दण्डत्वाद्राज्ञा ग्राह्यमित्युक्तं व्याख्यातृभिः।अत्राधमर्णेन न किञ्चिद्दातव्यम्, तद्देयमेव अब्रुवन् साक्षी दाप्य इति पूर्ववचनस्य तात्पर्यार्थत्वात्। न चाब्रुवता साक्षिणा स्वेन दत्तमधमर्णतो ग्राह्यं, स्वापराधेन दत्तत्वात् । षट्-चत्वारिंशत्तमेऽहनीति ग्रहणात्ततो वाग्ब्रुवन्न दाप्य इति गम्यते। अत एव कात्यायनः—

सम्यक्क्रियाऽपरिज्ञाने देयः कालस्तु साक्षिणम् ।
सान्दिग्धं यत्र साक्ष्यं तु सद्यः स्पष्टं विवादयेत् ॥

एवञ्च यदुक्तं तेन—

न कालहरणं कार्यं राज्ञा साक्षिप्रभाषणे ।
महान् दोषो भवेत् कालाद्धर्मव्यावृत्तिलक्षणः ॥

इति, तत्स्पष्टसाक्षिविषयमित्यवगन्तव्यम्, सन्दिग्धसाक्ष्ये कालदानविधानात् । यः पुनस्साक्षी प्रश्नवाक्यं श्रावितस्सन् वादकाले रागद्वेषान्धो नाहमत्र साक्षी भवामीति स्वसाक्षित्वमपलपति तस्य दण्डमाह याज्ञवल्क्यः—

यस्साक्ष्यं श्रावितोऽन्येभ्यो निह्नुते तत्तमोवृतः ।
स दाप्योऽष्टगुणं दण्डं ब्राह्मणं तु विवासयेत् ॥

विवादादिसनुषज्यते । तेन विवादपराजयो दण्डः, तमष्टगुणं दाप्य इत्यर्थोऽवगन्तव्यः । विवासयेदित्यस्य नग्नीकरणं गृहभङ्गः, स्वराष्ट्रबहिष्कारो वाऽर्थः । अत्र तु दण्डाविवृद्धिसाहचर्यात् स्वराष्ट्रबहिष्काररूपोऽर्थः प्रत्येतव्यः । कात्यायनस्मृत्या साक्ष्यं पुनरन्यथा ब्रुवाणा अपि साक्षिणो दण्ड्या इत्याह—

उक्त्वाऽन्यथा ब्रुवाणाश्च दण्ड्यास्स्युर्वाक्छलान्विताः ॥

इति । गौतमस्तु प्रथमत एव 'अन्यथा ब्रुवाणो गर्ह्यो दण्ड्यश्च' इत्याह । 'मिथ्यावचने दाप्यो दण्ड्यश्च साक्ष्ये' इति । याज्ञवल्क्यस्त्वेवंविधसाक्षिणो दण्डे विशेषमाह—

पृथक्पृथक् दण्डनीयाः कूटकृत्साक्षिणस्तथा ।
विवादात् द्विगुणं दण्डं विवास्यो ब्राह्मणस्स्मृतः ॥

कूटं साक्ष्यं कुर्वन्तीति कूटकृतः मिथ्यावादिन इति यावत्। ते राज्ञा पृथक्पृथक् दण्डनीयाः। विवादपराजयनिबन्धनदमात् द्विगुणं दममित्यर्थः। विवास्यो ब्राह्मण इत्यविशेषेणोक्तेऽपि यत्र क्षत्रियादीनामल्पधनेन द्विगुणो दमः सम्पद्यते, तत्र ब्राह्मणस्य नग्नीकरणरूपविवासनं दण्डः। यत्र तु बहुधनेन क्षत्रियादीनां, तत्र गृहभङ्गरूपविवासनं ब्राह्मणस्य। यत्र पुनरतिबहुधनेन क्षत्रियादीनां, तत्र स्वराष्ट्रबहिष्काररूपविवासनं ब्राह्मणस्येति मन्तव्यम्, दण्डतारतम्यस्य दोषतारतम्यानुविधायित्वात्। अत एव मनुनाऽनृतबीजनिबन्धनदोषतारतम्यानुसारेण दण्डवैचित्र्यमुक्तम्—

लोभान्मोहाद्भयान्मैत्रात् कामात्क्रोधात्तथैव च।
अज्ञानाद्बालभावाच्च साक्ष्यं वितथमुच्यते॥

तेषामन्यतमे स्थाने यस्साक्ष्यमनृतं वदेत्।
तस्य दण्डविशेषांस्तु प्रवक्ष्याम्यनुपूर्वशः॥

लोभात्सहस्रं दण्ड्यस्तु मोहात् पूर्वं तु साहसम्।
भयाद्द्वे मध्यमो दण्डो मैत्रात्पूर्वं चतुर्गुणम्॥

कामाद्दशगुणं पूर्वं क्रोधात्तु त्रिगुणं परम्।
अज्ञानात् द्वे शते पूर्णे बालिश्याच्छतमेव तु॥

एतानाहुः कौटसाक्ष्ये प्रोक्तान् दण्डान्मनीषिणः।

इति। लोभोऽर्थपरत्वम्। मोहस्सम्यक्कार्थानवधारणम्।

भयमनिष्टप्राप्तिशङ्का । मैत्री स्नेहातिशयः । कामो रतिविषया भिलाषः । क्रोधोऽमर्षः । अज्ञानं समक्षदर्शनश्रवणसमय एवान्यथाज्ञानम् । बालिश्यं अप्राप्तबुद्धिस्थैर्यम् । अत्र लोभभयमैत्रनिमित्तानृते तुल्यदोषे वचोभङ्ग्योत्तमसाहस उक्तः । कामतोऽनृते तु ततो दोषबाहुल्यात् सार्धोत्तमसाहसद्वयमुक्तम् । क्रोधनिमित्ते पुनस्ततोऽपि दोषबाहुल्यादुत्तमसाहसत्रिकमुक्तम् । मोहे त्वल्पदोषत्वात् प्रथमसाहस उक्तः । अज्ञाने तु ततोऽल्पदोषत्वात् कार्षापणशतद्वितयमुक्तम् । बालिश्ये पुनस्ततोऽप्यल्पदोषत्वात्तदर्धमेवोक्तमिति मन्तव्यम् । इदं च दण्डवैचित्र्यं ब्राह्मणस्यापि कूटसाक्षिणो ज्ञेयम् 'एतानाहुः कौटसाक्ष्ये' इत्यविशेषस्मृतेः ।

कौटसाक्ष्यं तु कुर्वाणांस्त्रीन् वर्णान् धार्मिको नृपः ।
प्रवासयेद्दण्डयित्वा ब्राह्मणं तु विवासयेत् ॥

इति । कौटसाक्ष्यावृत्तिविषये ब्राह्मणस्य विशेषस्मरणाच्च । कः पुनरत्र विशेषः? न तावद्दण्डयित्वा प्रवासनं क्षत्रियादेः । ब्राह्मणस्य तु प्रवासनमात्रमिति विशेषो युक्तः, सकृत्कृतेऽपि कौटसाक्ष्ये ब्राह्मणस्य याज्ञवल्क्येन प्रवासनविधानात् अभ्यासेऽधिकदण्डानुक्तिप्रसक्तेः । अतो यत्कैश्चिदुक्तं तुशब्दो ब्राह्मणे धनदण्डनिवृत्त्यर्थ इति, तदपास्तम् । कथं तर्हि ब्राह्मणे दण्डविशेष उक्तः? उच्यते—प्रवासशब्देनात्र दन्तच्छदच्छेदनं

जिह्वाच्छेदो मारणं चोच्यते। विवासशब्देन तु नग्नीकरणादिकम्। तेन दण्डयित्वेत्यस्यानुषङ्गेऽपि विशेषोक्तिर्युक्ता। प्रवासनविवासनावान्तरभेदादन्तच्छदच्छेदादयो नग्नीकरणादयश्च कौटसाक्ष्यविषयानुसारेणाभ्याससङ्ख्याविवृद्ध्यनुसारेण चानुसन्धातव्याः। अनवधारितहेतुके कौटसाक्ष्ये सकृत् कृते 'पृथक्पृथक्' इत्यादिवचनोक्तो याज्ञवल्कीयो दण्डः, अन्यत्र मानव इति चानुसन्धेयम्। यत्पुनर्विष्णुनोक्तं 'कूटसाक्षिणां सर्वस्वापहारः कार्यः' इति, तद्भूम्यनृतविषयमिति कैश्चिदुक्तम्, शूद्राद्यधर्मजातिविषयं वा द्रष्टव्यम्। कूटसाक्षिग्रहणं तन्निर्देशकस्यापि प्रदर्शनार्थम्। अत एव कात्यायनः—

येन कार्यस्य लोभेन निर्दिष्टाः कूटसाक्षिणः।
गृहीत्वा तस्य सर्वस्वं कुर्यान्निर्विषयं ततः॥

निर्विषयं स्वदेशान्निर्वासनम्। येन पुनः निर्दिष्टसाक्षिणां कूटत्वायोद्यमः कृतः स हीनो भवतीत्याह नारदः—

न परेण समुद्दिष्टमुपेयात्साक्षिणं रहः।
भेदयेत न चान्येन हीयेतैवं समाचरन्॥

तेन तथा चरन्तं हीनदण्डेन दण्डयेदित्यभिप्रायः। एवं कूटसाक्षिणं तन्निर्देशकं दण्डयित्वा च कूटसाक्षिवचनान्निर्णीतं कार्यं निवर्तनीयम्। तथा च मनुः—

यस्मिन्यस्मिन् विवादे तु कौटसाक्ष्यं कृतं भवेत्।

तत्तत्कार्यं निवर्तेत कृतं चाप्यकृतं भवेत् ॥

कस्मिन् पुनः कार्ये कौटसाक्ष्यं भवतीत्यपेक्षिते याज्ञवल्क्यः—

उक्तेऽपि साक्षिभिस्साक्ष्ये यद्यन्ये गुणवत्तराः ।
द्विगुणा वाऽन्यथा ब्रूयुः कूटास्स्युः पूर्वसाक्षिणः ॥

अस्यार्थः—यत्रार्थिना सन्निहिता असन्निहिताश्च बहवस्साक्षिणो निर्दिष्टाः, तत्रासन्निहितानयने क्लेशमालोच्य यदा संनिहितैरेवालमित्यङ्गीकृत्य तद्वचनान्निर्णीतमर्थिनः पराजय इति तं च पराजयं कौटसाक्ष्यनिबन्धनामिति मन्यमानोऽर्थी पुनः पूर्वमुद्दिष्टानसन्निहितान् संनिहितेभ्यो गुणवत्तरान् द्विगुणान्वाऽऽनीय विजयी भवति, तदा पूर्वसन्निहिताः साक्षिणः कूटास्स्युरिति । कात्यायनोपि—

यत्र वै भावितं कार्यं साक्षिभिर्वादिना भवेत् ।
प्रतिवादी यदा तत्र भावयेत् कार्यमन्यथा ॥
बहुभिश्च कुलीनैर्वा पूर्वास्स्युः कूटसाक्षिणः ।

इति । अस्यार्थः—अर्थिना निर्दिष्टेषु साक्षिष्वर्थिपक्षानुकूलमभिहितवत्सु यदा प्रत्यर्थी सङ्ख्यया गुणैर्वाऽधिकान् साक्षिणः पूर्वोक्तविपरीतं वादयति, तदाऽर्थिसाक्षिणः कूटास्स्युरिति । ननु च एकस्मिन् व्यवहारे कथमर्थिप्रत्यर्थिनोस्साक्षिसम्भवः ?

न चैकस्मिन्विवादे तु क्रिया स्याद्वादिनोर्द्वयोः ।

इति प्रतिषिद्धत्वात् । अत एव 'यत्र वै भावितम्' इत्यादिवच-

नस्य पुनर्बाधविषयत्वमाश्रीयते। तेन न कश्चिद्विरोधः। एकस्य साक्षित्वविषये तु मनुराह—

यस्य दृश्येत सप्ताहादुक्तवाक्यस्य साक्षिणः।
रोगोऽग्निर्ज्ञातिमरणमृणं दाप्यो दमं च सः॥

सप्ताहावधिकं दैविकव्यसनोद्भावनेनैकस्य साक्षिणः परीक्षणं कर्तव्यमित्यर्थः। एतच्च परीक्षणं दूतकादेः साक्षिणः कार्यम्, न पुनर्गुणान्वितस्य नृपाध्यक्षयोर्वा, तत्रैकैकस्याप्यनृतसंभावनासम्भवात्। अत एव व्यासः—

मणिमन्त्रौषधिबलात् प्रदत्तं चाविधानतः।
विसंवदेद्दिव्यमपि न तु साक्षी गुणान्वितः॥

अत एव बृहस्पतिना दूतकादेः नृपाध्यक्षयोः व्यवधानं कृतम्—

दूतको घटिकाग्राही कार्यमध्यगतस्तथा।
एक एव प्रमाणं स्यान्नृपोऽध्यक्षस्तथैव च॥

इति। घटिकाग्राही गणकः। इतरौ कात्यायनेन दर्शितौ—

अभ्यन्तरस्तु निक्षेपे साक्ष्यमेकोपि वाच्यते।
अर्थिना प्रहितस्साक्षी भवत्येकोपि दूतकः॥

इति स्मृतिचन्द्रिकायां साक्षिविषयाणि.

साक्षिप्रकरणं समाप्तम्.

---

## अथासाक्षिप्रत्ययाः

तत्र नारदः—

असाक्षिप्रत्ययास्त्वन्ये षड्विवादाः प्रकीर्तिताः ।
लक्षणान्येव साक्षित्वमेषामाहुर्मनीषिणः ॥

अग्निदत्वादिविवादेषूल्काहस्तत्वादिचिह्नान्येव साक्षिकार्यं कुर्वन्तीत्यर्थः । तथा च स एव—

उल्काहस्तोऽग्निदो ज्ञेयः शस्त्रपाणिश्च घातुकः ।
केशाकेशी गृहीतश्च युगपत्पारदारिकः ॥
कुद्दालपाणिर्विज्ञेयस्सेतुभेत्ता समीपगः ।
तथा कुठारपाणिस्तु वनच्छेत्ता प्रकीर्तितः ॥
प्रत्यग्रचिह्नैर्विज्ञेयो दण्डपारुष्यकृन्नरः ।
असाक्षिप्रत्यया ह्येते पारुष्ये तु परीक्षणम् ॥

इति । प्रत्यग्रचिह्नैः नूतनक्षतादिभिः । असाक्षिप्रत्ययाः विनाऽपि साक्षिभिश्चिह्नैरेव विगतसंशयाः, पारुष्ये तु परीक्षणं दण्डपारुष्ये कृत्रिमचिह्नविवेकाय परीक्षणं कर्तव्यमित्यर्थः । तथाच स एव—

कश्चित्कृत्वाऽऽत्मनश्चिह्नं द्वेषात्परमुपद्रवेत् ।
युक्तिहेत्वर्थसम्बन्धैस्तत्र युक्तं परीक्षणम् ॥

तत्र पारुष्य इत्यर्थः । नन्विदमनर्थकं वचः—

तलवद्दृश्यते व्योम खद्योतो हव्यवाडिव ।

न तलं विद्यते व्योम्नि न खद्योतो हुताशनः ॥
तस्मात्प्रत्यक्षदृष्टेऽपि युक्तमर्थान् परीक्षितुम् ।
परीक्ष्य ज्ञापयन्नर्थान् अधर्मात्परिहीयते ॥

इति। उल्काहस्तादौ सर्वत्र परीक्षणस्य तेनैव विहितत्वात् ।सत्यम् तत्रैवोपायविधानार्थं परीक्षणमनूद्यत इत्यदोषः । एवं चौर्यविवादोपि कश्चिदसाक्षिप्रत्ययोऽवगन्तव्यः । तथाच शङ्खलिखितौ—

'केशाकेशी सङ्ग्रहणात् पारदारिकः उल्काहस्तोऽग्निदः शस्त्रपाणिर्घातुकः लोप्त्रहस्तश्चोरः' इति । लोप्त्रमपहृतैकदेशादिलिङ्गम्, अत्रापि परीक्षणं कार्यम् । तथाच नारदः—

यात्यचोरोपि चोरत्वं चोरश्चायात्यचोरताम् ।
अचोरश्चोरतां प्राप्तो माण्डव्यो व्यवहारतः ॥

इति। अतः परीक्षणमावश्यकमित्याभिप्रायः। अत एव बृहस्पतिः—

लिखिते साक्षिवादे च संदेहो यत्र जायते ।
अनुमाने च संभ्रान्ते तत्र दैवं विशोधनम् ॥

अनुमानं उल्काहस्तत्वादियुक्तिः ।

अनुमानं विदुर्हेतुस्तर्कश्चेति मनीषिणः ॥

इति व्यासस्मरणात् ॥

इति स्मृतिचन्द्रिकायामसाक्षिप्रत्ययाः.

---

## अथ दिव्यनिरूपणम्.

तत्र पितामहः —

यस्मिन्यस्मिन्विवादे तु साक्षिणां नास्ति सम्भवः ।
साहसेषु विशेषेण तत्र दिव्यानि दापयेत् ॥

साक्षिग्रहणं मानुषप्रमाणोपलक्षणार्थम् । अत एव याज्ञवल्क्यः —

प्रमाणं लिखितं भुक्तिस्साक्षिणश्चेति कीर्तितम् ।
तेषामन्यतमाभावे दिव्यान्यतममुच्यते ॥

एषामन्यतमाभाव इति युक्त्यभावस्याप्युपलक्षणार्थम् । अत एव नारदः —

युक्तिष्वप्यसमर्थासु शपथैरेव निर्णयेत् ।
अर्थकालबलापेक्षमग्न्यम्बुसुकृतादिभिः ॥

अर्थापेक्षं सिषाधयिषितार्थाल्पत्वमहत्त्वरूपमित्यर्थः ।

तथाच व्यासः —

अर्थानुरूपाश्शपथास्स्मृतास्सत्यघटादयः ॥

इति । तत्रार्थाल्पत्वानुरूपास्सत्यादय इत्याह बृहस्पतिः —

सत्यं वाहनशस्त्राणि गोबीजकनकानि च ।
देवब्राह्मणपादाश्च पुत्रदारशिरांसि च ॥
एते तु शपथाः प्रोक्ताः स्वल्पेऽर्थे सुकरास्सदा ।

इति । स्वल्पेऽर्थे इति स्वल्पपीडाया अपि सिषाधयिषितायाः प्रदर्शनार्थम् । अत एव सामान्येनोक्तं नारदेन—

सत्यं वाहनशस्त्राणि गोबीजकनकानि च ।
देवतापितृपादांश्च दत्तानि सुकृतानि च ॥
इत्येते शपथाः प्रोक्ताः मनुना स्वल्पकारणे ।

इति । स्वल्पकारणे स्वल्पापराध इत्यर्थः । सुकृतानि चेति च-शब्देनान्येऽपि लोकप्रसिद्धाः शपथाः सङ्गृह्यन्ते । अत एव शङ्खलिखितौ 'इष्टापूर्तप्रदानमन्यांश्च शपथान् कारयेत्' इति। यत्पुनर्नारदेनोक्तम्—

कारणे महति प्रोक्तं दिव्यं वादार्थिनां नृणाम् ।

इति, यदपि पितामहेन—

महापराधे दिव्यानि दापयेत्पृथिवीपतिः ।

इति, तत्तुलादिदिव्याविषयम् । यदाह याज्ञवल्क्यः—

तुलाग्न्यापो विषं कोशो दिव्यानीह विशुद्धये ।
महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ॥

इति । अग्निशब्देन तप्तायःपिण्डस्तप्तमाषस्तप्तफालं च निर्दिश्यते सामान्येनाभिधानात् । तेन तप्तमाषफाले अप्यस्मादेव वचनात् महाभियोगे शीर्षकस्थे चाभियोक्तरि विहिते इति बोद्धव्यम् । शीर्षकं विवादपराजयनिबन्धनो दण्डः, व्यवहारशिरस्थानीयत्वात्, तत्र तिष्ठतीति शीर्षकस्थः । एतदुक्तं भवति 'न महाभियोगमात्रे तुलादीनि भवन्ति, किंतु यत्रैतस्य जयेऽहमित्थं दण्ड्य इति शरीरदण्डमर्थदण्डं वा मिथ्याभियोगिनो विहितमभि

योक्ता स्वकृताभियोगदार्ढ्यख्यापनायाङ्गीकुरुते तत्रैव, इति । अत एव नारदः—

शिरोवर्ती यदा न स्यात्तदा दिव्यं न दीयते ।

इति । शिरोवर्ती यदा न स्यादभियोक्तेति शेषः । तथा च पितामहः—

अभियोक्ता शिरस्थाने दिव्येषु परिकल्प्यते ।
अभियुक्ताय दातव्यं दिव्यं श्रुतिनिदर्शनात् ॥

दिव्यं धटादिपञ्चकेष्वन्यतमम् । एतानीति याज्ञवल्क्येन विशेषितत्वात् । अत एव नारदः—

यथाविधानेन सदा पञ्च दिव्यानि धर्मतः ।
ददद्राजाऽभियुक्तानां प्रेत्य चेह च नन्दति ॥

अनेन अभियोक्तॄणामेतानि दिव्यानि भवन्तीत्यर्थादुक्तम् । उक्तं च कात्यायनेन—

न कश्चिदभियोक्तारं दिव्येषु विनियोजयेत् ।
अभियुक्ताय दातव्यं दिव्यं दिव्यविशारदैः ॥

कश्चित् सभापसादिः । दिव्यविशारदाः प्राड्विवाकादयः । अनेनार्थिप्रत्यर्थिनोरन्यतरेच्छया दिव्याङ्गीकारे नायं नियम इत्यर्थादुक्तम् । उक्तं च याज्ञवल्क्येन—

रुच्या वाऽन्यतरः कुर्यादितरो वर्तयेच्छिरः ।

इति । नारदेनाप्युक्तम्—

आभियोक्ता शिरस्थाने सर्वत्रैव प्रकल्पितः ।
इच्छया त्वितरः कुर्यादितरो वर्तयेच्छिरः ॥

सर्वत्र शिरोवर्ति दिव्यपञ्चक इत्यर्थः । अभियुक्तस्य शिरोवर्तनमनपलापदार्ढ्यख्यापनार्थम् ।अत एव एतस्य जयेऽहमित्थं दण्ड्य इत्यपलापिनो विहितदण्डाङ्गीकारः । तथा क्वचिद्विषये न कोऽपि शिरो वर्तयेदित्याह स एव—

शिरोऽवस्थायिनि नरे अभियोक्तर्युपस्थिते ।
दिव्यप्रदानमुचितमन्यत्र नृपशासनात् ॥

नृपशासनात् नृपाज्ञया त्वशिरांस्यपि घटादीनि भवन्ति । तथाच स एव—

अशिरांसि च दिव्यानि राजा भृत्येषु दापयेत् ।

इति । याज्ञवल्क्यस्त्वपराधविशेषे शिरोवस्थाननियमस्याप्यपवादमाह—

विनाऽपि शीर्षकात् कुर्यात् नृपद्रोहेऽथ पातके ।

शीर्षकात् शीर्षकवर्तनादित्यर्थः । तथा विष्णुः—'राजद्रोहसाहसेषु विना शीर्षकवर्तनात्' इति । तुलादीनि नियोज्यानीति शेषः । तथाच कात्यायनः—

पार्थिवैश्शङ्कितानां तु तुलादीनि नियोजयेत् ।
आत्मशुद्धिविधाने च न शिरस्तत्र कल्पयेत् ॥

लोकापवाददुष्टानां शङ्कितानां च दस्युभिः ।
तुलादीनि नियोज्यानि न शिरस्तत्र वै भृगुः ॥

इति । दस्युभिस्सह वासेन शङ्कितानामित्यर्थः । यत्पुनस्तेनोक्तं—

न शङ्कासु शिरः कोशे कल्पयेत्तु कदाचन ।

इति । तच्छङ्काभियोगे कोशस्य ऋणादावप्यशिरस्त्वनियमार्थम् । कदाचनेत्यभिधानात् । शङ्काभियोगे च कोशो व्यासेनाभिहितः—

धटोऽग्निर्विषतोयं च प्रमाणं तु चतुर्विधम् ।
दैविकस्य प्रभेदोऽयं कोशश्शङ्कासु पञ्चमः ॥

शङ्कास्विति विश्वासादीनां प्रदर्शनार्थम् । अत एव कात्यायनः—

शङ्काविश्वाससंधाने विभागे रिक्थिनां सदा ।
क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत् ॥

पितामहोपि—

विस्रम्भे सर्वशङ्कासु संधिकार्ये तथैव च ।
एषु कोशः प्रदातव्यो नित्यं चित्तविशुद्धये ॥

कोशः शिरोरहित इति शेषः । तथा च स एव—

शिरस्स्थायिविहीनानि दिव्यानि परिवर्जयेत् ।
धटादीनि विषान्तानि कोश एकोऽशिरास्स्मृतः ॥

शङ्काभियोगादिविषय इति शेषः । महातत्त्वाभियोगे कोशोपि शिरस्स्थायिविहीनो वर्ज्य एव । 'शीर्षकस्थेऽभियोक्तरि' इति पञ्चदिव्यशेषतया याज्ञवल्क्येनोक्तत्वात् । महातत्त्वादियोगेष्वपि राजप्राड्विवाकेतरसभायां तु न धटादिदिव्यपञ्चके शिरःकल्पनमास्ति ।

वाग्दण्डो धिग्दमश्चैव विप्रायत्तावुभौ स्मृतौ ।
अर्थदण्डवधावुक्तौ राजायत्तावुभावपि ॥

इति । राजप्राड्विवाकसभायामेव दण्डस्य व्यवहारशिरस्स्थानीयस्योक्तेः । ततश्च,

शिरस्स्थायिविहीनानि दिव्यानि परिवर्जयेत् ।

इत्यादिवचनं राजप्राड्विवाकसभाविषयमेवेति मन्तव्यम् । एवंच यत्पितामहेन 'मिथ्याक्रिया पूर्ववादे' इत्यस्यान्यथाकरणार्थमुक्तं

अभियुक्ताय दातव्यं दिव्यं श्रुतिनिदर्शनात् ।

इति, तदपि राजप्राड्विवाकसभाविषयमेवेत्यवगन्तव्यं, न तद्व्यतिरिक्तसभायाम् । अत एव 'मिथ्याक्रिया पूर्ववादे' इति वचनोक्तार्थानतिक्रमेण सभ्यैर्दिव्याभिधानं क्रियमाणं युक्तमिति लिखितादिवदेव भवतीति मन्तव्यम् । न च;

तण्डुलाश्चैव कोशश्च शङ्कास्वेतौ नियोजयेत् ।

इति पितामहवचने तण्डुलसाहचर्याच्छङ्कास्वेव कोश इतिशङ्का कार्या । 'शीर्षकस्थे' इत्यादिपूर्वोक्तयाज्ञवल्क्यवचनविरोधापत्तेः । तण्डुलसाहचर्यं त्वल्पाभियोगेऽपि कोशो भवतीति ज्ञापनार्थम् । अत एव नारदः—'कोशमल्पेऽपि दापयेत्' इति। एवंच 'महाभियोगेष्वेतानि' इति याज्ञवल्क्येनोक्तो नियमस्तुलादिविषान्तविषय एवेत्यनुसन्धेयम् । कोशस्यापि नियमे पूर्वोक्तनारदवचनविरोधः स्यात् । अत एव सङ्ग्रहकारः—

घटादीनि विषान्तानि गुरुष्वर्थेषु दापयेत् ।

इति । यत्पुनस्तेनोक्तम्—

कोशादीनि पुनस्त्रीणि लघ्वर्थेषु यथाक्रमम् ।

इति, तदपहार एव लघ्वर्थनियमकथनार्थम्, न पुनरपह्नवेऽपि; कोशतण्डुलतप्तमाषाणां गुर्वर्थापह्नवे विहितत्वेन लघ्वर्थेष्वेवेति नियमासम्भवात् । लघ्वर्थेष्वपि शङ्कास्वेव तण्डुलाः

तण्डुलाश्चैव कोशश्च शङ्कास्वेतौ नियोजयेत् ।

इति पितामहस्मरणात् । तप्तमाषोपि लघ्वर्थेषु शङ्कायामेव ।

अल्पचौर्यादिशङ्कायां तप्तमाषकमादिशेत् ।

इति तेनैव स्मृतत्वात् । फालमपि क्वचिल्लघ्वर्थे प्रदातव्यम् । तथाच बृहस्पतिः—

गोचरस्य प्रदातव्यं सभ्यैः फालं प्रयत्नतः ।

इति । एवंच

महाभियोगेष्वेतानि शीर्षकस्थेऽभियोक्तरि ।

इति नियमोऽग्नावुच्यमानोऽयःपिण्डाग्निविषयो न तप्तमाषफालाग्निविषय इत्यवगन्तव्यम् । अत एवाग्निदिव्यानां पृथङ्निर्देशो बृहस्पतिना कृतः—

घटोऽग्निरुदकं चैव विषं कोशश्च पञ्चमम् ।
षष्ठं च तण्डुलाः प्रोक्तं सप्तमं तप्तमाषकम् ॥
अष्टमं फालमित्युक्तं नवमं धर्मजं भवेत् ।

दिव्यान्येतानि सर्वाणि निर्दिष्टानि स्वयम्भुवा ॥

इति । धर्मजं तु महाभियोगबहिष्कृतत्वाल्लघ्वर्थेष्वेव नियतमिति मन्तव्यम् । यत्तु पितामहेनोक्तं—

हन्तॄणां याचमानानां प्रायश्चित्तार्थिनां नृणाम् ।
संदिग्धेऽर्थेऽभिशस्तानां धर्माधर्मपरीक्षणम् ॥

तस्यायमर्थः—हिंसाधनघातकाद्यभियोगेष्वल्पेष्वभिशस्तानां धर्मजं दिव्यमिति ।

इति स्मृतिचन्द्रिकायां दिव्यानिरूपणम्.

---

अथाभियोगाल्पत्वमहत्त्वज्ञानोपयोगीनि कानिचिद्वचनानि लिख्यन्ते । तत्र मनुः—

लोकसंव्यवहारार्थं यास्संज्ञाः प्रथिता भुवि ।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ॥

दण्डादिव्यशास्त्रार्थव्यामोहापनुपत्तये ताम्रादीनां परिमाणनिबन्धनास्संज्ञाः प्रदर्श्यन्त इत्यर्थः । प्रतिज्ञातार्थं दर्शयति—

जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।
प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥
त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका परिमाणतः ।
ता राजसर्षपस्तिस्रस्ते त्रयो गौरसर्षपः ॥
सर्षपाष्षड्यवो मध्यस्त्रियवं त्वेककृष्णलम् ।

पञ्चकृष्णलको माषः ते सुवर्णस्तु षोडश ॥
पलं सुवर्णाश्चत्वारः पलानि धरणं दश ।
द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः ॥
ते षोडश स्याद्धरणं पुराणं चैव राजतम् ।
कार्षापणस्तु विज्ञेयस्ताम्रिकः कार्षिकः पणः ॥
धरणानि दश ज्ञेयः शतमानस्तु राजतम् ।
चतुस्सुवर्णको निष्को विज्ञेयस्तु प्रमाणतः ॥

इति । एतेषां श्लोकानां तात्पर्यार्थः प्रातिलोम्येनोच्यते— निष्कशतमानशब्दावेकपले रूप्यद्रव्ये वर्तेते। अत एव रुप्यसंज्ञाधिकारे,

शतमानं तु दशभिः धरणैः पलमेव तु ।
निष्कस्सुवर्णा श्चत्वारः,

इति याज्ञवल्क्येनोक्तम् । पणकार्षापणशब्दौ पलचतुर्थांशकर्षस्य ताम्रद्रव्यस्य नामधेयम् । पुराणधरणशब्दौ पलदशमांशस्य रूप्यद्रव्यस्य नामनी । कर्षचत्वारिंशत्तमांशस्य रूप्यद्रव्यस्य माषसंज्ञा । दशपलस्य धरणसंज्ञा । सा च रजतेतरद्रव्यविषये वेदितव्या । राजतधरणस्याल्पपरिमाणत्वात् पलसंज्ञा सर्वद्रव्यविषयेऽवगन्तव्या, विशेषास्मृतेः । सुवर्णशब्दस्तु काञ्चनकर्षवचनः 'सुवर्णविस्तौ हेम्नोक्षे' इसमरसिंहेन विशेषितत्वात् । अक्षे कर्ष इत्यर्थः 'ते षोडशाक्षः कर्षोऽस्त्री' इति तेनैवोक्तत्वात् । कर्षषोडशभागस्य माषसंज्ञा । सा च रूप्यद्रव्यादन्यत्र विज्ञेया,

रूप्यमाषकस्य कर्षचत्वारिंशत्तमांशत्वात् । कृष्णलशब्दस्तु कार्षाशीतिभागवाची, माषपञ्चमांशत्वात् । एवं सर्षपलिक्षात्रसरेणुपदार्थेष्वपि द्रव्येयत्ता स्वयमूहनीया । 'यवो मध्यः' इत्यत्र मध्यशब्दः श्लोकपूरणार्थ इत्युक्तं तद्भाष्ये । त्रसरेणौ पञ्चरजस्संज्ञाऽपि पुराणे दर्शिता—

अष्टानां परमाणूनां समवायो यदा भवेत् ।
त्रसरेणुस्समाख्यातस्तत्पञ्चरज उच्यते ॥

इति । माषशब्दः कार्षापणस्य विंशतितमे भागे वर्तत इत्याह कात्यायनः—

माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु ।
काकणी तु चतुर्भागा माषकस्य पणस्य च ॥
पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यावहारिकी ।

इति । सुवर्णशब्दो द्वादशपलवाचीत्याह बृहस्पतिः—

ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः ।
स एव चाण्डिका प्रोक्ता ताश्चतस्रस्तु धानका ॥
ता द्वादश सुवर्णास्तु दीनाराख्यस्स एव तु ।

इति । कात्यायनोऽपि—

कार्षापणोऽण्डिका ज्ञेया ताश्चतस्रस्तु धानकः ।
ते द्वादश सुवर्णास्तु दीनाराश्चित्रकः स्मृतः ॥

इति । पले तु विकल्पो याज्ञवल्क्येन दर्शितः—

पलं सुवर्णाश्चत्वारः पञ्च वाऽपि प्रकीर्तितम् ।

इति । राजतोपि कार्षापणोऽस्तीत्याह नारदः—

कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्तते ।

इति । व्यासस्तु सौवर्णनिष्कस्य प्रमाणमाह—

पलान्यष्टौ सुवर्णस्य सुवर्णाश्च चतुर्दश ।
एतन्निष्कप्रमाणं तु व्यासेन परिकीर्तितम् ॥

इति । अत्र मनूक्तप्रमाणान्तरमाषादिः दिव्यदण्डविषये देशव्यवहारविरोधेऽपि ग्राह्य एव । तथा च बृहस्पतिः—

संख्या रश्मिरजोमूला मनुना समुदाहृता ।
कार्षापणान्तो सा दिव्ये नियोज्या विनये तथा ॥

इति । कार्षापणान्तग्रहणं निष्कप्रमाणे तु नायं नियम इति प्रतिपादनार्थम् । तेन निष्कान्तरेण दिव्यं किंचिदुत्तरत्रोच्यमानमविरुद्धम् ।

इति स्मृतिचन्द्रिकायां अभियोगाल्पत्वमहत्त्वज्ञानोपयोगीनि ॥

---

## अथ धनपरिमाणतो दिव्यव्यवस्था.

तत्र कात्यायनः—

दत्तस्यापह्नवो यत्र प्रमाणं तत्र कल्पयेत् ।

इति । अपह्नवोऽपलापः । कथं कल्पयेदित्यपेक्षिते स एवाह—

सर्वं द्रव्यप्रमाणं तु ज्ञात्वा हेम प्रकल्पयेत् ।
हेमप्रमाणयुक्तं तु तदा दिव्यं नियोजयेत् ॥

ज्ञात्वा सङ्ख्यां सुवर्णस्य शतनाशे विषं स्मृतम् ।
अशीतेस्तु विनाशे वै दद्याच्चैव हुताशनम् ॥

षष्ट्या नाशे जलं देयं चत्वारिंशति वै धटम् ।
विंशद्दशविनाशे तु कोशपानं विधीयते ॥

पञ्चाधिकस्य वै नाशे तदर्धार्धस्य तण्डुलाः ।
तदर्धार्धविनाशे तु स्पृशेत्पुत्रादिमस्तकम् ॥

तदर्धार्धविनाशे तु लौकिक्यश्च क्रियास्स्मृताः ।

इति।सर्वत्र विनाशशब्दस्यापह्नवार्थता प्रत्येतव्या । 'दत्तस्यापह्नवो यत्र' इत्युपक्रान्तत्वात् । विंशद्दशविनाशे त्रिंशद्विनाशे विंशद्विनाशे वेत्यर्थः । पञ्चभ्योऽधिकः पञ्चाधिकष्षट्प्रभृतिरिति यावत् । तदर्धार्धस्य सार्धसुवर्णप्रसृतेर्विनाशे तण्डुलाः । तदर्धार्धविनाशे त्वष्टांशोनसुवर्णार्धप्रसृतेर्विनाशे पुत्रदाराशिरस्स्पर्शनम् । तदर्धार्धविनाशे तु सार्धसप्तकृष्णलप्रसृतेर्विनाशे तु द्रव्याष्टगुणवचनादयो लौकिकाश्शपथाः । चशब्दस्स्मार्तशब्दानां सङ्ग्रहार्थः। अत एव विष्णुः—"सर्वेष्वेवार्थजातेषु मूल्यं कनकं कल्पयेत्तत्र कृष्णलोने शूद्रं दूर्वाकरं शापयेत्, द्विकृष्णलोने तिलकरं, त्रिकृष्णलोने रजतकरं, चतुःकृष्णलोने सुवर्णकरं, पञ्चकृष्णलोने सीरोद्धृतमहीकरं, द्विगुणेऽर्थे यथाऽभिहिता समयक्रिया वैश्यस्य, त्रिगुणेऽर्थे राजन्यस्य, चतुर्गुणेऽर्थे ब्राह्मणस्य" इति । सीरोद्धृतमहीकरं लाङ्गलोद्धृतहस्तमित्यर्थः । ऊनग्रहणं अधिके शापविनिवृत्त्यर्थम् । शापे तु विशेषमाह मनुः—

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।
गोबीजकाञ्चनैर्वैश्यं शूद्रं सर्वैस्तु पातकैः ॥

अस्यार्थः—यद्यहमर्थापह्नवी स्यां तदा सत्याभिधानधर्मो मम निष्फलस्स्यादिति शपथकारिणं ब्राह्मणं वाचयेत् । एवं क्षत्रियादीन्, सत्याभिधानधर्मो मम निष्फलस्स्यादित्यस्य स्थाने वाहनायुधानि मम निष्फलानि स्युरिति क्षत्रिये । गोबीजकाञ्चनानि निष्फलानि स्युरिति वैश्ये । सर्वाणि पातकानि मम स्युरिति शूद्रे विशेष इति । पादस्पर्शादीनां विषयः स्मृत्यन्तरे दर्शितः—

निष्के तु सत्यवचनं द्विनिष्के पादलम्भनम् ।
ऊनत्रिके तु पुष्पं स्यात् कोशपानमतः परम् ॥

निष्कशब्देनात्र काञ्चनकर्षचतुर्थांशो मुद्रामुद्रितः प्रतिपाद्यते। तत्रापि क्वचिद्देशे निष्कस्य व्यवहारात् । ननु मनूक्तो माषादिः दिव्यादिविषये ग्रहीतव्य इति नियमान्न व्यावहारिकनिष्कप्रतिपादनं युक्तम्। मैवम्, निष्के मनूक्तग्रहणनियमो नास्तीत्युक्तत्वात्। किंच तत्र मनूक्तनिष्कस्य राजतपलात्मकस्य मूल्यं काञ्चनकार्षार्धादधिकं भवति । तत्र सत्यवचनविधौ 'चतुर्गुणेऽर्थे ब्राह्मणस्य' इति विष्णुवचनविरोधः स्यात् । चतुर्गुणस्य हि कृष्णलपञ्चकस्य कर्षचतुर्थांशत्वात् । तस्माद्व्यावहारिकनिष्काश्रयेण सत्यवचनादिव्यवस्थोक्तेति मन्तव्यम् । पारिशेष्यादिष्टापूर्तादिसुकृतदानं, जातिशपथविषयादधिके धर्मजादिव्यविषयादूने धनेऽवगन्तव्यम्। धर्मजस्य तु विषयमाह बृहस्पतिः—

शते हृतेऽपह्नुते च दातव्यं धर्मशोधनम् ।

इति । कार्षापणशतप्रभृति निकृष्टस्य, द्विशतप्रभृति मध्यमस्य, चतुश्शतप्रभृत्युत्तमस्य, धर्मजं दिव्यं भवतीत्यर्थः ।

एषा सङ्ख्या निकृष्टानां मध्यानां द्विगुणा स्मृता ।
चतुर्गुणोत्तमानां तु,

इति तेनैवाभिधानात् । कार्षापणमूल्यं व्यावहारिकनिष्कस्याशीतितमो भागो भवति । कृष्णलं तु व्यावहारिकनिष्कस्य त्रिंशतितमो भागः। सुवर्णः पुनर्व्यावहारिकनिष्कचतुष्कं भवति । एवं च सर्वदिव्यानां व्यावहारिकनिष्कतो व्यवस्थैवं वेदितव्या। चतुश्शतानिष्कप्रभृति विषं, विंशत्युत्तरत्रिशतनिष्कप्रभृत्यग्निः, चत्वारिंशदुत्तरद्विशतनिष्कप्रभृति जलं, षष्ट्युत्तरशतनिष्कप्रभृति धटः । विंशत्युत्तरशतनिष्कप्रभृति महाभियोगविहितः कोशः। स एव कोशः अशीतिनिष्कप्रभृति वा चत्वारिंशन्निष्कप्रभृति वा चतुर्विंशतिनिष्कप्रभृति वा भवति । षण्णिष्कप्रभृति तण्डुलाः । पञ्चनिष्कप्रभृत्युत्तमस्य धर्मजं दिव्यम्, त्रिनिष्कप्रभृत्यल्पाभियोगविहितः कोशः, किञ्चिदूनत्रिनिष्कप्रभृति पुष्पम्, सार्धद्विनिष्कप्रभृति धर्मजं दिव्यं, मध्यमस्य द्विनिष्कप्रभृति देवताप्रतिमायाः पितुर्ब्राह्मणस्य पादस्पर्शनम् । सार्धनिष्कप्रभृति पुत्रदारशिरस्स्पर्शनम् । पादाधिकनिष्कप्रभृति निकृष्टस्य मध्यमं दिव्यं, निष्कप्रभृतीष्टापूर्तादिसुकृतदानं, निष्कदशमांशचतुष्टयप्रभृति लौकिकाः शपथाः निष्कविंशतितमांशप्रभृति जातिशपथाः । तेषु

दूर्वाकरत्वादिधर्माः यथाविष्णुवचनं बोद्धव्याः। सैषा व्यवस्था धर्मजेतरेषां घटादीनां न धनापहारविषये कल्पनीया। प्रकारान्तरेण धनापहारविषये तेषां यतो व्यवस्थामाह बृहस्पतिः—

विषं सहस्रेऽपहृते पादोने च हुताशनः।
त्रिभागोने च सलिलमर्धे देयो घटस्सदा॥
चतुश्शताभियोगे तु दातव्यस्तप्तमाषकः।
त्रिशते तण्डुला देयाः कोशश्चैव तदर्धके॥
शते हृतेऽपह्नुते च दातव्यं धर्मशोधनम्।
गोचरस्य प्रदातव्यं सभ्यैः फालं प्रयत्नतः॥
एषा सङ्ख्या निकृष्टानां मध्यानां द्विगुणा स्मृता।
चतुर्गुणोत्तमानां तु कल्पनीया परीक्षकैः॥

इति। अत्र महाभियोगे नियतघटस्य पञ्चशतादिकार्षापणापहारेऽभिधानात्तदादिकार्षापणसम्बन्ध्यभियोगो महाभियोगस्तदादिकोन्यूनकार्षापणसम्बन्धी त्वल्पाभियोग इत्यवगन्तव्यम्। अत एव संग्रहकारः—

ऋणं वा यदि वा दण्डः प्रायश्चित्तमथापि वा।
यत्र पञ्चशतादिः स्यात्तत्कार्यं गुरु कीर्त्यते॥
यत्रारभ्य दशभ्यस्त्वेतान्या सैकचतुश्शतात्।
कार्यं तल्लघु निर्दिष्टं स्मृतितन्त्रविशारदैः॥

इति। आ सैकचतुश्शतादापञ्चशतादित्यर्थः। ऋणमिति विवादा-

स्पदं धनमनास्थयोक्तम्। अधनाभियोगमहत्त्वाल्पत्वे तत्र विहित-दण्डधनप्रायश्चित्तप्रसान्मानधनयोरन्यतरसङ्ख्यया प्रत्येतव्ये इति तात्पर्यार्थः। यत्तु याज्ञवल्क्येनोक्तं—

नासहस्राद्धरेत् फालं न विषं न तुलां तथा।

इति, तच्चारित्रादितो मध्यमपुरुषा ये भवन्ति तेषां प्रतिषेधार्थम्। अधमानां सहस्रादर्वागपहारेऽपह्नवे वा महाभियोगाभावात्। एवंचोत्तमानां द्विसहस्रादर्वागल्पाभियोगत्वाद्धटादिप्रतिषेधोऽव-गन्तव्यः। यत्पुनः पितामहेनोक्तम्—

सहस्रे तु धटं दद्यात् सहस्रार्धे तथाऽऽयसम्।
अर्धस्यार्धे तु सलिलं तस्यार्धे तु विषं स्मृतम्॥

इति, तत् प्राग्दृष्टदोषपुरुषविषयम्। यदाह विष्णुः—
'प्राग्दृष्टदोषं स्वल्पेऽप्यर्थे दिव्यानामन्यतममेव कारयेत्' इति। एवं चोत्तमस्यापि प्राग्दृष्टदोषस्य सहस्रे चतुर्गुणात् स्वल्पेऽर्थे धटो भवतीति पितामहवचनस्य तात्पर्यार्थः प्रत्येतव्यः। एवं नृपद्रोहेषु महापातकाभियोगे च स्वल्पेऽप्यर्थे दिव्यानि भवन्तीत्याह याज्ञवल्क्यः—

नृपार्थेष्वभिशापे च वहेयुश्शुचयस्सदा।

इति। विष्णुरपि—
'अथ समयक्रिया राजद्रोहे साहसेषु यथाकामम्' इति। समय-क्रिया धटादिदिव्यकरणम्। तथा च गोबलीवर्दन्यायेन धटादि-कमेवात्राह बृहस्पतिः—

एते तु शपथाः प्रोक्ताः स्वल्पेऽर्थे सुकरास्सदा ।

साहसेष्वभिशापेषु दिव्यान्याहुर्विशोधनम् ॥

इति । एवंच साहसादौ सत्यादयः शपथाः कदाचिदपि न भवन्तीति मन्तव्यम् । अपहारेऽपि व्यावहारिकनिष्कसङ्ख्यया व्यवस्था व्याख्यास्यते—

उत्तमस्य पुरुषस्य पञ्चाशन्निष्कप्रभृति विषम्, निष्कार्धाधिकसप्तत्रिंशन्निष्कप्रभृत्यग्निः, यवोनसप्तकृष्णलाधिकत्रयस्त्रिंशन्निष्कप्रभृति जलम्, पञ्चविंशन्निष्कप्रभृति धटः, विंशतिनिष्कप्रभृति तप्तमाषः, पञ्चदशनिष्कप्रभृति तण्डुलाः, निष्कार्धाधिकसप्तनिष्कप्रभृति कोशः, पञ्चनिष्कप्रभृति धर्मजं दिव्यम्, गोव्यक्तिचतुष्टयप्रभृति फालम् ।

मध्यमस्य तु पुरुषस्य पञ्चविंशतिनिष्कप्रभृति विषम्, सपादनिष्कोनविंशतिनिष्कप्रभृत्यग्निः, यवसहितत्रयोदशकृष्णलाधिकषोडशनिष्कप्रभृति जलम्, निष्कार्धाधिकद्वादशनिष्कप्रभृति धटः, दशनिष्कप्रभृति तप्तमाषः, निष्कार्धाधिकसप्तनिष्कप्रभृति तण्डुलाः,निष्कपादोनचतुर्निष्कप्रभृति कोशः, सार्धद्विनिष्कप्रभृति धर्मजं दिव्यं, गोव्यक्तिद्वयप्रभृति फालम् ।

निकृष्टस्य तु पुरुषस्य सार्धद्वादशनिष्कप्रभृति विषम्, सार्धसप्तकृष्णलाधिकनवतिनिष्कप्रभृत्यग्निः, यवोनसप्तकृष्णलाधिकाष्टनिष्कप्रभृति जलं, सपादषण्णिष्कप्रभृति धटः, पञ्चनिष्क-

प्रभृति तप्तमाषः, पादोनचतुर्निष्कप्रभृति तण्डुलाः, पादार्धोन द्विनिष्कप्रभृति कोशः, सपादनिष्कप्रभृति धर्मजं दिव्यम्, एक गोव्यक्तिप्रभृति फालम्।

प्राग्दृष्टदोषाणामुक्तावधिभ्योऽल्पधनेऽपि तत्तद्दिव्यंदेयम्। नृपद्रोहाभिशापसाहसेषु च तथैव देयम्। सत्यादिपुष्पादिशपथानां तु व्यवस्थाविशेषस्य अत्रादर्शनादपह्नव इव व्यवस्थाऽऽस्थेया, विष्णुवचने स्मृत्यन्तरवचनेचापह्नव इति विशेषस्मरणाच्चेति॥

इति स्मृतिचन्द्रिकायां धनपरिमाणतो दिव्यव्यवस्था.

---

## अथ विवादिजात्यादितो व्यवस्था.

तत्र बृहस्पतिः—

ऋणादिकेषु कार्येषु विसंवादे परस्परम्।
द्रव्यसङ्ख्यान्विता देया पुरुषापेक्षया तथा॥

पुरुषापेक्षया विवादिनोर्जात्याद्यपेक्षयेत्यर्थः। तत्र जात्यपेक्षया व्यवस्थामाह नारदः—

ब्राह्मणस्य धटो देयः क्षत्रियस्य हुताशनः।
वैश्यस्य सलिलं देयं शूद्रस्य विषमेव तु॥
साधारणस्समस्तानां कोशः प्रोक्तो मनीषिभिः॥

इति। अनित्या चेयं व्यवस्था। यदाह कात्यायनः—

सर्वेषु सर्वदिव्यं वा विषवर्जं द्विजोत्तमे।

इति। लिङ्गसामर्थ्याभाववयोभ्योपि व्यवस्थामाह नारदः—

क्लीबातुरान् सत्यहीनान् परितश्चार्दितान्नरान्।

बालवृद्धस्त्र्यन्धकांश्च परीक्षेत घटे सदा ॥

नित्या त्वियं व्यवस्था, सदेत्यभिधानात्। घटग्रहणमग्न्यम्बुविषाणां परिसङ्ख्यानार्थं, न पुनः कोशादेरपि। यदाह स एव—

स्त्रीणां तु न विषं प्रोक्तं न चापि सलिलं स्मृतम्।
घटकोशादिभिस्तासामन्तस्तत्त्वं विचारयेत् ॥

इति। घटकोशादिभिरिति वदन्नग्नेरपि प्रतिषेधं दर्शयति। दर्शितं च साक्षादपि तेन—

न मज्जनीयं स्त्रीबालं धर्मशास्त्रविचक्षणैः।
रोगिणो येच वृद्धाः स्युः पुमांसो ये च दुर्बलाः ॥
साहसेऽप्यागतानेतान्नैव तोये निमज्जयेत्।
न चापि हारयेदग्निं न विषेण विशोधयेत् ॥

इति। यत्पुनः पितामहेनोक्तं—

सव्रतानां कृशाङ्गानां बालवृद्धतपस्विनाम्।
स्त्रीणां तु न भवेद्दिव्यं यदि धर्मस्त्ववेक्ष्यते ॥

इति, तदग्न्यम्बुविषयं, घटकोशादीनामपि प्रतिषेधे पूर्वोक्तवचनविरोधात्। एवंच क्लीबादीनामग्न्यम्बुविषवर्ज्यानि दिव्यानि भवन्तीत्यनुसन्धेयम्। तथा लोहकारादीनामपि न सर्वाणि दिव्यानि भवन्तीत्याह कात्यायनः—

न लोहशिल्पिनामग्निं सलिलं नाम्बुसेविनाम्।
मन्त्रयोगविदां चैव विषं दद्याच्च न क्वचित् ॥
तण्डुलैर्न नियुञ्जीत प्राणिनं मुखरोगिणम् ॥

इति । पितामहोपि—

कुष्ठिनां वर्जयेदग्निं सलिलं श्वासकासिनाम् ।
पित्तश्लेष्मवतां नित्यं विषं तु परिवर्जयेत् ॥
मद्यपस्त्रीव्यसनिनां कितवानां तथैव च ।
कोशः प्राज्ञैर्न दातव्यो ये च नास्तिकवृत्तयः ॥

इति । नारदोपि—

महापराधे निर्धर्मे कृतघ्ने क्लीवकुत्सिते ।
नास्तिके दृष्टदोषे च कोशदानं विवर्जयेत् ॥

महापराधे पूर्वसिद्धमहापराधशालिनीत्यर्थः । एवञ्च क्लीवस्य अग्न्यादिवत् कोशोपि वर्ज्य इत्यनुसन्धेयम् । यत्पुनः कात्यायनेनोक्तं—

मातापितृद्विजगुरुवालस्त्रीराजघातिनाम् ।
महापातकयुक्तानां नास्तिकानां विशेषतः ॥
लिङ्गिनां प्रशठानां तु मन्त्रयोगक्रियाविदाम् ।
वर्णसङ्करजातानां पापाभ्यासप्रवर्तिनाम् ॥
एतेष्वेवाभियोगेषु निन्द्येष्वेव च यत्नतः ।
दिव्यं प्रकल्पयेन्नैव राजा धर्मपरायणः ॥

इति, तत्तेषां साक्षाद्दिव्यकर्तृत्वनिषेधार्थं, न पुनर्दिव्येन परीक्षायाः । यतोऽनन्तरमेवोक्तं तेनैव—

एतैरेव नियुक्तानां साधूनां दिव्यमर्हति ।

नेच्छन्ति साधवो यत्र तत्र शोध्यस्स्वकैर्नरैः ॥

इति । दिव्यमर्हति राजा कल्पयितुमिति शेषः । तथाच स एव—

एषु वादेषु दिव्यानि प्रतिषिद्धानि यत्नतः ।
कारयेत् स्वजनैस्तानि नाभिशप्तं त्यजेन्मनुः ॥

त्यजेत् उक्तप्रकारेण विशोधयेदिति शेषः । यत्पुनस्तेनोक्तं—

अस्पृश्यधनदासानां म्लेच्छानां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां निश्चयो न तु राजनि ॥
तत्प्रसिद्धानि दिव्यानि संशये तेषु निर्दिशेत् ।

इति, तत्तैर्नियुक्तस्वजनालाभविषयमित्यवगन्तव्यम् ।

इति स्मृतिचन्द्रिकायां विवादिजात्यादितो दिव्यव्यवस्था

---

## अथर्तुतो दिव्यव्यवस्था

तत्र पितामहः—

धटस्सर्वर्तुकः प्रोक्तो वाते वाति विवर्जयेत् ।
अग्निश्शिशिरहेमन्तवर्षासु परिकीर्तितः ॥
शरद्ग्रीष्मे तु सलिलं हेमन्ते शिशिरे विषम् ॥

इति । धटग्रहणं कोशस्यापि प्रदर्शनार्थम् । कोशस्तु सर्वदा देयः 'तुला स्यात्सार्वकालिकी' इति नारदस्मरणात् । कोशग्रहणं तण्डुलप्रभृतीनां प्रदर्शनार्थमित्युक्तं तद्व्याख्यातृभिः । तेनाग्नचम्बु-

विषाणामेवर्तुतो व्यवस्था। अत एव तेषामेव ऋत्वन्तरप्रतिषेधस्तेन दर्शितः—

न शीते तोयसिद्धिस्स्यात् नोष्णकालेऽग्निशोधनम्।
न प्रावृषि विषं दद्यात्प्रवाते न तुलां नृपः॥

इति। प्रवाते वातातिशय इत्यर्थः। विष्णुरपि—
'न कुष्ठ्यसमर्थलोहकाराणामग्निर्देयः, शरद्ग्रीष्मयोश्च न कुष्ठिपैत्तिकब्राह्मणानां विषं देयं, प्रावृषि च न श्लेष्मव्याध्यर्दितानां भीरूणां श्वासकासिनामम्बुजीविनां चोदकं, हेमन्तशिशिरयोश्च न नास्तिकेभ्यः कोशो देयः व्याधिमरणोपस्पृष्टे च' इति। हेमन्तग्रहणं पुष्यमासस्य प्रतिषेधार्थं, न पुनर्मार्गशीर्षस्यापि, तस्य शीतातिशयाभावेनोदकदिव्यविरोधित्वाभावात्। अत्र पितामहः—

चैत्रो मार्गशिराश्चैव वैशाखश्च तथैव च।
एते साधारणा मासा दिव्यानामविरोधिनः॥

इति। अत एते मासास्सर्वदिव्यकाला भवन्तीत्यर्थः।

इति स्मृतिचन्द्रिकायां ऋतुतो दिव्यव्यवस्था.

---

## अथ दिव्यदेशाः.

तत्र पितामहः—

प्राङ्मुखो निश्चलः कार्यः शुचौ देशे धटस्सदा।
इन्द्रस्थाने सभायां वा राजद्वारे चतुष्पथे॥

इन्द्रस्थानं प्रख्यातदेवतायतनम् । 'सभा राजकुलद्वारदेवायतन-चत्वरे' इति नारदस्मरणात् । अत्रव्यवस्थामाह कात्यायनः—

इन्द्रस्थानेऽभिशस्तानां महापातकिनां नृणाम् ।
नृपद्रोहप्रवृत्तानां राजद्वारे प्रयोजयेत् ॥
प्रातिलोम्यप्रसूतानां दिव्यं देयं चतुष्पथे ।
अतोऽन्येषु तु कार्येषु सभामध्ये विदुर्बुधाः ॥

इति । दिव्यमिति सामान्येनाभिधानात् धटस्यैवेयं देशव्यवस्था, किंत्वनुक्तदेशविशेषाणामन्येषामपीत्यवगन्तव्यम् । विहितदेशाद्य-नादरे दिव्यप्रामाण्यहानिर्भवतीत्याह स एव—

अदेशकालदत्तानि बहिर्वासकृतानि च ।
व्यभिचारं सदाऽर्थेषु कुर्वन्तीह न संशयः ॥

वासः निवासः जनस्थानं, तस्माद्बहिः निर्जनप्रदेश इति यावत् । अनेन जनसमक्षमेव दिव्यानि देयानीत्यर्थादुक्तम् । उक्तं च पितामहेन—

प्रत्यक्षं दापयेद्दिव्यं राजा वाऽधिकृतोपि वा ।
ब्राह्मणानां श्रुतवतां प्रकृतीनां तथैव च ॥

अधिकृतः प्राड्विवाकः ।

इति स्मृतिचन्द्रिकायां दिव्यदेशाः.

---

## अथ घटनिर्माणविधिः.

तत्र नारदः—

खादिरं कारयेत्तत्र निर्व्रणं शुक्लवर्जितम् ।
शिंशुपां तदलाभे तु सालं वा कोटरैर्विना ॥
अञ्जनस्तिन्दुकीसारं निमिशो रक्तचन्दनम् ।
एवंविधानि काष्ठानि घटार्थं परिकल्पयेत् ॥

इति । एवंविधानीति वदन् पूर्वोक्तानामलाभे यज्ञियं वृक्षान्तरमपि भवतीति दर्शयति । दर्शितं च पितामहेन—

छित्वा तु यज्ञियं वृक्षं विधिवन्मन्त्रपूर्वकम् ।
प्रणम्य लोकपालेभ्यस्तुला कार्या मनीषिभिः ॥
मन्त्रस्सौम्यो वानस्पत्यश्छेदने जप्य एव तु ।

इति । सौम्यवानस्पत्ययोर्विकल्पः तुल्यकार्यत्वादिति कैश्चिदुक्तम् । तुलाग्रहणं तत्परिकरस्यापि प्रदर्शनार्थं, तेन पादस्तम्भाद्यर्थमपि वृक्षच्छेदनं कार्यम् । अत एव सपरिकरायास्तुलायाः प्रमाणमुक्तं तेनैव—

चतुर्हस्ता तुला कार्या पादौ कार्यौ तथाविधौ ।
अन्तरं तुलयोर्हस्तौ भवेदध्यर्ध एव वा ॥

पादौ तुलाधारकाष्ठाधारार्थौ स्तम्भौ, तथाविधौ चतुर्हस्तप्रमाणावित्यर्थः । एतच्च पादयोः प्रमाणं निखननीयहस्तद्वयादुपरितनभागस्य वेदितव्यम् । अतो निखननीयभागेन सह षड्ढस्तौ भवतः । तथाच व्यासः—

हस्तद्वयं निखेयं तु प्रोक्तं मुण्डकयोर्द्वयोः ।

षड्ढस्तं तु तयोः प्रोक्तं प्रमाणं परिमाणतः ॥

अक्षस्य तु प्रमाणं पादयोरन्तरालाभिधानेनैवार्थसिद्धमिति न पृथगुक्तम् । तेन पादस्तम्भमस्तकदेशात् बहिरनिस्सृतो यथा-भवति तथा हस्तद्वयात् सार्धहस्ताद्वाऽभ्यधिकोक्षः कार्य इत्यवग-न्तव्यम् । हस्तः पुनश्चतुर्विंशत्यङ्गुल इति स्मृत्यन्तरे दर्शितः—

तिर्यग्यवोदराण्यष्टावूर्ध्वा वा व्रीहयस्त्रयः ।

प्रमाणमङ्गुलस्योक्तं वितस्तिर्द्वादशाङ्गुला ॥

हस्तो वितस्तिद्वितयम् .

इति । यावति तु स्थौल्ये कृते दार्ढ्यं भवति तावत् स्थौल्यं तुलादीनां कार्यं, विशेषास्मृतेः । आचाराद्वा विशे-षस्स्थौल्ये वेदितव्यः । तुलायां त्वपरे विशेषाः पितामहेन दर्शिताः—

चतुरश्रा तुला कार्या दृढा ऋज्वी तथैव च ।

कटकानि च देयानि त्रिषु स्थानेषु यत्नतः ॥

कटकानि लोहवलयानि । त्रिषु स्थानेषु उपान्तयोर्मध्ये च । कटकानीत्ययोमयानामन्येषामप्युपलक्षणार्थं, तेनोपान्तयोराय-सकीलकौ शिक्यपाशधारणार्थाविषुवद्वक्राग्रौ कर्कटकशृङ्गसंनिभौ देयौ । मध्ये त्वायसपाशोऽक्षकाष्ठे तुलायोजनार्थो देयः । तथाच नारदः—

चतुरश्रा स्थितिस्थानैर्धटकर्कटकादिभिः ।

इति । धटशब्देनात्र तुलामध्यसम्बन्धी पाशो लक्ष्यते । कर्कटकशब्देनात्र उपान्त्यकीलकौ सादृश्यादुच्येते । तेनायमर्थः—अयोमयैः पाशप्रभृतिभिः स्थितिहेतुभिस्तुलायां भवितव्यमिति । आदिशब्देनाक्षमध्येऽप्येकेन कर्कटकेन भवितव्यमिति दर्शयति । तथा स्तम्भादिस्थापनप्रकारोपि तेन दर्शितः—

दक्षिणोत्तरसंस्थानावुभावेकाग्र (कत्र) संयतौ ।

अन्तौ कृत्वा समे देशे तयोस्संस्थापयेत्तुलाम् ॥

अस्यार्थः—

समायां भूमौ दक्षिणोत्तरभावेन स्थितयोः पादस्तम्भयोरुभावन्तौ एकत्र अक्षकाष्ठे संघाटितौ कृत्वा तयोः घटकाक्षकाष्ठमध्ये तुलां स्थापयेदिति । स्थापनं च तत्र कथं कार्यमित्यपेक्षिते स एवाह—

आयसेन तु पाशेन मध्ये संगृह्य धर्मवित् ।

योजयेत्तु सुसंयुक्तां तुलां प्रागपरायताम् ॥

प्रागपरायतां पूर्वपश्चिमदीर्घामित्यर्थः । प्रागग्रता च कार्येत्याह पितामहः—

प्राङ्मुखो निश्चलः कार्यश्शुचौ देशे घटस्सदा ।

इति । निश्चलत्वसिध्यर्थमाह नारदः—

हस्तद्वयं निखेयं तु पादयोरुभयोस्तथा ।

इति । तथेति वदन् अन्यदपि किंचिद्धटाङ्गभूतं तोरणादिकं कार्यमिति दर्शयति । दर्शितं च पितामहेन—

तोरणे तु तथा कार्ये पार्श्वयोरुभयोरपि ।
घटादुच्चतरे स्यातां नित्यं दशभिरङ्गुलैः ॥
अवलम्बौ च कर्तव्यौ तोरणाभ्यामधोमुखौ ।
मृन्मयौ सूत्रसम्बद्धौ घटमस्तकचुम्बकौ ॥
घटं तु कारयेन्नित्यं पताकाध्वजशोभितम् ।
विशालामुच्छ्रितां शुभ्रां घटशालां तु कारयेत् ॥
यत्रस्थो नोपहन्येत बहिश्चण्डालवायसैः ।
तत्रैव लोकपालादीन् सर्वदिक्षु निवेशयेत् ॥
त्रिसन्ध्यं पूजयेच्चैनान् गन्धमाल्यानुलेपनैः ।
कवाटबीजसंयुक्तां परिचारकरक्षिताम् ॥
मृत्पानीयाग्निसंयुक्तामशून्यां कारयेन्नृपः ॥

इति । अत्र शालारचनादिकं घटधारणप्रयुक्तमेव नोत्पत्तिप्रयुक्तमिति, धारणानिच्छायामननुष्ठेयमेवेति कैश्चिदुक्तम् ॥

इति स्मृतिचन्द्रिकायां घटनिर्माणविधिः.

---

## अथ सर्वदिव्यसाधारणविधिः.

तत्र बृहस्पतिः—

स्नेहात्क्रोधाल्लोभतो वा भेदमायान्ति साक्षिणः ।
विधिदत्तस्य दिव्यस्य न भेदो जायते क्वचित् ॥

अतो दिव्यं विधिवद्देयमित्यभिप्रायः । विधिश्च पितामहेन दर्शितः—

दिव्येषु सर्वकार्याणि प्राड्विवाकस्समाचरेत् ।
अध्वरेषु यथाऽध्वर्युस्सोपवासो नृपाज्ञया ॥

सर्वकार्याणि साधारणान्यसाधारणानि चेत्यर्थः । तत्र साधारणानि तेनैव दर्शितानि—

तत आवाहयेद्देवान्विधिनाऽनेन धर्मवित् ।

इति । अनेन वक्ष्यमाणेनेत्यर्थः । तमेव विधिं दर्शयति—

प्राङ्मुखः प्राञ्जलिर्भूत्वा प्राड्विवाकस्ततो वदेत् ।
एह्येहि भगवन् धर्म अस्मिन् दिव्ये समाविश ।
सहितो लोकपालैश्च वस्वादिसमरुद्गणैः ॥

इति । ततः दिव्योपकल्पनानन्तरमित्यर्थः । अस्मिन् दिव्य इति मन्त्रलिङ्गात्,

आवाह्य तु घटे धर्मं पश्चादङ्गानि विन्यसेत् ।

इति तेनैवाभिधानाच्च । घटग्रहणमुपकल्पितदिव्योपलक्षणार्थं, सर्वदिव्येषु धर्मावाहनस्याङ्गविन्यासस्य च वक्ष्यमाणत्वात् । अङ्गानि विन्यसेदित्यस्यार्थः तेनैव दर्शितः—

इन्द्रं पूर्वे तु संस्थाप्य प्रेतेशं दक्षिणे तथा ।
वरुणं पश्चिमे भागे कुबेरं चोत्तरे तथा ॥
अग्न्यादिलोकपालांश्च कोणभागेषु विन्यसेत् ।
इन्द्रः पीतो यमश्श्यामो वरुणः स्फटिकप्रभः ॥
कुबेरस्तु सुवर्णाभः ह्यग्निश्चापि सुवर्णभः ।
तथैव निरृतिश्श्यामो वायुर्धूम्रः प्रशस्यते ॥

ईशानस्तु भवेद्रक्त एवं ध्यायेत्क्रमादिमान् ।
इन्द्रस्य दाक्षिणे पार्श्वे वसूनावाहयेद्बुधः ॥

धरो ध्रुवस्तथा सोम आपश्चैवानिलोऽनलः ।
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्तिताः ॥

देवेशेशानयोर्मध्य आदित्यानां तथाऽयनम् ।
धाताऽर्यमा च मित्रश्च वरुणोंऽशुर्भगस्तथा ॥

इन्द्रो विवस्वान् पूषा च पर्जन्यो दशमः स्मृतः ।
ततस्त्वष्टा ततो विष्णुरजघन्यो जघन्यजः ॥

इत्येते द्वादशादित्या नामाभिः परिकीर्तिताः ।
अग्नेः पश्चिमभागे तु रुद्राणामयनं विदुः ॥

वीरभद्रश्च शम्भुश्च गिरिशश्च महायशाः ।
अजैकपादाहिर्बुध्न्यः पिनाकी चापराजितः ॥

भुवनाधीश्वरश्चैव कपाली च विशांपतिः ।
स्थाणुर्भगश्च भगवान् रुद्रास्त्वेकादश स्मृताः ॥

प्रेतेशरक्षोमध्ये च मातृस्थानं प्रकल्पयेत् ।
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ॥

वाराही चैव माहेन्द्री चामुण्डा गणसंयुता ।
निर्ऋतेरुत्तरे भागे गणेशायतनं विदुः ॥

वरुणस्योत्तरे भागे मरुतां स्थानमुच्यते ।
गगनस्पर्शनो वायुरनिलो मारुतस्तथा ॥

प्राणः प्राणेशजीवौ च मरुतोऽष्टौ प्रकीर्तिताः ।
घटस्योत्तरभागे तु दुर्गामावाहयेद्बुधः ॥

इति । अत्रापि पूर्ववद्घटग्रहणमुपकल्पितादेव्योपलक्षणार्थम् । एवं यथास्थानमावाहितानां देवानां पूजनं कुर्यात् । तथाच स एव—

एतासां देवतानां तु स्वनाम्ना पूजनं विदुः ।

इति । तत्र च क्रममाह स एव—

भूषावसानं धर्माय दत्वा चार्घ्यादिकं क्रमात् ।
अर्घ्यादि पश्चादङ्गानां भूषान्तमुपकल्पयेत् ॥

अङ्गानां इन्द्रादिदुर्गान्तानामित्यर्थः । तेषामर्घ्याद्युपकल्पनं पदार्थानुसमयेन कार्यं, न काण्डानुसमयेन, तथात्वे प्रयोगवचनावगतसहत्वबाधापत्तेः । दुर्गायै भूषणं दत्वा धर्मस्येन्द्रादिदुर्गान्तानां च गन्धादिपरिचर्यां पूर्ववत्कुर्यात् । तथाच स एव—

गन्धादिकां निवेद्यान्तां परिचर्यां प्रकल्पयेत् ।

इति । ततश्चतसृषु दिक्षु चतुर्भिर्होमः कर्तव्यः । तथाच स एव—

चतुर्दिक्षु तथा होमः कर्तव्यो वेदपारगैः ।
आज्येन हविषा चैव समिद्भिर्होमसाधनैः ॥
सावित्र्या प्रणवेनाथ स्वाहान्तेनैव होमयेत् ।

इति । लौकिकमग्निं चतुर्दिक्षु प्रतिष्ठाप्यैकैकस्यां दिश्येकैकः ऋत्विक् समिदाज्यचरून् प्रत्येकमष्टोत्तरशतं तत्सवितुरिति

मन्त्रेणोभयतः प्रणवेन स्वाहाकारान्तेन जुहुयादित्यर्थः। यद्य-
प्यत्र सङ्ख्या नोक्ता, तथाऽपि,–

अनुक्तसङ्ख्या यत्र स्याच्छतमष्टोत्तरं स्मृतम्।

इति स्मृत्यन्तरात् सिद्धेत्यवधेयम्। एतत्सर्वं पूर्वाह्णे कर्तव्यं तस्य प्रधानकालत्वात्। तथाच नारदः—

अहोरात्रोषिते स्नाते आर्द्रवाससि मानवे।
पूर्वाह्णे सर्वदिव्यानां प्रदानमनुकीर्तितम्॥

यत्तु याज्ञवल्क्येनोक्तं—

सचेलस्नातमाहूय सूर्योदय उपोषितम्।
कारयेत्सर्वदिव्यानि नृपब्राह्मणसंनिधौ॥

इति। तत्र सूर्योदयपदेन पूर्वाह्ण एव वचोभङ्ग्या विहित इत्यवगन्तव्यम्। पूर्वाह्णश्चादित्यवारान्वित एव ग्राह्यः, शिष्टाचारबलात्। होमादनन्तरं पितामहः—

यं चार्थमभियुक्तस्याल्लिखित्वा तं तु पत्रके।
मन्त्रेणानेन सहितं तत्कार्यं तु शिरोगतम्॥

अनेन वक्ष्यमाणेनेत्यर्थः। तमेव मन्त्रं दर्शयति—

आदित्यचन्द्रावनिलोऽनलश्च
द्यौर्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये
धर्मश्च जानाति नरस्य वृत्तम्॥

इति । अयं च विधिः सर्वदिव्यसाधारण इत्याह स एव—

इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत् ।
आवाहनं च देवानां तथैव परिकीर्तितम् ॥

धर्मावाहनादि शोध्यशिरसि पत्रारोपणान्तं सर्वदिव्येषु कर्तव्यमित्यर्थः । तथा सर्वदिव्येषु प्रयोगावसाने ऋत्विगादिभ्यो दक्षिणां तुष्टिकरीं दद्यात् ॥ तथाच स एव—

ऋत्विक्पुरोहिताचार्यान् दक्षिणाभिश्च तोषयेत् ॥ इति ॥

इति स्मृतिचन्द्रिकायां सर्वदिव्यसाधारणविधिः.

---

## अथ धटारोपणविधिः.

तत्र नारदः—

शिक्यद्वयं समासज्य धटकर्कटयोर्दृढम् ।
एकत्र शिक्ये पुरुषमन्यत्र तुलयेच्छिलाम् ॥

विधिवन्निर्मितधटकर्कटकद्वये शिक्यद्वयपाशौ समासज्येत्यर्थः । शिलाग्रहणं मृदादेरुपलक्षणार्थम् । अत एव पितामहः—

शिक्यद्वयं समासज्य पार्श्वयोरुभयोरपि ।
प्रागग्रान् कल्पयेद्दर्भान् शिक्ययोरुभयोरपि ॥
पश्चिमे तोलयेत्कर्तॄनन्यस्मिन्मृत्तिकां शुभाम् ।
इष्टकाभस्मपाषाणकपालास्थिविवर्जिताम् ॥

इति । इष्टकापाषाणयोर्मृदा सह समुच्चयो निवार्यते. न तु विकल्पः, तयोरपि विहितत्वात् । तथाच नारदः—

पिटकं पूरयेत्तस्मिन्निष्टकाग्रावपांसुभिः ।

इति । इष्टकाभिः ग्रावभिः पांसुभिर्वेत्यर्थः । माषैर्वा पिटकं पूरयेत्, 'माषराशिमथापि वा' इति स्मृत्यन्तरवचनात् । एवंच शिलामृत्तिकेष्टकाग्रावपांसुमाषाणां प्रतिमानत्वे विकल्पो वेदितव्यः । अत एव नारदेनोक्तं—

मृत्पिण्डमभिशस्तं च तुलायां धारयेत्समम् ।
धारयेदुत्तरे पार्श्वे पुरुषं दक्षिणे शिलाम् ॥

इति । उत्तरे पार्श्व इत्येतद्दक्षिणोदगायतत्वेन निर्मिततुलाविषयम् । यद्यपि तथा निर्माणं पूर्वमनुपदिष्टं, तथाऽप्यस्मादेव वचनात् पूर्वापरसंस्थानौ पादस्तम्भौ कृत्वोदगग्रा तुला कदाचित् कार्येत्यर्थात्सिद्धमिति न कश्चिद्विरोधः । तुलां धारयेद्वणिगादीनामन्यतम इति शेषः । तथाच विष्णुः—"तां च वणिक्सुवर्णकारकांस्यकाराणामन्यतमो बिभृयात्" इति । तां तुलामित्यर्थः । अन्यतमेन धृतायाः समतानिरीक्षणार्थं राज्ञा ते सर्वे नियोक्तव्याः । तथाच पितामहः—

परीक्षका नियोक्तव्याः तुलामानविशारदाः ।
वणिजो हेमकाराश्च कांस्यकारास्तथैव च ॥

नियुक्ताश्च समतां निरीक्षेरन् । तथाच नारदः—

सुवर्णकारा वणिजः कुशलाः कांस्यकारकाः ।
तां तुलामन्ववेक्षेरन् तुलाधारणकोविदाः ॥

निरीक्षकान् प्रत्याह पितामहः —

कार्यः परीक्षकैर्नित्यमवलम्बसमो घटः ।
उदकं च प्रदातव्यं घटस्योपरि पण्डितैः ॥
यस्मिन्न प्लवते तोयं स विज्ञेयः समो घटः ॥

इति । तोरणयोर्लम्बमानौ मृण्मयाववलम्बौ तयोस्सम्बन्धः कटकद्वयोपरिभागेन समो यस्य सोऽवलम्बसमो घटः । तथाच नारदः —

प्रथमारोहणे ग्राह्यं प्रमाणं निपुणैस्सह ।
तुलाशिरोभ्यां तुल्यं तु तोरणन्यस्तलक्षणम् ॥

समताऽवधारणानन्तरं विष्णुः—"प्रतिमानपुरुषौ समधृतौ सुचिह्नितौ कृत्वा पुरुषमवतारयेत्" इति । सुचिह्नितौ समतादशायां येष्ववयवेषु शिक्यरज्जवस्संयुक्तास्तत्र तत्र पाण्डुरेखाङ्किताविसर्थः । अवतारणानन्तरं पितामहः—

तोलयित्वा नरं पूर्वं पश्चात्तमवतार्य तु ।
घटं तु कारयेन्नित्यं पताकाध्वजशोभितम् ॥

इति । एवमुपकल्पनानन्तरं धर्मावाहनादि शोध्यशिरसि पत्रारोपणान्तं सर्वदिव्यसाधारणविधिं कुर्यात् । तथाच स एव—

इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत् ।
आवाहनं च देवानां तथैव परिकल्पयेत् ॥

इति । तत्र धर्माराधनसाधनेषु विशेषमाह नारदः—

रक्तैर्गन्धैश्च माल्यैश्च दध्यपूपाक्षतादिभिः ।
अर्चयेत्तु घटं पूर्वं ततश्शिष्टांस्तु पूजयेत् ॥

इति । घटं घटाधिष्ठितं धर्मं, शिष्टान् इन्द्रादीन् । शोध्यशिरसि पत्रारोपणानन्तरं पितामहः—

घटमामन्त्रयेच्चैवं विधिनाऽनेन शास्त्रवित् ।
त्वं घट ब्रह्मणा सृष्टः परीक्षार्थं दुरात्मनाम् ॥
धकाराद्धर्ममूर्तिस्त्वं टकारात्कुटिलं नरम् ।
धृतो भावयसे यस्माद्धटस्तेनाभिधीयसे ॥

इति । शास्त्रवित् प्राड्विवाकः,

दिव्येषु सर्वकार्याणि प्राड्विवाकस्समाचरेत् ।

इति तेनैवोक्तत्वात् । ततः शोध्योपि तं घटमामन्त्रयेत् । तथाच याज्ञवल्क्यः—

तुलाधारणविद्भिरभियुक्तस्तुलाश्रितः ।
प्रतिमानसमीभूतो रेखां कृत्वाऽवतारितः ॥
त्वं तुले सत्यधामाऽसि पुरा देवैर्विनिर्मिता ।
तत्सत्यं वद कल्याणि संशयान्मां विमोचय ॥
यद्यस्मि पापकृन्मातः ततो मां त्वमधो नय ।
शुद्धश्चेद्गमयोर्ध्वं मां तुलामित्यभिमन्त्रयेत् ॥

इति । त्वं तुले इत्यादिना ऊर्ध्वं मामित्यन्तेन मन्त्रेण पुनरारोपणात् प्राक्तुलामभिमन्त्रयेत् शोध्य इत्यर्थः । ततस्तं प्राड्विवाकः पुनरारोपयेत् ।

तथाच नारदः—

समयैः परिगृह्याथ पुनरारोपयेन्नरम् ।
निवाते वृष्टिरहिते शिरस्यारोप्य पत्रकम् ॥

समयैः परिगृह्य तुलाधारकं शपथैर्नियम्येत्यर्थः । शपथाश्च तेनैव दर्शिताः—

ब्रह्मघ्नो ये स्मृता लोका ये लोकाः कूटसाक्षिणः ।
तुलाधारस्य ये लोकास्तुलां धारयतो मृषा ॥

इति । पुनरारोपणानन्तरं नारदः—

तस्मिन्नेव कृते लक्ष्ये लक्ष्यं कृत्वा द्विजोत्तमः ।
धर्मपर्यायशब्देन घट इत्यभिधीयसे ॥
त्वं वेत्सि सर्वभूतानां पापानि सुकृतानि च ।
त्वमेव देव जानीषे न विदुर्यानि मानवाः ॥
व्यवहाराभिशस्तोऽयं मानवस्तोल्यते त्वया ।
तदेनं संशयारूढं धर्मतस्त्रातुमर्हसि ॥
देवासुरमनुष्याणां सत्ये त्वमतिरिच्यसे ।
सत्यसन्धोसि भगवञ्छुभाशुभविभावनैः ॥
आदित्यचन्द्रावनिलोऽनलश्च ।
द्यौर्भूमिरापो हृदयं यमश्च ॥
अहश्च रात्रिश्च उभे च सन्ध्ये ।
धर्मश्च जानाति नरस्य वृत्तम् ॥

इति। शोध्यं शिक्ये यथासंनिवेशं निधाय धर्मेत्यादि वृत्तमित्यन्तं प्राड्विवाको वदेदित्यर्थः । मन्त्रोच्चारणानन्तरं पितामहः—

ज्योतिर्वित् ब्राह्मणश्रेष्ठः कुर्यात्कालपरीक्षणम् ।
विनाड्यः पञ्च विज्ञेयाः परीक्ष्याः कालकोविदैः ॥
साक्षिणो ब्राह्मणश्रेष्टाः यथादृष्टार्थवादिनः ।
ज्ञानिनः शुचयोऽलुब्धाः नियोक्तव्याः नृपेण तु ॥
तेषां वचनतो गम्यश्शुद्ध्यशुद्धिविनिर्णयः ॥

इति । त्रिशतगुर्वक्षरोच्चारणकालः पञ्चविनाड्यात्मको भवति । तथाच स्मृत्यन्तरं—

दशगुर्वक्षरः प्राणः षट्प्राणस्स्याद्विनाडिका ।

इति । एवंच ज्योतिर्विद्ब्राह्मणो गुर्वक्षरोच्चारणेन पञ्चविनाड्यात्मककालमानं कुर्यात् । शोध्यस्तावत्कालं तुलामारुह्यासीत । तस्मिन् काले जयपराजयलक्षणैश्शुद्ध्यशुद्धिविनिर्णयं नियुक्ता स्साक्षिणः कुर्युरिति पूर्वोक्तवचनानामर्थः प्रत्येतव्यः । कानि पुनर्जयपराजयलक्षणानीत्यपेक्षिते नारदः—

तुलितो यदि वर्धेत विशुद्धस्स्यान्न संशयः ।
समो वा हीयमानो वा न विशुद्धो भवेन्नरः ॥

यत्पुनः पितामहेनोक्तं—

हीयमानो न शुद्धः स्यादेकेषां तु समोऽशुचिः ।
अल्पपापस्समो ज्ञेयो बहुपापस्तु हीयते ॥

इति । तत्रैकेषामिति पूजनार्थं, न तु स्वमते समस्यशुद्धित्वद्योतनार्थम् । अल्पपापिनोऽप्यशुचित्वात् । तेन हीयमानसमयोः पराजये न कश्चिद्विशेषः । दण्डे प्रायश्चित्ते च परं विशेषः, दण्डप्रायश्चित्तयोर्दोषानुसारित्वात् । यत्तूक्तं बृहस्पतिना—

धटेऽभियुक्तस्तुलितो हीनश्चेद्धानिमाप्नुयात् ।
तत्समस्तु पुनस्तोल्यो वर्धितो विजयी भवेत् ॥

इति । तस्यायमर्थः—समस्याशुचित्वानिश्चयो न प्रथमतोलनपर्याये कार्यः, किंतु पुनस्तोल्यमानस्य तु यदि समतैव भवति तदानीमशुद्धिरवधारणीयेति । एवं शिक्यच्छेदादावपि पुनस्तोल्यमानस्य शुद्धिरशुद्धिर्वाऽवधारणीया । तथाच कात्यायनः—

शिक्यच्छेदे तुलाभङ्गे तथाऽपि तु गुणस्य वा ।
शुद्धेस्तु संशये चैव परीक्षेत पुनर्नरम् ॥

शुद्धेस्तु संशयो नारदेन प्रपञ्चितः—

तुलाशिरोभ्यामुद्भ्रान्तं विचलं न्यस्तलक्षणम् ।
यदा वायुप्रपन्नोऽसौ गच्छत्यूर्ध्वमधोऽपि वा ॥
निर्मुक्तस्सहसा वाऽपि तदा नैकतरं व्रजेत् ॥

इति । अयमर्थः— यदा तुलान्तौ तिर्यक् प्रचलितौ, यदा च समताज्ञानार्थं न्यस्तमुदकादिं चलितं, यदा च वायुनाप्रेरिता तुला ऊर्ध्वमधश्च कम्पते, यदा च तुला धारकेण

हस्तात्प्रमुच्यते तदा जयं पराजयं वा न निश्चिनुयादिति। यत्पुनस्तेनोक्तं—

कक्ष्यच्छेदे तुलाभङ्गे घटकर्कटयोस्तथा।
रज्जुच्छेदेऽक्षभङ्गे च मूर्छितः शुद्धिमाप्नुयात्॥

इति, तदपरिदृश्यमानकारणकशिक्यच्छेदादिविषयं, दैविकस्यैव शिक्यच्छेदादेः शुद्धिकारणत्वात्। तत्र पितामहः—

शंसन्ति साक्षिणस्सर्वे शुध्यशुद्धी नृपे तथा।
सद्भिः परिवृतो राजा शुद्धमाहूय पूजयेत्॥
ऋत्विक्पुरोहिताचार्यान् दक्षिणाभिश्च तोषयेत्।
एवं कारयिता राजा भुक्त्वा भोगान् मनोरमान्॥
महतीं कीर्तिमाप्नोति ब्रह्मभूयाय कल्पते॥ इति.

इति स्मृतिचन्द्रिकायां घटारोपणविधिः

---

## अथाग्निविधिः.

तत्र पितामहः—

अग्नेर्विधिं प्रवक्ष्यामि यथावच्छास्त्रचोदितम्।
कारयेन्मण्डलान्यष्टौ पुरस्तान्नवमं तथा॥

प्रख्यातदेवतायतनादिविहितदेशे भूशुद्धिमुद्धननावोक्षणाभ्यां कृत्वा तत्र नव मण्डलानि प्रागपवर्गाणि प्राड्विवाकः सोपवासो नृपाज्ञया प्रवृत्तः कुर्यादित्यर्थः। तानि च गोमयेन कार्याणि—

गोमयेन कृतानि स्युरद्भिः पर्युक्षितानि च ॥

इति तेनैव स्मृतत्वात् । तेषामन्तराळपरिमाणे उभे अपि याज्ञवल्क्येन दर्शिते—

षोडशाङ्गुलकं ज्ञेयं मण्डलं तावदन्तरम् ।

इति । मण्डलानि तेषामन्तराळानि च प्रत्येकं षोडशाङ्गुलपरिमाणानि कार्याणीत्यर्थः । मण्डलदेवतास्तु पितामहेन दर्शिताः—

आग्नेयं मण्डलं त्वाद्यं द्वितीयं वारुणं स्मृतम् ।
तृतीयं वायुदैवत्यं चतुर्थं यमदैवतम् ॥
पञ्चमं त्विन्द्रदैवत्यं षष्ठं कौबेरमुच्यते ।
सप्तमं सोमदैवत्यं सावित्रं त्वष्टमं तथा ॥
नवमं सर्वदैवत्यमिति दिव्यविदो विदुः ।

इति । अग्निरत्र पूज्यत इत्याग्नेयम्, हविष्ट्वेन सूक्तत्वेन वा मण्डलस्याग्नेयत्वासम्भवात् । एवं वारुणत्वादिकमपि मण्डलस्य पूजाधिकरणतया द्रष्टव्यम् । तेन 'प्रैतु होतुश्चमसः' इत्यादिप्रैषमन्त्रस्थया होतुश्चमस इत्यादिसमाख्यया होत्रादीनां तत्र चमसभक्षप्राप्तिवदाग्नेयादिसमाख्ययैवाग्न्यादीनां तत्र तत्र मण्डले पूजनं कार्यमित्यस्मादेव वचनात् प्रसिद्धम् । अतो मण्डलानां प्रोक्षणानन्तरं मण्डलाधिदेवतापूजनं कुर्यात् । ततः प्रतिमण्डलं प्रागग्रान् कुशान् क्षिपेत्.

मण्डले मण्डले देयाः कुशाश्शास्त्रप्रचोदिताः ।

इति तेनैव स्मृतत्वात् । ततः प्रथममण्डलाद्दक्षिणतोऽनतिदूरे लौकिकमग्निं प्रतिष्ठाप्य शान्तिहोमं कुर्यात् ।

शान्त्यर्थं जुहुयादग्नौ घृतमष्टोत्तरं शतम् ।

इति स्मरणात् । होमश्च 'अग्नये पावकाय स्वाहा' इत्यनेन मन्त्रेण कार्य इत्युक्तं व्याख्यातृभिः । ततस्तस्मिन् अग्नौ लोहपिण्डं तापयेत् । तथाच पितामहः—

अश्रिहीनं समं कृत्वा अष्टाङ्गुलमयोमयम् ।
पिण्डं तु तापयेदग्नौ पञ्चाशत्पलकं समम् ॥

समं अनिम्नोन्नतम् । पुनस्समग्रहणं समन्तात्तापयेदिति विधानार्थम् । षोडशपलकं वा पिण्डं तापयेत् । "अथ सप्ताश्वत्थपर्णान्तरितं षोडशपलमग्निवर्णं लोहपिण्डमञ्जलिनाऽऽदाय सप्तमर्यादां गच्छेत्" इति शङ्खलिखितस्मरणात् । तापनं तु लोहकारेण कार्यमित्याह नारदः—

जात्यैव लोहकारो यः कुशलश्चाग्निकर्माणि ।
दृष्टप्रयोगश्चान्यत्र तेनायोऽग्नौ तु तापयेत् ॥

दृष्टप्रयोगश्चान्यत्रेत्यनेन यथा लोके लोहशुद्ध्यर्थं सुतप्तं लोहमुदके निक्षिप्य पुनस्सन्ताप्योदके निक्षिप्य पुनस्सन्तापनं लोहकार्यसिद्ध्यर्थं क्रियते तथाऽत्रापि कर्तव्यमिति दर्शितम् । तत्र तृतीयतापे वर्तमाने धर्मावाहनादि शोध्यशिरसि पत्रारोपणान्तं सर्वदिव्यसाधारणविधिं कुर्यात् । तथाच पितामहः —

इमं मन्त्रविधिं कृत्स्नं सर्वदिव्येषु योजयेत् ।

आवाहनं च देवानां तथैव परिकल्पयेत् ॥

इति। तत्र धर्माराधनसाधनेषु विशेषमाह स एव—

तत्र पूजां हुताशस्य कारयेन्मनुजाधिपः।

रक्तचन्दनधूपाभ्यां रक्तपुष्पैस्तथैव च ॥

इति। हुताशस्य लोहपिण्डाग्नावावाहितस्य धर्मस्येति यावत्। रक्तचन्दनं च धूपश्च रक्तचन्दनधूपौ, ताभ्याम्। इन्द्राद्याराधनसाधनेषु नायं नियमः, हुताशस्येति विशेषितत्वात्। शिरस्यारोपिते प्रतिज्ञापत्रे सत्यनन्तरं शोध्यस्य कर्तव्यमाह हारीतः—

प्राङ्मुखस्तु ततस्तिष्ठेत् प्रसारितकराङ्गुलिः।

आर्द्रवासाश्शुचिश्चैव शिरस्यारोप्य पत्रकम् ॥

स्थितिश्चाद्यमण्डले कर्तव्या।

पश्चिमे मण्डले तिष्ठेत् प्राङ्मुखः प्राञ्जलिश्शुचिः ॥

इति पितामहस्मरणात्। शोध्यस्य प्राड्विवाकस्य च कर्तव्यमाह विष्णुः—

करौ विमृदितव्रीही तस्यादावेव लक्षयेत्।

इति। विमृदिता व्रीहयो याभ्यां तौ विमृदितव्रीही। अनेन कराभ्यां व्रीहिमर्दनं कृत्वा शोध्यः प्रसारितकराङ्गुलिस्स्यादित्यर्थादुक्तम्। लक्षयेदित्यस्यार्थो नारदेन प्रपञ्चितः—

लक्षयेत्तस्य चिह्नानि हस्तयोरुभयोरपि।

प्राकृतानि च गूढानि सव्रणान्यव्रणानि च ॥

अग्निधारणात् प्राक्तनान्येतानीति ज्ञापनार्थं तस्य शोध्यस्य करद्वयस्थितव्रणादिस्थानेषु अलक्तकादिरसेन हंसपदानि कुर्यादित्यर्थः। तथाच स एव—

हस्तक्षतेषु सर्वेषु कुर्याद्धंसपदानि तु।

इति। ततः कर्तव्यमाह याज्ञवल्क्यः—

करौ विमृदितव्रीही लक्षयित्वा ततो न्यसेत्।
सप्ताश्वत्थस्य पर्णानि तावत्सूत्रेण वेष्टयेत्॥

विष्णुरपि—"ततः प्राङ्मुखस्य प्रसारितभुजद्वयस्य सप्ताश्वत्थस्य पत्राणि करयोर्दद्यात्, तानि च करद्वयसहितानि सूत्रेण वेष्टयेत्" इति। उभयत्रापि ततश्शब्देनेदं ज्ञायते—हस्ताङ्कनपत्रन्यसनयोर्मध्ये यत्स्मृत्यन्तरोक्तं होमादि तदस्मिन् मते न कर्तव्यमिति। एवंच यदुक्तं नारदेन—

कृत्वैवमभिशस्तस्य प्रथमं हस्तलक्षणम्।
शान्त्यर्थं जुहुयान्मन्त्रैर्घृतेनाग्नौ यथाविधि॥
तर्पितेष्वथ देवेषु लोकपालेषु चैव हि।
आदित्याभिमुखो भूत्वा इमं मन्त्रमुदीरयेत्॥
त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत्।
हव्यं वहसि देवानां हुतः शान्तिं प्रयच्छसि॥
प्रच्छन्नानि मनुष्याणां पापानि सुकृतानि च।
त्वमेव देव जानीषे न विदुर्यानि मानवाः॥
व्यवहाराभिशस्तोऽहं वह्ने तिष्ठामि संशये।

तस्मान्मां संशयारूढं धर्मतस्त्रातुमर्हसि ॥

एवमुक्तवतस्तस्य प्राङ्मुखस्य तु धीमतः ।

पत्रैरञ्जलिमापूर्य आश्वत्थैस्सप्तभिस्समैः ॥

इति । मन्त्रैः 'आकृष्णेन' इत्यादिभिः नवभिः ग्रहप्रकाशकैः । देवेषु वस्वादिसरुद्रेषु लोकपालेषु च तत्तन्नाम्ना हुतघृताद्याहुतिभिस्तर्पितेषु सत्स्वित्यर्थः । तदेतत्सर्वं वैकल्पिकमिति मन्तव्यम् । यत्तु पत्रविशेषणमुक्तं समैरिति तन्नित्यं, तेन पक्षद्वयेऽपि समपरिमाणैः पत्रैर्भवितव्यम् । तथा वेष्टनसूत्रेष्वपि विशेषस्तेन दर्शितः—

वेष्टयीत सितैर्हस्तौ सप्तभिस्सूत्रतन्तुभिः ।

इति । सितैः श्वेतैरित्यर्थः । यत्तु स्मृत्यन्तरं—

अयस्तप्तं तु पाणिभ्यामर्कपत्रैस्तु सप्तभिः ।

अन्तर्हितं हरन् शुद्धस्त्वदग्धस्सप्तमे पदे ॥

इति, तदश्वत्थपत्रालाभविषयम् । यदाह पितामहः—

पिप्पलाज्जायते वह्निः पिप्पलो वृक्षराट् स्मृतः ।

अतस्तस्य तु पत्राणि हस्तयोर्निक्षिपेद्बुधः ॥

इति । यस्मात् प्रशस्तोऽश्वत्थः तस्मात्पत्राण्येव सति सम्भवे ग्राह्याणीत्यर्थः । शमीपत्रादीनि पुनः पूर्वोक्तपत्रैस्सह समुच्चीयन्ते । तथाच स्मृत्यन्तरं—

सप्त पिप्पलपत्राणि शमीपत्राण्यथापि वा ।

दूर्वायास्सप्त पत्राणि दद्यात्तांश्चाक्षतान्न्यसेत् ॥

तथा कुसुमानि च न्यसेत्—

सप्त पिप्पलपत्राणि अक्षतान् सुमनोदधि ।

इति पितामहस्मरणात् । सुमनसः कुसुमानि । ततस्तप्तलोहपिण्डे प्राड्विवाकः 'त्वमग्ने देवाः' इत्यादिना 'महानल' इत्यन्तेन मन्त्रेण लोहपिण्डस्थमग्निमभिमन्त्रयेत् ।

तथाच पितामहः—

तापेते तु ततः पश्चात् अग्निमावाहयेच्छुचिः ।
आवाहनं तु देवानां कृत्वा पूर्वविधानवित् ॥
त्वमग्ने देवाश्चत्वारस्त्वं च यज्ञेषु हूयसे ।
त्वं मुखं सर्वदेवानां त्वं मुखं ब्रह्मवादिनाम् ॥
जठरस्थो हि भूतनां ततो वेत्सि शुभाशुभम् ।
पापं पुनासि वै यस्मात्तस्मात्पावक उच्यसे ॥
पापेषु दर्शयात्मानमार्चिष्मान् भव पावक ।
अथवा शुद्धभावेषु शीतो भव महानल ॥

इति । देवानां धर्मादीनामावाहनग्रहणमावाहनादेरशोध्यकरसंस्कारकुसुमनिधानान्तस्य कर्मण उपलक्षणार्थम् । विष्णुस्तु लोहपिण्डस्थाग्न्यभिमन्त्रणे मन्त्रान्तरमाह—

त्वमग्ने सर्वभूतानामन्तश्चरसि साक्षिवत् ।
त्वमेवाग्ने विजानीषे न विदुर्यानि मानुषाः ॥
व्यवहाराभिशस्तोऽयं मानुषश्शुद्धिमिच्छति ।

तदेनं संशयादस्माद्धर्मतस्त्रातुमर्हसि ॥

समुच्चयेनास्य मन्त्रस्य अभिमन्त्रणसाधनत्वं न पुनर्विकल्पेन, प्रार्थनीयार्थस्य शोध्यव्यक्तिविशेषनिष्ठतया प्रकाशकत्वेन भिन्नकार्यत्वात् । यत्तु—

तृतीयतापे संतप्तं ब्रूयात् सभ्यपुरस्कृतम् ।
शृण्विमं मानवं धर्मं लोकपालैरधिष्ठितम् ॥
त्वमग्ने सर्वदेवानां पवित्रं परमं मुखम् ।
त्वमेव सर्वभूतनां हृदिस्थो वेत्सि चेष्टितम् ॥
सत्यानृते च जिह्वा वा त्वत्तस्समुपलभ्यते ।
देवादिभिरिदं प्रोक्तं नान्यथा कर्तुमर्हसि ॥
अनेनासाविदं प्रोक्तो मिथ्यावादमसौ वदेत् ।
सर्वथा च यथा मिथ्या तथाऽग्निं धारयाम्यहम् ॥
स एष त्वां धारयति सत्येनानेन मानवः ॥
सत्यवाक्यस्य चास्य त्वं शीतो भव हुताशन ।
मृषावाक्यस्य पापस्य दह हस्तौ च पापिनः ॥

इति । यत्तु नारदोक्तमग्न्यभिमन्त्रणं तत् विष्णुपितामहोक्तेनाग्न्यभिमन्त्रणेन विकल्प्यते, एकार्थत्वात् । यदा नारदोक्ताग्न्यभिमन्त्रणं क्रियते तदाऽभिमन्त्रणानन्तरं कर्तव्यमाह स एव—

अमुमर्थं च पत्रस्थमभियुक्तं यथार्थतः ।
संश्राव्य मूर्ध्नि तस्यैव न्यस्य देयो यथाक्रियम् ॥

पूर्वोक्ताभिमन्त्रणमन्त्रार्थं शिरसि निहितपत्रस्थमन्त्रार्थं च संश्राव्य

तत्पत्रं यथास्थानं निधाय लोहपिण्डो देय इत्यर्थः।यदा तु विष्णु-पितामहोक्ताग्न्यभिमन्त्रणं क्रियते तदा तस्मिन् कृते कर्तव्यमाह पितामहः—

ततस्तं समुपादाय राजा धर्मपरायणः ।
संदंशेन नियुक्तो वा हस्तयोस्तस्य निक्षिपेत् ॥

संदंशेन तं लोहपिण्डं समुपादायेत्यन्वयः । नियुक्तः प्राड्विवाकः। निक्षेपणात् प्राक् शोध्यस्य पक्षद्वयेऽपि कर्तव्यमाह याज्ञवल्क्यः—

त्वमग्ने सर्वभूतानामन्तश्चरसि पावक ।
साक्षिवत्पुण्यपापेभ्यो ब्रूहि सत्यं कवे मम ॥
तस्येत्युक्तवतो लोहं पञ्चाशत्पालिकं समम् ।
अग्निवर्णं न्यसेत्पिण्डं हस्तयोरुभयोरपि ॥

इत्युक्तवतः पूर्वोक्ताग्न्यभिमन्त्रणं कृतवतस्तस्य शोध्यस्येत्यर्थः । न्यस्ते लोहपिण्डे शोध्यस्य कर्तव्यमाह स एव—

स तमादाय सप्तैव मण्डलानि शनैर्व्रजेत् ॥ इति ।

अस्यार्थो विष्णुना विवृतः—

"तमादाय नातिद्रुतं न च विलम्बितं मण्डलेषु पदन्यासं कुर्वन् व्रजेत्" इति । मण्डलेषु द्वितीयादिष्वष्टमान्तेष्वित्यर्थः । तथा च नारदः—

हस्ताभ्यां तं समादाय प्राड्विवाकसमीरितः ।
स्थित्वैकस्मिंस्ततोऽन्यानि व्रजेत्सप्त त्वजिह्मगः ॥
असंभ्रान्तः शनैर्गच्छेत् अक्रुद्धस्सोऽनलं प्रति ।

न पातयेत्तामप्राप्य या भूमिः परिकल्पिता ॥

न मण्डलमतिक्रामेन्न चार्वाक् स्थापयेत्पदम् ।

मण्डलं चाष्टमं गत्वा ततोऽग्निं विसृजेन्नरः ॥

इति । एकस्मिन् आद्ये मण्डल इत्यर्थः । ततोऽन्यानि द्वितीयादीनि । अग्निविसर्जनं च नवमे मण्डले कर्तव्यं,

अष्टमं मण्डलं गत्वा नवमे निक्षिपेद्बुधः ।

इति पितामहस्मरणात् । निक्षेपानन्तरं परीक्षकस्य कर्तव्यमाह नारदः—

तस्यैव मुक्तपिण्डस्य कुर्यात्करनिरीक्षणम् ।

इति । शुद्ध्यशुद्धिपरिज्ञानार्थमिति शेषः । तत्राशुद्धिप्रत्यायकानि लक्षणान्याह स एव—

पूर्वदृष्टेषु चिह्नेषु ततोऽन्यत्रापि लक्षयेत् ।

मण्डलं रक्तसङ्काशं यत्रान्यच्चाग्निसम्भवम् ॥

सोऽविशुद्धस्तु विज्ञेयोऽसत्यधर्मव्यवस्थितः ।

इति । यस्य करतलद्वयमध्ये यत्रकुत्रचिदाहारितं स्फोटकाद्युपलभ्यते तमशुद्धं विजानीयादित्यर्थः । यस्य पुनर्नोपलभ्यते स शुद्धो विज्ञेयः । तथाच विष्णुः—

यो हस्तयोः क्वचिद्दग्धस्तमशुद्धं विनिर्दिशेत् ।

न दग्धस्सर्वथा यस्तु स विशुद्धो भवेन्नरः ॥

यदा तु दग्धादग्धसन्देहः तदाऽऽह नारदः—

ज्ञानेन न विभागश्चेद्दग्धाविति करौ तदा ।

व्रीहीनतिप्रयत्नेन सप्तवारांस्तु दापयेत् ॥
मर्दितो यदि नो दग्धः सभ्यैस्त्वेवं विनिश्चितम् ।
मोच्यश्शुद्धस्तु सत्कस्य दग्धो दण्ड्यो यथाक्रमम् ॥

इति । पितामहोपि—

हृते च मर्दयेत्पश्चात् व्रीहीन्वा यदि वा यवान् ।
निर्विकारे दिनस्यान्ते शुद्धं तमिति निर्दिशेत् ॥

इति । निर्विकारे करद्वये स्थिते शुद्धमिति तं निर्दिशेदित्यर्थः । केचित्—'निर्विकारौ यदा हस्तौ' इति पठन्ति । तन्मते हरणानन्तरमेव मर्दनेन शुद्धिरवधारणीया । ननु 'दिनस्यान्ते शुद्धं तमिति निर्दिशेत्' इति पाठे,

मुक्त्वाऽग्निं मृदितव्रीहिरदग्धः शुद्धिमाप्नुयात् ।

इति याज्ञवल्क्यवचनविरोधस्स्यात् । मैवं वोचः, 'प्रहृत्य परिधीन् जुहोति' इतिवदानन्तर्याभावेऽपि क्त्वानिर्देशोपपत्तेः । यत्पुनस्तेनोक्तं—

अन्तरा पतिते पिण्डे सन्देहे वा पुनर्हरेत् ।

इति, तत् व्रीहिमर्दने कृतेऽपि यत्र सन्देहो नापैति तद्विषयम्, किं सत्यानृतवशाददाहदाहौ उत दृष्टव्यवधानादिकारणवशादिति यत्र सन्देहस्तद्विषयं च । 'अन्तरा पतिते पिण्डे' इत्यत्र दग्धश्च नोपलभ्यते इति शेषोऽवगन्तव्यः । दग्धस्योपलम्भे त्वशुद्धिनिश्चयेन पुनर्हरणानवकाशात् । अत एव नारदः—

यस्त्वन्तरा पातयाति दग्धश्च न विभाव्यते ।
पुनस्तं हारयेदग्निं स्थितिरेषा दृढीकृता ॥

दग्धश्च न विभाव्यते करतलद्वयाभ्यन्तरे इति शेषः । अन्यत्र दग्धविभावनेऽपि पुनर्हारयेदेव । तथा च कात्यायनः—

प्रस्खलत्यभियुक्तश्चेत् स्थानादन्यत्र दह्यते ।
अदग्धं तं विदुर्देवास्तस्य भूयोपि दापयेत् ॥

भूयोपि पुनरपीत्यर्थः । अत्र नारदः—

अनेन विधिना कार्यो हुताशसमयस्सदा ।
ऋते ग्रीष्मादसावुक्तः कालेऽन्यस्मिंस्तु शीतले ॥ इति ॥

इति स्मृतिचन्द्रिकायां अग्निविधिः.

---

## अथ जलविषयोरुत्सन्नानुष्ठानत्वात्तद्विधिमनाख्याय कोशविधिरुच्यते.

तत्र याज्ञवल्क्यः—

देवानुग्रान् समभ्यर्च्य तत्स्नानोदकमाहरेत् ।

इति । उग्रा देवा रुद्रदुर्गादित्यादयः । तेषामन्यतमं देवं प्राड्विवाकः कृतोपवासो गन्धपुष्पादिभिस्संपूज्य स्नापयित्वा तत्स्नानोदकं दिव्यदेशं नयेदित्यर्थः । नरं तत्र निधाय धर्मावाहनादि शोध्यशिरसि पत्रारोपणान्तं सर्वदिव्यसाधारणविधिं विधाय शोध्यं च प्राङ्मुखं कृत्वा पूर्वनिहितोदकात् प्रसृतित्रयं पाययेत् । प्रसृति-

त्रयमण्डलं च तास्मिन्नेव काले गोमयेन कार्यमिति व्याख्यातृभि-रुक्तम्। आदित्याभिमुखं कृत्वा संश्राव्य पाययेत्। तथा च याज्ञवल्क्यः—

संश्राव्य पाययेत् पश्चात् जलात्तु प्रसृतित्रयम्॥

इति। किं संश्राव्येत्यपेक्षिते नारदः—

एनश्च श्रावयित्वा तु पाययेत प्रसृतित्रयम्।

इति। एनः पापं तच्च तत्फलाभिधानमुखेन तेनैव दर्शितम्—

स्वेच्छया यः पिबेत् कोशं कश्चिच्चेद्दूषितो नरः।
विसंवदेन्नरो लोभात् छली भवति दुर्मतिः॥
आत्मनः कामकारेण कोशं पीत्वा विसंवदेत्।
दरिद्रो व्याधितो मूर्खः सप्तजन्मानि जायते॥
बलात्कोशं हि यो दत्वा हितमिच्छेन्न चात्मनः।
स विनाशी भवेत्तस्य तच्च कार्यं न सिध्यति॥

इति। अत्रान्त्यश्लोकमभियोक्ता श्रावयितव्यः सामर्थ्यात्। शो-ध्यस्तु श्रावितं श्रुत्वेदं मया न कृतमिति वदन् पिबेत्। तथाच विष्णुः—"उग्रान् देवानभ्यर्च्य तत्स्नानोदकात् प्रसृतित्रयं पिबे-दिदं मया न कृतमिति व्याहरन् देवताभिमुखः" इति। एवं यस्य कस्यचिदुग्रदेवस्य स्नानोदकमाहृत्य कोशानुष्ठाने प्राप्ते नियमार्थमाह पितामहः—

भक्तो यो यस्य देवस्य पाययेत्तस्य तज्जलम्।
समभावे तु देवानामादित्यस्य तु पाययेत्॥

दुर्गायाः पाययेच्चोरान् ये च शस्त्रोपजीविनः ।
भास्करस्य तु यत्तोयं ब्राह्मणं तन्न पाययेत् ॥

इति । तथा स्नापनीयप्रदेशनियममाह स एव—

दुर्गायाः स्नापयेच्छूलमादित्यस्य तु मण्डलम् ।
अन्येषामपि देवानां स्नापयेदायुधानि तु ॥

इति । प्रसृतित्रयपानादनन्तरं कात्यायनः—

अथ दैवविसंवादः त्रिसप्ताहात्तु दापयेत् ।
अभियुक्तं प्रसन्नेन तमर्थं दण्डमेव च ॥

दैवविसंवादो दैविकव्याधीनामाविर्भावः । दैविकाश्च व्याधयस्तेनैव दर्शिताः—

क्षयातिसारविस्फोटास्ताल्वस्थिपरिपीडनम् ।
नेत्ररुग्गलरोगश्च तथोन्मादः प्रजायते ॥
शिरोरुक् भुजभङ्गश्च दैविका व्याधयो नृणाम् ।

इति । अन्यान्यपि पराजयनिमित्तानि विष्णुना दर्शितानि—

यस्य पश्येद्द्विसप्ताहात्त्रिसप्ताहादथापि वा ।
रोगोऽग्निर्ज्ञातिमरणं राजदण्डमथापि वा ॥
तमशुद्धं विजानीयात्तथा शुद्धं विपर्यये ।

इति । नारदेनार्थभ्रंशादयोपि पराजये उक्ताः—

सप्ताहाभ्यन्तरे यस्य द्विसप्ताहेन वा पुनः ।
रोगोऽग्निर्ज्ञातिमरणमर्थभ्रंशो धनक्षयः ॥

प्रत्यात्मिकं भवेद्यस्य विद्यात्तस्य पराजयम् ॥

इति । प्रत्यात्मिकं न समुदायप्रयुक्तम् । अर्थोऽत्र पुत्रादिरभिप्रेतः, अन्यथा धनशब्दवैयर्थ्यात् । अत एव बृहस्पतिः—

सप्ताहाद्वा द्विसप्ताहाद्यस्यार्तिर्न प्रजायते ।
पुत्रदारधनानां च स शुद्धस्स्यान्न संशयः ॥

पितामहेनावध्यन्तरमप्युक्तं—

त्रिरात्रात्सप्तरात्राद्वा द्विसप्ताहादथापि वा ।
वैकृतं यस्य दृश्येत पापकृत्स तु मानवः ॥

यस्य शोध्यस्येत्यर्थः । न केवलं शोध्यस्य विकृतत्वापत्तौ पापकृत्त्वं, अपि तु स्वकीयजनस्य विकृतत्वापत्तावपीत्याह स एव—

तस्यैकस्य न सर्वस्य जनस्य यदि तद्भवेत् ।
रोगोऽग्निर्ज्ञातिमरणं सैव तस्य विभावना ॥

तद्रोगादिवैकृतं कृतकोशपानस्यैकस्य यदि भवेत्तदेव पापकृत्त्वमिति न, किंतु तदीयजनस्य सर्वस्य मध्ये यदा यस्यकस्यचिद्भवेत् तदाऽपीत्यर्थः । मनुनाऽप्यत्रावध्यन्तरमुक्तं—

न चार्तिमृच्छति क्षिप्रं स ज्ञेयश्शपथैश्शुचिः ।

इति । आर्तिः पूर्वोक्तो रोगादिः । क्षिप्रं शीघ्रं, एकरात्रादर्वागिति यावत् ।अयं चावधिः स्वल्पकार्यनिर्णायकसत्यादिशपथविषयः स्वल्पकालीनायाः शुद्धिभावनायास्तत्रैवोचितत्वात्, सत्यादिशपथान् प्रस्तुत्याभिहितत्वाच्च । त्रिरात्राद्यवधयस्तु को-

शविषयाः, कोशमधिकृत्याभिधानात् । तत्रापि त्रिरात्रावधिस्त- ण्डुलविषयद्रव्यादर्वाचीनद्रव्यविषयः । सप्तरात्रावधिस्तु महा- भियोगद्रव्यादर्वाचीनद्रव्यविषयः । द्विसप्ताहावधिस्तु महाभि- योगविषयः । त्रिसप्ताहावधिस्तु,

विंशद्दशाविनाशे तु कोशपानं विधीयते ।

इति प्रतिपादितकोशविषय इत्यवगन्तव्यं औचित्यात् । सर्वत्राव- धौ ऊर्ध्वमवधेर्वैकृतदर्शनेऽपि न पापकृच्छोध्यः, अवधिसामर्थ्यात्। ऊर्ध्वकालीनस्य रोगादेर्निमित्तान्तरकारितत्वात् । अत एव नारदः—

ऊर्ध्वं यस्य द्विसप्ताहाद्वैकृतं सुमहद्भवेत् ।
नाभियोज्यस्स विदुषा कृतकालव्यतिक्रमात् ॥

द्विसप्ताहादिति पूर्वोक्तावधीनामुपलक्षणार्थं, 'कृतकालव्यतिक्र- मात्' इति हेतोरवध्यन्तरेऽपि समानत्वात् ॥

इति स्मृतिचन्द्रिकायां कोशविधिः.

---

## अथ तण्डुलविधिः.

तत्र पितामहः—

तण्डुलानां प्रवक्ष्यामि विधिं लक्षणचोदितम् ।
चौर्ये तु तण्डुला देया नान्यस्मिन्निति निश्चयः ॥

अन्यस्मिन् स्त्रीसङ्ग्रहणाद्यधनविवादे इत्यर्थः । धनविवादे तु चौर्यादन्यत्रापि तण्डुला देयाः 'तदर्धार्धस्य तण्डुलाः' इति

कात्यायनेनोक्तत्वात् । न च तद्वचनं चौर्यविषयमेवास्त्विति वाच्यं 'दत्तस्यापह्नवो यत्र' इत्युपक्रमविरोधापत्तेः । अतश्चौर्य-ग्रहणमर्थविवादप्रदर्शनार्थमिति मन्तव्यम् । अत्र प्रयोगो द्व्यहकालः । तत्र पूर्वेद्युर्यत्कर्तव्यं तदाह स एव—

तण्डुलान् क्षाळयेच्छुक्ःन् शालीयान् यस्यकस्याचित् ।
मृन्मये भाजने कृत्वा आदित्यस्याग्रतश्शुचिः ॥
स्नानोदकेन संमिश्रान् रात्रौ तत्रैव वासयेत् ।
आवाहनादि पूर्वं तु कृत्वा रात्रौ विधानतः ॥

इति । शुचिर्भूत्वा प्राड्विवाको रात्रावादित्यस्य पुरतोऽनतिदूरे तण्डुलानुपकल्प्य, धर्मावाहनादि होमान्तं सर्वदिव्यसाधारणवि-धिं विधायादित्यस्नानोदकेन यथास्थितांस्तण्डुलानाप्लुत्य, प्रभातप-र्यन्तंतथैव स्थापयेदित्यर्थः । प्रभाते च यत्कर्तव्यं तदपि तेन दर्शितं—

प्रभाते कार्यिणे देयास्त्रिः कृत्वा प्राङ्मुखाय तु ।

इति । रात्रावधिवासितास्तण्डुलाः शोध्याय भक्षणार्थं त्रिवारं देया इत्यर्थः । शोध्यस्य च यदनुष्ठेयं तदप्यनुवादव्याजेन स एव दर्शयति—

प्राङ्मुखोपोषितं स्नातं शिरोरोपितपत्रकम् ।
तण्डुलान् भक्षयित्वा तु पत्रे निष्ठीवयेत्त्रिधा ॥

इति । प्राङ्मुखत्वादि निष्ठीवनान्तं प्राड्विवाकेन कारायितव्यम् । शोध्येन च कर्तव्यमित्यर्थः । पत्रे च विशेषस्तेनैव दर्शितः—

भूर्जस्यैव तु नान्यस्य अभावे पिप्पलस्य तु ।

इति । एतच्च प्रभातकृत्यं भक्षणादि सूर्यग्रहे कर्तव्यमित्याह बृहस्पतिः—

सोपवासस्सूर्यग्रहे तण्डुलान् भक्षयेच्छुचिः ।

इति । तथा शुद्ध्यशुद्धिनिमित्तानि च तेन दर्शितानि—

शुद्धिस्स्याच्छुक्लनिष्ठीवे रक्तमिश्रे च दोषभाक् ।

इति । न केवलं रक्तमिश्रे दोषभाक् अपि तु निमित्तान्तरेऽपीति चशब्दार्थः । अत एव पितामहः—

शोणितं दृश्यते यस्य हनुस्तालु च शीर्यति ।
गात्रं च कम्पते यस्य तमशुद्धं विनिर्दिशेत् ॥

इति स्मृतिचन्द्रिकायां तण्डुलविधिः

---

## अथ तप्तमाषविधिः

तत्र पितामहः—

तप्तमाषस्य वक्ष्यामि विधिमुद्धरणे शुभम् ।
कारयेदायसं पात्रं ताम्रं वा षोडशाङ्गुलम् ॥
चतुरङ्गुलखातं तु मृन्मयं वाऽथ मण्डलम् ।

इति । मण्डलं परिमण्डलं वर्तुळमिति यावत् । एवंविधं पात्रं घृततैलाभ्यां गव्यघृतेनैव वा पूरयित्वा लौकिकमग्निं दिव्यदेशे प्रतिष्ठाप्य तत्र तापयेत् । तथाच स एव—

पूरयेत् घृततैलाभ्यां विंशत्या वै पलैस्तु तत् ।
गव्यं घृतमुपादाय तदग्नौ तापयेच्छुचिः॥

केचिदत्र वाशब्दाद्यश्रवणात् घृततैलगव्यघृतानां समुच्चयमिच्छन्ति, तदसत् । व्रीहियवयोरिव निरपेक्षश्रुतिबलेनैव विकल्पावगतेः । अतो विंशतिपलं घृततैलं गव्यं वा घृतं पात्रे निक्षिप्य तापयेत् । पक्षद्वयेऽपि तापे वर्तमाने धर्मावाहनादि शोध्यशिरसि पत्रारोपणान्तं सर्वदिव्यसाधारणविधिं विदध्यात् । ततःपरं पक्षद्वये प्रकारभेदः, तत्र तावत् घृततैलतापनपक्षे भेदमाह स एव—

सुवर्णमाषके तस्मिन् सुतप्ते निक्षिपेत्ततः ।
अङ्गुष्ठाङ्गुलयोगेन तप्तमाषकमुद्धरेत् ॥
कराग्रं यो न धुनुयात् विस्फोटो वा न जायते ।
शुद्धो भवति धर्मेण निर्विकारकराङ्गुलिः ॥

इति । माषकं कर्षषोडशांशप्रमाणम् । सुवर्णग्रहणमत्र द्विकृष्णलप्रमाणराजतमाषनिवृत्त्यर्थं, तस्याल्पत्वेन दुर्ग्रहत्वात् । ततश्च हैमं ताम्रं वा माषकं निक्षिपेदित्यर्थः । तस्मिन् घृततैले अङ्गुष्ठाङ्गुलियोगेन तर्जन्यङ्गुष्ठमध्यमानां समूहेनेत्यर्थः । गव्यघृततापनपक्षेऽपि कृते सर्वदिव्यसाधारणविधौ विशेषमाह स एव—

सौवर्णीं राजतीं ताम्रीमायसीं वा सुशोधिताम् ।
सलिलेन सकृद्धौतां प्रक्षिपेत्तत्र मुद्रिकाम् ॥
भ्रमद्वीचीतरङ्गाढ्ये अनखस्पर्शगोचरे ।

परीक्षेतार्द्रपर्णेन चुरुकारं सघोषकम् ॥
ततश्चानेन मन्त्रेण सकृत्तदभिमन्त्रयेत् ।
परं पवित्रममृतं घृत त्वं यज्ञकर्मसु ॥
दह पावक पापं त्वं हिमशीतं शुचौ भव ।
उपोषितं ततस्स्नातमार्द्रवाससमागतम् ॥
ग्राहयेन्मुद्रिकां तां तु घृतमध्यगतां तथा ।
प्रदेशिनीं च तस्याथ परिक्षेरन् परिक्षकाः ॥
यस्य विस्फोटका न स्युः शुद्धोसावन्यथाऽशुचिः ।

इति। अत्र प्रदेशिन्यैव मुद्रिकोद्धारणं, तस्याः परीक्षाविधानात्।

इति स्मृतिचन्द्रिकायां तप्तमाषविधिः

---

## अथ फालविधिः

तत्र बृहस्पतिः—

आयसं द्वादशपलं घटितं फालमुच्यते ।
अष्टाङ्गुलं भवेद्दीर्घं चतुरङ्गुलविस्तरम् ॥

एवांविधं दिव्यदेशप्रतिष्ठापिताग्नौ निक्षिप्य धर्मावाहनादौ शोध्यशिरासि पत्रारोपणान्ते सर्वादिव्यसाधारणविधावनुष्ठिते सुतप्तं कुर्यात् । सुतप्ते कृते कर्तव्यमाह स एव—

अग्निवर्णं तु तच्चोरो जिह्वया लेहयेत्सकृत् ।
न दग्धश्चेच्छुचिमियादन्यथा तु स हीयते ॥

चोरग्रहणं शोध्योपलक्षणार्थम् ।

इति स्मृतिचन्द्रिकायां फालविधिः

---

## अथ धर्मजविधिः.

तत्र पितामहः—

अधुना संप्रवक्ष्यामि धर्माधर्मपरीक्षणम् ।
राजतं कारयेद्धर्ममधर्मं सीसकायसम् ॥
लिखेत् भूर्जे पटे वाऽपि धर्माधर्मौ सितासितौ ।
अभ्युक्ष्य पञ्चगव्येन गन्धमाल्यैस्समर्चयेत् ॥
सितपुष्पस्तु धर्मस्स्यात् अधर्मोऽसितपुष्पधृक् ।
एवं विधायोपालिप्य पिण्डयोस्तु निधापयेत् ॥
गोमयेन मृदा वाऽपि पिण्डौ कार्यौ समन्ततः ।
मृद्भाण्डकेऽनुपहते स्थाप्यौ चानुपलाक्षितौ ॥
उपलिप्ते शुचौ देशे देवब्राह्मणसंनिधौ ।
आवाहयेत्ततो देवान् लोकपालांश्च पूर्ववत् ॥
धर्मावाहनपूर्वं तु प्रतिज्ञापत्रकं लिखेत् ।
यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे ॥
अभियुक्तस्ततश्चैकं प्रगृह्णीताविलम्बितः ।
धर्मे गृहीते शुद्धः स्यादधर्मे तु स हीयते ॥
एवं समासतः प्रोक्तं धर्माधर्मपरीक्षणम् ।

इति । सीसकायसं सीसकमिश्रायसनिर्मितम् । आयसनिर्मितं वेति वर्णयन्ति । पिण्डयोस्तौ निधापयेत् पिण्डयोरभ्यन्तरे तौ स्थापयेदित्यर्थः । पिण्डौ समपरीमाणौ कर्तव्यौ,

समौ कृत्वा नवे कुम्भे स्थाप्यौ चानुपलक्षितौ ।

इति बृहस्पतिस्मरणात् ।

यदि पापविमुक्तोऽहं धर्मस्त्वायातु मे करे ।

इति मन्त्रं शोध्यो ब्रूयात्, अहमिति मन्त्रलिङ्गात् । अन्यत्सर्वं व्यक्तार्थम् ।

इति स्मृतिचन्द्रिकायां धर्मजविधिः

समाप्तं च दिव्यप्रकरणम् ॥ क्रियापादश्च समाप्तः ॥



## अथ निर्णयादिकृत्यम्

तत्र सङ्ग्रहकारः—

उक्तप्रकाररूपेण स्वमतस्थापिता क्रिया ।
राज्ञा परीक्ष्य सभ्यैश्च स्थाप्यौ जयपराजयौ ॥
यो यथोक्तान्यतमया क्रिययाऽर्थं प्रसाधयेत् ।
भाषाक्षरसमं साध्यं स जयी परिकीर्तितः ॥
असाधयन् साधयित्वा विपरीतार्थमात्मनः ।
दृष्टकारणदोषो यः पुनस्स तु पराजयी ॥

इति । अत्र व्यासः—

जितं तु दण्डयेद्राजा जेतुः पूजां प्रवर्तयेत् ।
अजिता अपि दण्ड्याः स्युः वेदशास्त्रविरोधिनः ॥

पूजा च गन्धमाल्यवस्त्रादिना कार्या ।

जेतुः प्रवर्तते पूजा गन्धमाल्याम्बरादिना ॥

इति तेनैव स्मृतत्वात् । पूजाप्रवर्तनानन्तरं कात्यायनः—

सिद्धेनार्थेन संयोज्यो वादी सत्कारपूर्वकम् ।
लेख्यं स्वहस्तसंयुक्तं तस्मै दद्यात्तु पार्थिवः ॥

नारदोपि—

मध्ये यत् स्थापितं द्रव्यं चलं वा यदि वा स्थिरम् ।
पश्चात्तत्सोदयं दाप्यं जयिने पत्रसंयुतम् ॥

पत्रं जयपत्रम् । तथाच बृहस्पतिः—

पूर्वोत्तराक्रियायुक्तं निर्णयान्तं यदा नृपः ।
प्रदद्याज्जयिने लेख्यं जयपत्रं तदुच्यते ॥

जयपत्रे च यद्वक्तव्यं तदखिलं लेख्यविधावुक्तं, तदत्रानुसन्धेयम् । 'सिद्धेनार्थेन संयोज्य' इत्यस्य क्वचिद्विषये विशेषमाह याज्ञवल्क्यः—

निह्नुते लिखितं नैकमेकदेशविभावितः ।
दाप्यस्सर्वं नृपेणार्थं न ग्राह्यस्त्वनिवेदितः ॥

अस्यार्थः—निष्कवस्त्राभरणाद्यनेकं प्रतिज्ञाकाले लिखितं यदा प्रतिवादी निह्नुते मिथ्यैतदित्युक्तवान् । एकदेशविभावितः वादिना चैकदेशप्रमाणत एव सत्यं मयेत्यङ्गीकारितः स सर्वमेव प्रतिज्ञातमर्थमर्थिने नृपेण दाप्यः । नैवं प्रतिज्ञायां लिखितः । पश्चाद्वादिनोच्यमानोऽर्थः नृपेण न दाप्यतया ग्रहीतव्य इति । एतदुक्तं भवति—

छलं निरस्य भूतेन व्यवहारान् नयेन्नृपः ।

इत्युक्तमेवंविधविषये नृपेण नादर्तव्यम्, दुष्टाशयत्वस्यात्र सिद्धत्वादिति । न च वाच्यं छलानुसारित्वात् सर्वदापनमपि नृपेण नादरणीयमिति । यदाह कात्यायनः—

सर्वापलापं यः कृत्वा मिथोऽल्पमपि संवदेत् ।
सर्वमेव तु दाप्यः स्यादभियुक्तो बृहस्पतिः ॥

आदरार्थं बृहस्पतिग्रहणम् । नारदोपि सर्वदापनमादर्तव्यमिति दर्शयितुमभियुक्तदेयत्वमाह—

अनेकार्थाभियुक्तेन सर्वार्थव्यपलापिना ।
विभावितैकदेशेन देयं यदभियुज्यते ॥

ननु प्राचीनवचनानां प्रागुक्तार्थाभिधाने धर्मनिर्णयार्थता न स्यात् छलानुसारेण तेषां व्यवहारनिर्णयाभिधायकत्वात् । सत्यं— तथाऽपि न दोषः—प्रागुक्तविषये व्यवहारनिर्णयस्य धर्मनिर्णयबाधकत्वात् । अत एव बृहस्पतिः—

केवलं शास्त्रमाश्रित्य क्रियते यत्र निर्णयः ।
व्यवहारस्स विज्ञेयो धर्मस्तेनापि हीयते ॥

इति । यत्र प्रागुक्तविषयादावित्यर्थः । यत्तु कात्यायनेनोक्तम्—

अनेकार्थाभियोगेऽपि यावत् संसाधयेद्धनी ।
साक्षिभिस्तावदेवासौ लभते साधितं धनम् ॥

इति, तद्यत्र दुष्टाशयत्वस्यात्यन्तदार्ढ्याभावस्तद्विषयम् । प्राचीनवचनेष्विवात्र प्रतिवादिनः सर्वापलापलक्षणदौष्ट्यकथनांशा-

भावात्। केचिदस्य वचनस्य पुत्रादिदेयपित्रादिऋणविषयत्वं वदन्ति 'तत्रैव नाभिजानामि' इत्युत्तरत्रयसम्भवादिति वदन्तः। तन्न समीचीनम्—स्वकृतऋणविवादेऽपि विस्मरणादिनोत्तरत्रयस्य सम्भवात्। पुत्रादेः पित्रादिकृतऋणविवादे मिथ्यैतदित्युत्तरमुक्तवतो निह्नववादित्वेऽपि साधितमात्रदानप्रसङ्गाच्च। अथ—पुत्रादेर्मिथ्यैतदित्युत्तरं न सम्भवतीत्युच्यते। मैवं वोचः—ऋणग्रहणकाले प्रबुद्धस्य अप्रबुद्धस्यापि मात्रादिवचनतस्तत्सम्भवात्। अथ नाभिजानामीत्युत्तरमुक्तवति पुत्रादौ साधितमात्रलाभवचनमित्युच्यते, तर्हि नाभिजानामीत्याद्युत्तरत्रयविषयकत्वं तस्य परिकल्प्यताम्, किं पुत्रादिविषयत्वेन। अथ—

पुत्रपौत्रै ऋणं देयं निह्नवे साक्षिभावितम्॥

इति स्मरणात् पुत्रादिविषयत्वमित्युच्यते, तर्हि मिथ्यैतदित्युक्तपुत्रादिविषयत्वं न पुनः नाभिजानामीत्युक्तवत्पुत्रादिविषयत्वं, 'निह्नवे साक्षिभावितम्' इति स्मरणात्॥

अन्ये त्वन्यथा व्यवस्थापयन्ति सर्वार्थदापनवचनं प्रतिज्ञातार्थानां मध्ये यद्येकमप्यर्थमर्थी साधयति, तदा सर्वानेतानर्थानहं ददामीत्येवं सावष्टम्भोक्तियुक्तनिह्नवविषयम्। तद्रहितविषयं तु साधितमात्रलाभवचनमिति। एतदप्ययुक्तम्, 'निह्नुते लिखितं नैकम्' इत्यपि शेषेणाभिधानात्। न च छलोदाहरणपरत्वादस्य वाक्यस्य तत्सिद्धये सावष्टम्भनिह्नवविषयत्वमास्थीयत इति युक्तम्, सर्वा-

पलापच्छलमादाय व्यवहारसमाप्त्यभिधानात् ।तावतैव वाक्यस्य छलोदाहरणपरत्वासिद्धेः । भाषावलेनैवोक्तविषये सर्वदापनात् अनुवादकं च 'निह्नुते' इत्यादिवचनं, तत्समानार्थं वचनद्वयमपि स्यात् । न च–

अनेकार्थाभियोगेऽपि यावत् संसाधयेद्धनी ।

इत्यादिकात्यायनवचनपरिहारायैवमाश्रीयत इति युक्तम् । तद्विरोधस्य ऋजुमार्गेण परिहृतत्वादित्यलमतिविस्तरकारिणा मतान्तरोपन्यासनिरासेन ॥

दापनप्रकारस्तु कात्यायनेन दर्शितः—

राजा तु स्वामिने विप्रं सान्त्वेनैव प्रदापयेत् ।
देशाचारेण चान्यांस्तु दुष्टान् संपीड्य दापयेत् ॥
रिक्थिनं सुहृदं वाऽपि छलेनैव प्रदापयेत् ॥

इति । न केवलं राजा स्वामिने प्रदापयेत्, स्वयमपि दण्डं गृह्णीयादित्याह नारदः—

ऋणिकस्सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यः स्यात् गृहीत्वांशं तु विंशकम् ॥

दाप्यार्थस्य यावान् विंशतितमो भागः तावन्तमर्थमधमर्णिकात् गृह्णीयादित्यर्थः । एतदपि प्रतिपन्नऋणिकविषयम् । विप्रतिपन्नऋणित्वे त्वाह विष्णुः—'उत्तमर्णश्चेद्राजानमियात्तद्विभावितोऽधमर्णो राज्ञे धनदशभागसमं दण्डं दद्यात् । प्राप्तार्थश्चोत्तमर्णो

विंशतितममंशम्' इति। प्राप्तार्थेन दानभृतित्वेन, न दण्डत्वेन निरपराधित्वात्। यदा त्वधमर्णो राजानमियात्तदा मनुराह—

यस्साधयन्तं छन्देन वेदयेद्धनिकं नृपे।
स राज्ञर्णचतुर्भागं दाप्यस्तस्य च तद्धनम्॥

यो राज्ञः प्रियोऽधमर्णस्तदाज्ञया प्रतिबन्धनं करिष्यामीति बुद्ध्या धनिकं छन्देन स्वेच्छया साधयन्तं प्रयुक्तधनयाचनेऽप्रवृत्तं नृपे वेदयेत् मां पीडयिष्यतीत्यावेदयेत्, असौ ऋणं तच्चतुर्भागसमं च दण्डं राज्ञा दाप्य इत्यर्थः। यत्पुनस्तेनोक्तम्—

यो यावन्निह्नवीतार्थं मिथ्या यावति वारयेत्।
तौ नृपेण ह्यधर्मज्ञौ दाप्यौ तद्द्विगुणं दमम्॥

इति तदुद्वृत्ताधमर्णोत्तमर्णविषयं, अधर्मज्ञग्रहणादित्युक्तं तद्भाष्ये। यत्तु याज्ञवल्क्येनोक्तं—

निह्नवे भावितो दद्याद्धनं राज्ञे च तत्समम्।

इति, तदुद्वृत्ताधमर्णस्योक्तदण्डपर्याप्तधनासम्भवविषये वेदितव्यम्, अन्यथा पूर्वोक्तविष्णुमनुवचनविरोधस्य दुर्वारत्वात्। मिथ्याभियोगिनस्तु अपर्याप्तधनस्यापि न तत्समदण्डः। यदाह स एव—

मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत्॥

इति। अभियोगात् अभियुक्तधनात् द्विगुणं धनं वहेत् राज्ञे दद्यादित्यर्थः। तावद्धनाभावे तु 'आनृण्यं कर्मणा गच्छेत्'

इत्याद्यनुकल्पोऽवगन्तव्यः । यत्तु नारदेनोक्तम्—

न च मिथ्याऽभियुञ्जीत दोषो मिथ्याभियोगिनः ।
यस्तत्र विनयः प्रोक्तः सोऽभियोक्तारमाव्रजेत् ॥

इति, तत्प्रतिपदोक्तदण्डाभावविषयं सामान्यशास्त्रत्वात् । तेन निह्नवे असद्वृत्तस्य यो दण्डोऽभिहितो विष्णुना स एव सद्वृत्तस्य मिथ्याभियोगिनो भवतीत्यवगन्तव्यम् । तथा—

निह्नवे तु यदा वादी स्वयं तत्प्रतिपद्यते ।
ज्ञेया सा प्रतिपत्तिस्तु तस्यार्धो विनयः स्मृतः ॥

इति व्यासेन यो दण्डोऽभिहितः स एव मिथ्याभियोगेऽपि स्वयं तत्प्रतिपद्यमानस्य भवतीति चावगन्तव्यम् । यत्पुनर्मनुनोक्तम्—

अर्थेऽपव्ययमानं तु कारणेन विभावितम् ।
दापयेद्धनिकस्यार्थं दण्डलेशं च शक्तितः ॥

इति, तद्दशमांशदण्डदानासमर्थसद्वृत्ताधमर्णविषयमित्युक्तं तद्भाष्ये । कारणेनेति वदन् द्विपादव्यवहारे त्वर्थदापनमेव, न दण्डदापनम्, तत्र निह्नवमिथ्याभियोगयोरभावादिति दर्शयति । एवमेव चतुष्पादेऽपि व्यवहारे शङ्काभियोगाज्ञानोत्तरादिना मिथ्याभियोगनिह्नवाभावे दण्डाभावोऽध्यवसेयः । यत्तु स्मृत्यन्तरम्—

आद्ये तु दण्डपादस्स्यात् द्वितीयेऽर्धं तृतीयके ।

पादन्यूनं चतुर्थे च पादे सम्पूर्णदण्डभाक् ॥

इति, तद्विगीतत्वादप्रमाणामिति प्रपञ्चितं विश्वरूपाचार्येण। अतो निह्नवमिथ्याभियोगनिमित्तो दण्डश्चतुष्पद्येव व्यवहारे निमित्तसद्भावविषये ग्रहीतव्यः। तत्र ऋणादानविषयव्यवहारे दण्डविशेषो दर्शितः। निक्षेपादिविषयव्यवहारे तु दण्डविशेषस्तत्रतत्र पदे वक्ष्यते। यत्पुनः कात्यायनेनोक्तम्—

शतार्धं दापयेच्छुद्धमशुद्धो दण्डभाग्भवेत् ॥

इति, तद्दिव्यविशेषावधृतशुद्धपुरुषविषयं, यतोऽनन्तरमाह स एव—

विषे तोये हुताशे च तुलाकोशे च तण्डुले।
तप्तमाषकदिव्ये च क्रमाद्दण्डं प्रकल्पयेत् ॥
सहस्रं षट्शतं चैव तथा पञ्चशतानि तु।
चतुस्त्रिद्व्येकमेवंच हीनं हीनेषु कल्पयेत् ॥

इति। अयं च दिव्यनिबन्धनो दण्डो निह्नवमिथ्याभियोगयोरन्यतरनिबन्धेन दण्डेन समुच्चीयते, निमित्तसमुच्चयात्। पणस्तु शास्त्रोक्तदण्डेन समुच्चीयते इत्याह याज्ञवल्क्यः—

सपणश्चेत् विवादस्स्यात् तत्र हीनं तु दापयेत्।
दण्डं च स्वपणं चैव धनिने धनमेव च ॥

नारदोऽपि—

विवादे सोत्तरपणे द्वयोर्यस्तत्र हीयते।
स पणं स्वकृतं दाप्यो विनयं च पराजये ॥

इति । अत्र कात्यायनः—

एवं धर्मासनस्थेन समेनैव विवादिना ।
कार्याणां निर्णयो दृश्यो ब्राह्मणैस्सह नान्यथा ॥

बृहस्पतिरपि—

राज्ञा यत्नेन कर्तव्यं सन्दिग्धार्थविचारणम् ।
त्रयस्तत्रोपचीयन्ते हानिरेकस्य जायते ॥
जेताऽऽप्नोति धनं पूजां जितो विनयनिग्रहम् ।
जयं दानं दमं राजा सभ्याः पुण्यमवाप्नुयुः ॥

इति । नारदोपि—

एवं पश्यन् सदा राजा व्यवहारान् समाहितः ।
वितत्येह यशो दीप्तं शक्रस्यैति सलोकताम् ॥

बृहस्पतिरपि—

एवं शास्त्रोदितं राजा कुर्वन्निर्णयपालनम् ।
वितत्येह यशो लोके महेन्द्रसचिवो भवेत् ॥
साक्षिलेख्यानुमानेन प्रकुर्वन् कार्यनिर्णयम् ।
वितत्येह यशो राजा ब्रध्नस्याप्नोति विष्टपम् ॥

इति । मनुरपि—

कामक्रोधौ तु संयम्य योऽर्थं धर्मेण पश्यति ।
प्रजास्तमनुवर्तन्ते समुद्रमिव सिन्धवः ॥

यस्त्वधर्मेण कार्याणि मोहात्कुर्यान्नराधिपः ।
अचिरात्तं दुरात्मानं वशे कुर्वन्ति शत्रवः ॥ इति ॥

इति स्मृतिचन्द्रिकायां निर्णयादिकृत्यम् ॥

---

अथान्यान्यपि दण्डविषयाणि कानिचिद्वचनानि लिख्यन्ते. तत्र नारदः—

शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः ।
शारीरस्ताडनादिस्तु मरणान्तः प्रकीर्तितः ॥
काकण्यादिस्त्वर्थदण्डः सर्वस्वान्तस्तथैवच ।

इति । अत्र शारीरो दण्डभेदः परिगणयितुं शक्यो नार्थदण्डभेद इत्याह स एव—

शारीरो दशधा प्रोक्तो ह्यर्थदण्डस्त्वनेकधा ।

इति । दशधेति न संख्यानियमार्थम्, अतो बहुविधस्य शारीर दण्डस्य वक्ष्यमाणत्वात् । तथाहि—मनुना तावन्नवविधश्शारीरो दण्ड इति दर्शितः—

दश स्थानानि दण्डस्य मनुस्स्वायम्भुवोऽब्रवीत् ।
उपस्थ उदरं जिह्वा हस्तौ पादौ च पञ्चमम् ॥
चक्षुर्नासा च कर्णौ च धनं देहस्तथैव च ।

इति । उपस्थः स्त्रीपुंसयोर्लिङ्गम् । तन्निग्रहोऽगम्यागमने । चौर्ये त्वाहारनिवृत्त्यादिना जठरस्य निग्रहः । वाक्पारुष्ये जिह्वायाः ।

दण्डपारुष्ये हस्तयोः। पादप्रहारादौ पादयोः। गोप्यनिरीक्षणादौ चक्षुषः। परस्त्रीस्तनानुलेपनगन्धग्रहणादौ नासिकायाः। राजमन्त्रश्रवणादौ कर्णयोः। उत्कोचप्रदानादौ व्ययप्रतिबन्धादिना धनस्य। महापातकादौ देहस्य। अयं चोपस्थादीनां निग्रहो यत्रागम्यागमनचौर्यादौ क्षत्रविट्शूद्राणां दण्डविशेषो नाम्नातस्तत्र कार्यः—

त्रिषु वर्णेषु तानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥

इति क्षत्रियादिषु सामान्येनाभिधानात्। अक्षतो ब्राह्मणः पूर्वोक्तदण्डस्थानेष्वदण्डितो ब्राह्मण इत्यर्थः। व्रजेदिति वदन् यो निर्वासितो देशान्तरं गच्छति तस्यैवोक्तदशस्थानेष्वदण्डो न पुनर्ब्राह्मणमात्रस्येति दर्शयति। अत एव निर्वासनविधिशेषतयाऽपि तेनोक्तम्—

न जातु ब्राह्मणं हन्यात् सर्वपापेष्ववस्थितम्।
राष्ट्रादेनं बहिष्कुर्यात्समग्रधनमक्षतम् ॥

इति। यस्य तु न बहिष्कारः तस्य क्षत्रियादिवदेव दण्डः। तथा च स एव—

चतुर्णामपि वर्णानां प्रायश्चित्तमकुर्वताम्।
शारीरं धनसंयुक्तं दण्डं धर्म्यं प्रकल्पयेत् ॥

यत्तु गौतमेनोक्तं—'न शारीरो ब्राह्मणदण्डः' इति, तद्वधरूपस्याङ्गभङ्गात्मकस्य निषेधार्थं, न पुनरङ्गनिग्रहात्मकस्यापि।

तथात्वे पूर्वोक्तवचनविरोधात् । अत एव बृहस्पतिना विशेषितः—

महापातकयुक्तोऽपि न विप्रो वधमर्हति ।

इति । हारीतेनापि—

न त्वङ्गभेदं विप्रस्य प्रवदन्ति मनीषिणः ।

इति । एवञ्चाङ्गनिग्रहात्मक एव शारीरो दण्डो विप्रस्य न तु वधाद्यात्मक इत्यनुसन्धेयम् । अत एवापस्तम्बः—'चक्षुर्निरोधस्त्वेतेषु ब्राह्मणस्य' इति । निरोधश्चक्षुषो बन्धनादिना कार्यो न त्वाश्रयोद्धरणेन । अङ्गभङ्गस्य निषिद्धत्वात् । यत्तु शङ्खेनोक्तम्—'त्रयाणामपि वर्णानां धनापहारवधबन्धक्रिया । विवासनाङ्ककरणं ब्राह्मणस्य' इति, तद्दरिद्रब्राह्मणविषयम् । तथाच ब्राह्मणं प्रकृत्य गौतमः—'कर्मवियोगविख्यापनविवासनाङ्ककरणान्यवृत्तौ' इति । अवृत्तौ निर्धन इत्यर्थः । एतदुत्तमसाहसविषयम् । ऋणापलापादिविषये तु मनुराह—

क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन् ।
आनृण्यं कर्मणा गच्छेद्विप्रो गच्छेच्छनैश्शनैः ॥

कर्मकरणासामर्थ्ये तु कात्यायन आह—

धनदानासहं बुद्ध्वा स्वाधीनं कर्म कारयेत् ।
अशक्तौ बन्धनागारं प्रवेश्यो ब्राह्मणादृते ॥

मनुरपि—

स्त्रीबालोन्मत्तवृद्धानां दरिद्रानाथरोगिणाम् ।
शफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम् ॥

एवञ्च बन्धनाङ्ककरणकर्मकरणबन्धनागारप्रवेशनताडनरूपाः शारीरदण्डभेदाः पञ्च विज्ञेयाः । अतश्शारीरो दशधेत्युपलक्षणार्थमुक्तम् । नावधारणार्थमिति मन्तव्यम् । 'दण्डस्तु द्विविधस्स्मृतः' इत्येतदप्युपलक्षणार्थमेव, विधान्तरस्यापि स्मृतत्वात् । तथाहि—

शिरसो दण्डनं मुण्डस्तस्य निर्वासनं पुरात् ।
ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन च ॥

तस्य ब्राह्मणस्येत्यर्थः । ब्राह्मणस्य प्रकृतत्वात् । अथ वधस्थाने मुण्डनं दण्ड इत्याह याज्ञवल्क्यः—

ब्राह्मणस्य वधो मौण्ड्यं पुरान्निर्वासनं तथा ।
ललाटे चाभिशस्ताङ्कः प्रयाणं गर्दभेन च ॥

एवञ्च क्षत्रियादौ वध एव न मुण्डनम् । तत्र प्रतिनिधित्वेनास्मृतत्वात् । अत एव मनुः—

मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते ।
इतरेषां तु वर्णानां दण्डः प्राणान्तिको भवेत् ॥

उत्तमसाहस इति शेषः । तथाच नारदः—

वधस्सर्वस्वहरणं पुरान्निर्वासनाङ्कने ।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ॥
अविशेषेण सर्वेषामेष दण्डविधिः स्मृतः ।
वधादृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति ॥

इति । वधादृत इत्यङ्गच्छेदस्याप्युपलक्षणार्थम्,

न त्वङ्गभेदं विप्रस्य प्रवदन्ति मनीषिणः ।
तपसा चेज्यया चैव ब्राह्मणं पूज्यते सदा ॥

इति हारीतस्मरणात् । मनुस्तु—

वधदण्डपरित्यागे हेतुमाह—

न ब्राह्मणवधात्पापात् नाधर्मो विद्यते क्वचित् ।
तस्मात्तस्य वधं राजा मनसाऽपि न चिन्तयेत् ॥

अतो महापातकयुक्तोपि विप्रो न वध्य इत्याह बृहस्पतिः—

महापातकयुक्तोपि न विप्रो वधमर्हति ।

इति । किं तर्ह्यर्हतीत्यपेक्षितेऽनन्तरमुक्तं तेनैव—

निर्वासनाङ्कने मौण्ड्यं तस्य कुर्यान्नराधिपः ।

इति । निर्वासनमत्र देशतो न पुनः पुरात् । यदाह बोधायनः— 'तप्तेनायसेन ललाटेऽङ्कयित्वा विषयान्निर्वासनम्' इति । कुर्यादिति शेषः । अङ्कने तु विशेषो नारदेन दर्शितः—

गुरुतल्पे भगः कार्यः सुरापाने सुराध्वजः ।
स्तेये तु श्वपदं कार्यं ब्रह्महण्यशिराः पुमान् ॥

अङ्कनं त्विदं न क्षत्रियादिषु कर्तव्यम् । यदाहोशना—

ब्राह्मणस्यापराधेषु चतुर्ष्वङ्को विधीयते ।
गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने ॥
इतरेषां तु वर्णानामङ्कनं नात्र कारयेत् ।

इति । कस्तर्हि दण्डस्तत्रेत्यपेक्षिते बृहस्पतिः—

महापराधयुक्तांश्च वधदण्डेन शासयेत् ॥

इति । यदा तु वधदण्डेन महापराधिनो निग्रहीतुं नशक्यास्तदा मनुराह—

वधेनापि यदा त्वेतान् निग्रहीतुं न शक्नुयात् ।
तदैषु सर्वमप्येतत् प्रयुञ्जीत चतुष्टयम् ॥

किं तच्चतुष्टयमित्यपेक्षिते याज्ञवल्क्यः—

वाग्दण्डस्त्वथ धिग्दण्डो धनदण्डो वधस्तथा ।
योज्यास्समस्ता व्यस्ता वाऽप्यपराधवशादिमे ॥

वाग्दण्डः परुषशापवचनात्मकः । धिग्दण्डो धिगिति कुत्सनम् । समस्तानां योजने क्रममाह मनुः—

वाग्दण्डं प्रथमं कुर्याद्धिग्दण्डं तदनन्तरम् ।
तृतीयं धनदण्डं तु वधदण्डमतः परम् ॥

व्यस्तानां तु योजने व्यवस्थामाह बृहस्पतिः—

स्वल्पापराधे वाग्दण्डो धिग्दण्डः पूर्वसाहसे ।
मध्यमे त्वर्थदण्डस्तु राजद्रोहेषु बन्धनम् ॥
निर्वासनं वधो वाऽपि कार्यमात्महितैषिणा ।
व्यस्तास्समस्ता एकस्य महापातककारिणः ॥

इति । तथा पुरुषापेक्षयाऽपि व्यवस्था तेनैव दर्शिता—

मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक् तपस्विनाम् ।

विवादिनो नरांश्चान्यान्दोषिणोऽर्थेन दण्डयेत् ॥

आदिग्रहणेन मान्या जना गृह्यन्ते ।

गुरून् पुरोहितान् पूज्यान् वाग्दण्डेनैव दण्डयेत् ।
विवादिनो नरांश्चान्यान् धिग्धनाभ्यां च दण्डयेत् ॥

इति तेनैवोक्तत्वात् । यत्तु शङ्खेनोक्तम्—'अदण्ड्यौ मातापितरौ स्नातकपुरोहितौ परिव्राजकवानप्रस्थौ जन्मकर्मश्रुतिशीलशौचाचारवन्तश्च' इति । यदपि कात्यायनेन—

आचार्यस्य पितुर्मातुर्बान्धवानां तथैव च ।
एतेषामपराधेषु दण्डो नैव विधीयते ॥

इति, तच्छारीरार्थदण्डयोर्निषेधार्थं, न पुनर्दण्डमात्रस्य । यदाह मनुः—

पिताऽऽचार्यस्सुहृन्माता भार्या पुत्रः पुरोहितः ।
नादण्ड्यो नाम राज्ञोऽस्ति धर्माद्विचलितः स्वकात् ॥

बृहस्पतिरपि—

ऋत्विक्पुरोहितामात्याः पुत्रास्सम्बन्धिबान्धवाः ।
धर्माद्विचलिता दण्ड्या निर्वास्या राजहिंसकाः ॥

यत्तु गौतमेनोक्तं—'षड्भिः परिहार्यो राज्ञाऽवध्यश्चाबन्ध्यश्चादण्ड्यश्चाबहिष्कार्यश्चापरिवाद्यश्चापरिहार्यश्च' इति तदेतत् 'स एष बहुश्रुतो भवति । लोकवेदवेदाङ्गवित् । वाकोवाक्येतिहासपुराणकुशलः । तदपेक्षः तद्वृत्तिः । चत्वारिंशता

संस्कारैरसंस्कृतः। त्रिषु कर्मस्वभिरतः। षट्सु वा। सामयाचारिकेष्वभिविनीतः’ इति प्रतिपादितबहुश्रुतविषयम्। अतो न प्राचीनवचनविरोधः। कात्यायनोप्यदण्ड्यमाह—

प्राणात्यये तु यत्र स्यादकार्यकरणं कृतम्।
दण्डस्तत्र तु नैव स्यादेष धर्म्यो भृगुस्मृतः॥

नारदस्तु विहितदण्डार्धेन दण्डमाह—

अयुक्तं साहसं कृत्वा प्रत्यापत्तिं व्रजेत्तु यः।
ब्रूयात्स्वयं वा सदसि तस्य चार्धो दमस्स्मृतः॥

व्यासोपि—

व्याधिना पीडितो यस्तु यः कश्चिदपि ताम्यति।
नैतन्मया पुनः कार्यं ब्रूयात्तस्यार्धको दमः॥

अत्र पक्षान्तरमाह गौतमः—‘अनुज्ञानं वा वेदवित्समयवचनात्’ इति। अनुज्ञानं अदण्डयित्वोत्सर्जनम्। तथा विहितदण्डादभ्यधिकमूनं वा दोषिणः पीडाजननसमर्थं दण्डं विदध्यादित्याह स एव—‘दण्डो दमनादित्याहुस्तेनादान्तान् दमयेत्’ इति। यावति पीडाविशेषे दमनकार्योपशमस्तावत्पीडाकरं कुर्यादित्यर्थः। तथाच मनुः—

अनुबन्धं परिज्ञाय देशकालौ च तत्त्वतः।
सारापराधावालोच्य दण्डं दण्ड्येषु पातयेत्॥

याज्ञवल्क्योपि—

ज्ञात्वाऽपराधं देशं च कालं बलमथापि वा ।
वयः कर्म च वित्तं च दण्डं दण्ड्येषु पातयेत् ॥

तत्रोदाहरणमाह मनुः—

कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः ।
तत्र राज्ञो भवेद्दण्डः सहस्रमिति धारणा ॥

प्राकृतो दरिद्रः । राजा ऐश्वर्येणाधिष्ठितः । कात्यायनोऽपि—

येन दोषेण शूद्रस्य दण्डो भवति धर्मतः ।
तेन चेत् क्षत्रविप्राणां द्विगुणो द्विगुणो भवेत् ॥
प्रव्रज्यावसितं शूद्रं जपहोमपरायणम् ।
वधेन शासयेत्पापं दण्ड्यो वा द्विगुणं दमम् ॥

बृहस्पतिरपि—

वधार्हस्सुवर्णशतं दमं दाप्यस्तु पूरुषः ।
अङ्गच्छेदार्हकस्त्वर्धं संदंशार्हस्तदर्धकम् ॥
ताडनं बन्धनं चैव तथैव च विडम्बनम् ।
एष दण्डो हि दासस्य नार्थदण्डो बृहस्पतिः ॥

नारदोऽपि—

काकण्यादिस्तु यो दण्डः स तु माषपरः स्मृतः ।
माषावरार्धो यः प्रोक्तः कार्षापणपरस्तु सः ॥
कार्षापणावरार्धस्तु चतुष्कार्षापणोत्तरः ।
द्व्यवरोऽष्टपरश्चान्यस्त्र्यवरो द्वादशान्ततः ॥

कार्षापणास्तु ये प्रोक्तास्सर्वे ते स्युश्चतुर्गुणाः ।

इति । काकण्यादिशब्दार्था दिव्यप्रकरणे दर्शिताः । अत्र कात्यायनः—

कल्पितो यस्य यो दण्डस्त्वपराधस्य यत्नतः ।
पणानां ग्रहणं तु स्यात्तन्मूल्यं वाऽथ राजनि ॥
माषपादो द्विपादो वा दण्डो यत्र प्रवर्तितः ।
अनिर्दिष्टं तु विज्ञेयं माषकं तु प्रकल्पयेत् ॥

यत्रोक्तो माषैर्दण्डो राजतं तत्र निर्दिशेत् ।
कृष्णलैश्चोक्तमेव स्यादुक्तदण्डविनिश्चयः ॥

इति । पणानां कार्षापणानामित्यर्थः । तेषां सङ्ख्याभेदनिन्धनाः पारिभाषिक्यः संज्ञा मनुना दर्शिताः—

पणानां द्वे शते सार्धे प्रथमः साहसस्स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रं चैव चोत्तमः ॥

इयं परिभाषा प्रथमापराधविषयेऽनुवर्तव्या । पुनःपुनरपराधविषये त्वाह याज्ञवल्क्यः—

साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ।
तदर्धं मध्यमः प्रोक्तस्तदर्धमधमस्स्मृतः ॥

अतो यत्रयत्रोत्तमसाहसादिशब्दैर्दण्डो निगद्यते तत्र तत्र एतत्सङ्ख्याकाः कार्षापणास्तन्मूल्यनिष्कादयो वा ग्रहीतव्याः । एवमुक्तप्रकारो दण्डः सर्वलोकानन्दहेतुरित्याह स एव—

यथाशास्त्रं प्रयुक्तस्सन् सदेवासुरमानवम् ।
जगदानन्दयेत्सर्वमन्यथा तत्प्रकोपयेत् ॥

तथोच्छास्त्रदण्डनस्य निन्दां विपरीतस्य प्रशंसां चाह स एव—

अधर्मदण्डनं स्वर्गकीर्तिलोकविनाशनम् ।
सम्यक्तु दण्डनं राज्ञः स्वर्गकीर्तिजयावहम् ॥

दण्ड्यास्तु तेन दण्डेन क्षीणपापा भवन्तीत्याह नारदः—

राजभिर्धृतदण्डास्तु कृत्वा पापानि मानवाः ।
निर्मलाः स्वर्गमायान्ति सन्तस्सुकृतिनो यथा ॥

कात्यायनोपि—

शुद्धिस्तु शास्त्रतत्त्वज्ञैश्चिकित्सा समुदाहृता ।
प्रायश्चित्तं च दण्डं च ताभ्यां सा द्विविधा स्मृता ॥

इति स्मृतिचन्द्रिकायां दण्डविषयाणि ॥

---

## अथ पुनर्न्यायः.

तत्र नारदः—

स्त्रीषु रात्रौ बहिर्ग्रामादन्तर्वेश्मन्यरातिषु ।
व्यवहारः कृतोप्येषः पुनः कर्तव्यतामियात् ॥

स्त्रीभिश्शत्रुभिर्वा रहसि वा निर्णीतो व्यवहारोऽज्ञानपक्षपातयोस्सम्भवात् पुनर्विचारणीय इत्यर्थः । एवं बलात्कारेण रागद्वेषाद्युपाधिना वा निर्णीतं निवर्त्य व्यवहारान्तरं प्रवर्तनीयम् ।

तथाच याज्ञवल्क्यः—

बलोपाधिविनिर्वृत्तान्व्यवहारान्निवर्तयेत् ॥

इति । ततः पश्चाद्व्यवहारान्तरं प्रवर्तयेदित्यभिप्रायः । तथा व्यवहर्तृवैगुण्येऽप्येवं कार्यमित्याह स एव—

मत्तोन्मत्तार्तव्यसनिबालभीतादियोजितः ।
असान्दिग्धकृतश्चैव व्यवहारो न सिध्यति ॥

आदिशब्देन वृद्धयोजितादयो व्यवहारा गृह्यन्ते । अत एव मनुः—

मत्तोन्मत्तार्ताद्यधीनैः बालेन स्थविरेण वा ।
असम्बन्धकृतश्चैव व्यवहारो न सिध्यति ॥

असम्बन्धः अर्थिप्रत्यर्थिसंबन्धरहितः । नारदोपि—

पुरराष्ट्रविरुद्धश्च यश्च राज्ञा विवर्जितः ।
अनादेयो भवेद्वादः धर्मविद्भिरुदाहृतः ॥

हारीतोपि—

राज्ञा विवर्जितो यस्तु स्वयं पौरविरोधकृत् ।
राष्ट्रस्य वा समस्तस्य प्रकृतीनां तथैव च ॥
अन्ये वा ये पुरे ग्रामे महाजनविरोधकाः ।
अनादेयास्तु ते सर्वे व्यवहाराः प्रकीर्तिताः ॥

एवंचैवंविधव्यवहारं तीरितमप्यनुशिष्टमपि निवृत्य व्यवहारान्तरं कर्तव्यमिति तात्पर्यार्थोऽनुसन्धेयः । तीरितानुशिष्टयोर्भेदमाह कात्यायनः—

असत्सदिति यः पक्षस्सभ्यैरेवावधार्यते ।
तीरितः सोऽनुशिष्टस्तु साक्षिवाक्यात् प्रकीर्तितः ॥

साक्षिवाक्यादवधारितोऽनुशिष्ट इत्यर्थः । यत्पुनर्मनुनोक्तं—

तीरितं चानुशिष्टं च यत्र क्वचन यद्भवेत् ।
कृतं तद्धर्मयोर्विद्यात् न तद्भूयो निवर्तयेत् ॥

इति, तत् स्त्रीकृत्वादिनिवृत्तिहेत्वभावविषय एवोत्सर्गमात्रमिति मन्तव्यम् । अत एव तस्यापवादमाह बृहस्पतिः—

कुलादिभिर्निश्चितेऽपि न संतोषं गतस्तु यः ।
विचार्य तत्कृतं राजा कुकृतं पुनरुद्धरेत् ॥

विहितनिर्णेतृनिर्णीतेऽपि व्यवहारसमाप्तिरन्यायेनेति यदि विवादी मन्यते तदाऽपि पुनर्न्यायः कार्य इत्यर्थः । कुकृतत्वे सिद्धे प्राङ्न्यायद्रष्टॄणां दण्डमाह नारदः—

दुर्दृष्टे व्यवहारे तु सभ्यास्ते दण्डमाप्नुयुः ।
न हि जातु विना दण्डात् कश्चिन्मार्गेऽवतिष्ठते ॥

अयं च सभ्यानामेव दण्डः जेतुः दुर्दर्शनाप्रयोजकत्वे वेदितव्यः । प्रयोजकत्वे तत्रास्यापि दण्डः, तथा च बृहस्पतिः—

निश्चित्य बहुभिस्सार्धं ब्राह्मणैश्शास्त्रपारगैः ।
दण्डयेज्जयिना साकं पूर्वं सभ्यांस्तु दोषिणः ॥

जयिना साकं दण्डनमपि सभ्यदण्डप्रकरणोक्तविधिनैवेत्याह याज्ञवल्क्यः—

दुर्दृष्टांस्तु पुनर्दृष्ट्वा व्यवहारान्नृपेण तु ।
सभ्यास्सजयिनो दण्ड्या विवादाद्द्विगुणं दमम् ॥

दुर्दृष्टान् सजयिसभ्यदोषेणेत्यर्थः । यदा तु साक्षिदोषेण व्यवहारस्य दुष्टता, तदा साक्षिदण्डप्रकरणोक्तविधिना साक्षिण एव दण्ड्या न जयी नापि सभ्याः । यदा पुनः सजयिसाक्षिदोषेण, तदा त एव दण्ड्याः, न सभ्या इत्यभिप्रायः । एवमसन्तोषमात्रेण पुनर्न्यायः प्रकृतस्य निर्णयस्य न्यायाभासत्वे सति विधातव्यः । सम्यङ्न्यायत्वे नारद आह—

तीरितं चानुशिष्टं च यो मन्येत विधर्मतः ।
द्विगुणं दण्डमास्थाय तत्कार्यं पुनरुद्धरेत् ॥

विधर्मतः धर्मशास्त्रविरोधतो जातमिति यो विवादी सम्याङ्निर्णीतमप्यौद्धत्यात् मन्यत इत्यर्थः । अत्र व्यवहारसमाप्तेरन्यथात्वासम्भवात् पुनर्न्यायानन्तरमपि प्राङ्न्यायपराजित एवाङ्गीकृतदण्डेन दण्ड्य इत्याह याज्ञवल्क्यः—

यो मन्येताजितोऽस्मीति न्यायेनापि पराजितः ।
तमायान्तं पुनर्जित्वा दापयेत् द्विगुणं दमम् ॥

एवं सदण्डः पुनर्न्यायः सनृपोत्तरसभायामेव, नृपस्यैव दण्डनेऽधिकारात् । नृपरहितायां तूत्तरसभायां दण्डविरहितः पुनर्न्यायः कार्यः दण्डांशस्य नृपैककार्यत्वात् । उत्तरसभयाच पूर्वसभातो ज्यायस्या भवितव्यं, अन्यथा सन्देहानिवृत्तेः । सभ्यानां च ज्या-

यस्त्वतारतम्यं निर्णेतृनिर्णयप्रकरणे दर्शितम् । नृपसभादृष्टस्य कुदृष्टत्वशङ्कायां तु प्रकृष्टनृपान्तरसभायां पुनर्न्यायः, तथाच स्मृत्यन्तरम्—

न्यायापेतं यदन्येन राज्ञाऽज्ञानकृतं भवेत् ।
तदप्यन्यायविहितं पुनर्न्याये निवेशयेत् ॥

यत्पुनः पितामहेनोक्तं—

ग्रामे दृष्टः पुरं यायात्पुरे दृष्टस्तु राजनि ।
राज्ञा दृष्टः कुदृष्टो वा नास्ति तस्य पुनर्नयः ॥

इति, तत्पूर्वसभातः प्रकृष्टसभान्तरालाभविषयम् । स्ववाक्यजितस्य तु प्रकृष्टसभान्तरसद्भावेऽपि न पुनर्न्याय इत्याह नारदः—

साक्षिसभ्यावसन्नानां दूषणे दर्शनं पुनः ।
स्ववाचैव जितानां तु नोक्तः पौनर्भवो विधिः ॥

साक्षिवाक्यात्सभ्यैरेव कृताद्वा निर्णयात् पराजितानां व्यवहारस्य पुनर्दर्शनं पूर्वदर्शनस्य दूषणे सतीत्यर्थः । सभ्यग्रहणममात्यादेरुपलक्षणार्थम् । अत एव मनुः—

अमात्यः प्राड्विवाको वा यः कुर्यात्कार्यमन्यथा ।
तत्स्वयं नृपतिः कुर्यात्तं सहस्रं च दण्डयेत् ॥ इति ॥

इति स्मृतिचन्द्रिकायां पुनर्न्यायः

---

## अथ कृतनिवर्तनम्

तत्र मनुः—

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाऽप्युपधिं पश्येत्तत्सर्वं विनिवर्तयेत् ॥

योगः परकीयधनस्यात्मीयत्वापादकहेत्वभावेऽपि याचितकादिना हस्तगतत्वादिसम्बन्धः । अधमनं बन्धकरणम्, योगेनाधमनम् । एवं योगविक्रीतादावपि विग्रहः । यमोपि—

बलाद्दत्तं बलाद्भुक्तं बलाद्यच्चापि लेखितम् ।
सर्वान् बलकृतानर्थान्निवर्त्यानाह वै मनुः ॥

कात्यायनोऽपि—

उन्मत्तेनैव मत्तेन तथा भावान्तरेण वा ।
यद्दत्तं यत्कृतं वाऽथ प्रमाणं नैव तद्भवेत् ॥

नारदोपि—

यद्बालः कुरुते कार्यमस्वतन्त्रस्तथैव च ।
अकृतं तदिति प्राहुः शास्त्रे शास्त्रविदो जनाः ॥

बालास्वतन्त्रावपि तेन निरूपितौ—

गर्भस्थैस्सदृशो ज्ञेय आऽष्टमाद्वत्सराच्छिशुः ।
बाल आषोडशाद्वर्षात् पौगण्डश्चापि शब्द्यते ॥
परतो व्यवहारज्ञस्स्वतन्त्रः पितरं विना ॥

इति । अनेन पितृमानस्वतन्त्र इत्यर्थादुक्तम् । उक्तंच शङ्खलिखि-

ताभ्यां–'अस्वतन्त्राः पितृमन्तः' इति । पितृग्रहणं मातुरपि प्रदर्शनार्थम् । अत एव नारदः—

जीवतोर्न स्वतन्त्रः स्याज्जरयाऽपि समन्वितः ।

इति । जीवतोर्मातापित्रोरिति शेषः ।

तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात् ।
अभावे बीजिनो माता तदभावे तु पूर्वजः ॥

इति तेनैवानन्तरमुक्तत्वात् । अनेन ज्येष्ठवानप्यस्वतन्त्र इत्युक्तम् । न केवलं पितृमातृज्येष्ठवानेवास्वतन्त्र इत्याह स एव—

अस्वतन्त्राः स्त्रियः पुत्रा दासा ये च परिग्रहाः ॥

इति । परिग्रहा उपजीविनः । कार्यविशेषेषु स्त्रीणामस्वातन्त्र्यमित्याह हारीतः—

दानार्थे वा धनार्थे वा धर्मार्थे वा विशेषतः ।
आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति ॥

अन्यानप्यस्वतन्त्रानाह नारदः—

अस्वतन्त्राः प्रजास्सर्वाः स्वतन्त्रः पृथिवीपतिः ।
अस्वतन्त्रः स्मृतश्शिष्यः आचार्ये तु स्वतन्त्रता ॥

अत्र स्वतन्त्रनिरूपणं चास्वतन्त्रकृतं कार्यं तेनैव निवर्तनीयमिति दर्शयितुम् । अत एव कात्यायनः—

अस्वतन्त्रकृतं कार्यं तस्य स्वामी निवर्तयेत् ।
न भर्त्रा विवदेतान्यो भीतोन्मत्तकृतादृते ॥

भीतोन्मत्तादिकृतनिवर्तने राज्ञ एवाधिकारात् भीतोन्मत्तादि-

स्वामिना कृतनिवर्तकेन सहान्यस्य विवादो नात्यन्तानुचित इत्यभिप्रायः । अस्वतन्त्रकृतनिवर्तनस्य क्वचिदपवादमाह नारदः—

एतान्येव प्रमाणानि भर्ता यद्यनुमन्यते ।
पुत्रः पत्युरभावे वा जाया वा पतिपुत्रयोः ॥
तथा दासकृतं कार्यमकृतं परिचक्षते ।
अन्यत्र स्वामिसन्देशान्न दासः प्रभुरात्मनः ॥
पुत्रेण च कृतं कार्यं यत्स्यादच्छन्दतः पितुः ।
तदप्यकृतमेवाहुः दासः पुत्रश्च तौ समौ ॥

इति । अस्वतन्त्रकृतनिवर्तनं स्वतन्त्रानुमत्यभावविषये कार्यमित्यर्थः । कात्यायनोपि—

न क्षेत्रगृहदासानां दानाधमनविक्रयाः ।
अस्वतन्त्रकृतास्सिद्धिं प्राप्नुयुर्नानुवर्णिताः ॥

अनुवर्णितास्तु सिद्धिं प्राप्नुवन्तीत्याह स एव—

प्रमाणं सर्व एवैते पण्यानां क्रयविक्रये ।
यदि संव्यवहारं ते कुर्वन्तोप्यनुमोदिताः ॥

एवं क्षेत्रादीनां क्रयादिकरणे स्वतन्त्रेण नियुक्ताः भ्रात्रादयोऽस्वतन्त्राः प्रमाणं स्युरित्याह स एव—

क्षेत्रादीनां तथैव स्युः भ्राता भ्रातृसुतस्सुतः ।
निसृष्टाः कृत्यकरणे गुरुणा यदि गच्छता ॥

निसृष्टाः नियुक्ता इत्यर्थः । तथा च बृहस्पतिः—

यस्स्वामिना नियुक्तस्तु धनायव्ययपालने ।
कुसीदकृषिवाणिज्ये निसृष्टार्थस्तु स स्मृतः ॥
प्रमाणं तत्कृतं सर्वं लाभालाभव्ययोदयम् ।
स्वदेशे वा विदेशे वा स्वामी तं न विसंवदेत् ॥

इति । कात्यायनोऽपि निसृष्टार्थकृतं कार्यं न स्वामी परिवर्तयितुमर्हतीत्याह—

निसृष्टार्थस्तु यो यस्मिन् तास्मिन्नर्थे प्रभुस्तु सः ।
तद्भर्ता तत्कृतं कार्यं नान्यथा कर्तुमर्हति ॥

एवमनुमतिनियुक्तयोरभावेऽपि कुटुम्बभरणार्थमस्वतन्त्रकृतं स्वतन्त्रो नान्यथाकर्तुमर्हतीत्याह मनुः—

कुटुम्बार्थे त्वधीनोऽपि व्यवहारं समाचरेत् ।
स्वदेशे वा विदेशे वा तन्नयायान्न विचालयेत् ॥

एवमापत्प्रतीकारार्थेऽपि द्रष्टव्यम् । तथाच नारदः—

स्त्रीकृतान्यप्रमाणानि कार्याण्याहुरनापदि ।

स्त्रीग्रहणमस्वतन्त्रोपलक्षणार्थम् । एवंचापद्यस्वतन्त्रकृतान्यपि प्रमाणानीत्यार्थिकोऽर्थः प्रत्येतव्यः । अत्रापवादप्रदर्शनार्थमाह स एव—

विशेषतो गृहक्षेत्रदानाधमनविक्रयाः ।

इति । गृहक्षेत्रयोर्दानाधमनविक्रयास्त्वापद्यप्यस्वतन्त्रकृता न सिध्यन्तीत्यर्थः । एवं तद्भाष्ये व्याख्यातम् । तथा स्वतन्त्रेणाप्यस्वतन्त्रकल्पेन कृतं कार्यं न सिध्यतीत्याह नारदः—

स्वतन्त्रोऽपि हि यत्कार्यं कुर्यादप्रकृतिं गतः ।
तदप्यकृतमेवाहुरस्वतन्त्रत्वहेतुतः ॥

स्वतन्त्राश्च तेनैव निरूपिताः—

त्रयः स्वतन्त्रा लोकेऽस्मिन् राजाऽऽचार्यस्तथैव च ।
प्रतिप्रति च[1] सर्वेषां वर्णानां स्वगृहे गृही ॥
स्वातन्त्र्यं तु स्मृतं ज्येष्ठे ज्यैष्ठ्यं गुणवयःकृतम् ।

इति । गृहीति वदन् गृहिण्याः स्वतन्त्रता नास्तीति दर्शयति । तेन यद्यपि मातृमतोऽस्वतन्त्रतोक्ता, तथाऽपि मातुस्स्वतन्त्रताऽवगन्तव्या । अत एवाभर्तृकया कृतस्य कार्यस्य पुत्राद्यनुमत्यैव सिद्धिरुक्ता । 'प्रकृतिं गतः' इत्यस्याप्यर्थस्तेनैव दर्शितः—

कामक्रोधाभिभूतार्ता भयव्यसनपीडिताः ।
रागद्वेषपरीताश्च ज्ञेयास्त्वप्रकृतिं गताः ॥

एवंच स्वतन्त्रप्रकृतिस्थकृतं कार्यं सिध्यति, न त्वप्रकृतिस्थस्वतन्त्रकृतमित्याह स एव—

कुले ज्येष्ठस्तथा श्रेष्ठः प्रकृतिस्थश्च यो भवेत् ।
तत्कृतं स्यात् कृतं कार्यं नास्वतन्त्रकृतं क्वचित् ॥

स्वतन्त्रप्रकृतिस्थकृतमपि पुत्रविक्रयादि कार्यं न सिध्यति, तत्र तस्यास्वतन्त्रत्वादित्याह कात्यायनः—

सुतस्य सुतदाराणां वशित्वं त्वनुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥

---

[1] प्रकृतिस्थश्च. इति पाठान्तरम्.

अतस्सुतविक्रयादि कार्यं स्वतन्त्रप्रकृतिस्थकृतमपि निवर्तनीयमित्यभिप्रायः । एकपुत्रविषयमेतदिति दत्ताप्रदानिकाख्यपदे वक्ष्यामः । एवमनेकत्वारकृतैककर्तृकैककर्मकविक्रयादावपि पुनर्विक्रयादिर्वशित्वाभावान्न सिध्यतीत्याह याज्ञवल्क्यः—

सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया ।
आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा ॥

इति । तेनोत्तरादिक्रिया निवर्तनीयेत्यभिप्रायः ॥

इति स्मृतिचन्द्रिकायां कृतनिवर्तनम्.

---

अथ बालादिधनविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र मनुः—

बालदायादकं रिक्थं तावद्राजाऽनुपालयेत् ।
यावत् स्यात् स समावृत्तो यावद्वाऽतीतशैशवः ॥

बालदायादकं बालस्वामिकं रिक्थं द्रव्यम् । अविद्यमानाप्तपुरुषविषयमेतत् । बालग्रहणं स्वधनरक्षणासमर्थोपलक्षणार्थमिति स्पष्टयितुमाह स एव—

वशाऽपुत्रासु चैवं स्यात् रक्षणं निष्कुलासु च ।
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥

वशा वन्ध्या । अपुत्रा अविद्यमानपुत्रा । निष्कुला स्वपक्षहीना । वशाप्रभृतीनां धनं येऽपहरन्ति तेषां दण्डमाह स एव—

जीवन्तीनां तु तासां ये तद्धरेयुस्स्वबान्धवाः ।
ताञ्छिष्याच्चोरदण्डेन धार्मिकः पृथिवीपतिः ॥

रक्षणसमर्थस्यापि धनं तत्स्थानापरिज्ञानादिना स्वाम्यनुपात्तमन्येन तूपादाय राज्ञे विज्ञापितं जनसमूहेषु विख्याप्य राज्ञा रक्ष्यमित्याह गौतमः—

'प्रणष्टमस्वामिकमधिगम्य राज्ञे प्रब्रूयुः । विख्याप्य संवत्सरं राज्ञा रक्ष्यम्' इति । यत्तूक्तं मनुना—

प्रणष्टस्वामिकं रिक्थं राजा त्र्यब्दं निधापयेत् ॥

इति, तदत्यन्तदूरदेशे स्वामिस्थितिसम्भावनाविषयम् । निधापनं च स्वधनामिश्रभावेन राज्ञा कार्यं, तथा च स एव—

प्रणष्टाधिगतं द्रव्यं तिष्ठेद्युक्तैराधिष्ठितम् ।
ये तत्र चोरा गृह्णीयुः तान् राजेभेन घातयेत् ॥

स्वामिनं प्रति प्रणष्टमन्येन च लब्धं प्रणष्टाधिगतम् । इभेन हास्तिना । प्रणष्टाधिगतस्य द्रव्यस्य प्रत्यर्पणमाह याज्ञवल्क्यः—

प्रणष्टाधिगतं देयं नृपेण धनिने धनम् ॥

इति । धनी च तद्धनं स्वामित्वमुद्भाव्य गृह्णीयात् । तथाच मनुः—

ममेदमिति यो ब्रूयात् सोऽनुयोज्यो यथाविधि ।
संवाद्य रूपसङ्ख्यादीन् स्वामी तद्द्रव्यमर्हति ॥

यो ममेदमिति ब्रूयात् स तस्य स्वामित्वज्ञानाय राजपुरुषैः कस्मिन् देशे कस्मिन् काले कीदृग्वर्णं कीदृशसंस्थानं किंसङ्ख्याकं

किंपरिमाणकं प्रणष्टमिति पृष्टो यादृशं प्रणष्टस्य संस्थानादिकं तादृशमेव वदन् तद्द्रव्यं ग्रहीतुमर्हतीत्यर्थः । विसंवादे त्वस्वामित्वात् ग्रहीतुं नार्हतीत्यभिप्रायः ; प्रत्युत परद्रव्यापहारे प्रवृत्तत्वात् दण्डमर्हतीत्याह स एव—

अवेदयानो नष्टस्य देशं कालं च तत्त्वतः ।
वर्णं रूपं प्रमाणं च तत्समं दण्डमर्हति ॥

तत्त्वतः अवेदयानो विसंवादं कुर्वाणः तत्समं प्रणष्टाधिगतसमम् । प्रणष्टाधिगतं संवत्सरादर्वागेव ग्रहीतुमर्हतीत्याह याज्ञवल्क्यः—

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक्संवत्सरात् स्वामी हरेत परतो नृपः ॥

अत्यन्तदूरदेशस्थस्वामिविषये तु मनुराह—

अर्वाक् त्र्यब्दाद्धरेत्स्वामी परतो नृपतिर्हरेत् ।

इति । ननु नृपतिर्हरेदित्येतत् परद्रव्यापहारप्रतिषेधकशास्त्रविरुद्धं, सत्यं—अत एवास्य पृथङ्निहितस्थानात् नृपतिः स्वधनस्थानमाहरेदित्यर्थोऽवगन्तव्यः । एवञ्चावधिमतिक्रम्यागतायापि स्वामिने रूपसङ्ख्यादिभिर्भावितं प्रणष्टाधिगतं देयमेव । किंतु ततः किंचिद्द्रव्यमवध्यतिक्रमापराधात् नृपो गृह्णीयात् । तथाच स एव—

आददीताथ षड्भागं प्रणष्टाधिगतात् नृपः ।
दशमं द्वादशं वाऽपि सतां धर्ममनुस्मरन् ॥

अथेत्यतिक्रान्तावधेः स्वामिनस्समागमनानन्तर्यमुच्यते। समागमस्यात्यन्तविलम्बे षष्ठो भागः । अतिविलम्बे तु दशमो भागः विलम्बाभावे तु द्वादशो भाग इति व्यवस्था मन्तव्या। यत्तु गौतमेनोक्तं—'ऊर्ध्वमधिगन्तुश्चतुर्थः राज्ञश्शेषः' इति, तदतिक्रान्तावधिकस्य स्वामिनो नाशनिश्चयविषये द्रष्टव्यम् । स्वामिनि म्रियमाणे त्वधिगन्तुः नृपभागचतुर्थांशो भवतीत्यस्मादेव वचनात् गम्यते । यत्तु याज्ञवल्क्येनोक्तम्—

पणानेकशफे दद्यात् चतुरः पञ्च मानुषे ।
महिषेऽष्ट गवां द्वौ द्वौ पादं पादमजाविके ॥

इति । तदेकशफादौ विशेषशास्त्रं मनूक्तषड्भागाद्यादानविधेर्बाधकमिति कैश्चिद्व्याख्यातृभिरुक्तम् । अन्यैस्त्वेकशफादावधिगन्त्रे देयं निरूपयितुं तदित्युक्तम् । प्रणष्टाधिगतनिधिहरणमधिकृत्य विशेषमाह मनुः—

ममायमिति यो ब्रूयान्निधिं सत्येन मानवः ।
तस्याददीत षड्भागं राजा द्वादशमेव वा ॥
अनृतं तु वदन्दण्ड्यस्स वित्तस्यांशमष्टमम् ॥

इति । ममायं, यतो मया मत्पुरुषैर्वा निहित इति सत्येन रूपसङ्ख्यासंवादादिप्रमाणेन ज्ञापयेदित्यर्थः । स्वामिनो निर्गुणत्वे

षड्भागमाददीत । सगुणत्वे तु द्वादशभागमिति व्यवस्थाऽत्र मन्तव्या । तथा निधिस्वामिनो विद्वद्ब्राह्मणत्वे तु तेन राज्ञे न किंचिदपि दातव्यमित्याह स एव—

विद्वांस्तु ब्राह्मणो दृष्ट्वा पूर्वोपनिहितं निधिम् ।
अशेषतोऽप्याददीत सर्वस्याधिपतिर्हि सः ॥

पूर्वोपनिहितं स्वपित्रादिभिरुपनिहितम् । विद्वद्ग्रहणं षट्कर्मिणोऽप्युपलक्षणार्थम् । अत एव वसिष्ठः—'ब्राह्मणश्चेदधिगच्छेत् षट्कर्मसु वर्तमानस्सर्वं हरेत्' इति । षट्कर्मसु यजनादिष्वित्यर्थः । यत्पुनर्मनुनोक्तम्—

निधीनां हि पुराणानां धातूनामेव च क्षितौ ।
अर्धभाग्रक्षणाद्राजा भूमेरधिपतिर्हि सः ॥

इति, तत् उक्तलक्षणब्राह्मणाधिगतास्मर्यमाणस्वामिकनिधिविषयं, पुराणानामित्यभिधानात् । यत्तु वसिष्ठेनोक्तम्—'अप्रज्ञायमानं वित्तं योऽधिगच्छेद्राजा तद्धरेदधिगन्त्रे षष्ठमंशं प्रदाय' इति, तदुक्तलक्षणरहिताधिगन्तृविषयम् । अत एव याज्ञवल्क्यः—

इतरेण निधौ लब्धे राजा षष्ठांशमाप्नुयात् ।
अनिवेदितविज्ञातो दाप्यस्तद्दण्डमेव च ॥

विद्याषट्कर्मसम्पन्नब्राह्मणादितरस्मै निध्यधिगन्त्रे दातुं राजा षष्ठांशमधिगतनिधिसकाशादाहरेदिति पूर्वार्धस्यार्थः । अधिगतनिधिवञ्चकात्तं निधिं सर्वं शक्त्यपेक्षया दण्डं च राजा गृह्णीयादित्युत्तरार्धस्यार्थः । राज्ञ एवाधिगन्तृत्वे मनुराह—

यत्र पश्येन्निधिं राजा पुराणं निहितं क्षितौ ।
तस्मात् द्विजेभ्यो दत्वाऽर्धं शेषं कोशे निवेशयेत् ॥

स्वकीयनिधेरधिगमे तु सर्वं कोशे निवेशयेत् । 'निध्यधिगमो राजधनम्' इति गौतमस्मरणात् । चोरहृतं धनं प्रति तेनोक्तं— 'चोरहृतमपजित्य यथास्थानं गमयेत्, कोशाद्वा दद्यात्' इति । प्रथमपक्षकरणासमर्थविषये द्वितीयः पक्षः । यथाऽऽह व्यासः—

प्रत्याहर्तुमशक्तस्तु धनं चोरैर्हृतं यदि ।
स्वकोशात्तद्धि देयं स्यात् अशक्तेन महीक्षिता ॥ इति ॥

इति स्मृतिचन्द्रिकायां बालादिधनविषयाणि.

---

श्रीकेशवादित्यसमुद्भवस्य देवस्य शान्तद्विजराजमूर्तेः ।
सच्चन्द्रिकां प्राप्य सुखेन लोकाः कुर्वन्तु सर्वं व्यवहारकर्म ॥

इति सकलविद्याविशारद श्रीकेशवादित्यभट्टोपाध्यायसूनु याज्ञिक देवणभट्टोपाध्याय सोमयाजिविरचितायां स्मृतिचन्द्रिकायां व्यवहारकाण्डे
प्रथमः परिच्छेदः

## अत्रेयं प्रकरणानुपूर्वी

व्यवहारस्वरूपनिरूपणम् । अष्टादशपदनिरूपणम् । व्यवहारभेदः । निर्णेतृनिर्णयः । धर्मस्थानेऽवस्थानम् । व्यवहारदर्शनविधिः । आसेधविधिः । व्यवहारदर्शनोपक्रमः । प्रतिज्ञापादः । उत्तरपादः । विवादविषयाणि । प्रत्याकलितपादः । क्रियापादः । लेख्यनिरूपणम् । लेख्यपरीक्षा । भुक्तिनिरूपणम् । साक्षिलक्षणानि । साक्षिभेदाः । असाक्षिभेदाः । साक्ष्युद्भावनम् । साक्षिपरीक्षा । साक्ष्यनुयोजनविधिः । साक्ष्यप्रश्नविधिः । साक्षिवादविधिः । साक्षिवचोविषयाणि । साक्षिविषयाणि । असाक्षिप्रत्ययाः । दिव्यनिरूपणम् । अभियोगाल्पत्वमहत्त्वज्ञानोपयोगीनि । धनपरिमाणतो दिव्यव्यवस्था । विवादिजात्यादितो दिव्यव्यवस्था । ऋतुतो दिव्यव्यवस्था । दिव्यदेशाः । घटनिर्माणविधिः । सर्वदिव्यसाधारणविधिः । घटारोपणविधिः । अग्निविधिः । कोशविधिः । तण्डुलविधिः । तप्तमाषविधिः । फालविधिः । धर्मजदिव्यविधिः । निर्णयादिकृत्यम् । दण्डविषयाणि । पुनर्न्यायः । कृतनिवर्तनम् । बालादिधनविषयाणि । इति ॥ ४७ ॥

॥ व्यवहारकाण्डे प्रथमपरिच्छेदे प्रकरणानुपूर्वी ॥



श्रीः

# स्मृतिचन्द्रिकायां व्यवहारकाण्डे

## द्वितीयपरिच्छेदः

बृहस्पतिमुखानेकमुनिवाग्वागुरान्तरम् ।
प्रविष्टो देवणाचार्यः कुरुते पदसंग्रहम् ॥

### तत्र धनप्रयोगविधिः.

सर्वव्यवहारपदसाधारणो विधिकलापः प्राक्प्रतिपादितः । संप्रति प्रतिपदमसाधारणो विधिकलापः प्रतिपाद्यते । पदानां चाष्टादशानां स्वरूपमवान्तरभेदजातं च द्वितीये प्रकरणे दर्शितम् । इह पदोद्देशक्रमेणादावृणादानाख्यपदस्य विधिरुच्यते । तत्राप्यादौ धनदानधर्मा उच्यन्ते । तत्र धनिनं प्रत्याह बृहस्पतिः—

परिपूर्णं गृहीत्वाऽऽधिं बन्धं वा साधुलग्नकम् ।
लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा ॥

परिपूर्णं सवृद्धिकमूलद्रव्यपर्याप्तमित्यर्थः । कः पुनराधिः कतिविधश्चेत्यपेक्षिते स एव—

आधिर्बन्धस्समाख्यातस्स च प्रोक्तश्चतुर्विधः ।
जङ्गमस्स्थावरश्चैव गोप्यो भोग्यस्तथैव च ॥
याद्दच्छिकस्सावधिश्च लेख्यारूढोऽथ साक्षिमान् ।

इति । यद्यप्यत्राधिरष्टविधो दार्शितः, तथाऽपि गोप्यभोग्ययादृच्छिकसावधिरूपभेदानामत्रानेकविशेषविध्युपयोगार्थतात्पर्यातिशयेन कथनं नान्येषामिति वक्तुं प्रोक्तश्चतुर्विध इत्युक्तम् । यावदृणं तव न ददामि तावदयमाधिरित्येवं कालविशेषावधिशून्यतया कृतो यादृच्छिकः । दीपोत्सवकाले ऋणं दत्त्वा अयमाधिर्मया मोक्ष्यते नो चेत्तवैव भवतीत्येवंकृतस्सावधिः । यद्येवमाधिरेव बन्ध इतीहोच्यते कथं तर्हि पूर्वस्मिन्वचने 'बन्धं वा' इति भेदेनोक्तम्, उच्यते—तत्र बन्धपदस्य यो विवक्षितार्थः स हि नारदेन दर्शितः—

निक्षेपो मित्रहस्तस्थो बन्धो विश्वासकस्स्मृतः ।

इति । उत्तमर्णाधमर्णयोर्यस्सखा तस्य पार्श्वे निक्षिप्तमेवाधमर्णधनमुत्तमर्णविश्वासार्थमधमर्णेनोपदिष्टं बन्ध इति गीयत इत्यर्थः । लग्नकः प्रतिभूः । स च स्वाम्यादिव्यतिरिक्तो ग्राह्यः, स्वाम्यादौ धनसिद्धेर्दुष्करत्वात् । अत एव तन्निषेधः कात्यायनेन दर्शितः—

न स्वामी न च वै शत्रुः स्वामिनाऽधिकृतस्तथा ।
निरुद्धो दण्डितश्चैव संदिग्धश्चैव न क्वचित् ॥
नैव रिक्थी न मित्रं च न चैवात्यन्तवासिनः ।
राजकार्यनियुक्तश्च ये च प्रव्रजिता नराः ॥
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम् ।
नाविज्ञातो ग्रहीतव्यः प्रतिभूत्वक्रियां प्रति ॥

इति । संदिग्धोऽभिशस्तः । अत्यन्तवासिनो नैष्ठिकब्रह्मचारिणः । तत्समं विवादास्पदीभूतद्रव्यसमम् । नैव रिक्थीत्यविभक्तविषयम् । यदाह याज्ञवल्क्यः—

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥

इति । नारदोपि—

साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युः नाविभक्ताः परस्परम् ॥

'लेख्यारूढं साक्षिमत्' इति चाद्यश्लोकगतमृणस्य विशेषणं मन्तव्यम् । तत्र येन प्रकारेण ऋणस्य लेख्यारूढता कर्तव्या दिङ्मात्रेण तमेव प्रकारमाह सङ्ग्रहकारः—

चिरकं नाम लिखितं पुराणैः पौरलेखकैः ।
अर्थिप्रत्यर्थिनिर्दिष्टैः यथासम्भवसंस्तुतैः ॥
स्वकीयैः पितृनामाद्यैरर्थिप्रत्यर्थिसाक्षिणाम् ।
प्रतिनामभिराक्रान्तमर्थिसाक्षिस्वहस्तवत् ॥
स्पष्टावगमसंयुक्तं यथास्मृत्युक्तलक्षणम् ।

इति । संस्तुतैः प्रशस्तैः । प्रतिशब्दोऽत्राक्रान्तपदेन सम्बध्यते । विस्तरस्त्वस्य लेख्यप्रकरणे जानपदाख्यलेख्याभिधाने द्रष्टव्यः । साक्षिमत्ताप्रकारस्य दिङ्मात्रं तु व्यासेनोक्तम्—

धर्मज्ञाः पुत्रिणो मौलाः कुलीनास्सत्यवादिनः ।

श्रौतस्मार्तक्रियायुक्ता विगतद्वेषमत्सराः ॥
श्रोत्रिया नपराधीनाः सूरयश्चाप्रवासिनः ।
युवानस्साक्षिणः कार्या ऋणादिषु विजानता ॥

इति । विस्तरस्त्वस्यापि साक्षिप्रकरणादौ द्रष्टव्यः । एवमुक्तविधिना सदा धनी ऋणं दद्यात् । वृद्ध्यर्थं धनप्रयोगं कुर्यादित्यर्थः । वृद्धिपरिमाणभेदास्तूत्तरत्र वृद्धिप्रकरणे वक्ष्यन्ते

दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ।

इत्यादिवचनैः । ते चात्रानुसन्धेयाः । एवमनेकनियमानुबन्धं धनप्रयोगं कुर्वतो दृष्टमेव फलं, दृष्टार्थमात्रार्थत्वादासां स्मृतीनाम् । अत एव व्यतिरेकमुखेन दृष्टार्थमेवाह हारीतः—

आधिं विना लग्नकं वा प्रयुक्तं बन्धकादिना ।
साक्षिलेख्यविहीनं तु विसंवादे न सिध्यति ॥

नारदोपि—

विस्रम्भहेतू द्वावत्र प्रतिभूराधिरेव च ।
लिखितं साक्षिणश्च द्वे प्रमाणे व्यक्तिकारके ॥

विस्रम्भो विश्वासः । व्यक्तिरभिव्यक्तिः । एवंचाबन्धकादिप्रयोगोपि लभ्यते । तथा प्रयोगेऽपि प्रयुक्तस्य धनस्य कथंचित् सिद्धिसम्भवात् । अत एवाबन्धकप्रयोगेऽपि वृद्धिनियमो वक्ष्यते—

सम्बन्धे भाग आशीतः षाष्ठो भागस्सलग्नके ।

निराधाने द्विकशतं मासलाभा उदाहृताः ॥

इत्यादिना । अस्वतन्त्रेषु प्रयोगनिषेधमाह कात्यायनः—

न स्त्रीभ्यो दासबालेभ्यः प्रयच्छेत् क्वचिदुद्धृतम् ।
दाता न लभते तत्तु तेभ्यो दद्यात्तु यद्वसु ॥

स्त्र्यादीनामस्वतन्त्रत्वादित्यभिप्रायः । उद्धृतं प्रयोगाय गृहीतम् ।

इति स्मृतिचन्द्रिकायां धनप्रयोगविधिः

---

अथ आधिविषयाणि कानिचिद्वचनानि लिख्यन्ते ।

तत्र हारीतः—

बन्धं यथा स्थापितं स्यात् तथैव प्रतिपालयेत् ।

इति । अधिग्रहणादूर्ध्वमाधेर्नाशह्रासविकारासारत्वव्यक्त्यन्तरत्वादयो यथा न भवन्ति तथा धनी प्रत्यर्पणपर्यन्तं प्रयतेन पालयेदित्यर्थः। एवं पाल्यमानेऽप्याधौ दैवादिवशान्नाशादिर्यदि भवेत्तदा न कश्चिद्दोषो धनिन इत्याह स एव—

दैवराजोपघाते तु न दोषो धनिनः क्वचित् ।

इति । अग्निदेशोपप्लवादिर्दैवोपघातः । अनपराधेऽप्युच्छृङ्खलत्वेन राज्ञा कृतः परोपघातो राजोपघातः । अत्र कात्यायनः—

आधीकृतं तु यत्किञ्चिद्विनष्टं दैवराजतः ।
तत्रर्णं सोदयं दाप्यो धनिनामधमर्णकः ॥

पक्षान्तरमप्याह व्यासः—

दैवराजोपघाते तु न दोषो धनिनः क्वचित् ।
ऋणं दाप्यस्तु तन्नाशे बन्धं वाऽन्यमृणी तदा ॥

एवमाधेरसारत्वेऽप्यनुसन्धेयम् । तथा च नारदः—

रक्ष्यमाणोऽपि यत्राधिः कालेनेयादसारताम् ।
आधिरन्योऽथवा कार्यो देयं वा धनिने धनम् ॥

असारता सवृद्धिकमूलद्रव्यापर्याप्तता । केचिदेकसंवत्सरभववृद्धिसहितमूलद्रव्यापर्याप्ततामसारतामाहुः, तच्चिन्त्यम्, एवंविधविशेषाश्रयणे किं कारणमिति चोद्यसम्भवात् । अन्यः पूर्वस्थितो वा आधिः पर्याप्तः कार्यः । अन्यग्रहणस्य पर्याप्तत्वेन भाव्यमित्येतावन्मात्रपरत्वात् । यतोऽसारत्वेऽपि पर्याप्तये किंचिद्देयं क्वचिदित्याह हारीतः—

आधिस्समधिकं द्रव्यं गृहीतं ग्राहकेण तु ।
अधिकं तव दास्यामि तद्दद्याद्धनिकस्य सः ॥

ग्राहकेण ऋणिकेन । अधिकं पूरकम् । यद्यपि दैवादिनिमित्तकाध्यपचारे पक्षद्वयमुक्तं, तथाऽपि धनिकदोषराहित्ये स्फुटे सति चोरस्वजनादिनिमित्तकाध्यपचारेऽपि एतत्पक्षद्वयं वेदितव्यम् । दैवादिग्रहणस्य धनिकदोषविहीनानिमित्तपरत्वेन कृतत्वात् । अत एव—

दैवराजोपघाते तु न दोषो धनिनः क्वचित् ।

इति व्यासहारीताभ्यामुक्तम् । अत एव चाध्यन्तरदानपक्षं धनिकदोषविहीनत्वेनैवाह कात्यायनः—

न चेद्धनिकदोषेण निपतेद्ध्रिक्रियेत वा ।
आधिमन्यं स दाप्यस्स्यादृणान्मुच्येत नार्णिकः ॥

इति । धनिकदोषादन्यत आध्यपचारे ऋणिक ऋणान्न मुच्यते । तेनान्यमाधिं स ऋणिको धनिने राज्ञा दाप्य इत्यर्थः । यत्तु स्मृत्यन्तरम्—

स्रोतसाऽपहृते क्षेत्रे राज्ञा चैवापहारिते ।
आधिरन्योऽधिर्कर्तव्यो देयं वा धनिने धनम् ॥

इति, तदपि धनिकस्यादोषे पक्षद्वयविधिपरं, अन्यथा अग्न्याद्यपहृते पक्षद्वयमनेनानुक्तं स्यात् ।

इति स्मृतिचन्द्रिकायां निर्दोषधनिकस्याधिविषयाणि.

---

## अथ सदोषधनिकस्याधिविषयाणि.

तत्र हारीतः—

बन्धं यथा स्थापितं स्यात्तथैव प्रतिपालयेत् ।
अन्यथा नश्यते लाभो मूलं वा तद्व्यतिक्रमात् ॥

यथा येन प्रकारेण गोप्यत्वेन भोग्यत्वेन वा स्थापितमधमर्णेनाधीकृतं तथैव गोप्यमाधिं गोप्यत्वेनैव भोग्यं भोग्यत्वेनैव धनी पालयेत् । अन्यथा गोप्यं भोग्यत्वेन भोग्यं वा गोप्य-

पक्षान्तरमप्याह व्यासः—

दैवराजोपघाते तु न दोषो धनिनः क्वचित् ।
ऋणं दाप्यस्तु तन्नाशे बन्धं वाऽन्यमृणी तदा ॥

एवमाधेरसारत्वेऽप्यनुसन्धेयम् । तथा च नारदः—

रक्ष्यमाणोऽपि यत्राधिः कालेनेयादसारताम् ।
आधिरन्योऽथवा कार्यो देयं वा धनिने धनम् ॥

असारता सवृद्धिकमूलद्रव्यापर्याप्तता । केचिदेकसंवत्सरभववृद्धिसहितमूलद्रव्यापर्याप्ततामसारतामाहुः, तच्चिन्त्यम्, एवंविधविशेषाश्रयणे किं कारणमिति चोद्यसम्भवात् । अन्यः पूर्वस्थितो वा आधिः पर्याप्तः कार्यः । अन्यग्रहणस्य पर्याप्तत्वेन भाव्यमित्येतावन्मात्रपरत्वात् । यतोऽसारत्वेऽपि पर्याप्तये किंचिद्देयं क्वचिदित्याह हारीतः—

अधिस्समधिकं द्रव्यं गृहीतं ग्राहकेण तु ।
अधिकं तव दास्यामि तद्दद्याद्धनिकस्य सः ॥

ग्राहकेण ऋणिकेन । अधिकं पूरकम् । यद्यपि दैवादिनिमित्तकाध्यपचारे पक्षद्वयमुक्तं, तथाऽपि धनिकदोषराहित्ये स्फुटे सति चोरस्वजनादिनिमित्तकाध्यपचारेऽपि एतत्पक्षद्वयं वेदितव्यम् । दैवादिग्रहणस्य धनिकदोषविहीनानिमित्तपरत्वेन कृतत्वात् । अत एव—

दैवराजोपघाते तु न दोषो धनिनः क्वचित् ।

इति व्यासहारीताभ्यामुक्तम् । अत एव चाध्यन्तरदानपक्षं धनिकदोषविहीनत्वेनैवाह कात्यायनः—

न चेद्धनिकदोषेण निपतेद्व्रिक्रियेत वा ।
आधिमन्यं स दाप्यस्स्यादृणान्मुच्येत नार्णिकः ॥

इति । धनिकदोषादन्यत आध्यपचारे ऋणिक ऋणान्न मुच्यते । तेनान्यमाधिं स ऋणिको धनिने राज्ञा दाप्य इत्यर्थः । यत्तु स्मृत्यन्तरम्—

स्रोतसाऽपहृते क्षेत्रे राज्ञा चैवापहारिते ।
आधिरन्योऽधिकर्तव्यो देयं वा धनिने धनम् ॥

इति, तदपि धनिकस्यादोषे पक्षद्वयविधिपरं, अन्यथा अग्न्याद्यपहृते पक्षद्वयमनेनानुक्तं स्यात् ।

इति स्मृतिचन्द्रिकायां निर्दोषधनिकस्याधिविषयाणि.

---

## अथ सदोषधनिकस्याधिविषयाणि.

तत्र हारीतः—

बन्धं यथा स्थापितं स्यात्तथैव प्रतिपालयेत् ।
अन्यथा नश्यते लाभो मूलं वा तद्व्यतिक्रमात् ॥

यथा येन प्रकारेण गोप्यत्वेन भोग्यत्वेन वा स्थापितमधमर्णेनाधीकृतं तथैव गोप्यमाधिं गोप्यत्वेनैव भोग्यं भोग्यत्वेनैव धनी पालयेत् । अन्यथा गोप्यं भोग्यत्वेन भोग्यं वा गोप्य-

त्वेन पालितं चेत् समयातिक्रमाल्लाभो नश्यते, मूलं वा द्रव्यं नश्यत इत्यर्थः। याज्ञवल्क्योपि लाभनाशमाह—'गोप्याधिभोगे नो वृद्धिः' इति। भोगे बलादिति शेषः। तथाच मनुः—

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत्।

इति भोगप्रतिषेधं कुर्वन्तमाधातारमाक्रम्य गोप्याधिं भुञ्जानस्य अत्यन्तापराधित्वात् अल्पभोग एव सर्ववृद्धिनाशस्स्यादित्यर्थः। सर्वमूलनाशस्तु नास्मिन् विषये विकल्प्यते। अत्यन्ताधिकहानित्वात्। तेन मूलं वेति हारीतवचनं सर्वमूलनाशरूपपक्षान्तराभिधायकं बलात्कारकृतमहाभोगविषयमिति मन्तव्यम्। यस्त्वाधातारं वञ्चयित्वा गोप्याधिं भुङ्क्ते तस्य भोगानुसारेण लाभद्रव्य एव भागशो नाश इत्याह मनुः—

यस्स्वामिनाऽननुज्ञातमाधिं भुङ्क्ते विचक्षणः।
तेनार्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः॥

अर्धग्रहणमननुज्ञातभोगानुसारेण कल्पितनिष्कृतिक्षमपरिमाणोपलक्षणार्थम्। अन्यथा महाभोगस्यार्धवृद्धिविसर्जनेन निष्कृत्यसम्भवात्तस्य भोगस्य निष्कृतिरिति वाक्यशेषविरोधस्स्यात्। अथ विरोधपरिहारार्थं अल्पभोगविषयमेवैतद्वचनमित्युच्यते त(स्या)दाऽननुज्ञातमहाभोगविषये लाभहानिरनेनानुक्ता स्यात्। न चानेनानुक्तत्वेऽपि 'गोप्याधिभोगे नो वृद्धिः' इति याज्ञवल्क्यवचनेन तत्र लाभहानिरुच्यते इति वाच्यं, बलकृताल्पभोगविषयत्वात्तस्य। तस्मादर्धग्रहणस्योपलक्षणत्वमेवेति युक्तम्।

भोग्याधौ तु गोप्यत्वेन पालिते लाभस्यैव नाशः। समयातिक्रममात्रेण मूलनाशपक्षानवतारात्। न च भोग्याधौ वृद्ध्यभावाल्लाभनाशपक्षस्याप्यनवतार इति वाच्यं, भोगस्यापि लाभत्वात्। न च तत्राभोगे वृद्धिर्लाभो भविष्यतीति वाच्यम्। यत आह मनुः—

न त्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्।

इति। सोपकारे आधौ भोग्याधावित्यर्थः। कौसीदी वृद्धिः 'अशीतिभागं गृह्णीयात्' इत्यादिवचनविहिता। एतदुक्तं भवति—आधिभोगमात्रार्थं प्रयुक्तधनस्यात्मापराधादितो भोगालाभे लाभहानिरेव, न पुनरङ्गीकृतवृद्धिसिद्धिरिति। आधात्राद्यपराधादभोगे तु भुञ्जानादधमर्णाद्वा भोगलाभ एव ग्राह्यो धनिना न तु वृद्धिरिति मन्तव्यम्। यद्येवं भोग्याधौ न कदाचिदपि वृद्धिः, कथं तर्हि याज्ञवल्क्येन—

गोप्याधिभोगे नो वृद्धिस्सोपकारेऽथ हापिते।

इति भोग्याधावप्युपेक्षया कार्याक्षमत्वे धनिकेन कृते वृद्धिप्रतिषेधः कृतः, प्राप्त्यभावात्प्रतिषेधानुपपत्तेः। उच्यते—यत्राधाता आधेरुपभोगं वृद्धिदानमप्यापद्यभ्युपगच्छति, तत्र प्राप्ता वृद्धिः 'सोपकारेऽथ हापिते' इत्यनेन प्रतिषिध्यते। न च वृद्धिभोगयोस्समुच्चयेनाभ्युपगतिरेव नास्ति, 'न त्वेवाधौ' इति मनुवचननिवारितत्वादिति वाच्यम्। मनुवचनस्य भोग्याधौ कदाचिदभोगेऽस्तु वृद्धिरिति शङ्काव्युदासार्थत्वात्। तस्मादन्यथा

पालिते सर्वत्राधौ लाभनाशो न गोप्यमात्र इति सिद्धम्। एतेन गोप्ये लाभस्य हानिः, भोग्ये तु लाभाभावान्मूलहानिरिति शम्भूक्तं निरस्तम्। कात्यायनोप्यन्यथापालने क्वचिद्मूलधननाशेन सह लाभनाशस्य विकल्पमाह—

अकाममननुज्ञातमाधिं यः कर्म कारयेत्।
भोक्ता कर्मफलं दाप्यो वृद्धिं वा लभते न सः॥

कर्मफलं दास्याद्याधौ वेतनं, शकटाद्याधौ भाटकादिकं, न तु दास्यादिकृतावघातादिकर्मणः फलं तण्डुलादिकं, अपराधाननुरूपत्वात्। अत्रापि कर्मानुसारेणेति द्रष्टव्यम्। दाप्यो बन्धस्वामिने राज्ञेति शेषः। अकाममिति दास्यादिबुद्धिमदाधिविषयं, अन्यत्रासम्भवात्। तथा कर्म कुर्वाणेऽप्यश्वाद्याधावतिक्रमकरणे दण्डो न मूलधनहानिर्भवतीत्याह स एव—

यस्त्वाधिं कर्म कुर्वाणं वाचा दण्डेन कर्मभिः।
पीडयेद्भर्त्सयेच्चैव प्राप्नुयात्पूर्वसाहसम्॥

अकुर्वति पीडनभर्त्सनकारिणोऽपि न दण्डः, कुर्वाणमित्यभिधानात्। क्वचिद्दण्डाध्यपगमाभ्यां हानिरित्याह स एव—

बलादकामं यत्राधिमनिसृष्टं प्रवेशयेत्।
प्राप्नुयात्साहसं पूर्वमाधाता चाधिमाप्नुयात्॥

अनिसृष्टमनाहितं, भोग्याधौ बलादल्पस्याप्यनाहितस्य भोगे भोक्तुर्दण्डस्सर्वमूलनाशश्च स्यादिति तात्पर्यार्थः। वञ्चनया तु

भोगे कृते भोगानुसारेण मूलनाशः, अन्यथा बलाद्ग्रहणानर्थक्यापत्तेः। यस्त्वाधौ ह्रासादिकं करोति तं प्रत्याह याज्ञवल्क्यः— 'नष्टो देयः' इति। धनिनः प्रमादान्नष्टो विकृतिं गतो बन्धः पूर्ववत्कृत्वाऽधमर्णायोत्तमर्णेन देय इत्यर्थः। अधमर्णाच्च सलाभमृणमुत्तमर्णो गृह्णीयात्। अविकृतस्यैवाधेरार्पितत्वात्। अथ विकृतमेवाधिमर्पयति तदा ऋणमेव लभते लाभहानेः। तथाच नारदः—

उपचारस्तथैवास्य लाभहानिविपर्यये।
प्रमादाद्धनिनस्तद्वदाधौ विकृतिमागते॥

इति। अत्र पूर्वार्धं 'बन्धं यथा स्थापितं' इत्यादिहारीतवचनसमानार्थम्। उत्तरार्धस्य त्वयमर्थः—यद्वद्विपर्यये लाभहानिः तद्वद्विकृतिमागते यदि विकृतमेवार्पयेदिति। अयं च पक्षो विकृतस्याधेः पूर्ववत्करणपर्याप्तलाभसद्भावे, अन्यथा प्राचीन एव पक्षः। प्रमादादिति धनिकदोषोपलक्षणार्थम्। तेन भोगव्यतिरिक्तदोषाद्विकृतिमागतेऽप्याधौ पूर्ववत्कृत्वाऽर्पणं लाभहानिर्वा। भोगाद्विकृतिमागते तु गोप्याधौ द्वयमपीत्यनुसन्धेयम्। विकृतिमागत इत्यनेनैव ह्रासव्यक्त्यन्यत्वासारत्वाद्यपि सङ्गृहीतं, आधेरयथास्वरूपत्वतौल्यात्। तेन तत्राप्येष एव विधिर्ज्ञेयः। भोगादसारत्वे तु मूलद्रव्यमेव हीयत इत्याह बृहस्पतिः—

भुक्ते त्वसारतां प्राप्ते मूलहानिः प्रजायते।

इति। असारत्वानुसारेणेत्यभिप्रायः। यदा तु धनिकदोषा-

दाधिः विध्वस्तस्तदा मूल्यद्वारेणाधिं दत्वा धनी सलाभमृणं गृह्णीयात् । तदाह व्यासः—

ग्रहीतृदोषान्नष्टश्चेद्बन्धो हेमादिको भवेत् ।
ऋणं सलाभं संशोध्य तन्मूल्यं दापयेद्धनी ॥

आधितोप्यधिकभूतसलाभर्णविषयमेतत् । ऋणपर्याप्ताधिनाशे त्वाह नारदः—'विनष्टे मूलनाशः स्यात्' इति । सलाभर्णपर्याप्ताधिनाशे तु सलाभर्णनाशस्स्यादित्येतदप्याह हारीतः—

तत्समो द्विगुणो वाऽऽधिर्धनिकस्य समर्पितः ।
आधौ नष्टे धनं नष्टं धनिकस्याधिरेव च ॥

धनं समं द्विगुणं वा । धनिकस्याधिनाशोऽत्राध्यन्तरालाभात् । एतदुक्तं भवति—ध्वस्ताधिधनसमानधननाशः धनिकस्य स्यादिति । सलाभर्णात् बहुमूल्याधिनाशे तु सलाभर्णादुर्वरिताधिमूल्यमाधिदात्रे देयमित्याह बृहस्पतिः—

बहुमूल्यो यत्र नष्टः ऋणिकं तत्र तोषयेत् ।

इति । न च तोषयेदिति वचनाद्यावता धनेन तुष्यति तावद्धनं देयमिति शङ्कनीयम् । यत आह मनुः—

मूल्येन तोषयेदेनमाधिस्तेनोऽन्यथा भवेत् ।

इति । सलाभर्णापगतावशिष्टाध्यंशस्य मूल्येनेत्यर्थः । यदि धनी मूल्येन ऋणिकं न तोषयति तदा त्वाधिप्रत्यर्पणप्रतिभूर्मूल्येन ऋणिकं तोषयेत् । तथा च हारीतः—

खादको वित्तहीनश्चेल्लग्नको वित्तवान्यदि ।
मूल्यं तस्य भवेद्देयं न वृद्धिं दातुमर्हति ॥

आधीकृतस्य धनस्य प्रीतिदत्तधनस्येव कारितवृद्ध्यसम्भवा दित्यभिप्रायः । खादको बन्धखादकः । आधिनाशक इति यावत् । लग्नकः प्रतिभूः । मूल्यं खादिताधेर्मूल्यम् । यद्यत्र ऋणिको बलाद्वृद्धिं गृह्णाति तदा गृहीतवृद्ध्या सहापराधानुरूपदण्डभागित्याह स एव—

द्विगुणं त्रिगुणं वाऽपि यस्साधयति लग्नकम् ।
राजगामि तु तद्द्रव्यं साधको दण्डमर्हति ॥

लग्नकग्रहणं धनिकस्याप्युपलक्षणार्थम् । अविद्यमानवृद्धिसाधनन्यायस्य धनिकेऽपि तुल्यत्वात् । एवं धनिकोप्यन्यायकृद्दण्डभाक् । तथाच कात्यायनः—

आधिं दुष्टेन लेख्येन भुङ्क्ते यदृणिकाद्धनी ।
नृपो दमं दापयित्वा आधिलेख्यं विनाशयेत् ॥

ऋणिकद्रव्यभोगनिष्कृत्यर्थं वृद्धिहानिरत्राप्युन्नेया ।

इति स्मृतिचन्द्रिकायां सदोषधनिकाधिविषयाणि

---

## अथाधेस्स्वत्वध्वंसादिविषयाणि

तत्र याज्ञवल्क्यः—

आधिः प्रणश्येद्द्विगुणे धने यदि न मोक्ष्यते ।

इति । प्रयुक्तार्थे द्विगुणीभूते यदि गोप्याधिर्न मोक्ष्यते तदाऽसौ प्रणश्यति, अधमर्णस्य स्वं न भवेदित्यर्थः । कृतकाल-

स्त्वाधिर्गोप्यो भोग्यो वा संप्रतिपन्ने काले यदि न मोक्ष्यते तदा तस्यापि पूर्ववन्नाशमाह स एव– 'काले कालकृतो नश्येत्' इति। यद्यहमिदमियता कालेन ऋणं न ददामि तदाऽऽधिरेवा-नृण्याय तव भविष्यतीत्येवमभिहितः कालकृतः। अत्र धनिन-स्स्वत्वापत्तिमाह व्यासः—

हिरण्ये द्विगुणीभूते पूर्णे काले कृतावधौ।

बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्ष्य तु॥

अनेनार्वाक्चतुर्दशदिनादाधिनाशोपि नेत्यर्थादुक्तम्। उक्तं च साक्षादेवानन्तरं—

अतोऽन्तरा धनं दत्वा ऋणी बन्धकमाप्नुयात्।

इति। अतोऽन्तरा चतुर्दशदिनादर्वागित्यर्थः। ननूर्ध्वमपि चतु र्दशदिनाद्धनं दत्वा बन्धकमृणी किमिति नाप्नोति, स्वत्व-ध्वंसकाभावात्। धनद्वैगुण्यमवधिभूतकालातिक्रमणं च तद्ध्वं-सकमिति चेत्, न—दानविक्रयादेरेव तद्ध्वंसकत्वात्। आदि-शब्दपरिगृहीतवर्गान्तर्गतं द्वैगुण्यादिकमपीति चेत् न, स्वत्व-ध्वंसकतया लोकप्रसिद्धानामेवादिशब्देन परिग्रहात्। द्वैगुण्या-दिकमपि तथेति चेत्, न—न हि लोके द्वैगुण्यादेस्तथा प्रसिद्धि-रस्ति। उच्यते—सत्यं द्वैगुण्यादेर्नास्त्येव तथा प्रसिद्धिः, द्रव्यविनिमयस्य तु तथा प्रसिद्धिरस्त्येव तिलविक्रयप्रतिषेधा-द्विक्रयाकरणेऽपि विनिमयेन तिलानां स्वत्वनिवृत्तिदर्श-नात्। ततश्चात्रापि कृतकालाधौ ऋणग्रहणकाल एव यद्य-

हामियता कालेन न ददामि तदाऽऽधिरेवानृण्याय तव भविष्यतीति धनिकर्णिकयोर्धनविनिमयसम्प्रतिपत्तेर्ज्ञातत्वादव धिभूतकाले स्वत्वध्वंसो युक्त एव। एतदेव नाशनिमित्तं याज्ञवल्क्येन 'कालकृतः' इत्यनेनोक्तम्। द्वैगुण्ये तु यद्यपि ऋणग्रहणकाले यद्यहं द्वैगुण्येऽप्याधिं न मोक्ष्यामि तदाऽऽधिरेवानृण्याय तव भविष्यतीति धनिकर्णिकयोर्धनविधिमयसम्प्रतिपत्तिनियमाभावः। तथाऽपि यत्रैवेयं सम्प्रतिपत्तिः कृता तत्रैव द्वैगुण्ये स्वत्वध्वंसः, हेतुसद्भावात्, तद्विषयं च 'आधिः प्रणश्येत्' इति वचनमित्यनवद्यम्। एवं क्रयप्रतिग्रहाद्यभावेऽपि विनिमयेनैवाधौ धनिकस्य स्वत्वापत्तिः व्रीह्यादाविव तिलविनिमयकर्तुरिति युक्तमुक्तं 'बन्धकस्य धनी स्वामी' इति। द्विसप्तदिनप्रतीक्षणं तु विनिमयदार्ढ्यज्ञानार्थमुक्तम्। द्रव्यविक्रयादेरिव दृढविनिमयस्यैव स्वत्वध्वंसादिनिमित्तत्वात्। एवं च 'अतोऽन्तरा धनं दत्वा' इत्यपि वचनं युक्तमेव। यत्तु बृहस्पतिनोक्तं—

पूर्णावधौ शान्तलाभे बन्धे स्वामी धनी भवेत्।
अनिर्गते दशाहे तु ऋणी मोक्षितुमर्हति॥

इति, तत् वृद्ध्यर्थप्रयुक्तवस्त्रादिविषयं, 'ब्राह्मणेभ्यो दधि दीयताम्' इत्यादिवत् सामान्यविशेषन्यायात्। लाभशान्तिरपि वस्त्रादौ त्रैगुण्यादिविधायकवचनानुसारेणावगन्तव्या। एवंच चतुर्दशदिनादूर्ध्वमाधौ स्वत्वापत्तेः यथेष्टविनियोगो हिरण्यप्रयोक्तुर-

विरुद्धः । वस्त्रादिप्रयोक्तुस्तु दशादिनादूर्ध्वमेवेति मन्तव्यम् । यत्पुनस्तेनोक्तं—

गोप्याधिः द्विगुणादूर्ध्वं कृतकालो यथाविधि ।
आवेदयित्वार्णिकुले भोक्तव्यस्समनन्तरम् ॥

इति, तत् स्वत्वापत्तेरर्वागाधेरभोगमात्रविधिपरम्, न पुनर्यथेष्ट-विनियोगो न कदाचित्त्वाधेरस्तीत्येवंपरं, समनन्तरमित्यभि-धानात् । तस्मान्न बार्हस्पत्यवचनयोः परस्परविरोधः । नापि व्यासबृहस्पतिवचनयोः । यत्पुनर्मनुनोक्तं—

न चाधेः कालसंरोधान्निसर्गोऽस्ति न विक्रयः ।

इति, तस्यायमर्थः—कालसंरोधः चिरकालावस्थानाद्द्विगुणी-भूतेऽप्यमोक्षणमिति यावत् । तस्मात्कालसंरोधात् केवलादृणग्रह-णकाले विनिमयसम्प्रतिपत्तिरहितादाधेर्न निसर्गोस्ति नान्यत्रा-धीकरणं दानं वाऽस्ति, विक्रयश्च नास्ति, किंतु शान्त-लाभस्तिष्ठेत्तत्र तावत् यावदाधात्रा न विमोक्ष्यत इति । यदा तु शान्तलाभे धने बन्धकस्य तथैवात्रावस्थितस्य मोच-नात् प्राक् ऋणिकस्य मरणादिर्भवेत् तत्र किं कार्यमित्य-पेक्षिते आह बृहस्पतिः—

हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके ।
द्रव्यं तदीयं सङ्गृह्य विक्रीणीत ससाक्षिकम् ॥
रक्षेद्वा कृतमूल्यं तु दशाहं जनसंसदि ।

ऋणानुरूपं परतो गृह्णीतान्यत्तु वर्जयेत् ॥

इति । हिरण्ये द्विगुणीभूते पश्चादाधिमोक्षणादर्वागिति शेषः । नष्टे कुत्र गत इति चिरकालमविज्ञाते । अधमर्णग्रहणं ऋणदानाधिकारिणः पुत्रादेरुपलक्षणार्थम् । द्रव्यं आधीकृतद्रव्यम् । ऋणानुरूपं द्विगुणद्रव्यपर्याप्तम् । अन्यत्तु वर्जयेदिति वदन् हिरण्ये द्विगुणीभूतेऽपि धने धनिकस्याधावस्वामित्वं दर्शयति । ततश्च विनिमयहीनाधिविषयमनुवचनवदेतदपि वचनं मन्तव्यम् । 'हिरण्ये द्विगुणीभूते' इत्युदाहरणतयोक्तम्, ततश्च वस्त्रादौ शान्तलाभेऽपि वचनमेतदूह्यम् । अत एव सामान्येनोक्त कात्यायनेन—

आधाता यत्र न स्यात्तु धनी बन्धं निवेदयेत् ।
राज्ञे ततस्सविख्यातो विक्रेय इति धारणा ॥
सवृद्धिकं गृहीत्वा तु शेषं राजन्यथार्पयेत् ॥

इति । आधातृग्रहणमत्रापि पूर्ववदुपलक्षणार्थम् । राजन्यर्पयेदिति ज्ञात्यादिप्रत्यासन्नाभावविषयं, तत्सद्भावे तत्रैवार्पणस्य न्याय्यत्वात् । यत्र शेषार्पणं क्रियते तेनैव यदि सवृद्धिकं धनं दत्वा बन्धो गृह्यते तदा न विक्रयः, प्रयोजनस्य सिद्धत्वात् । अत एव तिष्ठेद्वेति प्रतीक्षणपक्षोऽप्युक्तः । अन्यत्र त्वाधीकरणमप्यस्मिन्विषये न विरुद्धं, दण्डापूपन्यायात् । किंतु मूलमात्रमेवान्यत्राधीकृत्यादेयं न तु सवृद्धिकम् । यदाह प्रजापतिः—

धनी धनेन तेनैव परमाधिं नयेद्यदि ।
कृत्वा तदाधिलिखितं पूर्वं चास्य समर्पयेत् ॥

इति । यद्बन्धस्वामिनि धनं प्रयुक्तं तत्तुल्येनैव धनेन परं धनिकान्तरमाधिं नयेत्, न त्वधिकेनेत्यर्थः । अयं चान्वाधौ नियमस्संप्रतिपत्त्या द्वैगुण्यादर्वागन्वाधौ द्रष्टव्यः । एवमुक्तो ज्ञात्यादावर्पणान्तो विधिः बहुमूल्याधिविषय एव, शेषार्पणादेस्तत्रैव सम्भवात् । सममूल्ये तु ससाक्षिकं विक्रीय स्वयमेव सर्वं गृह्णीयात् । स्वल्पमूल्येऽप्येवं विक्रीय गृहीत्वा ऋणशेषमृणादानाधिकारिणि कथंचिदाप्ते ततो गृह्णीयादित्याद्युक्तवचनत एवोह्यम् । यदा त्वाधाता स्वल्पमूल्यधनं सुकृतं वाऽऽधाय ऋणं गृहीत्वा द्वैगुण्ये जातेऽपि शान्तलाभं धनं न वर्धते, न चाधेराधानान्तरं विक्रयणं वा धनिना कर्तुं मय्यवस्थिते शक्यमिति बुद्ध्या ऋणदाने विलम्बमेवालम्बते तदाऽसौ राज्ञा दाप्य इत्याह याज्ञवल्क्यः—

चरित्रबन्धककृतं सवृद्ध्या दापयेद्धनम् ।

इति । द्व्यर्थो चायं ग्रन्थः । एकस्तावदर्थः—स्वच्छाशयाऽधमर्णाङ्गुलीयकाद्यल्पमूल्यं बन्धकमभूत्तच्चरित्रबन्धकं, तेन कृतमुपात्तमृणमददतमधमर्णमुत्तमर्णाय सवृद्धिकं राजा द्वैगुण्यादूर्ध्वं दापयेदिति । अन्यस्तु—चरित्रं इष्टापूर्तादिको धर्मः, स एव बन्धकमाधिः तेन कृतमित्यादि समानम् । एवंविधे

त्वाधौ धनमप्रयच्छतोऽधमर्णस्य नास्त्यानृण्यमित्यभिप्रायः। अकृतकालफलभोग्याधावप्यानृण्यमधमर्णस्य धनदानत एव नान्यतः, फलभोगादवृद्धिकत्वेऽपि मूलानपायात्। न चाधिनैव तदपाय इति वाच्यम्, यदाह स एव—'फलभोग्यो न नश्यति' इति। मूलधनाप्रदाने तवैवाधिर्भविष्यतीति विनिमयसम्प्रतिपत्तेर्धनग्रहणानन्तरक्षण एव मूलधनाप्रदानादाधिनाशापत्त्याऽसम्भवनिरस्तत्वादन्यस्य नाशकस्याविद्यमानत्वादित्यभिप्रायः॥

इति स्मृतिचन्द्रिकायां आधेः स्वत्वध्वंसादिविषयाणि॥

---

## अथाधिसिद्धिविषयाणि.

तत्र नारदः—

आधिस्तु द्विविधः प्रोक्तः जङ्गमस्स्थावरस्तथा।
सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा॥

सिद्धिः आधित्वसिद्धिः। अन्यथा विना भोगमधमर्णोद्दिष्टस्योत्तमर्णस्वीकारमात्रेणेति यावत्। गोप्याधौ निर्भोगे भोगस्थानीयभाण्डागारान्तर्निधानादिव्यापारादाधत्वसिद्धिरध्यवसेया। एवमस्माकमेतदीयं गृहाद्याधिरिति ऋणिकसंनिधौ मध्यस्थजनेष्वावेदनं दूरस्थत्वादिना भोगाद्यभावे त्वाधिसाधकमित्यवगन्तव्यम्। अत एव व्यतिरेकमुखेन पूर्वोक्तेषु साधकत्वमाह बृहस्पतिः—

न भुङ्क्ते यस्स्वमाधानं नादद्यान्न निवेदयेत् ।
प्रमीतसाक्षी ऋणिकः तस्य लेख्यमपार्थकम् ॥

स्वं आधानम् । लेख्यं आधिलेख्यम् । सिद्धेस्संदिग्धलेख्यशुद्धिरपि प्रयोजनमित्यर्थादुक्तम् । एवमेवाधीयमानव्यक्तिविशेषोल्लेखनेन लेखनमप्याधिसाधकम् । तथाच कात्यायनः—

मर्यादाचिह्नितं क्षेत्रं ग्रामं वाऽपि यदा भवेत् ।
ग्रामादयश्च लिख्यन्ते तदा सिद्धिमवाप्नुयात् ॥

ग्रामादयश्च क्षेत्राद्याधेर्व्यावर्तकत्वेनेति शेषः । आदिशब्देन देशादयो गृह्यन्ते ।

इति स्मृतिचन्द्रिकायामाधिसिद्धिविषयाणि ॥

---

## अथाध्यादिविवादापनोदविषयाणि

तत्र विष्णुः—

द्वयोर्निक्षिप्त आधौ तु विवदेतां यदा नरौ ।
यस्य भुक्तिर्जयस्तस्य बलात्कारं विनाकृता ॥

तस्यैव भोगादाधिसिद्धेर्जातत्वादित्यभिप्रायः । द्वयोरपि भुक्तियुक्तत्वे त्वाह बृहस्पतिः—

क्षेत्रमेकं द्वयोर्बन्धे दत्तं यत्समकालिकम् ।
येन भुक्तं भवेत्पूर्वं तस्य तत्सिद्धिमाप्नुयात् ॥

दत्तमधमर्णेनोद्दिष्टमित्यर्थः । क्षेत्रग्रहणं भोग्याधेरुपलक्षणार्थम् । अत एवाविशेषेणाह वसिष्ठः—

तुल्यकालेऽभिसृष्टानां लेख्यानामाधिकर्मणि ।
येन भुक्तं भवेत्पूर्वं तस्याधिर्बलवत्तरः ॥

तुल्यकालोत्पन्नानां लेख्यानां सद्भावसाम्येऽपि भोग्याधिसिद्धौ भोगस्य प्रधानकारणत्वात्तत्प्राथम्यनिबन्धना बलवत्ता युक्तेत्यर्थः । भोगविशेषेऽप्याह स एव—

यद्येकदिवसे तौ तु भोक्तुकामावुपागतौ ।
विभज्याधिस्समं तेन भोक्तव्य इति निश्चयः ॥

तेन ताभ्यामित्यर्थः । गोप्याधावपि तदुपादानादिकर्तुर्जयः, तस्यैवाधिसिद्धेर्जातत्वात् । द्वयोस्तत्सिद्धिसाम्येऽप्याह कात्यायनः—

आधिमेकं द्वयोर्यस्तु कुर्यात्का प्रतिपद्भवेत् ।
तयोः पूर्वकृतं ग्राह्यं तत्कर्ता चोरदण्डभाक् ॥

ऋणग्रहणोपक्रमत्वादाधिक्रिया प्रतिपदित्युच्यते । पूर्वकृतं पूर्वमुपादानादिना सिद्धम् । आधिविशेषे दण्डविशेषमाह विष्णुः— 'गोचर्ममात्राधिकां भुवमन्यस्याधीकृतां तस्मादनिर्मोच्यान्यस्य यः प्रयच्छेत् स वध्यः[1] ऊना चेत्तु षोडशसुवर्णं दण्ड्यः' इति । उपादानादौ यौगपद्येऽप्याह बृहस्पतिः—

तुल्यकालोपस्थितयोर्द्वयोरपि समं भवेत् ॥

इति । उपस्थितयोरुपादानादिकं कर्तुमिति शेषः । साक्षिलेख्यमात्रसिद्धानामाध्यादीनां मध्ये लेख्यसिद्धं विरोधे ग्राह्यमित्याह कात्यायनः—

---

[1] बन्ध्यः.

आधानं विक्रयो दानं लेख्यसाक्षिकृतं यदा ।
एकक्रियाविरुद्धं तु लेख्यं तत्रापहारकम् ॥

लेख्यं लेख्यकृतं लेख्यसिद्धमिति यत्रात् । अपहारकं बलवत् । लेख्यसिद्धत्वाविशेषेऽपि बलाबलमाह स एव—

अनिर्दिष्टं च निर्दिष्टमेकत्र च विलेखितम् ।
विशेषलिखितं ज्याय इति कात्यायनोऽब्रवीत् ॥

एकत्राधीकरणादौ विशेषलिखितं निर्दिष्टलिखितं तत् अनिर्दिष्टलिखिताज्ज्याय इत्यर्थः । लेख्ये निवेशितं विलेखितम् । अनिर्दिष्टनिर्दिष्टपदयोरर्थं स्वयमेव व्याचष्टे—

यो विद्यमानं प्रधनमनादिष्टस्वरूपकम् ।
आकाशभूतमादध्यादादिष्टं नैव तद्भवेत् ॥
यद्यत्तदाऽस्य विद्येत तदादिष्टं विनिर्दिशेत् ॥

इति । प्रशब्दः पादपूरणार्थः । अनादिष्टस्वरूपकं अनिरूपितस्वरूपकम् । आकाशभूतमविद्यमानप्रायम् । आदिष्टं नैव तद्भवेत् निर्दिष्टं नैव तद्भवेत्, अनिर्दिष्टं भवेदिति यावत् । आदिष्टं निर्दिष्टम् । एवं चायमर्थः-आधातुराधीकरणकाले यद्यद्धनं विद्येत निरूपितस्वरूपं च तत्तद्धनमाधित्वेनादिष्टं सन्निर्दिष्टमित्युच्यते । तद्विपरीतं तु धनमाधित्वेन कल्प्यमानमनिर्दिष्टमित्युच्यत इति । आधीकरणकाले विद्यमानत्वसाम्येऽप्याह स एव—

यस्तु सर्वस्वमादिश्य प्राक् पश्चान्नामचिह्नितम् ।
आदध्यात्तत्कथं तु स्याच्चिह्नितं बलवत्तरम् ॥

अस्यार्थः—यः पूर्वमविशेषेण सर्वस्वमाधित्वेनोद्दिश्य कस्यचिद्धस्तादृणं गृहीत्वा कालान्तरे पुनर्धनिकसम्प्रतिपत्त्या क्षेत्रादिकं किंचिदेव घट्टादिचिह्नितं पूर्वगृहीतऋणार्थमेव दद्यात्, तत्र चिह्नितं बलवत्तरम्। पूर्वाधेराधिक्रियान्तरादिक्रियाप्रतिबन्धकधनिकेनैव त्यक्तत्वादिति। चिह्नितमिति विरोध्यन्तरक्रियोपलक्षणार्थम्। तेन यदा प्रथममाधिमादाय धनी धनं दत्वा पश्चादवश्चकत्वं विज्ञाय आधिमन्तरेणैवातऊर्ध्वमृणमास्तां त्वयीति प्रकारान्तरेण पुनः क्रियां करोति, तदा निराधिक्रियैव बलवतीत्यवगन्तव्यम्। अत एव याज्ञवल्क्यः—

सर्वेष्वर्थविवादेषु बलवत्युत्तरा क्रिया।

इति। तेन पूर्वस्याः क्रियाया बाधिका भवतीत्यभिप्रायः। उदाहरणान्तरं तु—अशीतिभागवृद्धिके धने पुनस्तदर्धवृद्धिके सौहार्दादिवशात् कृते सत्यशीतिभागवृद्धिक्रियायाः तदर्धभागवृद्धिक्रियया बाधनम्। चिह्नितादिकं च पूर्वोक्तमत्रैवोदाहरणमित्यनुसन्धेयम्। क्वचिदपवादमुत्तरक्रियाबलवत्त्वस्याह स एव—

आधौ प्रतिग्रहे क्रीते पूर्वा तु बलवत्तरा।

इति। स्वामित्वप्रतिबन्धापगमाभ्यां प्रागेव पूर्वस्याः क्रियायाः कृतत्वादित्यभिप्रायः। अनेनैवाभिप्रायेण वासिष्ठोऽपि—

यं पूर्वतरमाधाय विक्रीणाति तु तं पुनः।
किमेतयोर्बलीयस्स्यात्प्राक्तनं बलवत्तरम्॥

यद्यप्याधीकरणेन न स्वामिभावो निवर्तते, तथाऽपि प्रतिब- ध्यते। ततश्च प्रतिबन्धस्वामिभावेन कृतो विक्रयः परेण कृत इवासिद्धत्वाद्दुर्बलो बाध्य एवेत्यनवद्यम्। आध्यादीनां यौगप द्येऽप्याह स एव—

कृतं यत्रैकदिवसे दानाधमनविक्रयम्।
त्रयाणामिति संदेहे कथं तत्र विचिन्तयेत्॥
त्रयोऽपि तद्धनं धर्म्यं विभजेयुर्यथांऽशतः।
उभौ क्रियानुसारेण त्रिभागेन प्रतिग्रही॥

इति। यत्र त्रयाणां दानादिकं कृतं तत्र कथमिति संदेहे नि- र्णयाय विचिन्तयेदित्यर्थः। उभौ धनिकक्रेतारौ। क्रियानुसा- रेण दत्तधनानुसारेण। धने क्रियेतिशब्दः करणव्युत्पत्त्या वर्तितुमुत्सहते। बृहस्पतिरपि—

कृतं चेदेकदिवसे विक्रयाधिप्रतिग्रहम्।
त्रयाणामपि संदिग्धे कथं तत्र विचारणा॥
त्रीण्येवात्र प्रमाणानि विभजेयुर्यथांऽशतः।
उभौ चार्थानुसारेण त्रिभागेन प्रतिग्रही॥

इति। अर्थानुसारेण भागद्वयं गृह्णीयातामिति शेषः। एवं पूर्ववचनेऽपि क्रियानुसारेणेत्यत्र विशेषो द्रष्टव्यः। त्रिभागेन प्रतिग्रही सम्बध्यत इति शेषः। प्रतिग्रह इति तु पाठे पूर्ववचनवान्निष्पद्यत इति विशेषो ग्राह्यः।

इति स्मृतिचन्द्रिकायां विवादापनोदाधिकरणम्॥

---

## अथाधिमोचनविषयाणि.

तत्र व्यासः—

गोप्याधिं द्विगुणादूर्ध्वं मोचयेदधमर्णकः ।

इति । द्विगुणादूर्ध्वं प्रयुक्तधने शान्तलाभे सतीत्यर्थः । मोचयेत् सवृद्धिकमूलदानेनेति शेषः । एतच्च द्वैगुण्यादिनिबन्धनाधिनाशाभावविषये वेदितव्यम् । तन्निबन्धनाधिनाशविषये तु तन्नाशात्प्रागेव मोचयेत् । तथा चोक्तं तेनैव—

अतोऽन्तरा धनं दत्वा ऋणी बन्धकमाप्नुयात् ।

इति । धनमत्र सवृद्धिकमूलं विवक्षितम् । अतोऽन्तरा ऋणिकप्रतीक्षणायोक्तकालमध्यकाल इत्यर्थः । ऋणिकप्रतीक्षणकालश्च लाभशन्तिमारभ्य द्विसप्तदिनम् । लाभशान्तितः पूर्वकालमध्येऽपि सवृद्धिके धने दत्ते बन्धावाप्तिर्दण्डापूपन्यायादनेनैव वचनेनोक्तेति मन्तव्यम् । फलभोग्याधिं तु मूलमात्रं दत्वा फलकालान्ते वर्तमानमाप्नुयादृणीत्याह स एव—

फलभोग्यं पूर्वकालं दत्वा द्रव्यं तु सामकम् ।

इति । 'ऋणी बन्धकमाप्नुयात्' इति पूर्वार्धे पठितमिहानुषज्यते । सममेव सामकं, मूलमात्रमिति यावत् । फलभोग्यग्रहणात् स्वरूपेण भोग्यत्वस्त्राद्याधौ न कालव्यवस्था । तत्र धनिनं प्रत्याह बृहस्पतिः—

धनं मूलीकृतं दत्वा यदाऽऽधिं प्रार्थयेदृणी ।
तदैव तस्य मोक्तव्यो ह्यन्यथा दोषभाग्धनी ॥

भोग्याधावेवमेव । गोप्याधौ तु मूलीकृतं सवृद्धिकं दत्त्वा यदा प्रार्थयते तदैव मोक्तव्यम् । मूलीकृतग्रहणस्याधमर्णदेयधनपरत्वात् । दोषस्स्तेयदोषः । अत एव याज्ञवल्क्यः —

उपस्थितस्य मोक्तव्य आधिस्स्तेनोऽन्यथा भवेत् ।

इति । उपस्थितस्य धनदानपूर्वकमाधिमोक्षायोपस्थितस्य । स्तेनः स्तेनवद्दण्ड्य इत्यर्थः । उपस्थितस्य देशतः कालतो वा धनिकव्यवधाने सति धनिककुटुम्बेनाधिर्मोक्तव्यः । एतदप्यर्थादाह स एव—

प्रयोजके सति धनं कुले न्यस्याधिमाप्नुयात् ।

इति । प्रयोजको धनप्रयोक्ता । आप्नुयात्तदानीमेवेति शेषः । अथवा—अधमर्णः प्रयोक्तृकुले न्यस्तधनोपि प्रयोक्तुरागमनादूर्ध्वमेवाधिं तन्मूल्यधनं वा ऋणापाकरणकाले परिकल्पितमवृद्धिकमाप्नुयात् । एतदप्याह वचोभङ्ग्या स एव—

तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः ।

इति । तिष्ठेत् आधिरिति शेषः । तत्र प्रयोक्तृकुल इत्यर्थः । सत्यपि धनप्रयोजके धने शान्तलाभेऽपि क्वचिद्विषये चिरेणैवाधिमृणी समाप्नुयादित्याह बृहस्पतिः—

क्षेत्रादिकं यदा भुक्तमुत्पन्नमाधिकं ततः ।
मूलोदयं प्रविष्टं चेत्तदाऽऽधिं प्राप्नुयादृणी ॥

आधीकृतं क्षेत्रादिकं धनिकेन लाभशान्तेः पश्चादेव यदा

भुक्तं ततो भुज्यमानाद्यदि धनमुत्पन्नमाधिकं क्षेत्रार्थव्ययाद-भ्यधिकं मूलोदयतुल्यं यदा यस्मिन् काले धनिनि प्रविष्टं तदा तस्मिन् काल एवाधिमृणी लभत इत्यर्थः। एवमाधिलाभः कस्मिन्विषये भवतीत्यपेक्षिते स एवाह—

परिभाष्य यदा क्षेत्रं प्रदद्याद्धनिके ऋणी।
त्वयैतच्छान्तलाभेऽर्थे भोक्तव्यमिति निश्चितम्॥
प्रविष्टे सोदये द्रव्ये प्रदातव्यं त्वया मम।

इति। त्वयैतदित्यादि परिभाष्य यदा ऋणग्रहणकाले-क्षेत्राद्याधिं प्रदद्यात्, तदा प्रागुक्तविधयाऽऽधिलाभ इत्यर्थः। एवमेवाधेर्लाभोऽनयैव परिभाषया लाभशान्तेः पश्चादाधौ दत्ते भवतीत्याह याज्ञवल्क्यः—

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने॥

आधौ तदा दत्त इति शेषः। अत एव विष्णुः—'गृहीतधन-प्रवेशार्थमेव यत् स्थावरं दत्तं तद्गृहीतधनप्रवेशे दद्यात्'। एवं-भूतपरिभाषया चाभिहितं क्षयाधिमाचक्षते लौकिकाः। एवं-भूतपरिभाषाऽकरणे तु सोदयाद्सन्ताभ्यधिकेऽपि प्रविष्टे सामक-दानं विना न कदाचिदाधिलाभ इत्यनुसन्धेयम्। तथाऽन्य-त्रापि कचिद्विषये सामकदानं विना नाधिलाभ इत्याह बृहस्पतिः—

यत्राहितं गृहक्षेत्रं भोगेन प्रकर्षान्वितम्।

तत्रर्णी नाप्नुयाद्बन्धं धनी चैव ऋणं तथा ॥
पूर्णे प्रकर्षे तत्स्वाम्यं तूभयोः परिकीर्तितम् ।
अपूर्णेऽपि प्रकुर्यातां परस्परमतेन तौ ॥

इति । विषयज्ञानं विना नास्यार्थो ज्ञातुं शक्य इति विषयस्तावदभिधीयते—शान्तलाभे धने जाते वृद्धिमात्रात्राप्त्यर्थमयमाधिर्भोक्तव्य इति परिभाषां कृत्वाऽऽधिर्दत्तः, ऋणग्रहणकाले लाभशान्तिकाले वाऽस्माच्चाधेरेतावति काल उत्पन्नं वृद्धेरपर्याप्तमपि समग्रवृद्ध्यर्थमेवास्त्विति परिभाषाकरणकालेऽनुक्तं च। अथवा तत्रास्माच्चाधेरित्याद्यस्त्वित्यन्तमुक्तमेवेति द्विधा विषयः। अर्थोप्यभिधीयते—आध्युत्पन्नोऽर्थः उत्पत्त्यर्थव्ययादवशिष्टः प्रकर्षपदेनात्रोक्तः, तस्मिन् समग्रवृद्ध्यपर्याप्ते धनिनि प्रविष्टे ऋणी मूलमात्रं दत्वा बन्धं परिभाषितकालात्ययेऽपि नाप्नुयात्। धनी च ऋणमूलमात्रं तदा नाप्नुयात् न गृह्णीयात्, किन्तु पूर्णे प्रकर्षे समग्रवृद्धिपर्याप्ते धनिनो मूलमात्रे ऋणिनो बन्ध इत्येवमुभयोस्तत्स्वाम्यं परिकीर्तितम् । तस्मात्तस्मिन्नेव काले सामकं दत्वाऽऽधिं मोचयेदिति शेषः। यदाऽप्यपूर्णः समग्रवृद्धेरपर्याप्तः प्रकर्षः तदाऽपि स्वाम्यं प्रकुर्यातां परस्परमतेन वृद्धेरपर्याप्तमपि समग्रवृद्ध्यर्थमेवास्त्विति परिभाषाकरणकाले कृतेन तौ धनिकर्णिकाविति । स्वाम्यकरणस्य च फलं परिभाषितकालात्यये समग्रवृद्धिपर्याप्तप्रकर्षप्रवेशाभावेऽपि सामकमेव दत्वा ऋणिकेन बन्धमोचनम् । परस्परमतेनेति वदन्

तदभावे धनिनस्स्वाम्यं वृद्धिशेषेऽपीति दर्शयति। तथा परिभाषितकालैकदेश एव समग्रवृद्धिपर्याप्तप्रकर्षप्रवेशेऽप्याह स एव—

यदि प्रकर्षितं तत्स्यात्तदा न धनभाग्धनी।
ऋणी न लभते बन्धं परस्परमतं विना॥

इति। द्वयोरपि वचनयोः परिभाषितकालात्यय इति शेषो द्रष्टव्यः। एवंचायमर्थः—तद्बन्धकं यदि प्रकर्षितं समग्रवृद्धिपर्याप्तप्रकर्षान्वितं परिभाषितकालैकदेशे स्यात्तदा न परिभाषितकालात्यये सति धनी धनभाक्, ऋणी च तस्मिन् सति न लभते बन्धं, किंतु समग्रवृद्धिपर्याप्तप्रकर्षानन्तरमेव धनी मूलधनभाक् ऋणी च मूलमात्रं दत्वा बन्धं लभत इति। परस्परमतं विनेति वदन् इदं दर्शयति—परिभाषितकालैकदेशे समग्रवृद्धिपर्याप्तप्रकर्षप्रवेशोऽस्तु वा मा वा, सर्वथा यावत्परिभाषितकालं वृद्ध्यर्थमाधिभोगः क्रियतामिति ऋणिकेनोक्ते यत्र धनिकेन ओमित्युक्तं तत्र वृद्धेरभ्यधिकप्रकर्षप्रवेशेऽपि परिभाषितकालात्यय एव सामकं दत्वा बन्धकमृणी लभते, न पुनः परिभाषितकालमध्य इति। अनेनैव व्याख्यानेन—

यावत्प्रकर्षितं तत्स्यात्तावन्न धनभाग्धनी।
ऋणी न लभते बन्धं परस्परमतं विना॥

इति व्यासवचनमपि व्याख्यातम्।

इति स्मृतिचन्द्रिकायां आधिप्रकरणम्.

---

अथ प्रतिभूविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र बृहस्पतिः—

दर्शने प्रत्यये दाने ऋणिद्रव्यार्पणे तथा।
चतुष्प्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः॥

प्रत्ययो विश्वासः। दानं ऋणापाकरणार्थमर्थार्पणम्। ऋणिद्रव्यार्पणं ऋणिनो यद्द्रव्यं गृहोपकरणादि तदर्पणम्। चतुष्प्रकारप्रतिभुवामङ्गीकारप्रकारोपि तेनैव दर्शितः—

आहैको दर्शयिष्यामि साधुरेषोऽपरोऽब्रवीत्।
दाताऽहमेतद्द्राविणमर्पयामीति चापरः॥

एको दर्शनप्रतिभूरहमेनं पलायनप्रवृत्तं दर्शयिष्यामीति प्रातिभाव्यं भजन्नाह। अपरः प्रत्ययप्रातिभूः एष साधुरवञ्चकः मत्प्रत्ययेनास्य धनं देहीति ब्रूते। दानप्रतिभूः यदा यदा यन्न ददाति द्राविणं गृहीतं सवृद्धिकं तदा तस्य द्रविणस्य अहमेव दातेति वदति। अपरः ऋणिद्रव्यार्पणप्रतिभूर्यदाऽयं गृहीतं धनं न ददाति तदाऽहमेतदीयं धनमर्पयामीति ब्रवीतीति वाक्यचतुष्टयस्यार्थः। हारीतोऽपि—

अभये प्रत्यये दाने उपस्थानेऽर्थदर्शने।
पञ्चस्वेषु प्रकारेषु ग्राह्यो हि प्रतिभूर्बुधैः॥

अभयं उपद्रवाकरणम्। उपस्थानमत्र बन्धद्रव्यार्पणमभिमतं न दर्शनं, तस्य स्वपदेनैवोपात्तत्वात्। पञ्चस्वित्यस्याघटनाच्च।

व्यासोऽपि—

लेख्येऽकृते च दिव्ये वा दानप्रत्ययदर्शने ।

गृहीतबन्धोपस्थाने ऋणिद्रव्यार्पणे तथा ॥

प्रतिभुवो ग्राह्या इति शेषः । लेख्येऽकृते लेख्यादर्शने, दिव्ये वाऽकृत इत्यनुषङ्गः । एतदुक्तं भवति—विवादनिर्णयाय दृष्टमदृष्टं वा प्रमाणं यत्र कालव्यवधानेन भविष्यति तत्रापि प्रमाणाय प्रतिभूर्ग्राह्य इति । दानप्रत्ययदर्शनानि प्रागेव व्याख्यातानि । गृहीतबन्धोपस्थानं याचकत्वेन क्रेतुर्दर्शनाद्यर्थं वा उत्तमर्णानुज्ञयाऽधमर्णगृहीतस्य बन्धस्य पुनरर्पणम्। कात्यायनोऽपि—

दानोपस्थानवादेषु विश्वासशपथाय च ।

लग्नकं कारयेदेवं यथायोगं विपर्यये ॥

उपस्थानं दर्शनम् । वादो विवादः । तत्र प्रतिवाद्यानयनानन्तरं सभ्यैर्लग्नकग्रहणं साधितधनादिप्राप्त्यर्थं कार्यम् । दासादौ चोरत्वादिशङ्कायां विश्वासाय प्रतिभूः कार्यः । शपथाय लग्नकग्रहणं शपथविलम्बे कार्यम् । एवमन्यत्रापि विपर्यये कार्यस्य न्यायविषये यथासम्भवं लग्नकं कारयेदित्यन्वयः। ततश्च पूर्वाधिविक्रयदानेषु धूर्तदायादसम्भावनायां सत्यां गोप्याधावाधिपालाख्यः प्रतिभूर्भोग्याधौ भुञ्जापकाख्यो बहुमूल्याधावपि प्रत्यर्पकाख्यश्चानेनैव सङ्गृहीत इत्यवगन्तव्यम् ॥

इति स्मृतिचन्द्रिकायां प्रतिभूभेदाः.

---

## अथ प्रतिभुवामसाधारणा विधयः.

तत्र कात्यायनः—

दर्शनप्रतिभूर्यस्तं देशे काले च दर्शयेत्।

इति। यो यस्य दर्शनप्रतिभूरभूत् स यत्र देशे काले च धानिकस्य तद्दर्शनापेक्षा तत्र तं दर्शयेदित्यर्थः। दर्शितश्चेत् प्रातिभाव्यादसौ मोच्य इत्याह स एव—

यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत्।

इति। यस्तु तत्र न दर्शयति तं प्रत्याह मनुः—

यो यस्य प्रतिभूस्तिष्ठेद्दर्शनायेह मानवः।
अदर्शयन् स तं तस्य प्रयच्छेत्स्वधनादृणम्॥

ऋणमत्र सवृद्धिकं विवक्षितम्। प्रतिभूपुत्रदेयर्णेऽपि सवृद्धिकत्वस्मरणात्। यदा तु दर्शनीयः कुत्र गत इत्यज्ञातः तदा त्वाह बृहस्पतिः—

नष्टस्यान्वेषणे कालं दद्यात्प्रतिभुवे धनी।
देशानुरूपतः पक्षं मासं सार्धमथापि वा॥

सार्धमासादधिकं न दद्यात्, नियमार्थत्वाद्वचनस्य। अत एव कात्यायनः—

नष्टस्यान्वेषणार्थं तु देयं पक्षत्रयं परम्।
यद्यसौ दर्शयेत्तत्र मोक्तव्यः प्रतिभूर्भवेत्॥
काले प्रतीते प्रतिभूर्यदि तं नैव दर्शयेत्।
स तमर्थं प्रदाप्यस्स्यात्प्रेते चैवंविधिस्स्मृतः॥

इति। परं परमावधिरूपम्। प्रतीते प्रतिपन्नेऽन्वेषणार्थं कल्पित इति यावत्। तमर्थं दर्शनीयाद्यल्लभ्यम्। एवंविधिः स तमर्थं प्रदाप्यस्स्यादिति विधिः। यदि प्रतिभुवा दर्शनीयो दैवकृते राजकृते वा निमित्ते असति न दर्शितः तदैव प्रागुक्तो विधिरित्याह स एव—

दर्शने प्रतिभूर्यस्तु देशे काले न दर्शयेत्।
निबन्धमावहेत्तत्र दैवराजकृतादृते॥

निबन्धं देयद्रव्यम्। आवहेत् धनिने प्रापयेत्। दैवकृतं दीर्घरोगज्ञातिमरणादि, राजकृतं आसेधनबन्धनादि। अन्येषां तु केषाञ्चित्प्रतिभुवां विधिमाह नारदः—

ऋणिष्वप्रतिकुर्वत्सु प्रत्यये चाथ हापिते।
प्रतिभूस्तदृणं दद्यादनुपस्थापयंस्तथा॥

ऋणिष्वप्रतिकुर्वत्स्विति दानप्रातिभाव्यविषयम्। प्रत्यये चाथ हापिते इति प्रत्ययप्रातिभाव्यविषयम्। अनुपस्थापयन्निति कथञ्चिदधमर्णगृहीतबन्धोपस्थानप्रतिभूविषयम्। अप्रतिकुर्वत्सु शाठ्येन निर्धनत्वादिना वा ऋणमददत्सु। प्रत्यये हापिते विश्वासे व्यभिचरिते। अनुपस्थापयन् उत्तमर्णपार्श्वस्थमाधिं कथंचिदधमर्णगतं पुनरुत्तमर्णसमीपस्थमकुर्वन्। पितामहोऽपि—

आधिपालकृतस्त्वाधिः मितकालोपलक्षितः।
न चेत्स धनिने दत्तः तस्याधेस्तैस्समर्पणम्॥

अचिरेण ऋणी स्वापराधादिनाऽन्याक्रान्तं यदि नाधिमर्पयति तदाऽस्माभिराधिस्समर्प्यत इति वदद्भिर्यैः प्रतिभूभिर्य आधिरर्पणीयतयाऽङ्गीकृतः, तस्य ऋणिकेनासमर्पितस्य तैस्समर्पणं कार्यमित्यर्थः। तैरिति बहुवचनमेकत्वादिसंख्योपलक्षणार्थं, अत एव हारीतः—

विश्वासार्थं कृतस्त्वाधिर्न प्राप्तो धनिना यदा।
प्रापणीयस्तदा तेन देयं वा धनिने धनम्॥

तेन आधिपालेनेत्यर्थः। यदा प्रापयितुमशक्यं तदैव द्वितीयःपक्षः। बहुमूल्याधावधमर्णायाधिप्रत्यर्पणप्रतिभूर्यः तमपि प्रत्याह स एव—

खादको वित्तहीनश्चेल्लग्नको वित्तवान्यदि।
मूल्यं तस्य भवेद्देयं न वृद्धिं दातुमर्हति॥

खादको बन्धभक्षकः बहुमूल्याधिनाशको धनिक इति यावत्। मूल्यं बहुमूल्यस्याधेर्मूल्यम्। साक्षात्प्रतिभूरप्यत्र वृद्धिं दातुं नार्हति। खादकेनाप्यत्र 'मूल्येन तोषयेदेनं' इति वचनान्मूल्यमात्रमेव देयम्। एवमवशिष्टप्रतिभुवामपि स्मृत्यन्तरेषु देयद्रव्यविधयो द्रष्टव्याः। प्रत्यये लेख्ये दिव्यदर्शने चाकृते सति 'ऋणं दाप्याः प्रातिभुवः' इत्यादिदापनाविधायकस्मृत्यन्तराद्वा उन्नेयाः, तुल्यन्यायाद्वा कल्पनीयाः। तथाहि—ऋणिद्रव्यार्पणप्रतिभूरप्रतिकुर्वति ऋणिके ऋाणद्रव्यमर्पयेत्। अभयप्रतिभूर्भयोपस्थितौ तत्प्रतीकारमाचरेत्। प्रमाणप्रतिभूः प्रमाणा-

करणे विवादास्पदं धनं दद्यात्। विवादप्रतिभूरप्रतिकुर्वति वादिनि साधितधनं दण्डधनं च दद्यात्। दासाद्यपहृतं पुनरलब्धं चेत् विश्वासप्रतिभूर्मूल्यद्वारेण दद्यादित्याद्यास्तत्र तत्र कल्पनीयाः ॥

इति स्मृतिचन्द्रिकायां प्रतिभुवामसाधारणविधिः.

---

## अथ प्रतिभूपुत्रादीनां विषयः.

तत्र याज्ञवल्क्यः—

दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोपि वा।
न तत्पुत्रा ऋणं दद्युः दद्युर्दानाय यः स्थितः ॥

प्रात्ययिकः प्रत्ययप्रतिभूः, तस्मिन्मृते दर्शनप्रातिभुवि च तयोः पुत्राः प्रातिभाव्यायातं पैतृकमृणं न दद्युः। दानप्रतिभुवि तु मृते तस्य पुत्राः पूर्वोक्तमृणं दद्युरित्यर्थः। यदा तु ऋणं जीवनशालिनः पूर्वोक्ताः प्रतिभुवो न दद्युः, मृतस्य दानप्रतिभुवः पुत्राश्च तदा ते दापनीया इति राज्ञो विधिमाह स एव—

आद्यौ तु वितथे दाप्यावितरस्य सुता अपि।

अपिशब्दाद्दानप्रतिभूरपि जीवनदशायां विसंवादे दाप्य इति दर्शयति। दर्शितं च साक्षादेव बृहस्पतिना—

आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम्।
उत्तरौ तु विसंवादे तौ विना तत्सुतौ तथा ॥

आद्यौ दर्शनप्रत्ययप्रतिभुवौ । वितथे अहमेनं दर्शयिष्यामि साधुरेष इत्येवंविधयोः प्रतिभूवाक्ययोर्मिथ्यात्वे । उत्तरौ दानर्णिद्रव्यार्पणप्रतिभुवौ । विसंवादे शाठ्यादिना धने ऋणिकेनाप्रतिदत्ते । तौ विना उत्तरयोः प्रवासे मरणे वा जात इत्यर्थः । एतदुक्तं भवति—ऋणं वाऽन्यद्वा धनादिकमहं तव दास्यामीत्येवं प्रतिभुवा यत्राङ्गीकृतं तत्र प्रतिभूर्दाप्यः, तस्याभावे तत्पुत्रो वा दाप्यः । अन्यत्र तु प्रतिभूरेवेति । एवंच प्रमाणप्रतिभुवां त्वेवमनङ्गीकारात् प्रमाणप्रतिभुव एव दाप्याः, न पुत्राः । विवादप्रतिभुवा तु साधितधनं दण्डधनं च दास्यामीत्यङ्गीकृतत्वाद्दानप्रतिभूवत् सति सम्भवे स एव दाप्योऽन्यथा तु तत्पुत्र इत्यवगन्तव्यम् । अत एव व्यासः—

विप्रत्यये लेख्यदिव्यदर्शने चाकृते सति ।
ऋणं दाप्याः प्रतिभुवः पुत्रं तेषां न दापयेत् ॥
दानवादप्रतिभुवौ दाप्यौ तत्पुत्रकौ तदा ।

इति । विप्रत्यये वितथे प्रत्यये प्रत्ययप्रातिभूर्दाप्य इत्यर्थः । एवमन्येषामभयगृहीतबन्धोपस्थापनादिप्रातिभुवामङ्गीकारानङ्गीकारप्रकारमालोच्य प्रत्ययप्रतिभूवद्दानप्रतिभूवद्वा दापनविधय ऊह्याः । यत्पुनर्मनुना 'प्रातिभाव्यं वृथादानं' इत्याद्यभिधाय 'न पुत्रो दातुमर्हति' इत्युक्तं, तत् दर्शनप्रातिभूविषयं यतोऽनन्तरमाह स एव—

दर्शनप्रातिभाव्ये तु विधिस्स्यात्पूर्वचोदितः ।

इति । पूर्वश्लोके चोदितः 'प्रातिभाव्यं न पुत्रो दातुमर्हति' इति दर्शनप्रातिभाव्यविषये ज्ञेय इत्यर्थः । तत्र विषये कचित्तस्यापवादमाह कात्यायनः—

गृहीत्वा बन्धकं यस्तु दर्शनप्रतिभूः स्थितः ।
विभाव्य वादिना तत्र दाप्यस्स्यात्तत्सुतोऽपृच्चणम् ॥

स्वविस्रम्भार्थमधमर्णादर्थं गृहीत्वा यो दर्शनप्रतिभूत्वमापद्य स्थितः संस्थितो मृत इति यावत् । तस्य सुतो वादिना धनिना ऋणिकार्थधारणनिबन्धनं प्रातिभाव्यमिति विभाव्य याच्यमानः प्रातिभाव्यागतमृणं दाप्य इत्यर्थः । यद्यपि तत्सुतग्रहणा दर्शनप्रतिभूसुतविषयोऽयमपवादः, न प्रमाणप्रतिभूसुतविषय इति प्रतिभाति, तथाऽपि प्रतिभूसुतदापने प्रमीतस्य पितुरधमर्णादर्थग्रहणपूर्वकं प्रातिभाव्यमत्र विवक्षितं निमित्तं, न तु दर्शनप्रतिभूसुतत्वमपीत्यस्मादेव वचनादपवादोऽन्यत्रापि विवक्षितनिमित्तसद्भावे स्मृत एवेति मन्तव्यम् । विवक्षितनिमित्तद्योतनार्थमेव च मनुना प्रश्नोत्तरत्वेनापवादो दर्शितः—

अदातरि पुनर्दाता विज्ञातप्रकृतावृणम् ।
पश्चात् प्रतिभुवि प्रेते परीप्सेत्केन हेतुना ॥
निरादिष्टधनश्चेत्तु प्रतिभूस्स्यादलंधनः ।
स्वधनादेव तद्दद्यात् निरादिष्ट इति स्थितिः ॥

इति । अत्र पदार्थाः प्रथममुच्यन्ते—अदातरि दर्शयितरि, दाता

धनप्रयोक्ता विज्ञातप्रकृतौ प्रायेणायं किञ्चिद्गृहीत्वा कस्यचित् प्रतिभूर्भवतीति विज्ञातस्वभावे ऋणं प्रातिभाव्यागतमृणं परीप्सेल्लब्धुमिच्छेत् । वाक्यार्थस्तु—अदातारि विज्ञातप्रकृतौ प्रतिभुवि प्रेते पश्चात्तत्पुत्राद्दृणं दाता 'न तत्पुत्रा ऋणं दद्युः' इति शास्त्राविरुद्धेन केन हेतुना परीप्सेदिति। उत्तरश्लोकव्याख्याऽप्येवं क्रियते—निरादिष्टं समर्पितं बन्धत्वेन धनं यस्यासौ निरादिष्टधनः। अलं पर्याप्तं बन्धत्वेनोपात्तं धनं यस्यासावलंधनः । निरादिष्टशब्देन समस्तेन निरादिष्टधनस्य दर्शनप्रतिभुवः पुत्रो लक्ष्यते। स्थितिः शास्त्रमर्यादा । वाक्यार्थस्तु—निरादिष्टधनोऽलंधनो दर्शनप्रतिभूर्मृतश्चेत्स्यान्निरादिष्टः स्वधनादेव तद्दृणं दद्यादिति स्थितिरिति । अनेन—निरादिष्टधनत्वेनैव हेतुना परीप्सेदित्युत्तरमर्थादुक्तम् । अस्यैव वचनस्याध्याहारलक्षणाश्रयणं विहायार्थान्तरमुच्यते—निरादिष्टधनः प्रतिभूरलंधनश्चेत्स्यात् स एव निरादिष्टः स्वधनादेव दद्यादिति । अनिरादिष्टधनवदधमर्णं दर्शयन्न मुच्यते निरादिष्टधनः, किंतु दानप्रतिभूवद्दद्यादिति तात्पर्यार्थः। एतच्चार्थान्तरं देवस्वामिनोक्तम्। प्रतिभूसुतदेयविषये तु विशेषमाह व्यासः—

ऋणं पैतमाहं पौत्रः प्रातिभाव्यागतं सुतः ।
समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः ॥

सुतः प्रातिभूसुतः । समं मूलमात्रम् । तत्सुतौ पौत्रप्रतिभूसुतयो-

स्सुतौ। यत्तु मनुनोक्तं—

दानप्रतिभुवि प्रेते दायादानपि दापयेत्।

इति, तत्र दायादशब्दस्सुतेष्वेव व्यवतिष्ठते, अन्यथा सपिण्डमात्राभिधाने 'तत्सुतौ तु न दाप्याविति निश्चयः' इति पूर्वोक्तवचनविरोधापत्तेः,

प्रातिभाव्यागतं पौत्रैर्दातव्यं न कचिद्भवेत्।

इति बृहस्पतिवचनविरोधापत्तेश्च। अनेकप्रतिभूदेयविषये तु विशेषमाह याज्ञवल्क्यः—

बहवस्स्युर्यदि स्वांशैः दद्युः प्रतिभुवो धनम्।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि॥

एकस्याधमर्णस्य छायां सकलधनदायकत्वरूपसादृश्यं प्रत्येकं विकल्पेनाश्रिताः एकच्छायाश्रिताः, तेषु यं याचते धनिकस्स सर्वं दद्यादित्यर्थः। धनिकरुच्यविशेषे तु 'समं स्यादश्रुतत्वात्' इति न्यायेनात्रापि स्वांशैर्दद्युः। एकच्छायाश्रितप्रतिभूसुते तु विशेषमाह कात्यायनः—

एकच्छायाश्रिते सर्वं दद्यात्तु प्रोषिते सुतः।
मृते पितरि पित्रंशं परर्णं न बृहस्पतिः॥

सर्वं परर्णमपि, न पित्रंशमात्रमित्यर्थः। न तु सर्वं सवृद्धिकमिति व्याख्येयम्,

पुत्रेणापि समं देयमृणं सर्वं तु पैतृकम्।

इति बृहस्पतिस्मरणात् । समं मूलमात्रऋणं प्रातिभाव्यागतं पैतृकम् । एतच्च धनिकेच्छायां 'प्रोषितस्य पुत्रो मह्यं दद्यात्' इत्येवंविधायां सत्यां सर्वदानविधानं द्रष्टव्यम् । असत्यां तु धनिकेच्छायां 'पित्रंशं अप्रवृद्धिकं प्रोषितपुत्रो दद्यात्' इति चावगन्तव्यम् । परर्णं परस्य पितृव्यतिरिक्तस्य एकच्छायाश्रितस्य ऋणांशं पितरि मृते तत्सुतः सत्यामपि धनिकेच्छायां न दातुमर्हति, किंतु पित्रंशमवृद्धिकमेवेति बृहस्पतिर्ब्रूत इत्यर्थः । प्रतिभूदौष्ट्यविषये तत्राह पितामहः—

यो यस्य प्रतिभूर्भूत्वा मिथ्या चैव तु गच्छति ।
धनिकस्य धनं दाप्यो राज्ञा दण्डं च तत्समम् ॥
कुर्याच्चेत्प्रतिभूर्वादमृणिकार्थेऽर्थिना सह ।
सोपसर्गस्तदा दण्ड्यो विवादाद्द्विगुणं धनम् ॥

इति । सोपसर्गो विप्लवकारी ॥

इति स्मृतिचन्द्रिकायां प्रतिभूपुत्रादीनां विधयः.

---

## अथ प्रतिभ्वादिदत्तप्रतिक्रियाविधयः.

तत्र कात्यायनः—

यस्यार्थे येन यद्दत्तं विवा(दा)देऽभ्यर्थितेन तु ।
साक्षिभिर्भावितेनैव प्रतिभूस्तमवाप्नुयात् ॥

यस्य प्रातिभाव्यं कारयितुः कृते येन प्रतिभुवा धनिकादि-

भिर्याचितेन साक्ष्यादिभिश्चान्यार्थमर्पितार्थोऽयमित्यवधृतेन यत्स्वकीयं सुवर्णपशुधान्यवस्त्रादिकं धनिकादिभ्यो दत्तं तत्समेवार्थं प्रातिभाव्यकारयितुः सकाशात् स समाप्नुयादित्यर्थः। यत्तु याज्ञवल्क्येनोक्तम्—

प्रतिभूर्दापितो यत्र प्रकाशं धनिने धनम् ।
द्विगुणं प्रतिदातव्यमृणिकैस्तस्य तद्भवेत् ॥

इति, तद्धनिकपीडितप्रतिभूविषमम् । तथाच नारदः—

यं चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीडितः ।
ऋणिकं तं प्रतिभुवे द्विगुणं प्रतिदापयेत् ॥

एतदपि प्रतिदानविलम्बविषयम् । तथाच कात्यायनः—

प्रातिभाव्यं तु यो दद्यात्पीडितः प्रतिभावितः ।
त्रिपक्षात् परतस्सोऽर्थं द्विगुणं लब्धुमर्हति ॥

प्रतिभावितः प्रतिभूत्वेन कारितः । त्रिपक्षात्प्राक् तु सममेव लब्धुमर्हतीत्यर्थोऽपि गम्यते । यद्यपि प्रायेण प्रीत्यैव प्रतिभूर्भवति, न च प्रीतिदत्ते वृद्धिरस्ति न च द्वैगुण्यं, एतावति काले धर्म्यं भवितुमर्हति । तथाऽपि वचनबलात् सर्वं भविष्यति । न हि वचनस्यातिभारोऽस्तीत्यवगन्तव्यम् । एवमुक्तो द्विगुणलाभो हिरण्यविषयः । पश्वादौ तु—

संततिः स्त्रीपशुष्वेव धान्यं त्रिगुणमेव च ।
वस्त्रं चतुर्गुणं प्रोक्तं रसश्चाष्टगुणः स्मृतः ॥

इति याज्ञवल्क्येन द्वैगुण्यापवादस्मरणात् ।

उक्ता पञ्चगुणा शाके बीजेक्षौ षड्गुणा स्मृता ।

इत्यादेरुपलक्षणार्थमिदमुक्तं तद्भाष्यकृद्भिः, तेन शाकादौ पञ्चगुणादि देयम् । एवमुक्तानेकविधसवृद्धिकदानमृणिकाज्ञया दत्तविषयं, अन्यत्र तु दत्तसममेव देयम् । तथाचोचथ्यः—

प्रतिभ्वा प्रतिदत्तं यदपृष्टे ऋणिके धनम् ।
द्विगुणं न प्रतिभुवे प्रदेयमृणिकेन तत् ॥

प्रष्टुंयोग्यदेशकालस्थर्णिकादिविषयमेतत् । तेनान्यत्रापृष्टेऽपि ऋणिके नायं प्रतिषेधः, किंतु पृष्टतुल्यतैव । लग्नकालग्नकोपक्षयप्रतिक्रियां साधारणीमपि लग्नकोपक्षयप्रतिक्रियाविधिप्रसङ्गादत्रैवाह नारदः—

यस्य दोषेण यत्किञ्चिद्विनश्येत ह्रियेत वा ।
वोढव्यं तद्भवेत्तेन यच्चाज्ञानविनाशितम् ॥

इति स्मृतिचन्द्रिकायां प्रतिभ्वादिदत्तप्रतिक्रियाविधयः.
प्रतिभूप्रकरणं समाप्तम्.

---

अथ वृद्धिविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र बृहस्पतिः—

वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधाऽन्यैः प्रकीर्तिता ।
षड्विधाऽस्मिन् समाख्याता तत्त्वतस्तान् निबोधत ॥

अस्मिन् अस्मदीये धर्मशास्त्रे । कथं षड्विधत्वमित्यपेक्षिते स एवाह—

कायिका कालिका चैव चक्रवृद्धिरथापरा ।
कारिताऽथ शिखावृद्धिर्भोगलाभस्तथैव च ॥

किं पुनः कायिकादीनां स्वरूपमित्यपेक्षितेऽप्याह स एव—

कायिका कर्मसंयुक्ता मासग्राह्या तु कालिका ।
वृद्धेर्वृद्धिश्चक्रवृद्धिः कारिता ऋणिना कृता ॥
प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा स्मृता ।
गृहात्तोषश्शदः क्षेत्रात् भोगलाभः प्रकीर्तितः ॥

इति । गोघोटकादेराधीकृतस्य दोहनवाहनादिकः कायिको व्यापार एव यत्र वृद्धित्वेन कल्पितः सा कायिकेत्यर्थः । तथाच व्यासः—

दोह्यवाह्यक्रियायुक्ता कायिका समुदाहृता ।

इति । मासग्राह्या प्रतिमासं लभ्या वृद्धिः कालिका,

प्रतिमासं स्रवन्ती या सा वृद्धिः कालिकेरिता ।

इति नारदस्मरणात् । वृद्धेरपि प्रतिमासं मूलभावेन पुनर्वृद्धिश्चक्रवृद्धिः । ऋणिकेच्छया कृता वृद्धिः कारिता । 'इच्छाकृता कारिता स्यात्' इति स्मृत्यन्तरेऽभिधानात् । तेन छान्दसोऽयं स्वार्थ एव कारितेति णिच्प्रत्ययो द्रष्टव्यः । परप्रेरणया तु कारिता वृद्धिर्निषिद्धैव । तथाच कात्यायनः—

ऋणिकेन तु या वृद्धिराधिका सम्प्रकल्पिता ।
आपत्कालकृता नित्यं दातव्या कारिता तु सा ॥

अन्यथा कारिता वृद्धिर्न दातव्या कथञ्चन ।

इति । शास्त्रोक्तादधिका धनदातृप्रतिलोभनार्थं स्वयं कल्पिता कारिताख्या दातव्या, न पुनरनेवंविधा धनिकेन कारिता दातव्येत्यर्थः । प्रतिदिनं लभ्या तु शिखासादृश्याच्छिखावृद्धिरिति व्यपदिश्यते । किं पुनश्शिखासादृश्यं वृद्धेरित्यपेक्षिते बृहस्पतिरेवाह—

शिखेव वर्धते नित्यं शिरश्छेदान्निवर्तते ।
मूले दत्ते तथैवैषा शिखावृद्धिस्ततः स्मृता ॥

प्रत्यहं गृह्यत इति सम्प्रतिपन्नदिनसङ्ख्याविशिष्टवृद्धिग्रहणोपलक्षणार्थम् । अत एव कात्यायनः—

एकान्तेनैव वृद्धिं तु शोधयेद्यत्र चर्णिकम् ।
प्रतिकालं ददात्येव शिखावृद्धिस्तु सा स्मृता ॥

गृहात्तोष इत्यादेरयमर्थः—निवासनिबन्धनः गृहसकाशात् सन्तोषः । क्षेत्रात् सम्भूतं धान्यादिफलं च भोगलाभाख्यो वृद्धिभेद इति। गृहक्षेत्रग्रहणं स्थावरात्मकभोग्याधेरप्युपलक्षणार्थम्। अत एव कात्यायनः—

आधिभोगस्त्वशेषो यो वृद्धिं तु परिकल्पितः ।
प्रयोगो यत्र चैवं स्यादाधिभोगस्स उच्यते ॥

अशेषः स्थावरमात्रसम्बन्धीत्यर्थः ।

इति स्मृतिचन्द्रिकायां वृद्धिभेदाः

---

## अथ वृद्धिपरिमाणनियमाः

तत्र मनुः—

अशीतिभागं गृह्णीयान्मासाद्वार्धुषिकश्शते ।

इति । निष्कशते प्रयुक्ते मासस्य सपादनिष्कपरिमितां वृद्धिं वार्धुषिको वृद्ध्यर्थं धनप्रयोक्ता गृह्णीयादित्यर्थः । एतत्सबन्धकविषयं,

अशीतिभागो वृद्धिस्स्यान्मासिमासि सबन्धके ।

इति, याज्ञवल्क्यस्मरणात् । आधिग्रहणपूर्वके धनप्रयोगे यावद्धनं प्रयुक्तं तस्याशीतितमो भागः प्रतिमासं वृद्धिस्स्यादित्यर्थः । यत्तु मनुना विकल्पत्वेनोक्तं 'द्विकं शतं वा गृह्णीयात्' इति, तद्व्यवस्थितविकल्पत्वेनोक्तम् । यत आह व्यासः—

सबन्धे भाग आशीतः षाष्टो भागस्सलग्नके ।

निराधाने द्विकशतं मासलाभ उदाहृतः ॥

अशीतिषष्टिभागावाधिप्रतिभूसहितयोः प्रयोगयोः प्रतिमासं यथाक्रमेण ग्राह्यौ, एतद्रहिते तु प्रयोगे पञ्चाशद्भागः प्रतिमासं ग्राह्य इत्यर्थः । द्वे दीयते वृद्धिरस्मिन् शत इति द्विकशतम् । अनेन वचोभङ्ग्या पञ्चाशद्भाग उक्तः । ब्राह्मणाधमर्ण एवायं द्विकं शतमिति नियमः, क्षत्रियाद्यधमर्णे अन्यथा नियमः । तथाच मनुः—

द्विकं त्रिकं चतुष्कं च पञ्चकं च शतमेव वा ।

मासस्य वृद्धिं गृह्णीयाद्वर्णानामनुपूर्वशः ॥

अबन्धकालग्नकप्रयोगविषयमेतत्, द्विकशतस्थाते वर्णान्तरे त्रिक शतादिविधानात् । अत एव याज्ञवल्क्यः—

वर्णक्रमाच्छतं द्वित्रिचतुःपञ्चकमन्यथा ।

इति । अन्यथा बन्धकलग्नकराहित्य इत्यर्थः । तथाऽधमर्णविशेषे प्रतिमासं वृद्धेः परिमाणान्तरं द्विकशतादिस्थाने स एवाह—

कान्तारगास्तु दशकं सामुद्रा विंशकं शतम् ।

इति । वृद्धया धनं गृहीत्वा ये दुर्गवर्त्मगन्तारः ते प्रतिमासं दशकं शतं दद्युः । ये तु समुद्रगन्तराः तेऽपि विंशकं शतं दद्युरित्यर्थः । एवमुक्ताशीतिभागादिशास्त्रीयवृद्धिपरिमाणेन सह विकल्पमधमर्णाभ्युपगतवृद्धिपरिमाणस्याह स एव—

दद्युर्वा स्वकृतां वृद्धिं सर्वे सर्वासु जातिषु ।

इति । सर्वे ब्राह्मणादयोऽधमर्णास्स्वाभ्युपगतां वृद्धिं सर्वासु जातिषूत्तमर्णभूतासु दद्युर्वेत्यर्थः । अयं च विकल्पः कारितायामेव वृद्धौ, अन्यत्र तु शास्त्रतः परिमाणनियमविधिरित्ययं स्वकृतपक्ष एव । पश्वादिद्रव्यस्य तु वृद्ध्यर्थं प्रयुक्तस्य तदीया सन्ततिरेव वृद्धिरित्याह स एव—'सन्ततिस्तु पशुस्त्रीणाम्' इति । स्त्रियो दास्यः । सन्तत्यभावे तु प्रयुक्तस्य पश्वादेः पुष्टिरविनाशो वा लाभ इति ॥

इति स्मृतिचन्द्रिकायां वृद्धिपरिमाणनियमाः ॥

## अथाकृतवृद्धिविधयः.

तत्र विष्णुः—

यो गृहीत्वा ऋणं पूर्वं श्वो दास्यामीति सामकम् ।
न दद्याल्लोभतः पश्चात्तदह्ना वृद्धिमाप्नुयात् ॥

सममेव सामकं अवृद्धिकमिति यावत् । एतदुक्तं भवति—प्रतिदानकालावधिमङ्गीकृत्य गृहीतमवृद्धिकमपि ऋणमवधेरनन्तरकालादारभ्य वर्धत एवेति । वयस्यादेरुपभोगाद्यर्थमार्पितविषये त्वाह नारदः—

न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् ।
अनाकारितमप्यूर्ध्वं वत्सरार्धाद्विवर्धते ॥

अनाकारिता अकृता । प्रीतिदत्तानां प्रतियाचनप्रतिदानदिंननिर्देशशून्यानामिति शेषः । अनाकारितमपीत्यादेरयमर्थः—प्रतिदानदिननिर्देशे तु तद्दिनमारभ्य सषण्मासादूर्ध्वं वर्धते प्रीतिदत्तमपीति । गृहीतपण्यमूल्यानर्पणविषये तु कात्यायनः—

पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात्तद्धनं वृद्धिमाप्नुयात् ॥

अप्रतियाचितविषयमेतत् । किमत्र वृद्धेः परिमाणं? उच्यते—अधमर्णाद्यङ्गीकारायत्तपरिमाणस्यात्रासम्भवादन्यस्य च पुरुषबुद्धिकल्पितस्य शास्त्रबाह्यस्यायुक्तत्वाच्छास्त्रोक्तमेव परिमाणं ग्राह्यं, तच्च पूर्वस्मिन् प्रकरणे दर्शितं 'अशीतिभागं' इत्यादिना ।

अत एव विष्णुना 'वृद्धिं दद्यादकृतामपि संवत्सरातिक्रमे यथाऽभिहितम्' इत्युक्तम्। यथाऽभिहितं धर्मशास्त्र इति शेषः। न च यथा प्रत्यर्थिना मध्यस्थेनार्थिना वाऽभिहिता तथा दद्यादिति यथाऽभिहितमिति वचनार्थः कस्मान्न स्यादिति वाच्यं, यत आह मनुः—

कृतानुसारादधिका व्यतिरिक्ता न सिध्यति।
कुसीदपथमाहुस्तं पञ्चकं शतमर्हति॥

इति। कुसीदपथमाहुरित्युच्छास्त्रवृद्धिं निन्दयति। शास्त्रकृतवृद्ध्यनुसारो हि यो वृद्धिग्रहणे लौकिकानां समयाचारः स कृतानुसारः, तस्मादधिका वृद्धिरुत्तमर्णादेरकृतवृद्धौ न सिध्यति, यतस्सा व्यतिरिक्ता धर्मशास्त्रबाह्येत्यर्थः। अत एव कुसीदपथमाहुः तन्न धर्मपथमिति निन्दाऽप्युपपन्ना। 'पञ्चकं शतमर्हति' इत्यस्य विषयविशेषो वक्ष्यते। यत्तु वैष्णववचने संवत्सरातिक्रम इत्युक्तं, तद्याचितकविषयम्। तथाच कात्यायनः—

यो याचितकमादाय तमदत्वा दिशं व्रजेत्।
ऊर्ध्वं संवत्सरात्तस्य तद्धनं वृद्धिमाप्नुयात्॥

इति। कृतोद्धारं याचितकमादायेत्यर्थः। प्रवासाभावे तु प्रतियाचनकालादारभ्य याचितकस्य वृद्धिमाह स एव—

स्वदेशेऽपि स्थितो यस्तु न दद्याद्याचितं क्वचित्।
तत्ततोऽकारितां वृद्धिमनिच्छन्तं च दापयेत्॥

न दद्याद्याचितमिति प्रकृतेन सम्बन्धः । ततः प्रतियाचनकालादारभ्येत्यर्थः । प्रीतिदत्ते च प्रतिमाचिते याचनकाला दारभ्य वृद्धिविशेषनियमार्थमेव वचनान्तरमारब्धं तेनैव—

प्रीतिदत्तं न वर्धेत यावन्न प्रतियाचितम् ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥

निक्षेपादावपि याच्ययानमदत्तमेव वर्धते इत्याह स एव—

निक्षेपं वृद्धिशेषं च क्रयं विक्रयमेव च ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥

क्रयविक्रयशब्देन पण्यमूल्यं लक्ष्यते । यत्तु पूर्वप्रदर्शिते मानवे वचने 'पञ्चकं शतमर्हति' इति सामान्येनोक्तं तत्प्रतियाचितप्रीतिदत्तादिविषयं मन्तव्यम् ।

इति स्मृतिचन्द्रिकायामकृतवृद्धिविधयः ॥

---

## अथ अकृतवृद्ध्यपवादः.

तत्र नारदः—

पण्यमूल्यं भृतिर्न्यासो दण्डो यश्च प्रकल्पितः ।
वृथादानाक्षिकपणा वर्धन्ते नाविवक्षिताः ॥

पण्यस्य वस्त्रादेर्मूल्यं पण्यमूल्यम् । वृथादानं नर्तक्यादिभ्यः प्रतिश्रुतम् । आक्षिकपणो द्यूतद्रव्यम् । उक्तेषु सत्सु अकृतवृद्धिर्नास्तीत्यर्थः । अत्र पण्यमूल्यस्य वृद्धिः प्रवासप्रतियाच-

नाभावे। न्यासस्य त्ववृद्धिः प्रतियाचनाभावे यथास्थितस्यैव। अतो न पूर्वप्रकरणोक्तवचनविरोधापत्तिः। संवर्तोऽपि—

न वृद्धिः स्त्रीधने लाभे निक्षेपे च यथास्थिते।
संदिग्धे प्रातिभाव्ये च यदि न स्यात्स्वयंकृता॥

लाभे न वृद्धिः। यथास्थिते इति वदन् निक्षेपे व्यक्तचन्यत्वादिकरणे वृद्धिः भवतीति दर्शयति। संदिग्धे धने केनचित् संदेहेन दातुमनुचितत्वेन स्थिते। प्रातिभाव्ये ऋणिद्रव्यार्पणादौ साक्षात्प्रतिभूविषयेऽपि। प्रतियाचनादेः परस्तादपि न वृद्धिः। 'यदि न स्यात् स्वयंकृता' इति वदन् स्त्रीधनादावपि कृता चेद्वृद्धिः देयैवेति दर्शयति। कात्यायनोपि—

चर्मसस्यासवद्यूतपण्यमूल्ये च सर्वदा।
स्त्रीशुल्के च न वृद्धिस्स्यात् प्रातिभाव्यागतेषु च॥

सर्वदेति वदन् प्रतियाचनादेः परस्तादपि नास्त्यकृता वृद्धिरिति दर्शयति। पण्यमूल्ये वचनान्तराविरोधः पूर्ववदवसेयः। यद्यपि सर्वदेति सर्वशेषः प्रतिभाति, तथाऽप्यविरोधाय पण्यमूल्यशेषता मन्तव्या। व्यासोपि—

प्रातिभाव्यं भुक्तवन्धमगृहीतं च दित्सवः।
न वर्धते प्रपन्नस्य दमश्शुल्कं प्रतिश्रुतम्॥

भुक्तवन्धग्रहणमुपभुक्तगोप्यधौ निक्षेपोपभोग इव वृद्धिर्माभूदित्येवमर्थम्। अर्थस्तु गौतमेन स्पष्टीकृतः—'भुक्ताधिर्न वर्धे-

त वस्त्रालङ्कारादिः' इति । अगृहीतं च दित्सव इति कृतवृद्ध्यपवादोऽपि वृद्ध्यभावकथनप्रसङ्गादकृतवृद्ध्यपवादैस्सहोक्तः । तस्यार्थो याज्ञवल्क्येन स्पष्टीकृतः—

दीयमानं न गृह्णाति प्रयुक्तं यस्स्वकं धनम् ।
मध्यस्थस्थापितं तत्तु वर्धते न ततःपरम् ॥

न गृह्णाति रक्षणाक्षमत्ववृद्धिलोलुपत्वादिहेतुनेति शेषः । मध्यस्थस्थापनाभावे स्थापितस्यापि याच्यमानस्याप्राप्तौ पूर्ववद्वर्धत एव, प्रतिदानोद्यमस्य कृतत्वासंभवात् ।

इति स्मृतिचन्द्रिकायामकृतवृद्ध्यपवादः ॥

---

## अथ वृद्धिग्रहणप्रतिषेधाः.

तत्र मनुः—

नातिसांवत्सरीं वृद्धिं न चादृष्टां विनिर्हरेत् ।
चक्रवृद्धिं कालवृद्धिं कारिता कायिका च या ॥

अत्राद्यपादार्थे केचिदेवमाहुः—आ द्वैगुण्याद्वृद्धिग्रहणविधानात् वत्सरादूर्ध्वमपि वृद्धिग्रहणे दोषाभावादभ्युदयार्थी चेत् संवत्सरादूर्ध्वं या वृद्धिः तां न विनिर्हरेत् न गृह्णीयादिति । अयं तावदर्थो ग्राह्यः, विरोधाभावात । अन्ये तु—संवत्सराधिकां वृद्धिं न गृह्णीयात्, यदि वृद्धिमहत्त्वेन तावदेव द्वैगुण्यं भवेदित्यध्याहृत्यार्थमाहुः, ते मन्दाः—'कुसीदवृद्धिर्द्वैगुण्यान्नात्येति'

इत्यनेन फलतो गतार्थत्वापत्तेः, वत्सरमात्रेण द्विगुण्णापादकवृद्धिमहत्त्वस्य निषिद्धस्यानुपपत्तेश्च। अपरे पुनरेवं व्याचक्षते—यत्राधमर्णे प्रतिमासं पञ्चकं शतं गृह्णीयादिति या वृद्धिः प्रागुक्ता सा ब्राह्मणाद्यधमर्णके कथञ्चिदङ्गीकारवशात् गृह्यमाणा संवत्सरं यावद्गृहीतव्या न ततःपरमिति। अयमप्यर्थोऽस्तु, प्राक्तनार्थवद्बहुदोषाभावात्। 'न चादृष्टां विनिर्हरेत्' इत्यस्यायमर्थः—धर्मशास्त्रेष्वदृष्टां च षट्कं शतमित्येवंभूतां स्वबुद्धिकल्पितां वृद्धिं न गृह्णीयादिति॥

ननु—

कृतानुसारादधिका व्यतिरिक्ता न सिध्यति।

इत्यनेन गतर्थमिदं वाक्यमेवंव्याख्यायमाने स्यात्। अस्तु व्यर्थोऽनुवादः गत्यन्तराभावादिति केचिदाचक्षते। दार्ढ्यार्थमुक्तस्यैव पुनरभिधानमित्यन्ये मन्यन्ते। वस्तुतस्तु—अनेन निषेधे कृतेऽप्यकृतवृद्धौ वृद्धिसम्प्रतिपत्त्यभावात् शास्त्रोक्तैव वृद्धिस्सिध्यति, नान्या सम्प्रतिपत्तिमात्रलभ्या वृद्धिरिति कथनार्थं तद्वचनमित्यगतार्थतैव। 'न विनिर्हरेत्' इति पदद्वयमुत्तरार्धपदैरनुषङ्गात् सम्बध्यते। ततश्चायमर्थः—या चक्रवृद्ध्यादिभेदेन चतुर्विधा वृद्धिः तां न गृह्णीयादिति। एतदुक्तं भवति—चक्रवृद्ध्यादयः स्वरसतो न ग्राह्या इति॥

नन्वशीतिभागादिवृद्धिरपि प्रतिमासं ग्राह्या कालिका भवति, सा च स्वरसतो ग्राह्या, तथाऽनतिभूरिपरिमाणा कारिताऽपि

स्वरसतो ग्राह्यैव । तथा कायिकाऽप्यतिपीडारहिता । तेन तासां कथं प्रतिषेधः? उच्यते—केन वोक्तं तासां प्रतिषेध इति । कासां तर्हि प्रतिषेधः? उच्यते—यथा,

पञ्चमाषास्तु विंशत्या एवं धर्मो न हीयते ॥

इति वासिष्ठवचनविहिता वृद्धिः, 'वसिष्ठविहितां वृद्धिम्' इति मानववचनान्तरे प्रतिषिध्यते । एवं 'कुसीदवृद्धिर्धर्म्या विंशतेः पञ्चमाषिकी मासम्' इति गौतमेन विहिता कालिकाऽत्र प्रतिषिध्यते, कायिकाऽप्यतिपीडावती तेन न कश्चिद्दोषः । ननु—गौतमोक्ता कालिका धर्म्यत्वेन तेन विहिता कथं प्रतिषिध्यते? यथा 'एवं धर्मो न हीयते' इति धर्म्यत्वेनापि वसिष्ठविहिता प्रतिषिद्धा तथैव प्रतिषिध्यते । अत्यर्थाधिकपरिमाणत्वेनाधर्म्यत्वात् । अधर्म्यत्वं चोक्तं मनुना 'वित्तविवर्धिनीम्' इति वदता । कथं तर्हि वसिष्ठगौतमयोः धर्म्यत्वेनाभिधानं? पञ्चकशतवच्छूद्राधमर्णविषयत्वेनेति ब्रूमः । एवञ्च शूद्रेतराधमर्णविषयत्वे अधर्म्यत्वात्तत्रैव कथञ्चिदङ्गीकारवशात् प्राप्ता मनुना प्रतिषिद्धेति मन्तव्यम् ।

केचित्तु त्रैवर्णिकेष्वपि धर्म्यत्वमापादयितुं गौतमादिवचनमेवं व्याचक्षते—

माषो विंशतितमो भागः पणस्य परिकीर्तितः ।

इति स्मृत्युक्तो माषः कार्षापणस्य विंशतितमो भागः पञ्चमाषिकीत्यत्र परिगृह्यते । तथाच सति कार्षापणविंशतेः प्रयु-

क्ता या पञ्चमाषिकी वृद्धिरशीतिभागवृद्धेरीषदधिकेति कुतस्त्या वृद्धेरधर्म्यतेति व्याख्याद्वयमप्ययुक्तम् । वसिष्ठवचने तावदुभयथा व्याख्यानेऽपि 'वासिष्ठाविहिताम्' इत्यादिमनुवचन विरोधो दुर्वारः । 'धर्म्यत्वे वित्तवर्धिनीमुत्सृजेत्' इत्यस्याघटनात् । गौतमवचने तु 'एवं षोडशमासैर्द्विगुणा भवतीति' इति स्ववाक्यशेषविरोधो दुष्परिहरः। तथाहि प्रथमव्याख्यातॄणां व्याख्याने षोडशमासैः कार्षापणचतुष्कं भवति । द्वितीयव्याख्यातॄणां तु सुवर्णपञ्चकं भवति, तस्माद्व्याख्याद्वयमप्यसम्बद्धम् । मत्पक्षे पुनर्न वाक्यशेषविरोधः, व्यावहारिकनिष्कविंशतेः प्रसिद्धमाषपञ्चकवृद्धौ षोडशमासैः द्वैगुण्यसिद्धेः । किन्तु धर्म्यत्वविरोधः, स चास्माभिः परिहृतः तेन चोद्यानवकाशः। यत एव 'स्वरसतो न ग्राह्या' इति प्रतिषेधो न पुनस्सर्वथा न ग्राह्या इति, अत एव चक्रवृद्धौ कथञ्चिदङ्गीकृतायां धनिकदोषात् क्वचित्तस्यालाभमाह स एव—

चक्रवृद्धिं समारूढो देशकालव्यवस्थितः ।
अतिक्रामन् देशकालौ न तत्फलमवाप्नुयात् ॥

अतिक्रामन् देशकालौ यदि परिभाषितं देशं कालं वाऽतिक्रामति न सन्निहितस्तत्र भवति ततः स्वदोषान्न तत्फलमवाप्नुयात् न तां वृद्धिं लभत इत्यर्थः । फलप्रतिषेधान्मूलं लभते, यथोक्तप्रतिषेधादन्यां वृद्धिं लभेतेति गम्यते । अन्येऽपि 'ब्राह्मणस्य न वार्धुषम्' इत्याद्या वृद्धिग्रहणप्रतिषेधा

नारदाद्युक्ताः सन्ति । ते त्वाह्निकमध्य एवापद्वृत्तिप्रकरणे प्रदर्शिता इतीहास्माभिर्न प्रदर्शिताः ॥

इति स्मृतिचन्द्रिकायां वृद्धिग्रहणप्रतिषेधाः ॥

---

### अथ वृद्ध्युपरमावधिनिरूपणम्.

तत्र नारदः—

ऋणानां सार्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः ।
देशाचारास्थितिस्त्वन्या यत्रर्णमवतिष्ठते ।
आपदं निस्तरेद्वैश्यः कामं वार्धुषिकर्मणा ॥

इत्यादिना स्मृतः ऋणिनां वृद्धिकरो विधिः सर्वत्र भूमावपीष्टः । यत्र द्वैगुण्यादावृणं वर्धमानमवतिष्ठते तत्र देशाचारस्थितिः देशान्तराचारास्थितितोऽन्येत्यर्थः । कथमन्येत्यपेक्षिते स एवाह—

द्विगुणं त्रिगुणं चैव तथाऽन्यस्मिन् चतुर्गुणम् ।
तथाऽष्टगुणमन्यस्मिन् देयं देशेऽवतिष्ठते ॥

देयमृणं वर्धमानं क्वचिद्देशे द्विगुणं क्वचित्त्रिगुणं क्वचिच्चतुर्गुणं वा यावद्वर्धेत इत्यर्थः । एवं प्रयुक्तद्रव्यभेदादपि भेदव्यवस्थानम् । तथाच बृहस्पतिः—

हिरण्ये द्विगुणा वृद्धिः त्रिगुणा वस्त्रकुप्ययोः ।
धान्ये चतुर्गुणा प्रोक्ता शदवाह्यलवेषु च ॥

उक्ता पञ्चगुणा शाके बीजेक्षौ षड्गुणा स्मृता ।
लवणस्नेहमद्येषु वृद्धिरष्टगुणा मता ॥
गुडे मधुनि चैवोक्ता प्रयुक्ते चिरकालिके ।

इति । कुप्यं त्रपुसीसकम् । शदः क्षेत्रफलं, तच्च गोबलीवर्दन्यायाद्धान्यव्यतिरिक्तं पुष्पमूलफलादिकम् । वाह्यो बलीवर्दतुरगादिः । लवो मेषलोमचमरीकेशादिः । स्नेहो मधूच्छिष्टादिः । 'प्रयुक्ते चिरकालिके' इति पदद्वयं सप्तम्येकवचनान्तेन हिरण्यादिपदेन सम्बध्यते । शदवाह्यलवेषु चिर कालिकेष्वित्यध्याहारः । एवं लवणस्नेहमद्येष्विसत्राप्यध्याहारः । द्वैगुण्यहेतुभूतं चिरकालमुदाहर्तुमशीतिभागवृद्ध्या प्रयुक्तं धनमष्टमासाधिकषड्वत्सरे पूर्णे द्वैगुण्यमापद्यत इत्याह स एव—

अशीतिभागो वर्धेत लाभे द्विगुणतामियात् ।
प्रयुक्तं सप्तभिर्वर्षैस्त्रिभागोनैर्न संशयः ॥

लाभे प्रतिमासमशीतिभागात्मके सङ्गृह्यमाणे हिरण्यवद्वज्रादावपि द्विगुणैव वृद्धिः । तथाच वसिष्ठः—

वज्रशुक्तिप्रवाळानां हेम्नश्च रजतस्य च ।
द्विगुणा त्विष्यते वृद्धिः कृता कालानुसारिणी ॥

वज्रसाहचर्याच्छुक्तिरिति मुक्ताफलं लक्षणयोच्यते । कात्यायनेन तु 'मणिमुक्ताप्रवाळानाम्' इति वाचकशब्देनोक्तं, तदप्यत्र लक्षणानिश्चये कारणम् । कुप्यवत्ताम्रादावपि त्रिगुणैव वृद्धिः । तथाच स एव—

ताम्रायःकांस्यरीतीनां त्रपुणस्सीसकस्य च ।
त्रिगुणा तिष्ठते वृद्धिः कालाच्चिरकृतस्य तु ॥

बीजवत् कार्पासेऽपि षड्गुणैव वृद्धिः । तथाच व्यासः—

शाककार्पासबीजेक्षौ षड्गुणा परिकीर्तिता ।

इति । स्नेहवद्रसस्याप्यष्टगुणैव वृद्धिः । तथाच स एव—

वदन्त्यष्टगुणान् काले मद्यस्नेहरसासवान् ।

इति । कात्यायनोपि—

तैलानां चैव सर्वेषां मद्यानामथ सर्पिषाम् ।
वृद्धिरष्टगुणा ज्ञेया गुडस्य लवणस्य च ॥

गुडश्चतुलामेयासितादावप्यष्टगुणैव वृद्धिः । तथाच वसिष्ठः—
'तुलाधृतमष्टगुणम्' इति । यत्पुनस्तेनोक्तं—
'त्रिगुणं धान्यं धान्येनैव रसा व्याख्याताः पुष्पमूलफलानि च' इति, तत् यत्र देशे त्रिगुणं देयमवतिष्ठते तद्विषयं, दरिद्राधमर्णविषयं वा । यत्तु मनुनोक्तम्—

धान्ये शदे लवे वाह्ये नातिक्रामति पञ्चताम् ।

इति, तत् प्रत्यर्पणसमयसमृद्धाधमर्णविषयम् । ये तु कम्बलादयो 'हिरण्ये द्विगुणा वृद्धिः' इत्यादिधर्मशास्त्रेष्वनुक्ताः तेषां द्विगुणैव वृद्धिः, 'अनुक्तानां द्विगुणा' इति विष्णुस्मरणात् । चिरकालमदानेनाधमर्णोपरि वृद्धिस्थितावेव प्रयुक्तधनस्य द्वैगुण्यानतिक्रमो नान्यत्रेत्यर्थः । चिरस्थानाभावे तु प्रयुक्तं वर्धेत

एव, शतगुणत्वेऽपि 'यावत्प्रतिदानम्' इति व्यतिरेकाद्गम्यते। चिरस्थानेऽपि सकृदाहितवृद्धावेव द्वैगुण्यानतिक्रमो नान्यत्रेत्याह मनुः—

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहिता।

अधिकं ग्रहीष्यामीति यदल्पं दीयते तत् कुसीदं, तच्च द्वैगुण्यसमभिव्याहारादत्र हिरण्यमभिप्रेतम्। तस्य वृद्धिस्सकृदाहिता। पुरुषान्तरमसंक्रामिता न वा मूलीकृता द्वैगुण्यमूलेन सह द्विगुणत्वं नातिक्रामतीत्यर्थः। अत्रापि पुरुषान्तरसंक्रामिता पुनर्वा मूलीकृता वृद्धिर्द्वैगुण्यमत्येतीति व्यतिरेकाद्गम्यते। यदा ऋणिकस्स्वयमेव ऋणं सवृद्धिकं पुरुषान्तरदेयं करोति, यदा वा मूलीकरोति, धनिको वा धनिकान्तरे त्वाधिं कृत्वा स्वधनं गृह्णाति, तदा तद्दिनमारभ्य द्वैगुण्यपर्यन्तं प्रतिदानपर्यन्तं वा वर्धते इति मन्तव्यम्। एवं त्रैगुण्यादावपि सकृदाहिता वृद्धिर्नात्येति, वस्त्रादावन्यथा त्वत्येति, न्यायसाम्यात्। चिरस्थान एव त्रैगुण्यादौ वृद्ध्युपरमोऽन्यथा तु वर्धत एवेत्यवगन्तव्यम्॥

इति स्मृतिचन्द्रिकायां वृद्ध्युपरमावधिनिरूपणम्.

---

## अथ वृद्ध्युपरमापवादः.

तत्र बृहस्पतिः—

तृणकाष्ठेष्टकासूत्रकिण्वचर्मास्थिवर्मणाम्।
हेतिपुष्पफलानां च वृद्धिस्तु न निवर्तते॥

किण्वः सुराद्रव्योपादानभूतो मूलविशेषः। चर्म बाणादिनिवारकं फलकम्। वर्म कवचम्। हेतिः आयुधम्। पुष्पफलयोर्वृद्ध्यनिवृत्तिः प्रतिदानवेलायामत्यन्तसमृद्धाधमर्णविषये वेदितव्या, अन्यथा पूर्वप्रकरणोक्तत्रिगुणादिप्रतिपादकवचनविरोधापत्तेः। विष्णुरपि—'किण्वकार्पाससूत्रचर्मवर्मायुधेष्टकाङ्गाराणामक्षया' इति। कार्पासे तु पूर्वप्रकरणोक्तषड्गुणाभिधायकवचनाविरोधः पूर्ववद्विज्ञेयः। वासिष्ठोऽपि—

दन्तचर्मास्थिशृङ्गाणां मृन्मयानां तथैव च।
अक्षया वृद्धिरेतेषां पुष्पमूलफलस्य च॥

अक्षया मूलप्रतिदानाभावे शतगुणाऽपि वर्धत एवेत्यर्थः। बृहस्पतिरपि—

शिखावृद्धिं कायिकां च भोगलाभं तथैव च।
धनी तावत्समादद्याद्यावन्मूलं न शोधितम्॥

शिखावृद्ध्यादीनां स्वरूपं वृद्धिभेदाभिधानप्रकरणे दर्शितम्। न शोधितं न प्रतिदत्तमृणिकेनेत्यर्थः। अत एव याज्ञवल्क्यः—

आधिस्तु भुज्यते तावद्यावत्तन्न प्रदीयते।

इति। एवमुक्तो वृद्ध्युपरमापवादः चिरस्थाने सकृदाहितायां च वृद्धौ द्रष्टव्यः, तत्रैवौत्सर्गिकवृद्ध्युपरमप्राप्तेः।

इति स्मृतिचन्द्रिकायां वृद्ध्युपरमापवादः।
समाप्तं च धनदानाधमर्णप्रकरणम्॥

———

## अथ ऋणप्रतिदानविधिः.

तत्र बृहस्पतिः—

याचमानाय दातव्यमल्पकालमृणं कृतम् ।
पूर्णेऽवधौ शान्तलाभमभावे च पितुस्सुतैः ॥

अल्पकालं अदीर्घकालमिति यावत् । कृतं दीपोत्सवादौ प्रतिदेयमित्येवं सावधित्वेन कृतम् । शान्तलाभं उपरतवृद्धिकम् । एतदुक्तं भवति—अदीर्घकालिकमृणं याच्ञानन्तरं दातव्यं, सावधिकत्वेन कृतं तु पूर्णेऽवधौ । शान्तलाभं तु लाभशान्त्यनन्तरम् । ऋणिकाभावे च तत्सुतैरप्येवमेव दातव्यमिति । एतच्च याच्ञादेस्समनन्तरं प्रतिदानविधानं, न ततः प्राक्प्रतिदानव्युदासकं, सति सम्भवे शीघ्रमपाकरणीयत्वादृणस्य। यस्तु ऋणं नापाकरोति तस्यादृष्टहानिः पुराणे दर्शिता—

तपस्वी चाग्निहोत्री च ऋणवान् म्रियते यदि ।
तपश्चैवाग्निहोत्रं च सर्वं तद्धनिनो भवेत् ॥

तेनावश्यमृणमपाकरणीयमित्यर्थः । अनेनैवाभिप्रायेण कात्यायनेनाप्युक्तं—

उद्धारादिकमादाय स्वामिने न ददाति यः ।
स तस्य दासो भृत्यः स्त्री पशुर्वा जायते ऋणी (गृहे) ॥

इति । उद्धारादिकं प्रतिदेयतयैवावस्थितं प्रीतिदत्तादिकम् । दासभृत्ययोर्भेदो वक्ष्यते । यत्तु नारदेनोक्तं—

याच्यमानं न दद्याद्यदृणं वाऽधिप्रतिग्रहम् ।
तद्द्रव्यं वर्धते तावद्यावत्कोटिशतं भवेत् ॥
ततः कोटिशते पूर्णे वेष्टितस्तेन कर्मणा ।
अश्वः खरो वृषो दासो भवेज्जन्मनि जन्मनि ॥

इति ; तत्र याच्यमानग्रहणं याच्यमानस्य ऋणादेरप्रतिदाने क्लेशातिशयप्रतिपादनार्थं, न तु याच्यमानस्यैवाप्रतिदाने क्लेशो नान्यस्येत्यभिधानार्थमिति मन्तव्यम् । लेख्यारूढर्णप्रतिदानानन्तरं प्रतिदातुः कर्तव्यमाह याज्ञवल्क्यः—

दत्वर्णं पाटयेल्लेख्यं शुद्ध्यै वाऽन्यत्तु कारयेत् ।

इति । अनृणत्वप्रख्यापनार्थं प्रतिदत्तपत्रं वोत्तमर्णाद्गृह्णीयादिति द्वितीयपादार्थः । ऋणलेख्यस्य स्थापनापरिज्ञानादिना पाटनासम्भवे त्वयं पक्ष इत्युक्तं तद्भाष्ये । अस्यापि कथञ्चिदसम्भवे पक्षान्तरं नारदेनोक्तं—

लेख्यं दद्यादृणे शुद्धे तदभावे प्रतिश्रवः ।
धनिकर्णिकयोरेवं विशुद्धिस्स्यात् परस्परम् ॥

प्रतिश्रवः प्रतिदत्तमित्यस्मिन्नर्थे साक्ष्यसिद्ध्यै श्रोत्रियादिश्रावणम् । साक्षिमदृणप्रतिदातारं प्रत्याह याज्ञवल्क्यः—

साक्षिमच्च भवेद्यद्वा तद्दातव्यं ससाक्षिकम् ।

इति । ससाक्षिकं ऋणं पूर्वसाक्षिसमक्षमेव दातव्यमित्यर्थः । पूर्वसाक्षिणां कथञ्चिदसम्भवे साक्ष्यन्तरसमक्षं वा दातव्यं,

ससाक्षिकमिति सामान्योनोक्तेः पक्षद्वयसमर्थनार्थत्वात् । पूर्वसाक्ष्यन्तरं तु पूर्वसाक्षिबाधनक्षमत्वाय सङ्ख्यागुणाधिकमेव कार्यम् ॥

इति स्मृतिचन्द्रिकायां ऋणप्रतिदानविधिः.

---

## अथासमर्थाधमर्णविषयाणि.

तत्र मनुः—

ऋणं दातुमशक्तो यः कर्तुमिच्छेत्पुनःक्रियाम् ।
स दत्वा निर्जितां वृद्धिं करणं परिवर्तयेत् ॥

प्रमाणमात्रवाचकोपि क्रियाशब्दोऽत्र ऋणविषयप्रमाणपरत्वाल्लेख्यसाक्षिष्वेवावतिष्ठते । एवंचायमर्थः—प्रतिदानकाले धनासम्पत्त्यादिवशात् सवृद्धिकमूलदानाशक्तो योऽधमर्णः ऋणस्य चिरन्तनत्वपरिहारतो धनिकसमाधानार्थं क्रियां लेख्यादिरूपां पुनः कर्तुमिच्छेत्, स निष्पन्नां वृद्धिं दत्वा करणं परिवर्तयेत्, पुनर्लेख्यादिक्रियां वर्तमानवत्सरादिचिह्नितां कुर्यादिति । यदा तु निर्जितां वृद्धिं दातुं न शक्नोति तदाऽप्याह स एव—

अदर्शयित्वा तत्रैव हिरण्यं परिवर्तयेत् ।
यावती संभवेद्वृद्धिस्तावतीं दातुमर्हति ॥

अस्यार्थः—हिरण्यमदर्शयित्वा निर्जितां वृद्धिमदत्वा तत्रैव पूर्वकृतरकण एव परिवर्तयेत् निर्जितां वृद्धिं मूलत्वेनारोपयेत्। तस्यास्तु वृद्धिर्न प्रयुक्तधनवृद्धितुल्या, किंतु अत्यन्ताल्पपरिमाणेनैवारोपणीयेति । वृद्धावप्यंशमात्रदानशक्तेन शक्यांशं दत्वा पश्चादशक्यांशान्तरं पूर्वकरण एव पूर्ववदारोपणीयं, न्यायसाम्यात् । यस्तु प्रतिदानकाले सवृद्धिकं मूलांशं दातुमशक्तः तं प्रत्याह याज्ञवल्क्यः—

लेख्यस्य पृष्ठेऽभिलिखेत् दत्वा दत्वार्णिको धनम् ।

इति । कालान्तरेऽपि यावन्निखिलऋणापाकरणं न भवति तावदेवंकृत्वाऽन्ते पाटनं कुर्यादिति । अथवा यथाशक्ति स्तोकं दत्वा लेख्यमुपगताख्यमुत्तमर्णात् गृह्णीयात्, उत्तमर्णेन च तदवश्यं देयम् ।

धनी वोपगतं दद्यात् स्वहस्तपरिचिह्नितम् ।

इति पक्षान्तरतया तेनैवानन्तरमभिधानात् । एतावन्मह्यमनेन दत्तमिति प्रवेशपत्रं वा धनी प्रतिदात्रे दद्यादिति तस्यार्थः । अर्थान्तरं च तस्योपरिष्टाद्भूरेवक्ष्यामः । अयं च पक्षः प्राचीनपक्षालाभे, तथाच विष्णुः—'असमग्रदाने लेख्यासन्निधाने चोत्तमर्णस्वलिखितं दद्यात्' इति । ऋणिकायेति शेषः । तथाच नारदः—

गृहीत्वोपगतं दद्यादृणिकायोदयं धनी ।

इति। उदयमृणिकेनोपार्जितं गृहीत्वा धनी ऋणिकायोपगतं दद्यादित्यन्वयः। उदयशब्देनोपार्जितं ब्रुवन्,

ब्राह्मणस्तु परिक्षीणश्शनैर्दाप्यो यथोदयम्।

इत्युक्तविषयेऽप्ययं पक्षोविज्ञेय इति दर्शयति। तेन पत्रपृष्ठेलेखनपक्षोप्यनेन विकल्पितत्वादस्मिन्नेव विषये विज्ञेयः। एवं भागश ऋणग्रहणविधिबलादस्मिन्नेव विषये भागशो ग्रहणं, अन्यत्र कृत्स्नस्यैवर्णस्य ग्रहणमिति मन्तव्यम्। तेन यत्र भागशो ग्रहणविधिः तत्रैव दत्तांशस्य वृद्धिनिवृत्तिः, अन्यत्र तु यावत् कृत्स्नं न ददाति तावद्दीयमानमप्यकृत्स्नं प्रत्याख्येयं, दत्तांशस्यापि वा वृद्धिर्ग्राह्यैव, तत्राकृत्स्नादानस्य निक्षेपमात्रतुल्यत्वात्। न च परिक्षीणविषये स्तोकं दीयमानं वृद्धि भङ्गभयात् प्रत्याख्येयं, परिक्षीणस्यानुसरणीयत्वात्, शनैर्दाप्यत्वविधानाच्च। परिक्षीणविषयेऽप्याधिमोचनं कृत्स्नर्णापाकरणानन्तरं सकृदेव, नपुनर्दत्तांशानुसारेण बहुशः, यावदृणं तव न ददामि तावदयमाधिरिति बहुमूल्यस्याप्यानृण्यपर्यन्तमाधीकरणात्। न चाधीकृतधनस्वामित्वेनाप्यसावपरिक्षीण इति वाच्यं, प्रतिबद्धधनस्वामित्वेन निस्स्वतुल्यत्वात्। आधिभोगेऽपि न वृद्धिन्यायेन दत्तांशानुसारेण भोगनिवृत्तिः। प्रतिनिष्कं अशीतिभागादिवृद्ध्यङ्गीकारो हि धार्यमाणधनानुसारेण कृतः, तेन प्रतिदत्तांशस्य धार्यमाणस्य वृद्धिनिवृत्तिर्युक्ता। आधिभोगस्तु भोग्याधित्वस्थित्यनुयायी, न धार्य-

माणधनानुयायी, स्वल्पधनप्रयोगविषयेऽपि बहुमूल्यस्याध्याधित्वेन स्थितस्याशेषस्यैव भोग्यत्वदर्शनात् । न चाङ्गीकारवशात्तत्र तथा भोग्यत्वदर्शनमिति वाच्यं, कृत्स्नं भोग्यं त्वयैतदित्येवमनुक्तेऽपि दर्शनात् । भोग्याधित्वेन स्थितेश्चाविमोचनात् । विमोचनं च कृत्स्नर्णापाकरणानन्तरं सकृदेवेत्युक्तम् । तेन परिक्षीणविषयेऽपि न दत्तांशानुसारेणाध्यंशवशात्तत्र भोगनिवृत्तिः । यथा कायिकवृद्ध्या गवादिकमाधीकृत्य निष्के ऋणिना गृहीते चतुस्स्तनभवं क्षीरं प्रतिदत्तेऽपि निष्कैकदेशे धनी गृह्णाति, न पुनर्दत्तांशानुसारेण एकस्तनं द्विस्तनं त्रिस्तनं वाऽधमर्णायार्पयति । अश्वेऽप्याधिभूते धनी स्वयमेवाश्वमारुह्य कृत्स्नं मार्गं गच्छति तथेहापीत्यलमतिबहुना प्रपञ्चेन ॥

यस्तु दौरात्म्याद्याच्ययानोप्युपगतं न ददाति, तस्य हानिमाह स एव—

न दद्याद्याच्यमानस्तु शेषहानिमवाप्नुयात् ।

इति । शेषो दास्यमानतया स्थितो भागः । शेषस्य स्वल्पत्वे सत्येतद्द्रष्टव्यम् । तस्यानल्पत्वे त्वधिकहानित्वात्तां नाप्नुयात्, अपितु गृहीतभागस्य वृद्धिदाननिबन्धनां हानिम् । अत एव बृहस्पतिः—

ऋणं धर्मादितो ग्राह्यं यस्तूपरि न लेखयेत् ।
न चैवोपगतं दद्यात्तस्य तद्वृद्धिमाप्नुयात् ॥

अस्यार्थकथनार्थमादौ विषयतात्पर्ये निरूप्येते—

धनी वोपगतं दद्यात्स्वहस्तपरिचिंह्नितम् ।

इति याज्ञवल्क्यवचनस्य द्वावर्थौ–तत्रैतावद्द्रव्यं मम प्राप्तमिति धनी ऋणलेख्यपृष्ठे स्वहस्तपरिचिह्नितमुपगतं लिखेदित्येकोऽर्थः। अर्थान्तरं च तस्य प्राग्दर्शितम् । तयोरन्यतरमर्थमकुर्वतो धनिकस्य हानिरनेन वचनेनोच्यते । अक्षरार्थस्तु धर्मोपधिबलात्, कारागृहसंरोधनाद्युपायैरधमर्णादकृत्स्नमृणमुपादाय यो धनी ऋणलेख्यस्योपरि मयैतावत् प्राप्तमिति न लिखेत्, न च प्रवेशपत्रं दद्यात्, तस्य तद्दिनमारभ्य यावल्लेखनं लेख्यदानं वा न करोति तावदधमर्णादुपात्तं धनं वृद्धिमाप्नुयात् अधमर्णाय वर्धेत इति यावत् । कया वृद्ध्येत्यपेक्षिते नारदः—

यदि वा नोपरि लिखेद्दणिना चोदितोपि सन् ।
धनिकस्यैव वर्धेत तथैव ऋणिकस्य तत् ॥

यथैव तद्द्रव्यमृणिकस्योपरि स्थितं धनिकाय वर्धते तथैवर्णिकाय धनिकस्योपरि स्थितं वर्धेत इत्यर्थः ।

इति स्मृतिचन्द्रिकायामसमर्थाधमर्णविषयाणि.

---

अथ प्रतिदानपराङ्मुखादृणिकादृणग्रहणोपायाः.

तत्र बृहस्पतिः—

प्रतिपन्न ऋणी दाप्यस्सामादिभिरुपक्रमैः ।

इति । प्रतिपन्नः ऋणसत्तायां सम्प्रतिपन्नः दाप्यः प्रतिदानोन्मुखः कार्यः धनिनेत्यर्थः । तथाच मनुः—

येयैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णकः।
तैस्तैरुपायैस्सङ्गृह्य दापयेदधमर्णिकम्॥

के ते उपाया इत्यपेक्षिते बृहस्पतिः—

धर्मोपधिबलात्कारैः गृहसंरोधनेन च।

इति। आचारिताख्योपाय एव गृहसंरोधनेनेत्यनेनोपादिष्टः। धर्मादीन् स्वयमेव व्याचष्टे—

सुहृत्सम्बन्धिसंदिष्टैस्सामोक्त्याऽनुगमेन च।
प्रायेण वा ऋणी दाप्यो धर्म एष उदाहृतः॥
छद्मना याचितं चार्थमानीय ऋणिकाद्धनी।
अन्वाहितादि वाऽऽहृत्य दाप्यते तत्र सोपधिः॥
यदा स्वगृहमानीय ताडनाद्यैरुपक्रमैः।
ऋणिको दाप्यते यत्र बलात्कारस्स कीर्तितः॥
दारपुत्रपशून् बध्वा कृत्वा दारोपवेशनम्।
यत्रर्णी दाप्यतेऽर्थं स्वं तदाचारितमुच्यते॥

इति। सुहृत्सम्बन्धिसंदिष्टैः मान्यजनादेशैः। सामोक्त्या प्रियपूर्ववाक्येन। अनुगमनेन अनुव्रजनेन। प्रायेण प्रार्थनाबहुल्येन। छद्मना उत्सवादिच्छलादानीतभूषणादिना। याचितं याचितकम्। अन्वाहितमन्यस्मै दातुमर्पितम्। आदिग्रहणादन्यदपि यथाकथञ्चिदानीतं सङ्गृह्यते। अर्थं स्वं स्वकीयमर्थम्। दाप्यते प्रतिदानोन्मुखीक्रियते। शेषं व्यक्तार्थम्। धर्मादयश्चोपाया न

यथाकामं प्रवोक्तव्याः । किंतु यथायोग्यं प्रयोज्याः । तथाच कात्यायनः—

राजानं स्वामिनं विप्रं सान्त्वेनैव प्रदापयेत् ।
रिक्थिनं सुहृदं वाऽपि छलेनैव प्रदापयेत् ॥
वणिजः कर्षकाश्चैव शिल्पिनश्चाब्रवीद्भृगुः ।
देशाचारेण दाप्यास्स्युर्दुष्टान् संपीड्य दापयेत् ॥

इति । सान्त्वेन धर्माख्योपायेन । संपीड्यशब्देन बलात्काराचरिताख्योपाययोर्ग्रहणम् । कः पुनः देशाचार इत्यपेक्षिते स एवाह—

धार्योऽवरुद्धस्त्वृणिकः प्रकाशं जनसंसदि ।
यावन्न दद्याद्देयं च देशाचारस्थितिर्यथा ॥

यत्र देशे धनी स्वयमेवावरुध्य धारयति, तत्र तथैव धार्यः । यत्र पुनरधमर्णसकाशाद्वेतनार्थिना निर्घृणेन पुरुषान्तरेणावरुध्य ध्रियते तत्र तथा पुरुषान्तरद्वारा धार्य इति 'देशाचारस्थितिर्यथा' इत्यस्यार्थः । एवंच अवरुध्य धारणमेव देशाचारानुरोधित्वाद्देशाचार इत्युच्यते । अवरुद्धस्यावश्यकरणीयेषु मनागनुग्रहः कार्य इत्याह स एव—

विण्मूत्रशङ्का यस्य स्याद्धार्यमाणस्य देहिनः ।
पृष्ठतो वानुऽगन्तव्यो निबद्धं वा समुत्सृजेत् ॥

निबद्धं गृङ्खलादिना । अधमाधमर्णविषयो द्वितीयः पक्षः तदि-

तरविषयस्त्वाद्यः पक्षः इत्यौचित्यात् व्यवस्थाऽवगन्तव्या। उभयविषयेऽपि पक्षान्तरमाह स एव—

स कृतप्रतिभूश्चैव मोक्तव्यस्स्याद्दिनेदिने।

आहारकाले रात्रौ च निबन्धे प्रतिभूः स्थितः॥

सः धार्यमाणो वणिगादिः। कृतदर्शनप्रतिभूरावश्यककृत्यकाले विमोक्तव्यः। पलायनप्रतिबन्धे प्रतिभूर्यतः स्थित इत्यर्थः। यदा तु प्रतिभूर्न लभ्यते लब्धं वा प्रतिभुवं न ददाति तदा अधमाधमर्णविषये पुनः पक्षान्तराभिधानार्थमाह—

यो दर्शनप्रतिभुवं नाधिगच्छेन्न चाश्रयेत्।

स चारके निरोद्धव्यः स्थाप्यो वाऽऽवेद्य रक्षिणः॥

चारके संचारके, संचरण इति यावत्। स्थाप्यः प्रस्थाप्यः। आद्यः पक्षः प्रतिभूलाभेऽपि यो न ददाति तद्विषयः, तस्यातिदौष्ट्यात्। अलब्धप्रतिभूविषयो द्वितीयः पक्षः, तस्यातिदौष्ट्याभावात्। अधमेतरविषये त्वेतत्पक्षद्वयस्थानेऽन्यपक्षद्वयमाह स एव—

न चारके निरोद्धव्यः आर्यः प्रात्ययिकश्शुचिः।

सोऽनिबद्धः प्रमोक्तव्यो निबद्धश्शपथेन वा॥

प्रात्ययिकः अपलायित्वेन विश्वासी। अनिबद्धः रक्षकेण असम्बद्ध इत्यर्थः। एवंच रक्षिणः आवेद्य प्रस्थाप्य इत्यस्य स्थाने पक्षोऽयमिति गम्यते। इतरस्तु पक्षः पारिशेष्यात् 'स चार-

के निरोद्धव्यः' इति पक्षस्य स्थाने द्रष्टव्यः । यद्यपि वणिगादिविषयता देशाचाराख्योपायस्योक्ता, तथाऽप्यार्यादियोग्यानुग्रहपक्षप्रतिपादनाद्धर्माख्योपायसाध्यविप्रादावपि देशाचाराख्योपायो योग्यानुग्रहपक्षसहितः प्रयोक्तव्य इति मन्तव्यम् । एवमुक्तविधया धर्माद्युपायप्रयोक्ता राज्ञा न निवारणीयः, स्मृत्याचारमार्गेण क्रियमाणधर्षणस्यानिवार्यत्वात् । अत एव मनुः—

यस्स्वकं साधयेदर्थमुत्तमर्णोऽधमर्णिकात् ।
स राज्ञा नाभियोक्तव्यः स्वकं संसाधयन् धनम् ॥

नाभियोक्तव्यो न किमपि वचनीयः । तथाच विष्णुः— 'प्रयुक्तमर्थं यथाकथञ्चित्साधयमानो न राज्ञा वाच्यस्स्यात्' इति । यथाकथञ्चित् स्मृत्याचारमार्गाविरोधेनेति शेषः । तद्विरोधेन साधयमानो राज्ञा निवारणीय एव, दुष्टत्वात् । यच्च तेनैवोक्तं—'साध्यमानश्चेद्राजानमभिगच्छेत्तत्समं दण्ड्यः' इति तत्रापि स्मृत्याचारमार्गाविरोधेनेति शेषो द्रष्टव्यः, अन्यथा दण्ड्यत्वानुपपत्तेः । तत्समं साध्यमानर्णसमम् । न केवलं दण्ड्यः, ऋणं च दाप्यः । तथाच याज्ञवल्क्यः—

प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् ।
साध्यमानो नृपं गच्छन् दण्ड्यो दाप्यश्च तद्धनम् ॥

दण्ड्य इति सामान्याभिधानमसमर्थविषये स्वल्पोपि दण्डो यथा स्यादित्येवमर्थम् । अत एव मनुना स्वल्पदण्डो दर्शितः—

यस्साधयन्तं छन्देन वेदयेद्धनिकं नृपे ।
स राज्ञर्णचतुर्भागं दाप्यस्तस्य च तद्धनम् ॥

छन्देन स्वाभिप्रायेण, राजन्यनावेद्यैवेति यावत् । अत्र बृहस्पतिः—

प्रतिपन्नस्य धर्मोऽयं व्यपलापी तु संसदि ।
लेख्येन साक्षिभिर्वाऽपि भावयित्वा प्रदाप्यते ॥

अयं पूर्वोक्तो धर्मगणः ऋणसत्तायां संप्रतिपन्नस्य ऋणिकस्य । यस्तु व्यपलापी ऋणमपह्नोतुं तत्सत्तायां विप्रतिपन्नः, संसदि प्रमाणेनर्णं प्रसाध्य प्रतिपादनोन्मुखीकार्य इत्यर्थः । एवञ्च यदुक्तं मनुना—

धर्मेण व्यवहारेण छद्मना चरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥

इति, तत्र व्यवहारेणेति व्यपलापिविषयं, अन्यत्सम्प्रतिपन्नविषयमिति मन्तव्यम् । अत एवासम्प्रतिपन्ने व्यवहारातिरिक्तोपायनिषेधमाह बृहस्पतिः—

न रोद्धव्यः क्रियावादी संदिग्धेऽर्थे कथंचन ।
आसेधयंस्त्वनासेध्यं दण्ड्यो भवति धर्मतः ॥

न रोद्धव्य इति छलादिप्रतिषेधप्रदर्शनार्थम् । क्रियावादिसंदिग्धपदयोरर्थं स्वयमेव कथयति—

प्रदातव्यं यद्भवति न्यायतः प्रददामि तत् ।
एवं यन्नर्णिको ब्रूते क्रियावादी स उच्यते ॥

रूपसङ्ख्यादिलाभेषु यत्र भ्रान्तिर्द्वयोर्भवेत् ।
देयानादेययोर्वाऽपि संदिग्धोऽर्थस्स कीर्तितः ॥

इति । संदिग्धेऽर्थे प्रतिपन्नधर्मतः कुर्वतोऽर्थहानिर्दण्डश्चेत्याह स एव—

अनावेद्य तु राज्ञे यः संदिग्धेऽर्थे प्रवर्तते ।
प्रसह्य स विनेयस्स्यात्स चाप्यर्थो न सिध्यति ॥

प्रसह्य बलात्कारेणेत्यर्थः । कात्यायनोपि—

पीडयेत्तु धनी यत्र ऋणिकं न्यायवादिनम् ।
तस्मादर्थात्स हीयेत तत्समं चाप्नुयाद्दमम् ॥

तेन विप्रतिपन्नेऽपि विप्रतिपत्तिनिवृत्तये व्यवहाराख्य एवोपाये प्रवृत्तिः कार्येत्यभिप्रायः । स चोपायः प्रतिज्ञादण्डान्तः प्रथमपरिच्छेदे निरूपित इत्युपरम्यते ।

इति स्मृतिचन्द्रिकायां प्रतिदानपराङ्मुखादृणिकादृणग्रहणोपायाः ।

---

अथान्यान्यपि दुस्साधाधमर्णविषयाणि वचनानि.

तत्र यमः—

ऋणिकस्सधनो यस्तु दौरात्म्यान्न प्रयच्छति ।
राज्ञा दापयितव्यस्स्यात् गृहीत्वा द्विगुणं ततः ॥

ततः दुरात्मर्णिकसकाशादित्यर्थः । द्विगुणमिति सवृद्धिकमूल्यप्रदर्शनार्थम् । धनिनो दुरात्मनस्सकाशादृणं बलच्छलाद्युपायेन गृह्णीयात् । तथा च बृहस्पतिः—

पूर्णेऽवधौ शान्तलाभमृणमुद्ग्राहयेद्धनी ॥

इति। उद्ग्राहणं च बलाद्युपायेन साधनम्। पूर्णेऽवधौ सावधिकत्वेन कृतर्णस्य उद्धरणं लाभशान्त्यनन्तरं लाभस्य निरवधिकत्वेन कृतशान्तलाभस्य च दुस्साधत्वशङ्कया उद्ग्राहणं कार्यं, अन्यथा त्वनुचितत्वात्। ऋणिकं तु प्रतिपादनात् पक्षान्तरमाह स एव—

कारयेद्वा ऋणी लेख्यं चक्रवृद्धिव्यवस्थया।

इति। वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिः। मूलेऽपि विशेषमाह स एव—

द्विगुणस्योपरि यदा चक्रवृद्धिः प्रगृह्यते।

भोगलाभस्तदा तत्र मूलं स्यात्सोदयं नृणाम् ॥

अनेनैव वचनेन द्विगुणद्रव्यानुरूपभोगसमर्थाधिर्वा चक्रवृद्धिस्थाने भवतीत्यवगम्यते। द्विगुणग्रहणाच्छान्तलाभ एव पूर्वोक्तलेख्यान्तरकरणपक्षो न पुनः पूर्णावध्यादाविति गम्यते। तेन तत्र यथासम्प्रतिपत्ति लेख्यान्तरमृणिना कार्यं, न चक्रवृद्ध्यादिनियमेन द्विगुणग्रहणादि। प्रागुदितपक्षत्रये धनिकेच्छातो व्यवस्था। यस्त्वृणिको निर्धनत्वेनैव न प्रयच्छति सोपि-स्तोकंस्तोकं दाप्य इत्याह नारदः—

अथ शक्तिविहीनस्स्यादृणी कालविपर्ययात्।

शक्त्यपेक्षमृणं दाप्यः काले काले यथोदयम् ॥

दाप्यो ब्राह्मण इति शेषः। तथा च याज्ञवल्क्यः—

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत् ।
ब्राह्मणस्तु परिक्षीणश्शनैर्दाप्यो यथोदयम् ॥

कारयेद्बलात्कारेणापीति शेषः ।

धनदानासहं बद्ध्वा स्वाधीनं कर्म कारयेत् ।

इति कात्यानस्मरणात् । कर्मकरणासहं तु बन्धनागारे वासयेत् ॥

अशक्तो बन्धनारे प्रवेश्यो ब्राह्मणादृते ।

इति तेनैवोक्तत्वात् । प्रवेशनफलं सामर्थ्योत्पत्तौ कथञ्चिदृणप्राप्तिः । यत्पुनस्तेनैवोक्तं—

कर्षकान् क्षत्रविट्शूद्रान् समीहानांस्तु दापयेत् ।

इति, तद्यथोदयं धनदानसहिष्णुविषयम् । 'धनदानासहं बध्वा' इति सर्वथा धनदानासहाविषयमिति न काश्चिद्विरोधः । यस्त्वनेकर्णसमवायाद्युगपदनेकधनिकैर्दुस्साधः स कथं दाप्य इत्यपेक्षिते याज्ञवल्क्यः—

गृहीतानुक्रमाद्दाप्यो धनिनामधमर्णिकः ।
दत्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम् ॥

नृपतेः क्षत्रियस्येत्यर्थः । वचनार्थस्तु कात्यायनेन विवृतः—

नानर्णसमवाये तु यद्यत्पूर्वकृतं भवेत् ।
तत्तदेवाग्रतो देयं राज्ञस्स्याच्छ्रोत्रियादनु ॥

श्रोत्रियोऽत्र ब्राह्मणजातिमात्रशाली, न तु श्रुताध्ययनशाली

त्रैवर्णिकः, राजन्यात्यपेक्षयोत्कृष्टजातिपरत्वेनात्र श्रोत्रियपद प्रयोगात्। ग्रहीतृजातिक्रमयोर्विरोधे जातिक्रमो ग्राह्यः, ब्राह्मणस्य पूज्यतयाऽनुग्राह्यत्वात्। एवं क्षत्रियवैश्ययोर्वैश्यशूद्रयोर्वा युगपदुपस्थाने वर्णक्रमेण दातव्यं, पूर्वपूर्वस्य श्रेष्ठत्वेनानुग्राह्यत्वात्। एवं क्रमेण ऋणापाकरणे क्रियमाणे यस्य ऋणापाकरणादर्वागल्पधन ऋणिकः परिक्षीणो जातः तस्य 'हीनजातिं परिक्षीणम्' इत्यादिनोक्तमार्गानुसरणमेव शरणम्। एकदिनकृतनानर्णसमवाये तु न पूर्वोक्तो दापनक्रमः, किं तु युगपदेव प्रतिपादनमृणिकस्य धनबाहुल्ये, धनाल्पत्वे तु तत्तद्दणानुसारेण विभज्य युगपदंशदापनम्। तदाह कात्यायनः—

एकाहे लिखितं यत्र तत्र कुर्याद्दणं समम्।
ग्रहणं लक्षणं लाभमन्यथा तु यथाक्रमम्॥

ग्रहणं आधिधनं, रक्षणं तस्यैव पालनं, लाभं भोगरूपलाभं च सममेव कुर्यात्। अन्यथाऽहर्भेदे लिखितक्रमेण वर्णभेदक्रमेण वा ऋणप्रतिपादनम्। आध्यादौ त्वाधि विवादापनोदविषयवचनसङ्ग्रहणप्रकरणोक्तमनुसंधेयम्। 'तत्र कुर्याद्दणं समम्' इत्यादेः क्वचिदपवादमाह स एव—

यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत्।
तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा॥

यस्य उत्तमर्णस्य धनाद्यत्पण्यमधमर्णेन वाणिज्यार्थं गृहीतं तत्प-

ण्यविक्रयावाप्तं धनं नानर्णसमवायेऽपि ऋणिकेन तस्यैवोत्तमर्णस्य ऋणापाकरणार्थं दातव्यं, नान्यथा पूर्वोक्तप्रकारेण दातव्यमित्यर्थः ।

इति स्मृतिचन्द्रिकायां दुस्साधाधमर्णविषयाणि ॥

समाप्तं च प्रयुक्तधनग्रहणधर्मसङ्ग्राहकं महाप्रकरणम्.

---

## अथर्णप्रतिदातृनिर्णयः.

तत्र बृहस्पतिः—

याचमानाय दातव्यमल्पकालमृणं कृतम् ।
पूर्णेऽवधौ शान्तलाभमभावे च पितुस्सुतैः ॥

दातव्यं धनग्राहिणेति शेषः, सति संभवे ऋणस्य ग्राहकेणैवापाकरणीयत्वात् । अभावे च पितुस्सुतैरिति । अस्यायमर्थः—ऋणग्रस्तावस्थस्य पितुरभावे शरीरत्यागे सुतैरवश्यं पितृकृतमृणं धनिने दातव्यमिति । पितृकृतर्णस्यापाकरणमावश्यकमित्यत्र हेतुमाह नारदः —

इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्यतस्ततः ।
उत्तमर्णाधमर्णाभ्यां मामयं मोक्षयिष्यति ॥
अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः ।
ऋणात्पिता मोचनीयो स यथा नरकेऽपतेत् ॥

यतस्ततो भार्योपगमनपुत्रिकाकरणपुत्रपरिग्रहाद्युपायानां मध्ये

येनकेनचिदुपायेनेत्यर्थः। उत्तममृणं 'जायमानो वै ब्राह्मणस्त्रिभिर् ऋणवा जायते' इत्यादिश्रुत्युक्तम्। अधममृणं परहस्तात्कुसीदविधिना गृहीतम्। अथवा—उत्तमर्णाधमर्णशब्दतो लक्षणया कुसीदविधिना गृहीतमेवर्णमवगन्तव्यम्।यदाह कात्यायनः—

पितॄणां सूनुभिर्जातैर्दानेनैवाधमादृणात्।
विमोक्षस्तु यतस्तस्मादिच्छन्ति पितरस्सुतान्॥

इति। दानेन ऋणप्रतिदानेन स्वार्थमुपभोगादिरूपमुत्सृज्येत्यर्थः। धर्मरूपस्वार्थोत्सर्गानुपपत्तेः। वाक्यार्थस्तु—यत एवमिच्छन्ति अतः ऋणादवश्यं पिता मोचनीय इति। न च जातैरित्यभिधानाज्जातमात्रस्य ऋणमोचनेऽधिकार इति वाच्यम्। स्वार्थमुत्सृज्येत्यादेश्शैशवदशायामघटनात्। तेन व्यवहाराभिज्ञतया जातेनेति जातपदस्याध्याहारसापेक्षोऽर्थो बोद्धव्यः। अतएव—

अप्राप्तव्यवहारश्चेत् स्वतन्त्रोपीह नर्णभाक्।

इति तेनैवोक्तम्। प्राप्तव्यवहारश्च षोडशवार्षिको भवति। तस्यां दशायां हेयोपादेयपरिज्ञानपरिपाकात्। स्वतन्त्रस्तु बाल्यदशायामपि पितृमरणात् भवति। तेन स्वतन्त्रोपीहेत्युक्तम्। एवञ्च—पितर्युपरतेऽप्यप्राप्तव्यवहारैर्न देयम्, अदानेऽपि दोषाभावात्। किन्तु प्रबुद्धकाले सर्वशक्त्या देयम्, अदाने दोषसद्भावात्। तदाह कात्यायनः—

नाप्राप्तव्यवहारैस्तु पितर्युपरते क्वचित्।

काले तु विधिना देयं वसेयुर्नरकेऽन्यथा ।

क्वचिदित्यत्र देयमित्यनुषज्यते । विधिना ऋणप्रतिदानप्रकरणप्रतिपादितेन विधिना । अनुपरतेऽपि पितरि सुतैः पितृकृतमृणं पितरि प्रतिदानासमर्थे देयमित्याह स एव—

विद्यमानेऽपि रोगार्ते स्वदेशात्प्रोषिते तथा ।
विंशात्संवत्सराद्देयमृणं पितृकृतं सुतैः ॥

विंशात्संवत्सरात् प्रवासमारभ्येति शेषः । कुत्र गत इत्यज्ञातविषये सुतैर्देयं, अन्यत्र प्रस्थापनादिनाऽपि पित्रैव दातुं शक्यत्वात् । रोगार्ते तु स्वरूपसंख्यादिविप्रतिपत्तौ निर्णयात्पश्चादेव देयम् । तथाच बृहस्पतिः—

सान्निध्येऽपि पितुः पुत्रै ऋणं देयं विभावितम् ।
जात्यन्धपतितोन्मत्तक्षयश्वित्रादिरोगिणः ॥

अविप्रतिपत्तौ तु—'याचमानाय दातव्यम्' इत्यादिनोक्तयाचनानन्तरकाल एव दातव्यम्, कालान्तरस्मृतेः । क्षयश्वित्रादीत्यादिशब्देन क्षयश्वित्रादिसदृक्षदुश्चिकित्सा एव रोगा गृह्यन्ते, न पुनर्ज्वरादयः । जात्यन्धादिभिश्च पुत्रैः पितर्युपरते प्रोषिते व्याध्यादिना पीडितेऽसमर्थेऽपि न देयं, पितृद्रव्यभागानर्हत्वात्, क्षयादिरोगिणामसन्तोपद्रुतत्वात् । तथा च कात्यायनः—

ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः ।
द्रविणार्हश्च धुर्यश्च नान्यथा दापयेत्सुतम् ॥

द्रविणार्हः पितृद्रव्यभागार्हः । धुर्यः पितुर्धुराया वोढा । अर्ह इति वदन् पितृद्रव्याग्रहणेऽपि अर्हत्वे सति पुत्रो दाप्य इति दर्शयति । दुश्चिकित्सरोगादिनोपद्रुतः पितृद्रव्यानर्हश्च अन्धादिः अधुर्यश्च पितृकृतर्णापाकरणानधिकारीति 'नान्यथा दापयेत्सुतम्' इत्यनेनोक्तम् । धुर्यश्चेत्येतत् गुणप्रधानभावेन वर्तमाननानापुत्रविषयम्, तथाच नारदः—

पितर्युपरते पुत्रा ऋणं दद्युर्यथांशतः ।
विभक्ता वाऽविभक्ता वा यो वा तामुद्वहेद्धुरम् ॥

यथांशत इति विषमांशविभागविधायकशास्त्रानुसारेण विभक्तपुत्रविषयम् । समभागाविभक्तास्तु समानमेव धनं दद्युः । अविभक्तास्तु समप्रधानतया वर्तमानास्सम्भूयसमुत्थानेन दद्युः । गुणप्रधानतया वर्तमानेष्वविभक्तेषु प्रधानभूत एव सर्वं दद्यात्, गुणभूतस्यानधिकरणात् । यत्र पुनः पित्रा सह विभक्ता अविभक्ताश्च पुत्रास्सन्ति, तत्र येषां विभागादूर्ध्वं पित्रा यदृणं कृतं तत्तैर्न देयम्, अविभक्तेषु सुतेषु सत्सु विभक्तानां विभागतः पितृद्रव्यार्हत्वस्यापगतत्वेन मृते पितरि पुनः पितृद्रव्याग्रहणात् । अत एव कात्यायनः—

पित्रर्णे विद्यमाने तु न च पुत्रो धनं हरेत् ।
देयं तद्धनिने द्रव्यं मृते गृह्णंस्तु दाप्यते ॥

मृते पितरि तद्द्रव्यं गृह्णन्नेव पुत्रो दाप्य इत्यर्थः । पितृकृतस्वकृ-

तर्णसमवाये तु पितृकृतमादौ देयम् 'पश्चादात्मीयमेव च' इति बृहस्पतिस्मरणात् आत्मीयवदेव च पित्र्यं देयम्,

ऋणमात्मीयवत् पित्र्यं पुत्रैर्देयं विभावितम् ।

इति तेनैवोक्तत्वात् । आत्मीयवत् यथाऽऽत्मीयं सवृद्धिकं देयं तथेत्यर्थः । न वयं विद्म इति यत्र पुत्रैर्निह्नवः क्रियते तत्र प्रमाणेन विभावितं चेद्देयम्, नो चेन्न देयमिति विभावितपदस्यार्थः । सर्वथा कानिचिदृणानि पित्र्याणि पुत्रैर्न देयानीत्याह स एव—

सौराक्षिकं वृथादानं कामक्रोधप्रतिश्रुतम् ।
प्रातिभाव्यं दण्डशुल्कशेषं पुत्रैर्न दापयेत् ॥

सौरं सुरासम्पादननिमित्तं, आक्षिकं द्यूतपराजयनिमित्तकं चेति यावत् । वृथादानं स्मृत्यन्तरेऽभिहितम्—

धूर्ते वन्दिनि मल्ले च कुवैद्ये कितवे शठे ।
चाटुचारणचोरेषु दत्तं भवति निष्फलम् ॥

कामप्रतिश्रुतं क्रोधप्रतिश्रुतं च कात्यायनेनोक्तम्—

लिखितं मुक्तकं वाऽपि देयं यत्तु प्रतिश्रुतम् ।
परपूर्वस्त्रियै तत्तु विद्यात्कामकृतं नृणाम् ॥
यत्र हिंसां समुत्पाद्य क्रोधाद्द्रव्यं विनाश्य वा ।
उक्तं तुष्टिकरं यत्तु विद्यात्क्रोधकृतं तु तत् ॥

इति । मुक्तकं लेखरहितम् । परपूर्वस्त्रियै परभार्यायै । यत्र

हिंसामित्यादेरयमर्थः—परस्य हिंसां धनविनाशं वा क्रोधात् कृत्वा तत्तुष्टये द्रव्यं दास्यामीति प्रतिश्रुतं तद्दणं क्रोधजमिति। प्रातिभाव्यं दर्शनप्रतिभूदेयमत्र विवक्षितं, तथा च मनुः—

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकं च यत्।
दण्डशुल्कावशिष्टं च न पुत्रो दातुमर्हति ॥
दर्शनप्रातिभाव्ये तु विधिस्स्यात्पूर्वचोदितः।

इति। पूर्वचोदितविधिः 'प्रातिभाव्यं न पुत्रो दातुमर्हति' इति विधिः। पुत्रैस्तु दातव्यं यत् प्रातिभाव्यं येन च प्रकारेण दातव्यं, तत्सर्वं प्रतिभूप्रकरण एव दर्शितम्। दण्डशुल्कशेषमिति पदद्वयस्यार्थः उशनसा स्पष्टीकृतः—

दण्डं वा दण्डशेषं वा शुल्कं तच्छेषमेव वा।
न दातव्यं तु पुत्रेण यच्च न व्यावहारिकम् ॥

व्यावहारिकं सौरिकमित्यर्थः ॥

इति स्मृतिचन्द्रिकायां ऋणप्रतिदाननिर्णये पुत्रविषयाणि.

---

अथ पौत्रविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र कात्यायनः—

पित्रा दृष्टमृणं यत्तु क्रमायातं पितामहात्।
निर्दोषं नोद्धृतं पुत्रैः देयं पौत्रैस्तु तद्ध्रुवः ॥

पित्रा दृष्टं स्वपितृकृतत्वेन पित्रा निस्संदिग्धमवगतम्। पिता-

महात्क्रमप्राप्तं पूर्वपूर्वपूरुषाभावादिना प्राप्तम् । निर्दोषमदेयत्वापादकदोषरहितम् । पुत्रैर्नोद्धृतं पुत्रैर्दुश्चिकित्सरोगादिवशादनपाकृतम् । तथा च स एव—

पैतामहं तु यत्पुत्रैर्न दत्तं रोगिभिस्स्थितैः ।
तस्मादेवंविधं पौत्रैर्देयं पैतामहं समम् ॥

समं वृद्धिरहितं मूलमात्रमिति यावत् । पुत्रैरेकदेशापाकरणे तु अनपाकृतांशान्तरं देयम् ।

यदृणं दत्तशेषं वा देयं पैतामहं तु तत् ।

इति तेनैवोक्तत्वात् । अनेवंविधमदेयमिति स एवाह—

सदोषं व्याहतं पित्रा नैव देयमृणं क्वचित् ।

इति । सदोषं सुरादिनिमित्तत्वेन दोषयुक्तम् । पित्रा व्याहतं निराकृतं, पित्रा त्वदृष्टमपह्नुतं वा प्रमाणसाधितं देयम्.

पुत्रपौत्रै ऋणं देयं निह्नवे साक्षिभावितम् ।

इति याज्ञवल्क्येनोक्तेः । अदेयोपलक्षणार्थं सदोषग्रहणं तेनान्यदप्यदेयं पुत्रेषूक्तं पौत्रेष्वपि शुल्काद्यवगन्तव्यम् । प्रातिभाव्यं पुनः सर्वप्रकारमपि पौत्रैर्न देयमिति प्रतिभूप्रकरणे दर्शितम् । पौत्रैरपि प्राप्तव्यवहारैरेव देयं, अप्राप्तव्यवहाराणां पुत्रेषूक्तन्यायेनानधिकारात् । प्रोषितविषये च पुत्राणां यः प्रतिदानकालः स एव पौत्राणामपि, तथा च विष्णुः—
'धनग्राहिणि प्रेते प्रव्रजिते द्विदशास्समाः । प्रोषिते वा तत्पु-

त्रपौत्रैर्धनं देयम् । नातःपरमनीप्सुभिः' इति । प्रव्रजिते संन्यस्त इत्यर्थः । द्विदशास्समाः प्रोषिते वा विंशतिवर्षव्यापितया वा प्रवासे धनग्राहिणा कृत इत्यर्थः । नातःपरमनीप्सुभिरित्यस्य विंशतिवर्षादूर्ध्वं न विलम्बः कार्यः ऋणप्रतिदानानीप्सुभिरपीत्यर्थः । अथवाऽयमर्थः— अतः पुत्रपौत्रेभ्यः परमूर्ध्वं ये जातास्तैः प्रपौत्रादिभिरनीप्सुभिर्न देयमिति। एतदुक्तं भवति— पुत्रपौत्राणामेव जात्यन्धादिव्यतिरिक्तानां निरुपाधिकरिक्थार्हत्वं, नान्येषां प्रपौत्रादीनामिति । रिक्थग्रहणाभावे प्रपौत्रादिभिरवश्यं पुत्रपौत्रवन्न देयमिति । अत एव नारदः—

क्रमादव्याहतं प्राप्तं पुत्रैर्यन्नर्णमुद्धृतम् ।
दद्युः पैतामहं पौत्रास्तच्चतुर्थान्निवर्तते ॥

कात्यायनोपि—

पुत्राभावेऽपि दातव्यमृणं पौत्रेण यत्नतः ।
चतुर्थेन न दातव्यं तस्मात्ताद्धि निवर्तते ॥

एवञ्च प्रपितामहादिकृतर्णापाकरणानधिकारश्चतुर्थादेरगृहीतरिक्थस्यैव न पुनर्गृहीतरिक्थस्येत्यवगन्तव्यम् । पित्रात्मीयर्णदानात्पूर्वमेव पैतामहर्णं पौत्रेणात्मपितृपितामहकृतर्णत्रयसमवाये देयं,

तयोः पैतामहं पूर्वं देयमेव ऋणं सदा ।

इति बृहस्पतिस्मरणात् । तयोस्ताभ्यां पित्रात्मीयाभ्यामित्यर्थः । एवं पौत्रेण रिक्थार्हत्वेन ऋणदानं धुर्यपौत्रान्तरस्याभावे धु-

र्यस्य वा पितृव्यस्य। धुर्यस्य सद्भावे त्वधुर्यस्यानधिकारात्। समप्रधानभूतेषु पौत्रादिषु त्वविभक्तेषु यथांशतः ऋणापाकरणं, विभक्तेषु तु सम्भूयसमुत्थानेनेत्याद्यत्राप्यत्रगन्तव्यम्। पौत्रविषयवचनानां विशेषमात्रप्रदर्शनपराणां प्रदर्शितविशेषादन्यत् पुत्रैस्समानमित्यभिप्रायिकार्थावगमात्। गृहीतरिक्थानां तु पौत्राणामधिकारो वृद्धिसहितर्णापाकरणे 'देयं पैतामहं समम्' इत्यस्यागृहीतरिक्थविषयत्वात्।

तयोः पैतामहं पूर्वं देयमेव ऋणं सदा।

इत्युक्तस्तु क्रमात्मको विशेषः अगृहीतरिक्थानामपि पौत्राणां, सदेत्यभिधानात्।

इति स्मृतिचन्द्रिकायामृणप्रतिदातृनिर्णये पौत्रविषयाणि.

---

## अथ रिक्थग्राहादिविषयाणि.

तत्र याज्ञवल्क्यः—

ऋणग्राह ऋणं दाप्यो योषिद्ग्राहस्तथैव च।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य रिक्थिनः॥

अत्र पदार्थस्तावदुच्यते—विभागक्रमेण यो द्रव्यं गृह्णाति स रिक्थग्राहः। रागादिवशात् परभार्यां यो भार्यात्वेन स्वीकरोति स योषिद्ग्राहः, न पुनः पुत्रोत्पादकतया नियुक्तो जारो वा, तयोरुपभोगमात्रकारित्वेन ग्राहकत्वाभावात्। यो दाया-

नर्हतया पङ्ग्वादिर्मातापित्राश्रितद्रव्यवान्न भवति सोऽनन्याश्रितद्रव्यः। ये रिक्थग्राहास्त एव पुनश्च रिक्थिपदेनोक्ताः । अथ पादार्था उच्यन्ते, तत्राद्यन्तपादयोरयमर्थः—दायानर्हपुत्रसद्भावेऽप्यसद्भावेऽपि रिक्थग्राही ऋणं दद्यादिति। तथाच विष्णुः—'सपुत्रस्य वाऽपुत्रस्य वा रिक्थग्राही धनं दद्यात्' इति । एतदुक्तं भवति—यथा पुत्रपौत्रयोर्दायभागार्हयोर्भावे ऋणभाक् न तद्व्यतिरिक्तः, तथाऽत्रेति । यथैव पङ्ग्वादिलक्षणपुत्रसद्भावे असद्भावेऽपि रिक्थग्राही ऋणं ददाति तथैव पङ्ग्वादिलक्षणपुत्रसद्भावे चासद्भावे च रिक्थग्राहाभावे सति योषिद्ग्राहो ऋणं दद्यादिति द्वितीयपादस्यार्थः । तथाच विष्णुरेव—'विधनस्य स्त्रीग्राही' इति । सपुत्रस्य वाऽप्यपुत्रस्य वेत्यनुवर्तते। विधनस्येति वदन् धनहारिरहितस्येति दर्शयति । बृहस्पतिना तु स्पष्टमुक्तं—

स्त्रीहारी च तथैव स्यादभावे धनहारिणः।

इति। यथैव धनहारी ऋणभाक् तथैव धनहार्यभावे स्त्रीहारी स्यादित्यर्थः । धनहारिस्त्रीहारिणोरभावे दायानर्हः पुत्रो दद्यादिति तृतीयपादस्यार्थः। तथाच नारदेन—

धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत् ।

इत्युक्त्वा उक्तं—'पुत्रोसतोः स्त्रीधनिनोः' इति । ऋणभागि त्यनुवर्तते । स्त्रीग्राहधनग्राहयोरभावे दायानर्हः पुत्र ऋणभा-

गित्यर्थः । यत्पुनस्तेनैवानन्तरमुक्तं 'स्त्रीहारी धनिपुत्रयोः' इति, तदयुक्तमिव प्रतिभाति । धनहारिपुत्राभावे स्त्रीहारी ऋणभागिति वचनान्तरेण प्राक्प्रतिपादितार्थविरोधात्, पुत्रस्य स्त्री हारिराहित्ये ऋणभागित्वमिति स्वोक्तेन विरोधाच्च । सत्यमस्ति विरोधः । तथाऽपि विषयभेदादसावपगच्छति । तथाहि— 'विधनस्य स्त्रीग्राही' इति विष्णुवचनेन पक्षद्वयमुक्तं—सपुत्रस्य धनहारिरहितस्य स्त्रीहारी दद्यात्, अपुत्रस्य वा धनहारिरहितस्येति । तत्र द्वितीयः पक्षः 'स्त्रीहारी धनिपुत्रयोः' इत्यनेनोक्तः । धनहारिपुत्रयोरसतोः स्त्रीहारी ऋणभागिति द्वितीयपक्षसमानत्वात् । वचनान्तरेण प्राक्प्रतिपादितोऽर्थः प्रथमपक्ष एव । अतो न तेन सह द्वितीयपक्षस्येवास्यापि विरोधः, विकल्पितत्वात् । 'पुत्रोऽसतोस्त्रीधनिनोः' इत्यनेन सपुत्रस्य स्त्रीहारिधनहारिराहितस्य ऋणं दायानर्हः पुत्रो दद्यादित्युक्तम् । 'पुत्रोऽनन्याश्रितद्रव्यः' इति वचनेन तुल्यार्थत्वात् । एवंच न प्राक्प्रतिपादितेन स्वोक्तेन वा विरोध इति युक्तमुक्तं नारदेन ॥

यत्तु कात्यायनेनोक्तम्—

व्यसनाभिप्लुते पुत्रे बालो वा यत्र दृश्यते ।
द्रव्यहृद्दाप्यते तत्र तस्याभावे पुरन्ध्रिहृत् ॥

इति, तत्तस्यां दशायां दायार्हपुत्रस्यानधिकारप्रदर्शनार्थं, न तु दायानर्हपुत्रस्य व्यसनोपप्लुत्याद्यवस्थायामेव धनग्राहादिरुक्तक्र-

मेणर्णभाक्, अन्यत्र तु दायानर्हः पुत्र एव प्रथमतः पश्चाद्धनग्राहादिरिति क्रमान्तरविधानार्थम्, तस्यात्राश्रुतत्वात्, आदौ दायानर्हपुत्रदानासामञ्जस्याच्च । यत्पुनस्तेनैवोक्तं—

पूर्वं दद्याद्धनग्राहः पुत्रस्तस्मादनन्तरम् ।
योषिद्ग्राहस्सुताभावे पुत्रो वाऽत्यन्तनिर्धनः ॥

इति, तद्योषिद्ग्राहापेक्षयाऽत्यन्तबहुधनो यः पुत्रस्तस्य धनग्राहानन्तर्यार्थमिति सर्वमविरुद्धम् । न च योषिद्ग्राहदानाधिकारशास्त्रान्यथाऽनुपपत्त्या योषिद्ग्रहणमपि पूर्वपतिकृतर्णदातुः शास्त्रीयमिति शङ्कनीयम् । यतो रागप्राप्तयोषिद्ग्रहणस्य सम्भवान्न शास्त्रस्यानुपपत्तिः । अत एवाह सङ्ग्रहकारः—

यत्र दद्यादृणं वोढुः पुनर्भूस्वैरिणीपतिः ।
न तेन तदुपादानं शास्त्रेण विहितं भवेत् ॥

तदुपादानं पुनर्भुवां स्वैरिणीनां सङ्ग्रहणम् । तास्तु नारदेन निरूपिताः—

परपूर्वाः स्त्रियस्त्वन्यास्सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधा तासां स्वैरिणी तु चतुर्विधा ॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनस्संस्कारकर्मणा ॥
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसाऽन्यस्मै सा द्वितीया प्रकीर्तिता ॥

असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्तिता ॥

स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति ।
कामात्समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥

कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता ।
पुनः पत्युर्गृहं यायात्सा द्वितीया प्रकीर्तिता ॥

मृते भर्तरि तु प्राप्ता देवरादीनपास्य या ।
उपगच्छेत्परं कामात् सा तृतीया प्रकीर्तिता ॥

प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा च या ।
तवाहमित्युपगता सा चतुर्थी प्रकीर्तिता ॥

इति । उत्पन्नसाहसा क्षतयोनिः प्रौढेति यावत् । अन्यस्मै देवरायेत्यर्थः । देवरायेत्यभिप्रायेणात्रान्यशब्दप्रयोगात्, स चाभिप्रायः 'असत्सु देवरेषु' इति उत्तरत्रोक्त्या गम्यते । समाश्रयेत् सुरतार्थमिति शेषः । एवं श्रितेत्यत्रापि शेषोऽध्यवसेयः । पुनः पत्युर्गृहं यायात् निवासार्थमिति शेषः । एवंच यः प्रथमेतरपुनर्भुवमुपगच्छति स नियुक्तमात्रो न योषिद्ग्राह इति न पुनर्भूभर्तृकृतर्णदानाधिकारीत्यवगन्तव्यम् । एवं यस्स्वैरिणीं चतुर्थीव्यतिरिक्तामुपगच्छति सोपि जारमात्रो न योषिद्ग्राह इति स्वैरिणीपतिकृतर्णानधिकारीत्यवगन्तव्यम् । आद्यपुनर्भ्वास्तु यः पाणिं गृह्णाति स योषिद्ग्राही भवत्येव भा-

र्यात्वेनैव स्वीकारात्। चतुर्थ्या अपि स्वैरिण्याः भार्यात्वेनैव स्वीकार इति स्वीकर्ता योषिद्ग्राह एव। तेन ताभ्यां पुनर्भ्वाः प्रथमायाः पत्या कृतमृणं स्वैरिण्याश्चतुर्थ्याः पत्या कृतं च ऋणं देयम्। तथाच तेनैवोक्तम्—

अन्तिमा स्वैरिणीनां या प्रथमा च पुनर्भुवाम्।
ऋणं तयोः पतिकृतं दद्याद्यस्ते उपाश्नुते ॥

पतित्वेनेति शेषः। अत एव—

यस्तु दद्यादृणं वोढुः पुनर्भूस्वैरिणीपतिः।

इति सङ्ग्रहकारेणोक्तम्। यत्तु नारदेनोक्तं—

अधनस्य ह्यपुत्रस्य मृतस्योपैति यस्स्त्रियम्।
ऋणं वोढुस्स भजते सैवास्य च धनं स्मृतम् ॥

इति, तत्र स्त्रियमुपैतीत्यस्य यथाश्रुतार्थपरत्वे नियुक्तजारयोरपि ऋणभागित्वमिति प्रागुक्तविरोधः। स्त्रीग्राहपरत्वे पौनरुक्त्यमिति सङ्कटमिति। उच्यते—धनग्राहपुत्रयोषिद्ग्राहविहीनस्य योषिदुपभोक्ताऽपि ऋणभागिति प्रतिपादनार्थमिदं वचनमारब्धमिति न सङ्कटं किञ्चित्। यदपि तेनैवोक्तम्—

या पुनस्सधनैव स्त्री सापत्या वाऽन्यमाश्रयेत्।
सोऽस्या दद्यादृणं भर्तुरुत्सृजेद्वा तथैव ताम् ॥

इति, तस्यायमर्थः—या स्त्री सधना सबालतनया च रक्षार्थं मातुलादिकमाश्रयेत्, स चाश्रयभूतो मातुलादिः भर्तृकृतर्णं दा-

पयेत्। यदि तु सा दातुं नेच्छति तदा सधनां सतनयां त्यजेदिति। तथाच कात्यायनः—

बालपुत्राऽधिकार्था च त्रातारं याऽन्यमाश्रिता।
आश्रितस्तदृणं दद्याद्बालपुत्राविधिस्स्मृतः॥

दद्यात् दापयेदित्यर्थः।

इति स्मृतिचन्द्रिकायामृणप्रतिदातृनिर्णये
रिक्थग्राहादिविषयाणि.

---

## अथ कुटुम्बविषयाणि.

तत्र बृहस्पतिः—

पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः।
यद्गृहीतं कुटुम्बार्थे तद्गृही दातुमर्हति॥

शिष्यग्रहणेनान्तेवास्यपि सङ्गृहीतः। छात्रमात्रस्य विवक्षितत्वात्। गृहीत्यनेन न गृहिमात्रस्याभिधानं, किन्तु कुटुम्बिनः, तस्यैव विवक्षितत्वात्। तथाच नारदः—

शिष्यान्तेवासिदासस्त्रीप्रेष्यकृत्यकरैश्च यत्।
कुटुम्बहेतोरुत्क्षिप्तं दातव्यं तत्कुटुम्बिना॥

शिष्यो वेदविद्यार्थी। शिल्पविद्यार्थी त्वन्तेवासी। कुटुम्बहेतोः कुटुम्बार्थं उत्क्षिप्तं असंनिधानादिना स्वानुज्ञां विनाऽपि कृत-

मृणम् । कुटुम्बिनैव ऋणकर्तुः प्रवासव्यसनाद्यभावेऽपि देयम्, कुटुम्बभरणस्य स्वकार्यत्वादित्यर्थः । कात्यायनोप्यमुमेवार्थमाह—

प्रोषितस्याप्यमतेनापि कुटुम्बार्थमृणं कृतम् ।
दासस्त्रीमातृशिष्यैर्वा दद्यात्पुत्रेण वा भृगुः ॥

स्त्रिया मात्रा वा कृतमकुटुम्बार्थमपि किञ्चिदृणं देयमित्याह स एव—

देयं भार्याकृतमृणं भर्त्रा पुत्रेण मातृकम् ।
भर्तुरर्थे कृतं यत् स्यादभिधाय गते दिशम् ॥

नारदोपि—

पुत्रिणी तु समुत्सृज्य पुत्रं स्त्री याऽन्यमाश्रयेत् ।
तस्या ऋणं हरेत्सर्वं निस्स्वायाः पुत्र एव तु ॥

अन्यं मातुलादिकम् । अनुज्ञया तु यस्यकस्यचिदर्थे कृतमपि सदा कुटुम्बिनैव देयम् । 'प्राक्प्रतिपन्नं देयं यस्यकस्यचित्कुटुम्बार्थं वा' इति विष्णुस्मरणात् । प्रतिपन्नपदस्यार्थः कात्यायनेन प्रपञ्चितः—

देयं पुत्रकृतं तत्स्याद्यच्च स्यादनुवर्णितम् ।
कृतासंवादितं यच्च श्रुत्वा चैवानुचोदितम् ॥

कृतं अकृच्छ्र इति शेषः । कृच्छ्रकृतं त्वप्रतिपन्नमपि देयम् । तथाच नारदः—

पितुरेव नियोगाद्वा कुटुम्बभरणाय वा ।

कृत वा यदृणं कृच्छ्रे दद्यात्पुत्रस्य तत्पिता ॥

अत्र च पूर्वत्र च पुत्रग्रहणं कुटुम्बोपलक्षणार्थं, पितृग्रहणं चेह गृहप्रभोरुपलक्षणार्थम् । तथाच कात्यायनः—

कुटुम्बार्थमशक्ते तु गृहीतं व्याधितेऽथवा ।
उपप्लवनिमित्तं च विद्यादापत्कृतं च तत् ॥
कन्यावैवाहिकं चैव प्रेतकार्ये च यत्कृतम् ।
एतत्सर्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः ॥

इति । अशक्ते कुटुम्बभरणासमर्थे कुटुम्बिनीत्यर्थः । कन्यावैवाहिकं कन्याविवाहनिमित्तकम् । यत्कृतं येन कृतम् । प्रभोः प्रभुणा कुटुम्बिनेति यावत् । यथा पुत्रापितृशब्दयोरुपलक्षणार्थत्वं नारदीये, तथा—

ऋणं पुत्रकृतं पित्रा शोध्यं यदनुमोदितम् ।
सुतस्नेहेन वा दद्यात् नान्यथा दातुमर्हति ॥

इति बार्हस्पत्यवचनेऽप्यवगन्तव्यम् । शोध्यमपाकरणीयम् । अनुमोदितग्रहणं प्रतिश्रुतस्याप्युपलक्षणार्थम् ।

देयं प्रतिश्रुतं यत्स्यात् यच्च स्यादनुमोदितम् ।

इति कात्यायनस्मरणात् । स्नेहादानं प्राङ्निरूपितनानाविधदेयर्णव्यतिरिक्तर्णविषयम् । भार्याकृतर्णविषयेऽपि समानं, सुतग्रहणस्य स्नेहमात्रोदाहरणतया कृतत्वात् । एवंच यदुक्तं कात्यायनेन—

ऋणं पुत्रकृतं पित्रा न देयमिति धर्मतः ।

इति, तदुक्तनानाविधदेयर्णेतरर्णविषयमित्यवगन्तव्यम् । धर्मत इति वदन् स्नेहतो देयमिति दर्शयति । यदपि नारदेनोक्तं—

न भार्यया कृतमृणं कथञ्चित्पत्युरावहेत् ।

इति, तदपि निरूपितदेयर्णव्यतिरिक्तविषयम् । एवम्भूतविषयत्वप्रदर्शनार्थमेवानन्तरमुक्तं तेनैव—

आपत्कृताद्दते पुंसा कुटुम्बार्थो हि दुस्तरः ।

इति । भार्ययाऽप्यापदिकृतं कुटुम्बार्थं च कृतं पत्युरपाकरणीयं भवेदित्यर्थः । पूर्वोक्तो यो निषेधः स रजकादिस्त्रीभ्योऽन्यत्रेत्याह स एव—

अन्यत्र रजकव्याधगोपशौण्डिकयोषिताम् ।
तेषां तत्प्रत्यया वृत्तिः कुटुम्बं च तदाश्रयम् ॥

तेषां रजकादीनाम् । तत्प्रत्यया वृत्तिः योषिदधीनं वर्तनमित्यर्थः। तेनानापदि कुटुम्बार्थं कृतमपि पतिभिर्देयमित्यभिप्रायः । रजकादिग्रहणं योषिदधीनवृत्तीनां तैलिकशैलूषादीनामुपलक्षणार्थम् । याज्ञवल्क्योपि हेतुकथनेनोपलक्षणार्थत्वं दर्शयन्नारदाभिप्रायविषयत्वेनोक्तमेवार्थमाह—

गोपशौण्डिकशैलूषरजकव्याधयोषिताम् ।
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया ॥

शैलूषो नटः । एवंच यदुक्तं विष्णुना 'न स्त्रीकृतं पतिपुत्रौ'

इति, तदुक्तदेयभूतव्यतिरिक्तविषयमिति मन्तव्यम् । मनुस्तु कुटुम्बार्थे भृत्यादिकृतक्रियादिरपि कुटुम्बिनाऽङ्गीकरणीय इत्याह—

कुटुम्बार्थे त्वधीनोपि व्यवहारं यमाचरेत् ।
स्वदेशे वा विदेशे वा तन्नयायान्न विचालयेत् ॥

किन्तु स्वीकुर्यादिति शेषः ।

इति स्मृतिचन्द्रिकायां ऋणप्रतिदातृनिर्णये कुटुम्बविषयाणि.

---

## अथ कुटुम्बजनविषयाणि.

तत्र याज्ञवल्क्यः—

अविभक्तैः कुटुम्बार्थे यदृणं तु कृतं भवेत् ।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥

अविभक्तधनैर्भ्रात्रादिभिस्समप्रधानैः कुटुम्बव्ययाय यदृणं कृतं तत्तैस्सदा न देयम्, किन्तु तद्दानाधिकारिणि कुटुम्बिनि प्रेते प्रोषिते वा दातव्यमित्यर्थः । तत्रापि केषाञ्चिदभावे यस्तिष्ठति स दद्यात् 'अविभक्तैः कृतमृणं यस्तिष्ठेत् स दद्यात्' इति विष्णुस्मरणात् । अविभक्तैरिति बहुवचनं पूर्वत्रात्र चाविवक्षितम् । तथाच नारदः—

पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम् ।
मात्रा वा यत्कुटुम्बार्थे दद्युस्तत्सर्वरिक्थिनः ॥

ऋणकर्तरि प्रेते प्रोषिते वेति शेषः। तस्मिन् प्रधानभूते स्थिते सत्येषां गुणभूतानामृणदानानधिकारात्। अत एव मनुः—

ग्रहीता यदि नष्टस्स्यात्कुटुम्बे च कृतो व्ययः।
दातव्यं बान्धवैस्तत्स्यात् प्रविभक्तैरपि स्मृतः॥

ऋणस्य ग्रहीता पितृव्यादिर्यदि नष्टः प्रोषितो वा मृतो वा स्यात्तदा रिक्थिभिर्विभक्तैस्तत्कुटुम्बव्ययाय कृतमृणं दातव्यं स्वतः किमुताविभक्तैरित्यर्थः। एवं वृत्तिकारेण व्याख्यातम्। अस्मिन्व्याख्याने वचनानन्तरे वा वृथैवाविभक्तग्रहणं स्यादिति मत्वा भाष्यकारेण प्रविभक्तधनैः पितृव्यादिभिः स्वतः स्वधनाद्दातव्यमित्यर्थ इति वचनार्थमुक्त्वा मध्यगादेव धनादविभक्तैर्दत्वाऽवशिष्टविभागः कार्यो नादत्वेति वचनान्तरार्थो दर्शितः। यदा प्रविभक्तधना ऋणं प्रयच्छन्ति तदा दायानुरूपमंशं दद्युः, 'विभक्ताश्च दायानुरूपमंशम्' इति विष्णुस्मरणात्।

इति स्मृतिचन्द्रिकायां ऋणप्रतिदातृकुटुम्बजनविषयाणि.

---

## अथ परतन्त्रस्त्रीविषयाणि.

तत्र कात्यायनः—

भर्त्रा पुत्रेण वा सार्धं केवलं वाऽऽत्मना कृतम्।
ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया॥

अन्यथा तत्कृतं केवलं भर्त्रा पुत्रेण वा कृतं स्त्रिया तयोरभा-

वेऽपि न देयं, किंतु भर्त्रा पुत्रेण वा सार्धं सम्भूय गृहीतमृणं तयोरभावे देयम्। स्वयमेव गृहीतं तु तयोरभावेऽपीत्यर्थः। एवंविधमिति वदन् अन्यदप्यस्ति स्त्रिया देयमिति दर्शयति। किं तदित्यपेक्षिते याज्ञवल्क्यः—'प्रतिपन्नं स्त्रिया देयम्' इति। प्रतिपन्नं पतिकृतं पुत्रकृतं वा ऋणमहं दास्यामीत्यभ्युपेतमित्यर्थः।

न स्त्री पतिकृतं दद्यात् ऋणं पुत्रकृतं तथा।
अभ्युपेतादृते .... .... .... ॥

इति नारदस्मरणात्। एवंच पतिपुत्रेतरकृतं प्रतिपन्नमपि स्त्रिया न देयमिति परिसङ्ख्यार्थतया याज्ञवल्क्यवचनमिति मन्तव्यं, स्पष्टत्वेन विध्यार्थत्वासम्भवात्। अप्रतिपन्नमपि पतिकृतं क्वचिद्विषये स्त्रिया देयमित्याह कात्यायनः—

मर्तुकामेन या भर्त्रा उक्ता देयमृणं त्वया।
अप्रपन्नाऽपि सा दाप्या धनं यद्याश्रितं स्त्रिया॥

अत्रार्थादनाश्रितभर्तृधना स्त्री अप्रपन्ना चेन्न देयमिति गम्यते। यत्तु नारदेनोक्तं—

दद्याच्चापुत्रविधवा नियुक्ता वा मुमूर्षुणा।
यो वा तद्रिक्थमादद्याद्यतो रिक्थमृणं ततः॥

इति, तत् आश्रितभर्तृधनविधवाभिप्रायेणोक्तमिति न पूर्वोक्तेन विरुद्धम्। यत्तु विष्णुनोक्तं—'न स्त्रीपातिपुत्रकृतम्' इति, तत्सामान्येन प्रतिषेधबोधकं विशेषेण विधायकप्रागुक्तवचन-

विषयव्यतिरिक्तविषयेऽवतिष्ठत इत्यविरुद्धम् । देयादेयनिर्णयाः पृथक्पृथक्कर्तुमशक्या इति प्रतिदातृनिर्णयान्तःपातितयाऽस्माभिः कृताः प्रत्येतव्याः ।

इति स्मृतिचन्द्रिकायां प्रतिदातृनिर्णये परतन्त्रस्त्रीविषयाणि.

समाप्तं च प्रतिदातृनिर्णयप्रकरणम्.

---

## अथातीतोत्तमर्णऋणापाकरणविषयाणि.

तत्र नारदः —

ब्राह्मणस्य तु यद्देयं सान्वयस्य न चास्ति सः ।
निर्वपेत्तत्सकुल्येषु तदभावेऽस्य बन्धुषु ॥

ब्राह्मणग्रहणमुत्तमर्णोपलक्षणार्थम् । एवंचायमर्थः—उत्तमर्णस्य देयं यदृणं तत्तदभावे तत्सन्तानस्य तनयादेस्तद्द्रव्यग्राहिणः ऋणप्रतिदात्रा देयम् । ससन्तानस्योत्तमर्णस्याभावे तत्सकुल्येष्वन्तरङ्गानतिक्रमेण देयम् । सकुल्यानामप्यभावे मातुलादिषु बन्धुष्वन्तरङ्गानतिक्रमेण देयमिति । यदा तु पूर्वोक्तानामभावः तदाऽप्याह स एव—

यदा तु न सकुल्यास्स्युर्न च संबन्धिबान्धवाः ।
तदा दद्याद्द्विजेभ्यस्तु तेष्वसत्स्वप्सु निक्षिपेत् ॥

प्रजापतिरपि—

बन्ध्वभावे तु विप्रेभ्यो देयं क्षेप्यं जलेऽपि वा ।
जले क्षिप्तं तथाऽग्नौ च धनं स्यात्पारलौकिकम् ॥

आनृण्यापादनेन परलोकहितं जलादौ प्रक्षिप्तं धनं भवतीत्युत्तरार्धस्यार्थः। अग्नौ चेत्यत्र हुतमिति शेषोऽध्याहार्यः, न पुनः क्षिप्तमित्यस्यानुषङ्गः कार्यः। यदाह गोभिलः—'ऋणेष्वज्ञायमानेषु गोळकामध्यमपर्णेन जुहुयात् यत्कुसीदम्' इति। मान्त्रवर्णिकी च अग्निरत्र देवता। आनृण्यार्थं चायं होमः। अनृणो भवामीति मन्त्रलिङ्गात्। गोळका पलाशः। तथाच सङ्ग्रहकारः—

द्रव्यं यत्त्वधमर्णस्थं क्वचिद्ब्राह्मणगं भवेत्।
सुतादिब्राह्मणान्तानां रिक्थभाजामसम्भवे॥
पलाशस्य पलाशेन जुहुयान्मध्यमेन तु।
यत्कुसीदमिति प्रास्येदथवाऽप्स्वेव तद्धनम्॥

इति। क्वचित् उत्तमर्णादिबन्ध्वन्तानामभावविषय इत्यर्थः। यत्कुसीदमिति पूर्वेणैव सम्बध्यते, मूलस्मृतौ जलप्रक्षेपणमन्त्रास्मरणात्। निक्षिप्तादिधनेऽप्येष एव विधिर्निक्षेपादिस्वामिन्यतीते द्रष्टव्यः, समानकारणत्वादित्युक्तं देवस्वामिना॥

इति स्मृतिचन्द्रिकायामतीतोत्तमर्णऋणापाकरणविषयाणि.

इति सकलविद्याविशारदश्रीकेशवादित्यभट्टोपाध्यायसूनुयाज्ञिकदेवणभट्टोपाध्यायसोमयाजिविरचितायां स्मृतिचन्द्रिकायामृणादानाख्यस्य पदस्य विधिवितानस्समाप्तः.

---

## अथ द्वितीयस्य पदस्य निक्षेपोपनिध्यादिभे-
## देनानेकविधस्य विधिरुच्यते.

तत्र मनुः—

कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि ।
महापक्षे धनिन्याप्ते निक्षेपं निक्षिपेद्बुधः ॥

महापक्षे बन्धुशालिनि । कः पुनर्निक्षेप इत्यपेक्षिते व्यासः—

स्थानत्यागाद्राजभयाद्दायादानां च वञ्चनात् ।
स्वद्रव्यमर्प्यतेऽन्यस्य हस्ते निक्षेपमाह तम् ॥

स्वद्रव्यं स्वकीयद्रव्यं वस्त्रनिष्कादिकमन्यस्य कुलजत्वादिगुणवतो हस्ते समर्प्यते ग्राहकसमक्षमेवार्प्यते क्षेमार्थं यत्तत्र निक्षेपशब्दो वर्तत इत्यर्थः । तच्चार्पणं ग्राहकस्य पुरतो गणनं कृत्वा कार्यं, 'निक्षेपं गणितं विदुः' इति नारदस्मरणात् ।

उपनिधिस्थापनविधिमाह बृहस्पतिः—

स्थानं गृहं गृहस्थं च तद्वर्णं त्रिविधान् गुणान् ।
सत्यं शौचं बन्धुजनं परीक्ष्य स्थापयेन्निधिम् ॥

निधिं उपनिधिमित्यर्थः । तस्य स्वरूपमपि तेनैवोक्तं—

अनाख्यातं व्यवहितं असङ्ख्यातमदर्शितम् ।
मुद्राङ्कितं च यद्दत्तं तदौपनिधिकं स्मृतम् ॥

व्यवहितं करण्डकादौ प्रक्षिप्य निहितं, नास्य समर्पणे ग्रा-

हकसमक्षासमक्षलक्षणो नियमः, दत्तमिति सामान्येनोक्तेः ।

न्यासस्य तु स्वरूपनिरूपणमुखेनैव स्थापनप्रकारमाह स एव—

राजचोरारातिभयाद्दायादानां च वञ्चनात् ।
स्थाप्यतेऽन्यगृहे द्रव्यं न्यासस्तत्परिकीर्तितम् ॥

द्रव्यं बलीवर्दकांस्यादिकम् । गृह इति वदता गृहस्वामिनः परस्थानगतस्य असमक्षे तस्मिन्नागते समर्पणीयमिति कथयित्वा स्थापितो न्यासो, न पुनः तत्समक्षे समर्पित इति दर्शितम् ॥

इति स्मृतिचन्द्रिकायां निक्षेपादिस्थापनविधिः.

---

## अथ निक्षेपादिपालनविधिः.

तत्र बृहस्पतिः—

ससाक्षिकं रहो दत्तं द्विविधं समुदाहृतम् ।
पुत्रवत्परिपाल्यं तद्विनश्यत्यनवेक्षया ॥

पालयितुः फलं चाह स एव—

ददतो यद्भवेत्पुण्यं हेमकुप्याम्बरादिकम् ।
तत्स्यात्पालयतो न्यासं तथैव शरणागतम् ॥

कुप्यं त्रपुसीसादिकम् । भक्षकादेर्दोषोपि तेनैव दर्शितः—

भर्तृद्रोहे यथा नार्याः पुंसः पुत्रसुहृद्वधे ।
दोषो भवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् ॥

न्यासद्रव्यं न गृह्णीयात् तन्नाशस्त्वयशस्करः ।

इति । न्यासग्रहणं प्राचीनवचनत्रयेऽप्युपलक्षणार्थं, तेन फल-श्रुत्यादिकं निक्षेपादित्रयसाधारणमिति मन्तव्यम् ।

इति स्मृतिचन्द्रिकायां निक्षेपादिपालनविधिः.

---

अथ सभ्यभूतग्रहीतृविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र बृहस्पतिः—

दैवराजोपघातेन यदि तन्नाशमाप्नुयात् ।
ग्रहीतृद्रव्यसहितं तत्र दोषो न विद्यते ॥

ग्रहीतुरिति शेषः । उपेक्षाद्यभावादित्यभिप्रायः । ग्रहीतृद्रव्य-सहितमित्येतदुपेक्षाद्यभावनिश्चायकत्वेनोक्तम् । निक्षिप्तमात्रस्यापि कारणान्तरेणोपेक्षाद्यभावे निश्चिते ग्रहीतुर्दोषो न विद्यत इत्य-वगन्तव्यम् । दैवराजग्रहणं ग्रहीतृसमाधेयनिमित्तोपलक्षणार्थम् । अत एव कात्यायनः—

अराजदैविकेनापि निक्षिप्तं यत्र नाशितम् ।
ग्रहीतुस्सह भाण्डेन दातुर्नष्टं तदुच्यते ॥

भाण्डेन अर्थेनेत्यर्थः । तथाच नारदः—

ग्रहीतुस्सह योऽर्थेन नष्टो नष्टस्स दायिनः ।
दैवराजकृते तद्वन्न चेत्तत् जिह्मकारितम् ॥

तत् ग्रहीत्रर्थेन सह प्रध्वंसनं कूटकारितं न चेदित्यन्त्यपादस्यार्थः। दायिनस्स नष्ट इति वदता वचनभङ्ग्या ग्रहीता मूल्यद्वारेण न दाप्यो नष्टं धनमित्युक्तम्। उक्तं च याज्ञवल्क्येन—

न दाप्योऽपहृतं तत्तु राजदैविकतस्करैः।

इति। दैविकपदस्यार्थो मनुना स्पष्टत्वेनोक्तः—

चोरैर्हृतं जलेनोढमग्निना दग्धमेव च।
न दद्याद्यदि तस्मात्स न संहरति किञ्चन॥

तस्माद्धनाद्यदि स्तोकमपि न गृह्णातीत्यर्थः। उपनिधिग्रहीतर्यप्युक्तं तेनैव—

समुद्रान्नाप्नुयात् किञ्चित् यदि तस्मान्न संहरेत्।

इति। एवं न्यासग्रहीतर्यप्युपेक्षाद्यभावे द्रष्टव्यं, असभ्यत्वाभावात्। 'समुद्रान्नाप्नुयात्' इति वचनान्तरेण पृथगुपनिधावभिधानं प्रपञ्चरुचित्वेनेति मन्तव्यम्। क्वचिद्येनकेनचिद्धेतुना नष्टमपि ग्रहीता मूल्यद्वारेण न दाप्य इत्याह कात्यायनः—

ज्ञात्वा द्रव्यावियोगं तु दाता यत्र विनिक्षिपेत्।
सर्वोपायविनाशेऽपि ग्रहीता नैव दाप्यते॥

इति स्मृतिचन्द्रिकायां सभ्यभूतग्रहीतृविषयाणि.

---

## अथ सभ्याभासभूतग्रहीतृविषयाणि.

तत्र कात्यायनः—

निक्षिप्तं यस्य यत्किञ्चित् तत्प्रयत्नेन पालयेत् ।
दैवराजकृतादन्यो विनाशस्तस्य कीर्त्यते ॥

यस्य पार्श्वे यत् स्थापितं तत्तेनावहितेन पालनीयं, यतो दैवराजकृतादन्यो विनाशादिस्तस्य ग्राहकस्य दोषेण कृतत्वेन कीर्त्यत इत्यर्थः न केवलं दुष्कीर्तिरेव किंतु वस्तुवृत्त्या स्वदोषाद्विनाशादौ जाते बह्वर्थहानिश्चेत्याह स एव—

यस्य दोषेण यत्किञ्चिद्विनाश्येत ह्रियेत वा ।
तद्द्रव्यं सोदयं दाप्यो दैवराजकृताद्विना ॥

उपेक्षादिलक्षणोऽत्र दोषोऽभिमतः । तथाच बृहस्पतिः—

भेदेनोपेक्षया न्यासं ग्रहीता यदि नाशयेत् ॥
याच्यमानो न दद्याद्वा दाप्यस्तत्सोदयं भवेत् ॥

नाशे मूल्यद्वारेण दाप्यः । अनाशे तु स्वरूपत एव । अकृतवृद्धिप्रकरणे सामान्येनोक्तं वृद्धिपरिमाणं नाशे ग्राह्यं, अदाने तु—

याच्यमानो न चेद्दद्याद्वर्धते पञ्चकं शतम् ।

इति विशेषेण तत्रैवोक्तं ग्राह्यम् । भेदेनोपेक्षयेति वदन् स्वीयद्रव्येण सहैवोपेक्षया नाशे तु सोदयविधिर्नेति दर्शयति । तेन 'तत्र समं दाप्य उपेक्षितः' इति स्मृत्यन्तरविहितं मूलमात्रमेव देयम् । एवं याच्यमानस्यादत्तस्य दैवराजकृतेऽपि नाशे स्थापकाय मूलमात्रं देयम् । तथाच कात्यायनः—

याचितानन्तरं नाशे दैवराजकृतेऽपि सः ।
ग्रहीता प्रतिदाप्यस्स्यात् ............ ॥

इति । मूलमात्रमिति शेषः । प्रत्यर्पणविलम्बमात्रापराधे सवृद्धिकदापनायोगात् । राज्ञे च तत्समो देयः, तथाच नारदः—

याच्यमानस्तु यो दातुं निक्षेपं न प्रयच्छति ।
दण्ड्यस्स राज्ञो भवति नष्टे दाप्यश्च तत्समम् ॥

नष्ट इत्यत्र दैवाद्राजतो वेति शेषोऽध्याहार्यः । यः पुनः स्थापितधनाद्व्ययं कुरुते, उपभोगं वा, लाभार्थं प्रयोगं वा । तत्राप्याह स एव—

यत्रार्थं साधयेत्तेन निक्षेप्तुरननुज्ञया ।
तत्रापि दण्ड्यस्स भवेत्तं च सोदयमावहेत् ॥

साधितार्थानुसारेण दण्ड्यः । याज्ञवल्क्योऽपि—

आजीवन् स्वेच्छया दण्ड्यो दाप्यस्तच्चापि सोदयम् ।

इति । आजीवन् उपजीवन् । स्वेच्छया उपनिधात्रननुज्ञया । तच्छब्देनोपनिधिरत्र परामृश्यते, प्रकृतत्वात् । बृहस्पतिरपि—

न्यासद्रव्येण यः कश्चित् साधयेत्कार्यमात्मनः ।
दण्ड्यस्स राज्ञो भवति दाप्यस्तच्चापि सोदयम् ॥

साधयेत् स्वाम्यननुज्ञयेति शेषः । स्वाम्यनुज्ञया तु साधयतो न दोष इति प्राचीनवचनेष्वेवार्थादवगम्यते । कात्यायनोऽपि—

न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम् ।
अज्ञाननाशितं चैव येन दाप्यस्स एव तत् ॥

अत्र विशेषमाह व्यासः—

भक्षिते सोदयं दाप्यस्समं दाप्य उपेक्षिते ।
किञ्चिन्न्यूनं प्रदाप्यस्स्याद्द्रव्यमज्ञाननाशितम् ॥

किञ्चिन्न्यूनमित्यस्य पादांशहीनमित्यर्थो ग्राह्य इति कैश्चिदुक्तम्। भक्षितवदपहृतं दाप्यः 'निक्षेपापहारी वृद्धिसहितं धनं धनिकस्य दाप्यः' इति विष्णुस्मरणात् । अत्र दण्डमपि दाप्यः ॥

निक्षेपस्यापहर्तारं तत्समं दापयेद्दमम् ।
तथोपनिधिहर्तारं विशेषेणैव पार्थिवः ॥

इति मनुस्मरणात् । अपह्नवे त्ववृद्धिकमेव साधितं दाप्य इत्याह व्यासः—

निक्षेपं निह्नुते यस्तु नरो बन्धुबलान्वितः ।
साक्षिभिर्वाऽथ दिव्येन विभाव्य प्रतिदाप्यते ॥

बृहस्पतिस्तु दण्डदापनमप्याह—

गृहीत्वाऽपह्नुते यत्र साक्षिभिश्शपथेन वा ।
विभाव्य दापयेन्न्यासं तत्समं विनयं तथा ॥

इति स्मृतिचन्द्रिकायां सभ्याभासभूतग्रहीतृविषयाणि.

---

### अथ ग्रहीतृस्थापकादिकृत्यविषयाणि.

तत्र ग्रहीतारं प्रत्याह बृहस्पतिः—

स्थापितं येन विधिना येन यच्च यथाविधि ।
तथैव तस्य तद्देयं न देयं प्रत्यनन्तरे ॥

स्थापकेतरस्य यस्य स्थापितद्रव्ये स्वाम्यमस्ति सः इहप्रत्य नन्तर इत्युच्यते । स्थापकं प्रत्याह मनुः—

यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः ।
स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः ॥

दायो दानं स्थापनमिति यावत् । ग्रहो ग्रहणम् । एतदुक्तं भवति—ससाक्षिकत्वेन स्थापितं साक्षिसमक्षं ग्रहीतव्यम् । रहसि स्थापितं रहस्येव ग्राह्यमिति । कदा ग्राह्यमित्यपेक्षिते कात्यायनः—

ग्राह्यस्तूपनिधिः काले कालहीनं तु वर्जयेत् ।
कालहीनं ददद्दण्डं द्विगुणं च प्रदाप्यते ॥

यद्भयादुपनिधिरन्यहस्ते न्यस्तः, तद्भयातीते काले स ग्राह्य इत्यर्थः । तद्भयातीते कालेऽपि स्वयमेव नायाचितमर्पणीयं 'सकृद्याचितमर्पयेत्' इति बृहस्पतिस्मरणात् । तद्भये वर्तमाने स्वयमयाचितं दीयमानं कालहीनं तस्य दानं दौष्ट्येनैवेति ददतो दण्डो युक्तः । स्थापकस्य दौष्ट्ये दण्डमाह मनुः—

निक्षेपो यः कृतो येन यावांश्च कुलसंनिधौ ।
तावानेव स विज्ञेयो विब्रुवन् दण्डमर्हति ॥

कुलं साक्षिभूतम् । एतदुक्तं भवति—ससाक्षिके साक्षिवचनं विरुद्धं ब्रुवन् दण्ड्य इति । असाक्षिके त्वाह बृहस्पतिः—

रहो दत्ते निधौ यत्र विसंवादः प्रजायते ।

विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥

निधावुपनिधौ । उभयोर्मध्य एकस्येत्यर्थः । उभयोर्ग्रहणं 'रुच्या वाऽन्यतरः कुर्यात्' इत्ययमेव पक्षो यथा स्यादिति । पार्थिवं प्रत्याह मनुः—

निक्षेपस्यापहर्तारमनिक्षेप्तारमेव च ।
सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः ॥
यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
तावुभौ चोरवच्छास्यौ प्रदाप्यौ तत्समं दमम् ॥

इति । चोरवच्छास्यौ चोरदण्डेन दण्ड्यौ । चोरदण्डश्च प्रथमसाहस इत्युक्तं मनुवृत्तौ । प्राड्विवाकं च प्रत्याह स एव—

तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि ।
द्वयं निगृह्य दाप्यं स्यादिति धर्मस्य धारणा ॥
निक्षिप्तस्य धनस्यैवं प्रीत्योपनिहितस्य च ।
राजा विनिर्णयं कुर्यादक्षिण्वन् न्यासधारणम् ॥

इति । तेषां अभियोक्तृणाम् । तद्धिरण्यं तन्मूल्यहिरण्यमभियोक्तृभ्यो दाप्यम् । द्वयामपि द्विगुणं निगृह्य दण्डयित्वा । अक्षिण्वन् अताडयन् ॥

इति स्मृतिचन्द्रिकायां ग्रहीतृस्थापकादिकृत्यविषयाणि.

स्थापकेतरस्य यस्य स्थापितद्रव्ये स्वाम्यमस्ति सः इहप्रत्य नन्तर इत्युच्यते । स्थापकं प्रत्याह मनुः—

यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः ।
स तथैव ग्रहीतव्यो यथा दायस्तथा ग्रहः ॥

दायो दानं स्थापनमिति यावत् । ग्रहो ग्रहणम् । एतदुक्तं भवति—ससाक्षिकत्वेन स्थापितं साक्षिसमक्षं ग्रहीतव्यम् । रहसि स्थापितं रहस्येव ग्राह्यमिति । कदा ग्राह्यमित्यपेक्षिते कात्यायनः—

ग्राह्यस्तूपनिधिः काले कालहीनं तु वर्जयेत् ।
कालहीनं ददद्दण्डं द्विगुणं च प्रदाप्यते ॥

यद्भयादुपनिधिरन्यहस्ते न्यस्तः, तद्भयातीते काले स ग्राह्य इत्यर्थः । तद्भयातीते कालेऽपि स्वयमेव नायाचितमर्पणीयं 'सकृद्याचितमर्पयेत्' इति बृहस्पतिस्मरणात् । तद्भये वर्तमाने स्वयमयाचितं दीयमानं कालहीनं तस्य दानं दौष्ट्येनैवेति ददतो दण्डो युक्तः । स्थापकस्य दौष्ट्ये दण्डमाह मनुः—

निक्षेपो यः कृतो येन यावांश्च कुलसंनिधौ ।
तावानेव स विज्ञेयो विब्रुवन् दण्डमर्हति ॥

कुलं साक्षिभूतम् । एतदुक्तं भवति—ससाक्षिके साक्षिवचनं विरुद्धं ब्रुवन् दण्ड्य इति । असाक्षिके त्वाह बृहस्पतिः—

रहो दत्ते निधौ यत्र विसंवादः प्रजायते ।

विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥

निधावुपनिधौ । उभयोर्मध्य एकस्येत्यर्थः । उभयोर्ग्रहणं 'रुच्या वाऽन्यतरः कुर्यात्' इत्ययमेव पक्षो यथा स्यादिति । पार्थिवं प्रत्याह मनुः—

निक्षेपस्यापहर्तारमनिक्षेप्तारमेव च ।
सर्वैरुपायैरन्विच्छेच्छपथैश्चैव वैदिकैः ॥
यो निक्षेपं नार्पयति यश्चानिक्षिप्य याचते ।
तावुभौ चोरवच्छास्यौ प्रदाप्यौ तत्समं दमम् ॥

इति । चोरवच्छास्यौ चोरदण्डेन दण्ड्यौ । चोरदण्डश्च प्रथमसाहस इत्युक्तं मनुवृत्तौ । प्राड्विवाकं च प्रत्याह स एव—

तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि ।
द्वयं निगृह्य दाप्यं स्यादिति धर्मस्य धारणा ॥
निक्षिप्तस्य धनस्यैवं प्रीत्योपनिहितस्य च ।
राजा विनिर्णयं कुर्यादक्षिण्वन् न्यासधारणम् ॥

इति । तेषां अभियोक्तॄणाम् । तद्धिरण्यं तन्मूल्यहिरण्यमभियोक्तृभ्यो दाप्यम् । द्वयामपि द्विगुणं निगृह्य दण्डयित्वा । अक्षिण्वन् अताडयन् ॥

इति स्मृतिचन्द्रिकायां ग्रहीतृस्थापकादिकृत्यविषयाणि.

---

### अथ प्रत्यनन्तरे प्रत्यर्पणप्रतिषेधस्यापवादः.

तत्र मनुः—

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे ।
न स राज्ञाऽभियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः ॥

प्राचीने प्रकरणे या प्रत्यनन्तरपदस्य व्याख्या कृता, साऽत्रापि द्रष्टव्या । अनेन वचनेन वचोभङ्ग्या स्थापके मृते प्रत्यनन्तरे प्रत्यर्पणं ग्राहकेण कार्यमित्युक्तम् । अयाचितेनार्पणमप्यत्र भावदोषपरिहारार्थत्वात् भूषणं न तु दूषणमित्यभिसन्धायोक्तं 'स्वयमेव तु यो दद्यात्' इति । प्रत्यनन्तरेऽपि कालहीनमयाचितेन न देयं, भावदोषापत्तेः । प्रत्यनन्तरबहुत्वे तु नैकस्मिन् प्रत्यनन्तरे देयं सर्वप्रत्यनन्तरसान्निधौ देयं, तथा सति निक्षेप्तुः बन्धुभिः प्रत्यनन्तरभूतैरभियोक्तव्यो न भवति । यदा तु स्वयमेव न ददाति तदा प्रत्यनन्तरं प्रत्याह स एव—

अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्वकम् ।
विचार्य तस्य वा वृत्तं साम्नैव परिसाधयेत् ॥

अन्वेषणं निक्षेपादिरस्मिञ्जनेऽस्तीत्यवधारणम् । स्वतः तदच्छलेनैव भूतानुसारेणैव कार्यं न छलानुसारेण । परिसाधनं ग्राहकसकाशादादानम् । वृत्तग्राहकाविषये साम्नैव प्रियपूर्ववचसैव कार्यं न भयदर्शनादिना । वृत्तं विचार्य दुर्वृत्तग्राहकाविषये तु छलानुसारेण वाऽन्विच्छेत् । भयदर्शनाद्युपायान्तरेण छलादिना

वा ऋणादानप्रकरणोक्तेन परिसाधयेदित्यस्मादेव वचनादवगम्यते यथा सद्वृत्ते छलादिप्रयोगवच्छपथेन शोधनस्याप्यनुचितत्वम् । ग्राहके तु मृते पश्चाद्यदधीनमुपनिध्यादि जातं तेनैव स्थापके प्रत्यनन्तरे वा प्रत्यर्पणीयमित्येतदातिस्थूलत्वात् स्मृतिकारैरुपेक्षितमित्यस्मरणकारणमुन्नेयम् । यदि ग्राहकवदसौ स्वयं न ददाति तदा स्थापकः प्रत्यनन्तरो वा पूर्वोक्तमार्गेणान्विच्छेत् । संप्रतिपन्नं पूर्वोक्तप्रकारेण परिसाधयेत् । एतदपि स्मृतिकारैरनुक्तमूहेनापि ज्ञातुं शक्यत्वात् ॥

इति स्मृतिचन्द्रिकायां प्रत्यनन्तरे प्रत्यर्पणस्य प्रतिषेधापवादः.

---

अथ याचितान्वाहितविषयाणि कानिचिद्वचनानि लिख्यन्ते. तत्र याज्ञवल्क्यः—

याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः ।

इति । याचितं उत्सवादिषु परकीयमलङ्काराद्यर्थं याचित्वा स्वसमीपमानीतम् । अन्वाहितं स्वस्मिन् स्थितं परधनमन्यान्तिकस्थतया कृतम् । न्यासनिक्षेपयोस्स्वरूपं निक्षेपादिस्थापनविधिप्रकरणे दर्शितम् । यद्यपि स्मृत्यन्तरे न्यासनिक्षेपयोः स्थापनादिधर्मा उपदिष्टाः, तथाऽप्यस्यां स्मृतौ नोपदिष्टा इत्युपदिष्टोपनिधिधर्माणामतिदेशोऽयं युक्तः । बृहस्पत्यादिनाऽप्यनुपदिष्टधर्मकेष्वेवान्वाहितादिष्वतिदिष्टम्—

अन्त्राहिते याचितके शिल्पन्यासे सबन्धके ।
एष एवोदितो धर्मस्तथा च शरणागते ॥

इति । शिल्पिन्यासे कङ्कणादिकरणाय स्वर्णकारादिहस्तन्यस्तहिरण्यादावित्यर्थः । अनेनाप्रतियाचितस्य शिल्पिन्यासस्य दैवादिना नाशे स्वर्णकारप्रभृतिर्न दाप्य इत्यादिधर्मोऽतिदिष्ट इति मन्तव्यम् । अत्र क्वचिदपवादमाह कात्यायनः—

यैश्च संस्क्रियते न्यासो दिवसैः परिनिश्चितैः ।
तदूर्ध्वं स्थापयेच्छिल्पी दाप्यो दैवहतेऽपि तम् ॥

यत्र जीर्णान्येव वस्त्रादीनि नैर्मल्याद्यर्थं रजकादौ न्यस्तानि नूतनान्येव वा, तन्नाशश्च शिल्पिकृताभिघाताद्युपेतजीर्णत्वादिदोषादभिघातादिमात्राद्वा जातः, तत्र 'यस्य दोषेण' इत्यादिनोक्तसोदयदापनमतिदेशात् प्राप्तमिति वदन्ति । वस्तुतस्तु—जीर्णादौ न शिल्पिदोषः, नैर्मल्याद्यर्थत्वादभिघातस्य । नूतनादौ नैवमिति शिल्पी दोषवान् । तेन जीर्णादौ न किञ्चिद्दाप्यः, नूतनादौ तु मूल्यमात्रं दाप्यं, नैर्मल्यार्थादभिघातादधिकांशस्यैव दोषत्वेन स्वल्पदोषत्वात् । एतत्सर्वमभिसन्धायाह स एव—

न्यासदोषाद्विनाशस्स्याच्छिल्पिनं तन्न दापयेत् ।
दापयेच्छिल्पिदोषात्तत् संस्कारार्थं यदर्पितम् ॥

शिल्पिदोषादिसत्र विनाशस्स्यादित्यनुषज्यते । यत्र तन्त्वादिकं वस्त्राद्यर्थं कुविन्दादौ न्यस्तं खण्डपटादिदशायां नष्टं परिपू-

र्णदशायां वा कुविन्दादिना दीयमानं स्वामिना न गृहीतं नष्टं च, तत्राप्याह स एव—

स्वल्पेनापि च यत्कर्म नष्टं चेद्भृतकस्य तत् ।
पर्याप्तं दित्सतस्तस्य विनश्येत्तदगृह्णतः ॥

यत्कर्म वस्त्रनिर्माणादि स्वल्पेनापि प्रान्तवानादिना विकलं नष्टं चेत् भृतकस्य शिल्पिन एव नष्टं पुनर्वेतनग्रहणमन्तरेणैव वानादिक्रियां कुर्यादित्यर्थः । यदि स्वामी पुनस्तन्त्वादिकं नार्पयति तदा पुनर्वानाद्यभावेऽपि वेतनं शिल्पिने दत्तं न लभते। पर्याप्तं परिपूर्णं वस्त्रादिकं दित्सतो भृतस्य यस्स्वामी तस्य दीयमानमगृह्णतस्तत्पर्याप्तं विनश्येदित्युत्तरार्धस्यार्थः । एवंचात्र भृतको नष्टं न दाप्य इति वचोभङ्ग्या भणितमित्यवगन्तव्यम् । एवं शिल्पिन्यासविषये विशेषमुक्त्वा याचितविषयेऽप्याह स एव—

यदि तत्कार्यमुद्दिश्य कालं परिनियम्य वा ।
याचितोऽर्धकृते तस्मिन्नप्राप्ते न तु दाप्यते ॥

तात्पर्यं तावदुच्यते—

याच्यमानो न दद्याद्वा दाप्यस्तत्सोदयं भवेत् ।

इत्ययं धर्मोऽतिदेशाद्याचितके प्राप्तोऽनेन क्वचित् प्रतिषिध्यते । प्रतिषेधवचनस्यायमर्थः—यत्कार्यं दीर्घकालसाध्यं तत्कार्यमध्ये यदि याचितः यदि वा संवत्सरपर्यन्तं दीयतामित्येवं कालं परिनियम्य याचितः, तस्मिन् कार्यमध्ये परिनियतकालमध्ये

वा प्रतियाच्यमानो याचितकं यो नददाति, असौ न सोदयं दाप्य इति। याचितकमात्रमेवासौ कृते कार्ये परिनियतकालात्यये वा दद्यात्। यदि तदाऽपि न ददाति तदा दैवादितो विनाशे हरणे वा जाते मूल्यं देयमित्याह स एव—

प्राप्तकाले कृते कार्ये न दद्याद्याचितोपि सन्।
तस्मिन्नष्टे हृते वाऽपि ग्रहीता मूल्यमाहरेत्॥

ननु—

याचितानन्तरं नाशे दैवराजकृतेऽपि सः।
ग्रहीता प्रतिदाप्यस्स्यात्.......................॥

इत्यादिस्मृत्या मूल्यमात्रदापनमुपदिष्टमिहातिदेशेनैव प्राप्तं, किमर्थमिह पुनरुपदिश्यते? उच्यते—स्मृत्यन्तराद्दण्डोप्येवं प्राप्तस्तन्निवृत्त्यर्थमिहाप्युक्तम्। क्वचिदप्राप्तेऽपि काले कार्यमध्येऽपि याचितकं दाप्य इत्याह स एव—

अथ कार्यविपत्तिस्तु तस्यैव स्वामिनो भवेत्।
अप्राप्ते वै स काले तु दाप्यस्त्वर्धकृतेऽपि तत्॥

याचितकस्वामिकार्यविपत्तिरप्रतिदाने चेन्मध्येऽपि प्रतियाचितो याचितकं दाप्य इत्यर्थः। यदि मध्ये न ददाति तदाऽत्र सोदयं दाप्यः। आतिदेशिकस्यापि प्रतिषेधकोपदेशाभावे ग्राह्यत्वात्। स्थापकपार्थिवयोः कृत्यमतिदेशाद्याचितके प्राप्तमपि सामाद्युपायप्रयोगनिवृत्त्यर्थमाह स एव—

यो याचितकमादाय न दद्यात्प्रतियाचितः ।
स निगृह्य बलाद्दाप्यो दण्ड्यश्च न ददाति यः ॥

निगृह्य बलादुपवासादि कारयित्वा स्थापकेन दाप्यो दानोन्मुखं कृत्वा ग्राह्यः । एवमपि यदि न ददाति, स राज्ञा दाप्यो दण्ड्यश्चेत्यर्थः । स्थापके मृते स्वयमेव प्रतियाचनाभावेऽपि भावदोषपरिहारार्थं प्रसनन्तरे दद्यादित्येतद्याचितकेऽप्यतिदिष्टधर्मवर्गान्तर्गतत्वेन प्राप्तमप्यवश्यानुष्ठेयं न भवतीत्याह बृहस्पतिः—

याचितं स्वाम्यनुज्ञातं प्रददन्नापराध्नुयात् ।

इति । याचनादूर्ध्वमपीति शेषः ॥

इति स्मृतिचन्द्रिकायां याचितान्वाहितविषयाणि समाप्तं च निक्षेपाख्यपदस्य विधिवितानम्

---

अथ सम्भूयसमुत्थानाख्यस्य पदस्य विधिरुच्यते.

तत्र बृहस्पतिः—

कुलीनदक्षानलसैः प्राज्ञैर्नाणकवेदिभिः ।
आयव्ययज्ञैश्शुचिभिः शूरैः कुर्यात्सह क्रियाम् ॥

वाणिज्यकृषिशिल्पक्रतुसङ्गीतस्तैन्यात्मिकामित्यर्थः । तत्र वाणिज्यक्रिया नाणकवेदिभिरायव्ययज्ञैस्सम्भूय कार्या, कृषिक्रिया त्वायव्ययज्ञैः, शिल्पक्रिया सङ्गीतक्रिया च प्राज्ञैः, क्रतुक्रिया कुलीनैः प्राज्ञश्शुचिभिः, स्तैन्यक्रिया शूरैः, वाणिज्यादिष-

द्विधाऽपि क्रिया दक्षैः अनलसैश्चेत्यवगन्तव्यम् । दक्षानलसग्रहणं भाग्याधिकव्याध्यपीडितानां प्रदर्शनार्थम् । नाणकवेदिग्रहणं चाढ्यानाम् । अत एवादक्षालसप्रतिषेधं कुर्वन् मन्दभाग्यादीनपि स एव प्रतिषेधयति—

अशक्तालसरोगार्तमन्दभाग्यनिराश्रयैः ।
वाणिज्याद्यास्सहैतैस्तु न कर्तव्या बुधैः क्रियाः ॥

इति । आश्रयो मूलधनम् । तथाच नारदः—

फलहेतोरुपायेन कर्म सम्भूय कुर्वताम् ।
आधारभूतः प्रक्षेप उत्तिष्ठेरंस्ततोंऽशतः ॥

आधारभूत आश्रयभूतः । प्रक्षेपो मूलधनप्रक्षेपः । ततो मूलधनप्रक्षेपानुसारादुत्तिष्ठेरन् लाभभाजो भवेयुरित्यर्थः । हान्यादिकमप्येवमेवेत्याह स एव—

समोऽतिरिक्तो हीनो वा यत्रांशो यस्य यादृशः ।
क्षयव्ययौ तथा वृद्धिः तत्र तस्य तथाविधाः ॥

क्षयव्ययौ वृद्धिरित्येते प्रक्षिप्तांशानुसारेण वेदितव्या इत्यर्थः । बृहस्पतिरपि—

प्रयोगं कुर्वते ये तु हेमधान्यरसादिना ।
समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः ॥

लाभवदेव कर्मव्ययावपीत्याह स एव—

समो न्यूनाधिको वांऽशो येन क्षिप्तस्तथैव सः ।
व्ययं दद्यात्कर्म कुर्याल्लाभं गृह्णीत चैव हि ॥

याज्ञवल्क्योऽपि—

समवायेन वणिजां लाभार्थं कर्म कुर्वताम् ।
लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ ॥

समवायेन मूल्यद्रव्यसंसर्गेण यथाद्रव्यं संसृष्टद्रव्यवर्तितत्तदंशभूतद्रव्यानुसारेण लाभालाभौ ज्ञेयाविसर्थः । संविदा समयेन कृतौ कल्पितौ, पुरुषानुसारेण कल्पितौ लाभालाभौ ज्ञेयाविति यावत् । व्यासस्तु सम्भूयकारिणां कार्यमाह—

समक्षमसमक्षं वाऽवञ्चयन्तः परस्परम् ।
नानापण्यानुसाराते प्रकुर्युः क्रयविक्रयौ ॥
अगोपयन्तो भाण्डानि शुल्कं दद्युश्च तेऽध्वनि ।
अन्यथा द्विगुणं दाप्याश्शुल्कस्थानाद्बहिस्स्थिताः ॥

इति । नारदोऽपि—

भाण्डपिण्डव्ययोद्धारभारसारान्ववेक्षणम् ।
कुर्युस्तेऽव्यभिचारेण समये स्वे व्यवस्थिताः ॥

अथवा सर्वानुज्ञया सर्वेषां कार्यमेक एव कुर्यात् । तथाच बृहस्पतिः—

बहूनां संमतो यस्तु दद्यादेको धनं रहः ।
करणं कारयेद्वाऽपि सर्वैरेव कृतं भवेत् ॥

करणं लेख्यादिकम् । सम्भूयकारिणां मिथो विवादेऽप्याह स एव—

परीक्षकास्साक्षिणश्च त एवोक्ताः परस्परम् ।
संदिग्धेऽर्थे वञ्चनायां नो चेद्विद्वेषसंयुताः ॥

यदा तु विद्वेषसंयुक्तास्तदाऽप्याह स एव—

यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैस्स विशोध्यस्स्यात्सर्ववादेऽप्ययं विधिः ॥

विशोध्यः सभ्यैरिति शेषः । सर्ववादेऽपि वञ्चनेतरविवादेऽपीत्यर्थः । वञ्चकत्वे सिद्धे सति किं कार्यमित्यपेक्षिते याज्ञवल्क्यः— 'जिह्मं त्यजेयुर्निर्लाभम्' इति । जिह्मं वञ्चकं निर्लाभं लाभहीनं कृत्वा त्यजेयुः । बहिस्स्थिताः इतरे सम्भूयकारिण इत्यर्थः । सम्भूयकारिष्वसमर्थं प्रत्याह स एव—'अशक्तोऽन्येन कारयेत्' इति । स्वांशानुरूपं कर्मेति शेषः । बृहस्पतिस्तु सर्वान् प्रत्याह—

क्षयहानिर्यदा तत्र दैवराजकृता भवेत् ।
सर्वेषामेव सा प्रोक्ता कल्पनीया यथांऽशतः ॥

सम्भूयकारिभिः सर्वैरिति शेषः । क्षयायैव हानिः उपचयार्थव्यतिरिक्ता हानिरिति यावत् । दैवराजग्रहणं प्रातिस्विकदोषेतरनिमित्तोपलक्षणार्थम् । प्रातिस्विकदोषाद्धानौ त्वाह स एव—

अनिर्दिष्टो वार्यमाणः प्रमादाद्यस्तु नाशयेत् ।
तेनैव तद्भवेद्देयं सर्वेषां समवायिनाम् ॥

अनिर्दिष्टः समवायानननुज्ञातः स्वबुद्ध्यैव कुर्वन् समवायिद्रव्यं यो नाशयेत्, निवार्यमाणो वा समवायिभिः इत्याद्यपादार्थः। प्रमादः प्रज्ञाहीनता सा प्रातिस्विकदोषोपलक्षणार्थतयाऽत्रोक्ता। तेन कामक्रोधलोभाद्यपि समुत्थाननाशनिमित्तभूतं सर्वमेवात्रोक्तमिति मन्तव्यम्। यस्त्वित्यादि वचनशेषं सुगमम्। पालनेऽप्याह स एव—

देवराजभयाद्यस्तु स्वशक्त्या परिपालयेत्।
तस्यांशं दशमं दत्वा गृह्णीयस्तेऽन्ततः परे॥

तस्य तस्मै दशममंशं दद्युः। ते समवायिनः। पालयेत् समवायिद्रव्यमिति शेषः। तथाच कात्यायनः—

चोरतस्सलिलादग्नेर्द्रव्यं यस्तु समाहरेत्।
तस्यांशो दशमो देयः सर्ववादेष्वयं विधिः॥

समाहरेत् स्वशक्त्या प्रत्याहरेदित्यर्थः। असमवायिद्रव्यपालनेऽप्ययं विधिर्विज्ञेय इत्यन्त्यपादार्थः। अधमर्णादिभ्यो दत्ते यस्तु प्रतियाचनादिना समवायिद्रव्यं समवायिभिस्सह न साधयति तस्य लाभहानिरित्याह बृहस्पतिः—

समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत्।
न याचते च यः कश्चिल्लाभात्स परिहीयते॥

याचनग्रहणमंशानुसारेण करणीयकर्मणः प्रदर्शनार्थम्। तेन कर्मान्तराकरणेऽप्यकरणानुसारेण लाभहानिरित्यस्मादेव वचनात् प्रतिपत्तव्यम्॥

इति स्मृतिचन्द्रिकायां सम्भूयकारिणां वणिजां विषयः.

---

अथ सम्भूयकारिणां कृषिकाणां विधयः.

तत्र बृहस्पतिः—

वाह्यकर्षकबीजाद्यैः क्षेत्रोपकरणेन च ।
ये समानास्तु तैस्सार्धं कृषिः कार्या विजानता ॥

वाह्या लाङ्गलादिवाहकाः बलीवर्दाः । कर्षकाः कृष्यर्थं स्वीकृताः पुरुषाः । आद्यशब्देन कृष्यर्थस्य धनस्य ग्रहणम् । वाह्येषु वर्जनीयानाह स एव—

कृशातिवृद्धं क्षुद्रं च रोगिणं प्रपलायिनम् ।
काणं खञ्जं च नादद्याद्वाह्यं प्राज्ञः कृषीवलः ॥

काण एकाक्षः । खञ्जो हीनचरणः । क्षेत्रेषु वर्जनीयमाह स एव—

पर्वते नगराभ्याशे तथा राजपथस्य च ।
ऊषरं मूषिकाव्याप्तं क्षेत्रं यत्नेन वर्जयेत् ॥

पर्वते पर्वतान्ते । नगराभ्याशे नगरसमीपे । राजपथस्य च समीप इति शेषः । एतदुक्तं भवति—पर्वताद्यासन्नं, अनासन्नमप्यूषरं मूषिकाव्याप्तं च क्षेत्रं वर्जयेदिति । लाभविभागादिकं यत्सम्भूयवाणिज्यकृष्यादिकर्मणामसाधारणं पूर्वस्मिन् प्रकरणे दर्शितं तदप्यत्राप्यनुसन्धेयम् । पूर्वत्र दर्शितात् प्रातिस्विकदोषाद्दोषान्तरेणाप्येकस्याहानिमाह स एव—

त्राह्यबीजासयाद्यस्य क्षेत्रहानिः प्रजायते ।
तेनैव सा प्रदातव्या सर्वेषां कृपिजीविनाम् ॥

सम्भूयकारिणामिति शेषः । त्राह्यबीजग्रहणं कृषिसाधनानामुपलक्षणार्थमिति मन्तव्यम् ॥

इति स्मृतिचन्द्रिकायां सम्भूयकारिणां कृषिकाणां विधयः.

---

## अथ सम्भूयकारिणां शिल्पिनां विधयः.

शिल्पिस्वरूपनिरूपणार्थमाह बृहस्पतिः—

हिरण्यकुप्यसूत्राणां काष्ठपाषाणचर्मणाम् ।
संस्कर्ता च कलाभिज्ञश्शिल्पी प्रोक्तो मनीषिभिः ॥

कुप्यं हेमरूप्यव्यतिरिक्तं त्रपुसीसादिकम् । हेमरूप्ये प्रकृत्य 'ताभ्यां यदन्यत्तत्कुप्यम्' इत्यमरसिंहेनोक्तम् । शिल्पिनां लाभस्य विभागमाह स एव—

हेमकारादयो यत्र शिल्पं सम्भूय कुर्वते ।
कर्मानुरूपं निर्वेशं लभेरंस्ते यथांऽशतः ॥

निर्वेशो भृतिः । कात्यायनोपि—

शिक्षकाभिज्ञकुशला आचार्यश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम् ॥

काष्ठादिमयहर्म्यादिनिर्मातॄणां मुख्यस्य भागमाह बृहस्पतिः—

हर्म्यं देवगृहं चापि चार्मिकोपस्कराणि च ।
सम्भूय कुर्वतां चैषां प्रमुखो द्व्यंशमर्हति ॥

अवञ्चकत्वेन कर्मकरणादिधर्मजातं यत्पूर्वतरप्रकरणे दर्शितं तदप्यत्राप्यनुसन्धेयम् ॥

इति स्मृतिचन्द्रिकायां सम्भूयकारिणां शिल्पिनां विधयः.

---

अथ सम्भूयकारिणामृत्विजां विधयः.

तत्र मनुः—

ऋत्विजस्समवेतास्तु यथा सत्रे निमन्त्रिताः ।
कुर्युर्यथार्हतः कर्म गृह्णीयुर्दक्षिणां तथा ॥

अत्र सत्रशब्दो यज्ञमात्रविवक्षया प्रयुक्तो न पुनस्सत्राख्ययज्ञविशेषविवक्षया, तत्र यजमानानामेव कर्तृत्वेन[1] ऋत्विजामसम्भवात् । तेन सोमयागादावनेन वचनेन व्यापारलाभावुक्तौ । तत्रैव लाभविभागाभिधानाथमाह स एव—

सम्भूय स्वानि कर्माणि कुर्वद्भिरिह मानवैः ।
अनेन कर्मयोगेन कर्तव्यांऽशप्रकल्पना ॥

स्वानि कर्माणि याजमानव्यतिरिक्तानीति शेषः । अंशप्रकल्पना च 'तस्य द्वादशशतं दक्षिणा' इत्येवं क्रतुसम्बन्धिमात्रतया विहितायां दक्षिणायामेव न तु 'रथमध्वर्यवे, निविदां वरमश्वं होत्रे, ब्रह्मणेऽश्वमाधाने, सुब्रह्मण्याय सोमक्रये शक-

---

[1] ऋत्विक्त्वेन.

टम्' इत्येवमृत्विग्विशेषसम्बन्धित्वेन विहितायां, श्रुतिविरोधापत्तेः। अत एवोक्तं तेनैव—

रथं हरेत चाध्वर्युः ब्रह्माऽऽधाने च वाजिनम्।
होता निविद्वरं चाश्वमुद्गाता चाप्यनः क्रये॥

ऋत्विग्विशेषोल्लेखेन विहितांशं स एव गृह्णीयादित्यर्थः। पूर्णाहुतौ हुतायां वरं दद्यादित्यङ्गकर्मोल्लेखेन या दक्षिणा विहिताः, ताः प्रत्याह स एव—

यस्य कर्मणि यास्तु स्युरुक्ताः प्रत्यङ्गदक्षिणाः।
स एव ता आददीत भजेरन् सर्व एव वा॥

यस्य कर्मणि यत्कर्तृके कर्मणि या दक्षिणा उक्ताः स एव तत्कर्मणि ता आददीतेत्यर्थः। एवंच पूर्णाहुतावध्वर्युर्वरं गृह्णीयात्, तत्र तस्य कर्तृत्वात्। 'भजेरन् सर्व एव वा' इति पक्षान्तरमनेककर्तृकाङ्गदक्षिणाविषयं, तेन स्तोत्रदक्षिणाः स्तोत्रकारिण एव छन्दोगा भजेरन्। प्रधानदक्षिणास्वंशप्रकल्पनायाः प्रकारमाह स एव—

सर्वेषामर्धिनो मुख्यास्तदर्धेनार्धिनोऽपरे।
तृतीयिनस्तृतीयांशाश्चतुर्थांशास्तु पादिनः॥

मुख्या गणाद्या ब्रह्मादयः। अपरे गणिनां द्वितीयाः प्रतिप्रस्थात्रादयः। तृतीयिनः गणिनां तृतीयाः प्रतिहर्त्रादयः। पादिनो गणिनां चतुर्थाः ग्रावस्तुदादयः प्रत्येतव्याः। ततश्चायमर्थः—सर्वेषामृत्विजां मध्ये अर्धिनो विहितदक्षिणार्धवन्तो

मुख्याः । अर्धशब्दोऽत्र किञ्चिन्नयूनदक्षिणार्धे वर्तते । तदर्धेन किञ्चिन्नयूनदक्षिणार्धस्यार्धेनापरे गणिनो द्वितीयाः अर्धिनोऽर्धवन्तः । तृतीयिनस्तृतीयांशाः किञ्चिन्नयूनदक्षिणार्धस्य तृतीयांशभागिनः । पादिनस्तु किञ्चिन्न्यूनदक्षिणार्धस्य चतुर्थांशभागिनः । एवंच शतदक्षिणापक्षे चतुर्णां मुख्यानामष्टचत्वारिंशत् गावो भवन्ति, तदनन्तराणां चतुर्णां चतुर्विंशतिर्गावः, तदनन्तराणां चतुर्णां षोडश गावः, तदनन्तराणां द्वादश गाव इति मन्तव्यम् । मुख्यानां चतुर्णां मिथो विभागः समत्वेनैव । एवमेव तदनन्तरादीनामपि मिथो विभागः । तथाच कात्यायनसूत्रं—‘ द्वादशद्वादशाद्येभ्यः, षट्षट् द्वितीयेभ्यः, चतस्रश्चतस्रस्तृतीयेभ्यः, तिस्रस्तिस्र इतरेभ्यः ’ इति । पशुबन्धादौ विषमविभागानभिधानात् समत्वेनैव विभागो ज्ञेयः । स्वकीयकर्मकलापांशकर्तुः कृतानुसारेण भागो देय इत्याह मनुः—

ऋत्विग्यदि वृतो यज्ञे स्वकर्म परिभावयेत् ॥
तस्य कर्मानुरूपेण देयोंऽशस्सह कर्तृभिः ॥

कर्तृभिः सम्भूयकारिभिरित्यर्थः । यद्वा कर्तृभिस्सह देयो दक्षिणादानकाले देयो यजमानेनेत्यर्थः । अथवा कर्मणि ऋत्विक्परित्यक्तांशकर्तृभिस्सह देय इत्यर्थः । एतदुक्तं भवति—स्वकर्मैकदेशकर्तुर्या दक्षिणा तां तस्य चैकदेशान्तरकर्तुश्च दक्षिणाकाले सम्भूयकारिसङ्घो यजमानो वा तत्कृतकर्मानुसा-

रेणार्पयेदिति । अस्य क्वचिदपवादमाह स एव—

दक्षिणासु च दत्तासु स्वकर्म परिभावयेत् ।
कृत्स्नमेव लभेतांशमन्येनैव च कारयेत् ॥

अन्येन स्वगणवर्तिनां मध्ये प्रत्यासन्नेन । येनकेनचिदन्येन वा कार्यमाणे त्वाध्वर्यवादिसमाख्याबाधापत्तेः । एवमृत्विजि मृतेऽप्यूह्यम् । अत एव नारदः—

ऋत्विजां व्यसनेऽप्येवमन्यस्तत्कर्म निस्तरेत् ।
लभेत दक्षिणाभागं स तस्मात्संप्रकल्पितम् ॥

अन्यशब्दार्थः पूर्ववदिहापि द्रष्टव्यः । यत्तु बृहस्पतिनोक्तं—

एवं क्रियाप्रवृत्तानां यदा कश्चिद्विपद्यते ।
तद्बन्धुना क्रिया कार्या सर्वैर्वा सहकारिभिः ॥

इति । यच्च शङ्खेन—'तत्र चेदनुप्राप्ते सवनमृत्विङ्म्रियेत तस्य गोत्रोऽथ शिष्यो वा तत्कार्यमनुपूरयेदथ चेदबान्धवस्ततोऽन्यमृत्विजं वृणुयात्' इति, तत्सर्वमवान्तरगणशून्यऋत्विक्कर्तृकयज्ञविषयमिति मन्तव्यम् । जीवत्येव ऋत्विजि यजमानेन ऋत्विगन्तरकरणे कस्य दक्षिणेति विवादापनोदार्थमाह स एव—'अथ ऋत्विजि वृते पश्चादन्यं वृणुयात् पूर्वाहूतस्यैव दक्षिणा पश्चादाहूतः किञ्चिल्लभेत' इति ॥

इति स्मृतिचन्द्रिकायां सम्भूयकारिणां
ऋत्विजां विधयः

———

अथ सम्भूयकारिणां नर्तकादीनां स्तेनादीनां च विधयः.

तत्र बृहस्पतिः—

नर्तकानामेष एव धर्मस्सद्भिरुदाहृतः ।
तालज्ञो लभतेऽध्यर्धं गायनास्तु समांशिनः ॥

एष धर्मः शिल्पिमुख्यस्योक्तो धर्मः । तेनायमर्थः—'प्रमुखो द्व्यंशमर्हति' इति योऽयं सम्भूय हर्म्यादिकं कुर्वतां शिल्पिनां मुख्यस्योक्तः स एव धर्मो द्व्यंशभागित्वरूपो नर्तकादीनां सम्भूय नृत्तादिकं कुर्वतां मुख्यस्य सद्भिरुदाहृत इति । अध्यर्धं अर्धाधिकं भागं तालज्ञो लभते । स्तेनानपि प्रत्याह स एव—

स्वाम्याज्ञया तु यच्चोरैः परदेशात्समाहृतम् ।
राज्ञे दत्वा तु षड्भागं भजेयुस्ते यथांऽशतः ॥
चतुरोंशान् भजेन्मुख्यः शूरस्त्र्यंशमवाप्नुयात् ।
समर्थस्तु हरेद्द्व्यंशं शेषास्त्वन्ये समांशिनः ॥

परदेशात् वैरिदेशादित्यर्थः । प्रबलतरवैरिदेशादाहृतविषयमेतत् । दुर्बलवैरिदेशाहृतविषये त्वाह कात्यायनः—

परराष्ट्राद्धनं यत्स्याच्चोरैस्स्वाम्याज्ञया हृतम् ।
राज्ञो दशांशमुद्धृत्य विभजेरन्यथाविधि ॥
चोराणां मुख्यभूतस्तु चतुरोंशांस्ततो हरेत् ।
शूरोंऽशांस्त्रीन् समर्थो द्वौ शेषास्त्वेकैकमेव च ॥

समर्थः शक्तः। एतेषां हानिरप्येवमेवेत्याह स एव—

तेषां चेत्प्रसृतानां यो ग्रहणं समवाप्नुयात्।
तन्मोक्षणार्थं यद्दत्तं वहेयुस्ते यथांशतः॥

ननु सम्भूयकारिणां समयानुसारत एवांशकल्पनया लाभहान्योर्विभागो भविष्यतीति व्यर्था विभागविधय इत्याशङ्क्याह स एव॥

वणिजां कर्षकाणां च चोराणां शिल्पिनां तथा।
अनियम्यांशकर्तॄणां सर्वेषामेष निर्णयः॥

लाभहान्योस्समयेन प्रतिपुरुषमंशमनियम्य वाणिज्यादिकर्तॄणामित्यर्थः॥

इति स्मृतिचन्द्रिकायां सम्भूयकारिणां नर्तकादीनां स्तेनादीनां च विधयः

समाप्तं च सम्भूयसमुत्थानाख्यपदस्य विधिवितानम्॥

---

अथ दत्ताप्रदानिकाख्यस्य पदस्य विधिरुच्यते.

तत्र बृहस्पतिः—

एषाऽखिलेनाभिहिता सम्भूयोत्थाननिष्कृतिः।
अदेयदेयदत्तानामदत्तस्य च कथ्यते॥

अदेयादीनां स्वरूपमधुना कथ्यत इत्यर्थः। तत्र तावददेयस्य स्वरूपभेदौ कथयति—

सामान्यं पुत्रदाराधिसर्वस्वन्यासयाचितम् ।
प्रतिश्रुतं तथाऽन्यस्य न देयं त्वष्टधा स्मृतम् ॥

सामान्यं स्वमनेकस्वामिकं रथ्याद्यत्र विवक्षितं, न त्वविभक्तकुटुम्बस्वामिकं कनकादिकं, तस्य देयत्वेन वक्ष्यमाणत्वात्। यद्यपि अनेकस्वामिकत्वेन रथ्यादिकमपि कुटुम्बधनतुल्यं, तथाऽपि स्वतन्त्रानेकस्वामिकत्वाददेयम् । तथाहि—न तावत्स्वाम्यन्तरानुमतिमन्तरेण केनचित्स्वामिना तद्दातुं शक्यते । स्वतन्त्रबहुस्वामिके रथ्यादावनुमतिर्दुर्घटैव । कुटुम्बधने तु स्वतन्त्रकतिपयस्वामिकेऽनुमतिस्सुलभैवेति भेदः । ननु पुत्रदारसर्वस्वेषु पित्रादिस्वामिकेषु दानार्हेषु कथमदेयत्वं, उच्यते—यथा यजमानधनानामपि माषाणां 'अयज्ञिया वै माषाः' इति निषेधश्रुतेरयज्ञियत्वं, तथा पुत्रदारसर्वस्वानि स्वभूतान्यपि 'देयं दारसुतादृते । नान्वये सति सर्वस्वं' इत्यादिदाननिषेधकस्मृतिबलात् अदेयानि । आधिन्यासयाचितकेषु तु अदेयत्वं स्वत्वाभावादिति मन्तव्यम् । अन्यस्मै प्रतिश्रुतं अन्यस्मै वाचा दत्तम् । यद्यपि वाग्दाने स्वत्वं नापैति, तथाऽपि 'नान्वये सति सर्वस्वं यच्चान्यस्मै प्रतिश्रुतम्' इति निषेधस्मृतिबलात् सर्वस्ववददेयं प्रतिश्रुतमपीति मन्तव्यम् । सर्वस्वस्याप्यदेयत्वमविभक्तान्वयद्रव्यसंयुक्तस्यैव, दातुः तस्यैव दाननिषेधात् । तेन स्वसन्तानविहीनस्य स्वसन्तानाय दत्त-

दायस्य वा सर्वस्वं देयम् । नारदेनाप्यदेयत्वमेवमेवान्वाहितादीनामुक्तं—

अन्वाहितं याचितकमाधिस्साधारणं च यत् ।
निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ॥
आपत्स्वापि हि कष्टासु वर्तमानेन देहिना ।
अदेयान्याहुराचार्याः यच्चान्यस्मै प्रतिश्रुतम् ॥

इति । अन्वाहितं अन्यस्मै दातुमर्पितम् । अन्वाहितवत् स्त्रीधनमप्यदेयं, स्वत्वाभावात् । अत एव दक्षः—

सामान्यं याचितं न्यासः आधिर्दाराश्च तद्धनम् ।
अन्वाहितं च निक्षेपः सर्वस्वं चान्वये सति ॥
आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः ।
यो ददाति स मूढात्मा प्रायश्चित्तीयते नरः ॥

इति । मूढात्मा दानानिर्वर्तकसामान्यद्रव्यादौ तन्निर्वर्तकत्वबुद्ध्या प्रवर्तमानत्वात् । प्रायश्चित्तीयते पुत्रदारादिदानेऽतिक्रान्तनिषेधत्वात् । एवंच अत्र प्रतिग्रहीताऽप्यसाधुरेव, अयुक्तकारित्वात् । अत एवोभयोरपि दण्डमाह नारदः—

गृह्णात्यदत्तं यो मोहाद्यश्चादेयं प्रयच्छति ।
दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षिता ॥

अदत्तग्रहणमदेयस्याप्युपलक्षणार्थम् । तेनादेयप्रतिग्रहीतुरदत्त-

प्रतिग्रहीतुश्च दण्डोऽनेन वचनेनोक्त इति मन्तव्यम् । गृहीतस्य च परावर्तनमपि महीक्षिता कार्यमित्यदत्तादेयग्रहणाद्गम्यते, अदत्तेनादेयेन च दानासिद्ध्यभावात् परस्वत्वानुत्पत्तेः ॥

इति स्मृतिचन्द्रिकायामदेयविषयाणि.

---

## अथ देयविषयाणि.

अत्र नारदः—

कुटुम्बभरणाद्द्रव्यं यत्किञ्चिदतिरिच्यते ।
तद्देयमुपहत्यान्यं ददद्दोषमवाप्नुयात् ॥

अन्यमुपहत्य भर्तव्यकुटुम्बमुपरुध्येत्यर्थः । उपरोधश्च निस्स्वतया भोजनाच्छादनोच्छेदननिबन्धनोऽत्राभिमतो न तु ताम्बूलादिभोगसाधनवैकल्यनिबन्धनः । यदाह बृहस्पतिः—

कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते ।

इति । भक्तं भोजनम् । वसनं आच्छादनम् । धनधान्यादिद्रव्यमत्र यत्पदेनोक्तम् । उपवनादिद्रव्यं तु प्रत्याह स एव—

सप्तारामगृहक्षेत्राद्यद्यत् क्षेत्रं प्रचीयते ।
पित्र्यं वाऽथ स्वयं प्राप्तं तद्दातव्यं विवक्षितम् ॥

सप्तभ्य आरामादिभ्यो यत्प्रचीयते अधिकं स्यात्तद्दातव्यमिति स्मृतिशास्त्रे विवक्षितमित्यर्थः । यत्तु कात्यायनेनोक्तं—

सर्वस्वगृहवर्जं तु कुटुम्बभरणाधिकम् ।
यद्द्रव्यं तत्स्वकं देयम् ..................॥

इति, तत्सम्पन्नाधिकगृहविषयम् । स्वकं स्वकीयं यथेष्टविनियोगार्हद्रव्यमिति यावत् । कथं तर्हि पुत्रदानं? स्वस्वामिलक्षणसम्बन्धाभावात् केवलं जन्यजनकलक्षण एव तत्र सम्बन्ध इत्याशङ्क्याह वसिष्ठः—'शुक्लशोणितसम्भवः पुरुषः मातापितृनिमित्तकः, तस्य प्रदानविक्रयपरित्यागेषु मातापितरौ प्रभवतः' इति । उत्पादनमात्रेण पितृभ्यामार्जितत्वात् यथेष्टविनियोगार्हत्वं पुत्रस्याप्यस्तीति मत्वा प्रभवत इत्युक्तम् । तेन पुत्रोऽपि देयभूतो भवतीत्यभिप्रायः । यत्तु स्मृत्यन्तरं—

सुतस्य सुतदाराणां वशित्वं चानुशासने ।
विक्रये चैव दाने च वशित्वं न सुते पितुः ॥

इति, यच्च याज्ञवल्क्येनोक्तं—

स्वकुटुम्बाविरोधेन देयं दारसुतादृते ।

इति, तद्वचनद्वयमनेकसुतशून्यविषयम् । तत्र हि पुत्रदाने कृते सन्तानविच्छेदापत्तेः । अत आह वसिष्ठः—'न त्वेकं पुत्रं दद्यात् प्रतिगृह्णीयाद्वा स हि सन्तानाय पूर्वेषाम्' इति । अनेकपुत्रेष्वपि मातापितृवियोगसहनक्षम एव देयः ॥

विक्रयं चैव दानं च न नेयास्स्युरनिच्छवः ।
दाराः पुत्रश्च.... .... .... .... ॥

इति कात्यायनस्मरणात् । यथा दाराः विक्रयं दानं वा भर्त्रा न नेयास्तथा मातृपितृभ्यां पुत्रा अपि मातृपितृवियोगानिच्छवो न नेयास्स्युरित्यर्थः । 'न नेयास्स्युरनिच्छवः' इत्येतदनापद्विषयम् ।

आपत्काले तु कर्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रवर्तन्त इति शास्त्रविनिश्चयः ॥

इति तानेवाधिकृत्य तेनैवानन्तरमुक्तत्वात् । यत्तु नारदेनोक्तं—

निक्षेपः पुत्रदारं च सर्वस्वं चान्वये सति ।
आपत्स्वपि हि कष्टासु वर्तमानेन देहिना ॥
अदेयान्याहुराचार्याः .................... ॥

इति, तदप्येकपुत्रविषयम्, अन्यथा पूर्वोक्तवचनविरोधस्य दुष्परिहरत्वात् । ननु मातुः प्रभुत्वेऽपि पुत्रदानमयुक्तं, अस्वतन्त्रत्वात् । सत्यं—स्वतन्त्रपुरुषानुज्ञया तु युक्तमेव । अत एव वसिष्ठः—'न स्त्री पुत्रं दद्यात् प्रतिगृह्णीयाद्वाऽन्यत्रानुज्ञानात् भर्तुः' इति । किञ्चिद्भर्त्राऽपि भार्यानुज्ञातमेव देयं, किञ्चिन्मुख्येनापि भ्रातृनुज्ञातमेव देयं, किञ्चित्स्वार्जितमपि दासेन स्वाम्यनुज्ञातमेव देयम् । तथाच बृहस्पतिः—

सौदायिकं क्रमायातं शौर्यप्राप्तं च यद्भवेत् ।
स्त्रीज्ञातिस्वाम्यनुज्ञातं दत्तं सिद्धिमवाप्नुयात् ॥

सौदायिकं विवाहलब्धं, तद्यस्या विवाहे लब्धं तया भार्य-

याऽनुज्ञातमेव देयं, पितामहादिक्रमायातं त्वविभक्तधनैर्ज्ञातिभिरनुज्ञातमेव देयं, भृत्येन युद्धलब्धं स्वाम्यनुज्ञातमेव देयमित्यर्थः। स्त्रीज्ञात्यनुज्ञातं सावशेषं देयम्,

वैवाहिके क्रमायाते सर्वदानं न विद्यते।

इति तेनैवोक्तत्वात्। स्वार्जितं त्वविभक्तधनैरननुज्ञातमपि देयं, स्वयं प्राप्तमिति तेनैवाभिहितत्वात्। एवंच स्वार्जितं स्थावरमपि सप्ताधिकं ज्ञात्यननुज्ञातं देयम्। यत्पुनस्तेनैवोक्तम्—

विभक्ता वाऽविभक्ता वा दायादाः स्थावरे समाः।
एको ह्यनीशस्सर्वत्र दानाधमनाविक्रये॥

इति, तत्सप्तानधिकाविभक्तस्थावरविषयम्। विभक्ता अपि समाः, किं पुनरविभक्ता इति व्याख्येयम्। अन्यथा विभागोऽनर्थकस्स्यात्। एवंच यदुक्तं स्मृत्यन्तरे—

एकोपि स्थावरे कुर्याद्दानाधमनविक्रयम्।
आपत्काले कुटुम्बार्थे धर्मार्थेऽपि विशेषतः॥

इति, तत्क्रमायाताविभक्तस्थावरविषयं सप्तानधिकस्थावरविषयं चेति मन्तव्यम्, अपेः काकाक्षिवदुभयत्र सम्बन्धात्। यदा परेण सम्बन्धस्तदाऽयमर्थः— स्थावरेऽपि स्थावरबहुत्वाभावेऽपि एको दानादिकं कुर्यादिति। आधिरपि दानं, तेन रूपेण स्वत्वावगतेः 'बन्धाचारेण बन्धकम्' इति श्रवणाच्च देयमित्यनुपज्यते। एवंचाधेरदेयत्वं पूर्वस्मिन् प्रकरणेऽभि-

हितमाधिरूपाद्रूपान्तरेणेति मन्तव्यम् । देयोक्तिप्रसङ्गाद्देयस्य प्रतिग्रहीष्यतः प्रतिग्रहप्रकारविशेषो याज्ञवल्क्येन दर्शितः—

प्रतिग्रहः प्रकाशस्स्यात् स्थावरस्य विशेषतः ।

इति । प्रकाशः प्रकटः ससाक्षिक इति यावत् । पुत्रस्य प्रतिग्रहे प्रकारविशेषो वसिष्ठेन दर्शितः—'पुत्रं प्रतिग्रहीष्यन् बन्धूनाहूय राजानि चावेद्य निवेशनस्य मध्ये व्याहृतिभिर्हुत्वाऽदूरेबान्धवमसंनिकृष्टमेव गृह्णीयात्' इति । अदूरेबान्धवं संनिहितमातुलादिबान्धवम् । असंनिकृष्टं संनिकृष्टभ्रातृपुत्रादिव्यतिरिक्तमेव प्रतिगृह्णीयादित्यर्थः । प्रासङ्गिकमुक्त्वा प्रकृतमपि याज्ञवल्क्येनोक्तं—

देयं प्रतिश्रुतं चैव दत्वा नापहरेत्पुनः ।

इति । इदं ते दास्यामीति वाचा यत्प्रतिश्रुतं तदवश्यं तस्मै दातव्यं, दत्तं च न सर्वथा पुनरपहर्तव्यमित्यर्थः । यः पुनः प्रतिश्रुतं न ददाति, दत्तं वाऽपहरति तस्य दोषमाह हारीतः—

प्रतिश्रुतार्थादानेन दत्तस्योच्छेदनेन च ।
विविधान्नरकान् याति तिर्यग्योनौ च जायते ॥

प्रतिश्रुतार्थस्तु विना दानेन ऋणवन्नापैतीत्याह स एव—

वाचैव यत्प्रतिज्ञातं कर्मणा नोपपादितम् ।
ऋणवद्धर्मसंयुक्तमिह लोके परत्र च ॥

यद्वित्तं धर्मसंयुक्तं प्रतिग्रहीतृप्रवृत्तधर्मसम्पत्त्यर्थं वाचा प्रतिज्ञातं न पश्चात्समर्पितं, तदिह परत्र च ऋणवन्नापैतीत्यर्थः। ऋणवदित्यभिधानेनार्थादप्रदायको दाप्यो दण्ड्यश्चेत्युक्तम्। उक्तं च कात्यायनेन—

स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम्।
न दद्यादृणवद्दाप्यः प्राप्नुयात् पूर्वसाहसम्॥

ब्राह्मणाय प्रवृत्तधर्मपरित्यागरहितायेति शेषः। 'प्रतिश्रुत्याप्यधर्मसंयुक्ते न दद्यात्' इति गौतमस्मरणात्॥

इति स्मृतिचन्द्रिकायां देयविषयाणि.

---

## अथ दत्तविषयाणि.

तत्र नारदः—

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः।
स्त्रीशुल्कानुग्रहार्थं च दत्तं दानविदो विदुः॥

पण्यस्य क्रीतद्रव्यस्य मूल्यम्। भृतिस्तु कात्यायनेन दर्शिता—

अविज्ञातोपलब्ध्यर्थं दानं यत्र निरूपितम्।
उपलब्धक्रियालब्धं सा भृतिः परिकीर्तिता॥

सप्रयोजनक्रियासम्पादनार्थं दत्तं भृतिरुच्यत इत्यर्थः। तुष्ट्येत्यनेन वन्दिजनादिभ्यो दत्तं लक्ष्यते। स्नेहादित्यनेन च दुहित्रादिभ्यो दत्तम्। प्रत्युपकारतः प्रत्युपकारार्थमुपकृतसकाशाल्लब्धम्। तत्प्रदर्शनार्थमाह कात्यायनः—

भयत्राणाय रक्षार्थं तथा कार्यप्रसाधनात् ।
अनेन विधिना लब्धं विद्यात्प्रत्युपकारतः ॥

भयत्राणाय भयाद्रक्षणाय । रक्षार्थं बालधनादिरक्षार्थम् । कार्यप्रसाधनात् विवाहादिसम्पादनात् । अनेन विधिना लब्धं भयत्राणादिलक्षणोपकरणाल्लब्धमिति यावत् । स्त्रीशुल्कं परिणयनार्थं कन्याज्ञातिभ्यो दत्तम् । अनुग्रहार्थं परोपकारः कर्तव्य इति विधिबलाद्दत्तम् । तत्र सत्पात्रेऽनुग्रहाद्दत्तं सफलं भवतीत्याह नारदः—

मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि ।
दीनानाथविशिष्टेभ्यो दत्तं तु सफलं भवेत् ॥

उपकारिणि परोपकारपरे । सफलं फलातिशयोपेतमित्यर्थः । दत्तं दानविदो विदुः तदेतत्पण्यमूल्यादि सप्तविधं दत्तमेव दानविदो विदुः, अपरावर्तनीयं विदुरित्यर्थः । बृहस्पतिरपि—

भृत्या तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे ।
श्रद्धानुग्राहसंप्रीत्या दत्तमष्टविधं विदुः ॥

उपकारिणे यदि सर्वस्वमर्प्यते तदा दत्तं न भवतीत्याह कात्यायनः—

प्राणसंशयमापन्नं यो मामुत्तारयेदितः ।
सर्वस्वं तस्य दास्यामीत्युक्तेऽपि न तथा भवेत् ॥

इति स्मृतिचन्द्रिकायां दत्ताविषयाणि

---

## अथादत्तविषयाणि.

अदत्तं तु भयक्रोधशोकवेगरुगान्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥
बालमूढास्वतन्त्रार्तमत्तोन्मत्तापवर्जितम् ।
कर्ता ममायं कर्मेति प्रतिलाभेच्छया च यत् ॥
अपात्रे पात्रमित्युक्ते कार्ये चाधर्मसंहिते ।
यद्दत्तं स्यादविज्ञानाददत्तं तदपि स्मृतम् ॥

इति । एतदुक्तं भवति—भयोपतप्तेन बन्दिग्रहादिभ्यो दत्तं, क्रोधोपतप्तेन क्रोधविषयभूतानामविभक्तधनानां धनव्ययं कर्तुमितरेभ्यो दत्तं, शोकवेगाद्युपतप्तेन किं स्थितेन धनेनेति तात्कालिकया बुद्ध्या दत्तं, उत्कोचेन राजकीयादिभ्यो दत्तं, उपहासेन दत्तं, व्यत्यासच्छलयोगतः प्रच्छन्नतया ग्रहीतुं परप्रतारणार्थं जनसमक्षं दत्तं, अप्राप्तव्यवहारेण दत्तं, मूढेन मनसि स्थितादन्यस्मै दत्तं, अस्वतन्त्रेण दासादिना दत्तमार्तेन रोगोपहतप्रकृतिना दत्तं, मत्तेन धुत्तूरादिभक्षणस्खलितधिया दत्तं, उन्मत्तेन पित्तोद्रेकादिना स्खलितधिया दत्तं, कर्मकरणार्थं सत्काररूपेणाकर्मकराय दत्तं, प्रतिलाभेच्छया प्रतिलाभमकुर्वाणाय दत्तं, अयोग्याय योग्योक्तिमात्रेण दत्तं, असद्विनियोगकारिणे सद्विनियोगकृदित्युक्तिमात्रेण दत्तमित्येवं षोडशप्रकारमपि पुनःप्रत्याहरणीयत्वाददत्तमित्युच्यत इति । पुनःप्रत्याहरणीयत्वमेवंविधेष्वाह कात्यायनः—

कामक्रोधास्वतन्त्रार्तक्लीबोन्मत्तप्रमोहितैः ।
व्यत्यासपरिहासाच्च यद्दत्तं तत्पुनर्हरेत् ॥
या तु कार्यस्य सिद्ध्यर्थमुत्कोचा स्यात् प्रतिश्रुता ।
तस्मिन्नपि प्रसिद्धेऽर्थे न देया स्यात्कथञ्चन ॥
अथ प्रागेव दत्ता स्यात्प्रतिदाप्यस्तथा बलात् ।
दण्डं चैकादशगुणं आहुर्गार्गीयमानवाः ॥

इति । उत्कोचायास्स्वरूपमपि तेनैव दर्शितम्—

स्तेनसाहसिकोद्वृत्तपारजायिकशंसनात् ।
दर्शनाद्वृत्तनष्टस्य तथाऽसत्यप्रवर्तनात् ॥
प्राप्तमेतैस्तु यत्किञ्चित्तदुत्कोचाख्यमुच्यते ।
न दाता तत्र दण्ड्यस्स्यान्मध्यस्थश्चैव दोषभाक् ॥

इति । एतदुक्तं भवति—यदि मह्यं न प्रयच्छसि तदा त्वत्कृतं कथयामीति भीतिमुत्पाद्य स्तेनादिसकाशाद्यत्किञ्चिद्धनमादत्ते, तथा यदि मह्यं न प्रयच्छसि तदा त्वां चारकस्य दर्शयामीति भीतिमुत्पाद्य पलायितसकाशाद्यत्किञ्चिदादत्त, तथा यदि मह्यं प्रयच्छसि तदा सत्यं कृतमिति स्वामिनः पुरस्तादसत्यतया वच्मीत्यनुकूलमुक्त्वा दासादिसकाशात् यत्किञ्चिदादत्ते, तत्सर्वमुत्कोचाख्यम् । तद्राज्ञा दात्रे दाप्यं, उत्कोचापादकग्राहकौ च दण्डनीयाविति । बृहस्पतिः पुनःप्रत्याहरणीयमित्याह—

प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया ।
कार्ये वाऽधर्मसंयुक्ते स्वामी तत्पुनराप्नुयात् ॥

मनुरपि—

धर्मार्थं येन दत्तं स्यात् कस्मैचिद्याचते धनम् ।
पश्चाच्चेन्न तथा तत्स्यादादेयं तेन तद्भवेत् ॥

यज्ञादिधर्मं कर्तुं याचमानाय यद्दत्तं तेन धनेन यद्यसौ यज्ञादिधर्मं न कुर्यात्तदा दत्तधनं पुनरादेयमित्यर्थः। यदि पुनरेवंविधस्यानपहार्यतां साधयितुमिच्छेद्याचकस्तदाऽसौ राज्ञा तद्धनं सुवर्णादिकं दाप्यः । तथाच स एव—

यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः ।
राज्ञा दाप्यस्सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः ॥

बृहस्पतिरप्यदत्तानि कानिचिद्दर्शयाति—

क्रुद्धभ्रष्टप्रमत्तार्तबालोन्मत्तभयातुरैः ।
मत्तातिवृद्धनिर्धूतैः संमूढैश्शोकवेगिभिः ॥
नर्मदत्तं तथैतैर्यत्तददत्तं प्रकीर्तितम् ।

इति। प्रमत्तेन दुर्ग्रहगृहीतेन। निर्धूतोऽवधूतः। नर्मदत्तं परिहासेन दत्तम् । आर्तदत्तस्यादत्तत्वं धर्मकार्यव्यतिरिक्तविषयं—

स्वस्थेनार्तेन वा दत्तं श्रावितं धर्मकारणात् ।
अदत्वा तु मृते दाप्यस्तत्सुतो नात्र संशयः ॥

इति कात्यायनस्मरणात् । तथेदमपरं सर्वविवादपदसाधारणं मनुनोक्तं—

योगाधमनविक्रीतं योगदानप्रतिग्रहम् ।
यत्र वाऽप्युपधिं पश्येत् तत्सर्वं विनिवर्तयेत् ॥

योगः उपायः । एवंचायमर्थः—येनागामिनोपाधिविशेषेणाधिक्रयदानप्रतिग्रहाद्याः कृतास्तदुपाधिविगमे ते सर्वे विनिवर्तनीया इति । अत्र नारदः—

गृह्णात्यदत्तं यो मोहाद्यश्चादेयं प्रयच्छति ।
दण्डनीयावुभावेतौ धर्मज्ञेन महीक्षिता ॥

इति। अत्र संप्रदानकारकीभूतो निर्दिश्यते । कर्तृकारकीभूतनरस्य त्वदेयादत्तयोः प्रतिपादनमपहरणं वा न दण्ड्यत्वापादकं स्मृत्याचारमार्गानुसारित्वात् । नापि प्रत्यवायापादकं,

दत्तस्यैषोदिता धर्म्या यथावदनपक्रिया ।

इति मनुना धर्म्येत्यभिधानात् ॥

इति स्मृतिचन्द्रिकायामदत्तविषयाणि.
समाप्तं च दत्ताप्रदानिकाख्यस्य पदस्य विधिवितानम्.

---

अथाभ्युपेत्याशुश्रूषाख्यस्य पदस्य विधिरुच्यते.

तत्र नारदः—

शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत् ।
एते कर्मकरा ज्ञेया दासास्तु गृहजातयः ॥

सामान्यमस्वतन्त्रत्वमेषामाहुः मनीषिणः ।
जातिकर्मकृतस्तूक्तो विशेषो वृत्तितस्तथा ॥

इति । एते शिष्यादयश्चतुर्विधाः शुश्रूषकाः कर्मकरा ज्ञेयाः । गृहजातयस्तु पञ्चदशविधाः शुश्रूषकाः दासाः ज्ञेयाः । एषां कर्मकराणां दासानां चास्वतन्त्रत्वलक्षणं धर्मं साधारणमाहुर्मनीषिणो मन्वादयः । जातिकृतः कर्मकृतो वृत्तिकृतश्च विशेषः शिष्यान्तेवासिदासानामेवोक्त इत्यर्थः । तत्र शिष्याणां त्रैवर्णिकान्यतमत्वलक्षणः जातिकृतो विशेषः 'वसन्ते ब्राह्मणमुपनयीत' इत्यादिशास्त्रसिद्धोऽध्यवसेयः । कर्मकृतस्तु तेषां विशेषो बृहस्पतिनोक्तः—

विद्या त्रयी समाख्याता ऋग्यजुस्सामलक्षणा ।
तदर्थं गुरुशुश्रूषां प्रकुर्याच्छास्त्रचोदिताम् ॥

शिष्य इति शेषः । तथाच नारदः—

आ विद्याग्रहणाच्छिष्यश्शुश्रूषेत्प्रयतो गुरुम् ।

इति । एवं गुरुदारादावपि शुश्रूषा कार्या—

तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च ।

इति तेनैवोक्तम् । भिक्षादानादिवृत्तितो विशेषस्संस्कारकाण्डे शिष्याणामुक्त इति पुनरुक्तिभयान्नेहोच्यते । वृत्तितो विशेषं कञ्चिदभिधायाह स एव—

समावृत्तस्तु गुरवे प्रदाय गुरुदक्षिणाम् ।

प्रतीयात्स्वगृहानेषा शिष्यवृत्तिरुदाहृता ॥

स्वगृहान् प्रतीयात् स्वमन्दिरं प्रति यायादित्यर्थः । कः पुनरन्तेवासिनां जातिकर्मकृतो विशेष इत्यपेक्षिते बृहस्पतिः—

विज्ञानमुच्यते शिल्पं हेमकुप्यादिसंस्कृतिः ।
नृत्तादिकं च यत्प्राप्तुं कर्म कुर्याद्गुरोर्गृहे ॥

कङ्कणकटकादिनिर्माणविषयं नृत्तगीतादिकरणविषयं च चकारात् स्तम्भकुम्भादिरचनाविषयं च विज्ञानं शिल्पविज्ञानमुच्यते, तत्प्राप्त्यर्थमन्तेवासी गुरोर्गृहे कर्म कङ्कणकटकादिकं कुर्यादित्यर्थः । अनेन हेमकारादिजातिकृतः कङ्कणकटकादिकर्मकृतश्च विशेषोऽन्तेवासिनां दर्शितः । नारदस्त्वन्तेवासिनां कर्माभ्यासोपक्रमकाले कर्तव्यमाह—

स्वशिल्पमिच्छन्नाहर्तुं बान्धवानामनुज्ञया ।
आचार्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ॥

अन्ते समीपे कालं कृत्वा सुनिश्चितं एतावन्तं कालं मत्समीपे स्थातव्यमित्याचार्योक्तकालपरिमाणं सुनिश्चितं कृत्वेत्यर्थः । आचार्यस्यापि कर्तव्यमाह स एव—

आचार्यश्शिक्षयेदेनं स्वगृहे दत्तभोजनम् ।
न चान्यत्कारयेत्कर्म पुत्रवच्चैनमाचरेत् ॥

अन्यत्कर्म स्वशिल्पव्यतिरिक्तं कर्म । एवञ्चान्तेवासिना कङ्कणादिकर्मफलार्पणमात्रेण गुरुशुश्रूषा कार्येत्यवसेयम् । स्वगृहे

दत्तभोजनमिति वदता वृत्तितो विशेषोऽन्तेवासिनां दर्शितः। यस्त्वनेवंविध आचार्यस्तस्य दण्डमाह कात्यायनः—

यस्तु न ग्राहयेच्छिल्पं कर्माण्यन्यानि कारयेत्।
प्राप्नुयात्साहसं पूर्वं तस्माच्छिष्यो निवर्तते ॥

शिष्यदौष्ट्येऽप्याह नारदः—

शिक्षयन्तमदुष्टं च यस्त्वाचार्यं परित्यजेत्।
बलाद्वासयितव्यस्स्याद्वधबन्धौ च योऽर्हति ॥

वासयितव्यस्स्यादाचार्यस्य पार्श्वे इति शेषः। वधोऽत्र ताडनं न प्राणच्छेदः, अपराधस्याल्पत्वात्। कृतविद्यस्य कृत्यमाह स एव—

शिक्षितोऽपि कृतं कालमन्तेवासी समापयेत्।
तत्र कर्म च यत्कुर्यादाचार्यस्यैव तत्फलम् ॥

कृतं कालं आचार्यसमीपस्थितेरवधित्वेन परिभाषितं कालम्। तत्र समापनीये कालशेषे प्रतिदिनमभ्यासोपरमेऽप्याचार्यस्यार्थलाभार्थमवश्यमभ्यस्तं कर्म कार्यम्। कालशेषेऽपि गुरुगृह एव भोजनम्। तथाच याज्ञवल्क्यः—

कृतशिल्पोऽपि निवसेत् कृतं कालं गुरोर्गृहे।
अन्तेवासी गुरुप्राप्तभोजनस्तत्फलप्रदः ॥

विद्याप्राप्तिशुश्रूषासमाप्त्यनन्तरमन्तेवासिनः कृत्यमाह नारदः—

गृहीतशिल्पस्समये कृत्वाऽऽचार्यप्रदक्षिणम्।
शक्तितश्चानुमान्यैनमन्तेवासी निवर्तयेत् ॥

भृतकानां तु नान्तेवासिवज्जातिकृतो वृत्तिकृतो वा विशेषः, किंतु भृतिकृतः कर्मकृतः कालकृतश्च विशेषः । तथाच बृहस्पतिः—

यो भुङ्क्ते परदासीं तु स ज्ञेयो वनिताभृतः ।
कर्म तत्स्वामिनः कुर्याद्यथाऽन्योऽर्थभृतो नरः ॥
बहुधाऽर्थभृतः प्रोक्तस्तथा भागभृतोऽपरः ।
हीनमध्योत्तमत्वं च सर्वेषामेव चोदितम् ॥
दिनमासार्धषण्मासत्रिमासाब्दभृतस्तथा ।
कर्म कुर्यात्प्रतिज्ञातं लभेत परिभाषितम् ॥

इति । तत्स्वामिनो दासीस्वामिन इत्यर्थः । अर्थभृतस्य बहुविधत्वमर्थाल्पत्वमहत्त्वतारतम्येन ज्ञेयम् । तत्तारतम्यं च भृत्यशक्त्यनुसारतः प्रत्येतव्यम् ।

भृत्यशक्त्यनुरूपा स्यादेषां कर्माश्रया भृतिः ।

इति नारदस्मरणात् । स्वयमेव भागभृतस्य विभागमाह—

द्विप्रकारा भागभृताः कृषिगोजीविनस्स्मृताः ।
जातसस्यात्तथा क्षीरात्स लभेत न संशयः ॥

हीनमध्यमोत्तमत्वलक्षणः कर्मकृतो भेदो रक्षणादिकर्मनिबन्धनः इत्याह स एव—

आयुधीयोत्तमस्तेषां मध्यमस्सीरवाहकः ।
भारवाहोऽधमः प्रोक्तस्तथैव गृहकर्मकृत् ॥

सीरवाहकः कर्षकः। यथैव भारवाहोऽधमः प्रोक्तस्तथैव पाककरणाद्यखिलगृहव्यापारकृदधमः प्रोक्त इत्यर्थः। कालकृतस्तु भृत्यानां विशेषः कालाल्पत्वमहत्त्वनिबन्धनः। स च प्रागेव दिनमासेत्यादिनैवोक्तोऽनुसन्धेयः। अधिकर्मकृतस्तु स्वरूपमाह नारदः—

सर्वेष्वधिकृतो यस्स्यात्कुटुम्बस्य तथोपरि।
सोऽधिकर्मकृतो ज्ञेयः स च कौटुम्बकस्स्मृतः॥

सर्वेषु भृतकेषु अधिकृत उपरिकृतोऽधिष्ठायक इति यावत्। अर्थेष्वधिकृत इति केचित् पठन्ति। तदाऽयमर्थः—अर्थेषु क्षेत्रहिरण्यादिष्वधिकृतः पालकत्वेन नियुक्त इति। कुटुम्बस्योपरीत्यत्र कृत इत्यध्याहार्यः। कुटुम्बस्योपरिकरणमायव्ययकर्तृत्वेन नियोग एव। एवं निरूपिताश्शिष्यान्तेवासिभृतकाधिकर्मकराः शुभकर्मकरा इत्याह स एव—

शुभकर्मकरा ह्येते चत्वारस्समुदाहृताः।

इति। शुभकर्म च जुगुप्सितकर्मेतरद्विज्ञेयमिति स एवाह—

गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम्।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम्॥
इष्टतस्स्वामिनश्चाङ्गैरुपस्थानमथान्ततः।
अशुभं कर्म विज्ञेयं शुभं तु यदतःपरम्॥

इति। अवस्करः संमार्जितरेणुराशिः। शोधनशब्दः प्रत्येकं

गृहद्वारादिचतुर्ष्वभिसम्बध्यते । उज्झनं त्यागः । अन्ततो मूत्र पुरीषविरामे लेपनिर्माजनार्थं स्वामीच्छया स्वहस्ताद्यर्पणम् ॥

इति स्मृतिचन्द्रिकायां कर्मकरविषयाणि.

---

## अथ दासनिरूपणम्.

तत्र नारदः—

जघन्यकर्मभाजस्तु शेषा दासास्त्रिपञ्चकाः ॥

इति । शेषाः शिष्यान्तेवासिभृतकाधिकर्मकृद्भ्योऽवशिष्टाः । जघन्यकर्मभाजः गृहद्वाराशुचिस्थानशोधनाद्यशुभकर्मभाजः । अनेन दासानां कर्मतो भेद उक्तः । त्रिपञ्चकाः पञ्चदशसङ्ख्याकाः । दासशब्दव्युत्पत्तिप्रदर्शनमुखेन दासानां कर्मकरेभ्यो भेदमाह कात्यायनः—

स्वतन्त्रस्यात्मनो दानाद्दासत्वं दारवद्भृगुः ।

इति । यथा भर्तुस्सम्भोगार्थं स्वशरीरदानाद्दारत्वं तथा स्वतन्त्रस्यात्मनः परार्थत्वेन दानाद्दासत्वमिति भृगुराचार्यो मन्यत इत्यर्थः । अनेनात्यन्तपारार्थ्यमासाद्य शुश्रूषका दासाः, पारार्थ्यमात्रमासाद्य शुश्रूषकाः कर्मकरा इति भेदोऽप्युक्त इत्यवगन्तव्यम् । अत्यन्तपारार्थ्यं तु तेषां भवति, यैस्तु स्वपुरुषार्थ वृत्तिनिरोधेन पारार्थ्यमाश्रितम् । एवंभूतं दासत्वं ब्राह्मणेतरेष्वेव त्रिषु वर्णेषु विज्ञेयं 'दास्यं विप्रस्य न क्वचित्'

इति तेनैवाभिधानात्। अनेन दासानां जातितो भेद उक्तः। विप्रेतरेष्वपि दास्यमानुलोम्येनैव—

वर्णक्रमानुलोम्येन दास्यं न प्रतिलोमतः।
राजन्यवैश्यशूद्राणां त्यजतां हि स्वतन्त्रताम्॥

स्वतन्त्रतां त्यजतां अत्यन्तपारार्थ्यं भजतामित्यर्थः। प्रातिलोमत इत्येतत्स्वधर्मपरित्यागिभ्यो यतिभ्योऽन्यत्र द्रष्टव्यम्—

वर्णानां प्रातिलोम्येन दासत्वं न विधीयते।
स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता॥

इति नारदस्मरणात्। यथोत्तमवर्णं प्रति हीनवर्णा सवर्णा वा भार्या भवति न पुनर्हीनवर्णं प्रत्युत्तमवर्णा, तथैव दासोऽपि भवेदित्यर्थः। दारवद्दासतेतिवचनाद्विप्रस्य सवर्णं प्रति दासत्वमापदि प्राप्तमिवाभातीति बुद्ध्या तन्निषेधार्थमाह कात्यायनः—

समवर्णेऽपि विप्रं तु दासत्वं नैव कारयेत्।

इति। यत्पुनः पुनरुक्तमिव तेनैवोक्तं—

ब्राह्मणस्य हि दासत्वान्नृपतेजो विहन्यते।
क्षत्रविट्छूद्रधर्मस्तु समवर्णे कदाचन॥
कारयेद्दासकर्माणि ब्राह्मणं न बृहस्पतिः॥

इति। अत्र वाक्यत्रयं—तत्राद्यवाक्यस्य प्रातिलोम्येन दास त्वे कारिते कारयितुस्तेजोहानिर्जायत इत्यर्थः। दासत्वं तु

न सङ्करजातिधर्म इति द्वितीयवाक्यस्यार्थः । दासवद्दासकर्माण्यपि सर्वथा ब्राह्मणं न कारयेत् सवर्णोपीति तृतीयवाक्यस्यार्थ इति न किञ्चित्पुनरुक्तमिव । स्वकीयेच्छाया त्रिशिष्टपुरुषोपकारार्थं तत्कर्म कुर्वन्नपि ब्राह्मणो नाशुभं कर्म कुर्यादित्याह स एव—

शीलाध्ययनसंपन्ने तदूनं कर्म कामतः ।
तत्रापि नाशुभं किञ्चित् प्रकुर्वीत द्विजोत्तमः ॥

यस्मात्परोपकारः कर्तव्यः तस्मात्तदूनं कर्म मध्यमोत्तमकर्मव्यतिरिक्तमपि कर्म कामतो वेतनमन्तरेण स्वेच्छया परहितार्थमपरः कुर्यादिति पूर्वार्धस्यार्थः । स्वामिनं प्रत्याह मनुः—

क्षत्रियं चैव वैश्यं च ब्राह्मणो वृत्तिकर्शितौ ।
बिभृयादानृशंस्येन स्वानि कर्माणि कारयेत् ॥

वृत्तिकर्शितावित्यत्र द्वितीया पाशमन्त्रस्थद्वितीयावत् कर्मत्वमात्रविवक्षया प्रयुक्ता । एवंचायमर्थः—वृत्तिकर्शितं क्षत्रियं वैश्यं च दासभूतमक्रौर्येण कर्माणि कारयन् स्वामी पोषयेदिति । वृत्तिकर्शिताविति वदन्नगत्यैव क्षत्रियवैश्ययोर्दासत्वाङ्गीकारः कार्यो न पुनस्सति सम्भव इति दर्शयति । स्वानीति वदन्न सम्बन्धिजनकर्माणि कारयेदित्याह । कर्माणीति सामान्याभिधानेन जघन्यकर्माण्येव कारयितव्यानीति नास्ति नियम इति सूचयति । वृत्तिकर्शितौ बिभृयादिति वदन्नाक्र

क्षानुसारेण क्षत्रियवैश्ययोर्दास्यं कारायितव्यं, न प्रभुत्वमात्रे-णेत्येतदपि ज्ञापयति । अत एव यः प्रभुत्वमात्रेण कारयति तस्य ज्ञापितार्थाज्ञत्वनिबन्धनमपराधित्वमनूद्य दण्डमाह स एव—

दास्यं तु कारयेन्मोहात् ब्राह्मणस्संस्कृतान् द्विजान् ।
अनिच्छतः प्राभवत्याद्राज्ञा दाप्यः शतानि षट् ॥

प्रभवतो भावः प्राभवत्यं तस्मात् प्राभवत्यात् प्रभुत्वादेवेति यावत् । द्विजानिति वदन्न दण्डश्शूद्रविषय इति दर्शयति । अत एव शूद्रं यथाकथञ्चिदपि दास्यं कारयेदित्याह स एव—

शूद्रं तु कारयेद्दास्यं क्रीतमक्रीतमेव वा ।
दास्यायैव हि सृष्टोसौ स्वयमेव स्वयम्भुवा ॥

विष्णुस्तु प्रातिलोम्येन दास्यं कारयितुर्दण्डमाह—'यस्तूत्तम-वर्णं दास्ये नियोजयति तस्योत्तमसाहसो दण्डः' इति ॥

इति स्मृतिचन्द्रिकायां दासनिरूपणम्.

---

अथान्यानि दासविषयाणि कानिचिद्वचनानि लिख्यन्ते ।

तत्र नारदः—

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अनाकालभृतस्तद्वदाहितस्स्वामिना च यः ॥

मोक्षितो महतश्चर्णाद्युद्धे प्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव बडबाहृतः ।
विक्रेता चात्मनश्शास्त्रे दासाः पञ्चदश स्मृताः ॥

इति । गृहजातः स्वगृहदास्यां जातः । क्रीतो मूल्येन स्वाम्यन्तरात् प्राप्तः । लब्धस्तत एव प्रतिग्रहादिना प्राप्तः । दायादुपागतः रिक्थग्राहित्वेन लब्धः । अनाकालभृतः दुर्भिक्षे पोषितः । आहितः स्वामिन ऋणदातर्याधित्वं नीतः । ऋणान्मोक्षितः ऋणमोचनप्रत्युपकारतया दासत्वमभ्युपगतः । युद्धे प्राप्तः समरे विजित्य गृहीतः । पणे जितो दासत्वपणके द्यूतादौ जितः । तवाहमित्युपगतः तव दासोऽस्मीति स्वयमेवाभ्युपगतः । प्रव्रज्यावसितः प्रभ्रष्टसंन्यासी । कृतः एतावन्तं कालं तवाहं दासो भवामीत्युपगतः । भक्तदासः, भक्षितं भक्तं, मूल्यद्वारेण यावत्ते ददामि तावदहं ते दास इत्युपगतः । बडबाहृतः, बडबा गृहदासी तामुद्वाह्य तत्स्वाम्यनुमत्यर्थं दासत्वेन प्रविष्टः । आत्मनो विक्रेता स्वयमेवात्मनो विक्रयमर्थाद्यर्थं कृतवान् । इत्येवं धर्मशास्त्रे दासाः पञ्चदशप्रकाराः स्मृता इत्यर्थः । अत्राद्यानां गृहजातक्रीतलब्धदायागतानां चतुर्णां दासत्वापगमः स्वामिप्रसादवशादेव नान्यथेत्याह स एव—

तत्र पूर्वश्चतुर्वर्गो दासत्वान्न विमुच्यते ।
प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम् ॥

एवमन्यस्याप्यात्मविक्रेतुर्दासत्वं स्वामिप्रसादादन्यतो न विमुच्यत इत्याह स एव—

विक्रीणीते स्वतन्त्रस्सन् य आत्मानं नराधमः ।
स जघन्यतमस्तेषां सोपि दास्यान्न मुच्यते ॥

प्रसादात्स्वामिनोन्यत्रेत्यत्रानुषज्यते । ततश्चायमर्थः—आत्मविक्रेताऽपि गृहजातादिवत् स्वामिप्रसादादन्यतो दास्यान्न विमुच्यत इति । एवंच गृहजातादयोप्यात्मविक्रेतृपञ्चमाः स्वामिप्रसादादनाकालभृतादय इव दास्यान्मुच्यन्त इति वचोभङ्ग्या दर्शितमिति मन्तव्यम् । स्वामिप्राणरक्षणादपि गृहजातादयोऽनाकालभृतादयश्च सर्वे दास्याद्विमुच्यन्त इत्याह स एव—

यो वैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात्
दासत्वात्स विमुच्येत पुत्रभागं लभेत च ॥

एषां पञ्चदशविधदासानां मध्य इत्यर्थः । एतच्च स्वामिनः प्रसादात् प्राणरक्षणाद्वा दास्यापगमनं प्रव्रज्यावसितेतरविषयं,

प्रव्रज्यावसितो राज्ञो दास आमरणान्तिकः ।

इति याज्ञवल्क्यस्मरणात् । राज्ञो दासः पार्थिवस्यैव दासः नान्यस्येत्यर्थः । अत एव नारदः—

राज्ञ एव तु दासस्स्यात् प्रव्रज्यावसितो नरः ।
न तस्य प्रतिमोक्षोऽस्ति नात्र शुद्धिः कथञ्चन ॥

नरो विप्रतरोऽभिमत, विप्रस्य दास्यप्रतिषेधात्। अत एव कात्यायनः—

प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविड्भृगुः॥

निर्वासं कारयेद्राजेति शेषः। तथाच नारदः—

पारिव्राज्यं गृहीत्वा तु यस्स्वधर्मे न तिष्ठति।
श्वपादेनाङ्कयित्वा तु राजा शीघ्रं प्रवासयेत्॥

श्वपादेन शुनःपादसदृशतप्तायसेन राज्ञा दास्यमकुर्वतोः क्षत्रियवैश्ययोरपि निर्वासमुक्तविधिना कार्यं, स्वधर्मे न तिष्ठतीति सामान्येनाभिधानात्। यत्तु तेनैवोक्तं—

द्वावेतौ कर्मचण्डालौ लोके दूरबहिष्कृतौ।
प्रव्रज्योपनिवृत्तश्च वृथाप्रव्रजितश्च यः॥

इति, तत् राजदासेतरविषयं, राजदासस्य बहिष्कारानुपपत्तेः। एवञ्च प्रव्रज्यावसितेतरदासविमोक्षः स्वामिनः प्रसादप्राणरक्षणाभ्यां भवतीत्यवगन्तव्यम्। अनाकालभृतादीनां तु प्रव्रज्यावसितात्मविक्रेतृव्यतिरिक्तानां नवानां प्रत्येकमेकैकेनापि गोयुगदानादिना दास्यमपनीयत इत्याह स एव—

अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत्।
आहितोपि धनं दत्वा स्वामी यद्येनमुद्धरेत्॥
ऋणं तु सोदयं दत्वा ऋणी दास्यात् प्रमुच्यते।

तवाहमित्युपगतो युद्धे प्राप्तः पणे जितः ॥
प्रतिशीर्षप्रदानेन मुच्येरन् तुल्यकर्मणा ।
कृतकालव्यपगमात् कृतकोपि विमुच्यते ॥
भक्तस्योत्क्षेपणात्सद्यो भक्तदासः प्रमुच्यते ।
निग्रहाद्बडबायास्तु मुच्यते बडबाहृतः ॥

इति। एतदुक्तं भवति—दुर्भिक्षे पोषणेन कारितो दासो गोद्वयार्पणाद्विमुच्यते । आहितदासस्त्वादात्रा स्वगृहीते ऋणे प्रत्यर्पिते सत्युत्तमर्णदास्याद्विमुच्यते । ऋणदासस्तु स्वकृतमृणं येन यावद्धनं दत्वाऽपाकृतं तस्मै तावद्धनं सवृद्धिकं ददाद्विमुच्यते । तवाहमित्युपगतादयस्त्रयो दासविशेषास्तु स्वाभिनिर्वर्त्याखिलव्यापारनिर्वर्तकदासान्तरप्रदानाद्विमुच्यन्ते । कृतस्तु दासविशेषो दास्यावधित्वेन परिभाषितकालस्यात्यया द्विमुच्यते । गृहदासीलोभेन दासत्वमापन्नस्तु तत्संभोगत्यागाद्विमुच्यत इति। याज्ञवल्क्यस्तु दासाभासानां विसर्जनमाह—

बलाद्दासीकृतश्चोरैः विक्रीतश्चापि मुच्यते ।

इति । यो बलात्कारेणादासोपि केनचित्प्रभुणा दासः कृतः, यश्च चोरैरपहृत्य दासत्वेन विक्रीतः, आहितो दत्तो वा स यस्य पार्श्वे दासभावेन तिष्ठति तेन प्रभुणा मोचनहेतुमन्तरेणेव शीघ्रमेवासौ मोचनीय इत्यर्थः । यदि तेन लोभा-

दिवशादसौ न मुक्तस्तदा राज्ञा मोचयितव्यः । तथाच नारदः—

चोरोपहतविक्रीता ये च दासीकृता बलात् ।
राज्ञा मोचयितव्यास्ते दासत्वं तेषु नेष्यते ॥

यस्तु पूर्वमेकस्य दासस्सन्नपरस्य दास्यमङ्गीकरोति असावपरेण विसर्जनीय इति वचोभङ्गया स एवाह—

तवाहमिति चात्मानं योऽस्वतन्त्रः प्रयच्छति ।
न सम्प्राप्नुयात् कामं पूर्वस्वामी लभेत तम् ॥

अस्वतन्त्रः परदासत्वेनास्वतन्त्रः कामं नूतनस्वामिनि दास्यं, पुरातनस्वामिनि दासेन काम्यमानत्वात् । एवं यदेतद्दासमधिकृत्योक्तं तत्सर्वं यथायोग्यं दास्यामपि द्रष्टव्यम् । दासीस्वामिनमधिकृत्य विशेषमाह कात्यायनः—

स्वदासीं यस्तु संगच्छेत् प्रसूता च भवेत्ततः ।
अवेक्ष्य बीजं कार्या स्यान्न दासी सान्वया तु सा ॥

स्वकृतगर्भाधानमनुसंधाय स्वामिना स्वदासी सन्तानसहिता दासत्वविमोचकविधिना स्वकृतगर्भाधानादेर्दासत्वपरिहारार्थम दासीत्वेन कार्या स्यादित्यर्थः । कः पुनर्दासत्वविमोचको विधिरित्यपेक्षिते नारदः—

स्वदासमिच्छेद्यः कर्तुमदासं प्रीतमानसः ।
स्कन्धादादाय तस्यासौ भिन्द्यात् कुम्भं सहाम्भसा ॥

साक्षताभिस्सपुष्पाभिः मूर्धन्यद्भिरवाकिरेत् ।
अदास इति चोक्त्वा त्रिः प्राङ्मुखस्तमथोत्सृजेत् ॥

एवं समुत्सर्गे सति दासत्वकृतमयोग्यत्वमपैतीत्याह स एव—

ततः प्रभृति कर्तव्यः स्वाम्यनुग्रहपालितः ।
भोज्यान्नोऽथ प्रतिग्राह्यो भवत्यभिमतस्सताम् ॥

स्वाम्यनुग्रहेण कष्टतरदशापाकरणरूपेण पालितः निजस्वरूपं नीतः संभाषणादियोग्यो भवति तदानीमेवेत्यर्थः । दासीमदासीं कर्तुमिच्छतोऽपि समानमेतद्विधानं, दासमित्यत्र लिङ्गवचनयोरुद्देश्यविशेषणयोराविवक्षितत्वात् । स्वाम्यनुज्ञया पालितो रक्षितः भोज्यान्नः प्रतिग्राह्यः, सतां संमतश्च भवतीत्यर्थः । अत एव—

दासस्य तु धनं यत्स्यात् स्वामी तस्य प्रभुः स्मृतः ।

इति कात्यायनेन दासधनप्रभुत्वे स्मृतेऽपि दासीधनेऽपि स्वामिनः प्रभुत्वं स्मृतमिति मन्तव्यम् । तथा च स एव दासेन या परिणीता साऽपि दासीत्वमापद्यत इत्याह—

दासेनोढा त्वदासी या साऽपि दासीत्वमाप्नुयात् ।
यस्माद्भर्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यतः ॥

इति स्मृतिचन्द्रिकायां दासविषयाणि.

समाप्तमभ्युपेत्याशुश्रूषाख्यस्य पदस्य विधिवितानम्.

---

अथ वेतनानपाकर्माख्यस्य पदस्य विधिरुच्यते ॥

तत्र मनुः—

अतःपरं प्रवक्ष्यामि वेतनस्यानपक्रियाम् ॥

इति। वेतनं कर्ममूल्यं, तस्यानपाक्रिया भृत्यायासमर्पणं, समर्पितस्य वा परावर्तनम्। तत्र समर्पणे विशेषमाह नारदः—

भृत्याय वेतनं दद्यात् कर्मस्वामी यथाक्रमम्।
आदौ मध्येऽवसाने च कर्मणो यद्विनिश्चितम् ॥

तुभ्यमियद्दास्यामीति यद्वेतनं परिमाणतो विनिश्चितं त्रिधा विभज्य कर्मण आदिमध्यावसानेषु दद्यादित्यर्थः। एतत्सकृदादौ देयमित्यादिविशेषपरिभाषाभावे वेदितव्यम्। इयद्दास्यामीति परिभाषाया अभावे विशेषमाह स एव—

भृतावनिश्चितायां तु दशभागमवाप्नुयुः।
लाभगोवीर्यसस्यानां वणिग्गोपकृषीवलाः ॥

दशभागं दशमं भागमित्यर्थः। गोवीर्यं पाल्यमानगवादिपशुप्रभवं पयःप्रभृति अवाप्नुयुः, यथाक्रमेणेति शेषः। यदि कर्मस्वामी प्रागुक्तभागावाप्तिप्रतिबन्धको भवति तदा त्वाह याज्ञवल्क्यः—

दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः।
अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता ॥

सस्यदशमभागभृतिरियमल्पप्रयाससाध्यकृष्टक्षेत्रकर्तृविषये द्रष्टव्यम्। बह्वायाससाध्यकृष्टक्षेत्रकर्तृविषये त्वाह बृहस्पतिः—

त्रिभागं पञ्चभागं वा गृह्णीयात्सीरवाहकः ।

इति । व्यवस्थितविकल्पश्चायम् । कथमत्र व्यवस्थेत्यपेक्षिते स एवाह—

भक्ताच्छादभृतस्सीरात् भागं गृह्णीत पञ्चमम् ।
जातसस्यात्त्रिभागं तु प्रगृह्णीयादथाभृत ॥

अशनाच्छादनाभ्यां भृतः कृषीवलः लाङ्गलविकृष्टक्षेत्रजातसस्यात् पञ्चमभागं गृह्णीयात् । ताभ्यामभृतस्तु तृतीयभागमित्यर्थः । अथवा यत्र इयद्दास्यामीति परिभाषाया अभावस्तत्र मनूक्तं द्रष्टव्यम् ॥

समुद्रयानकुशला देशकालार्थदर्शिनः ।
नियच्छेयुः भृतिं यां तु सा स्यात्प्रागकृता यदि ॥

इयद्दास्यामीति परिभाषितेऽपि क्वचित्ततो न्यूनं स्वामिबुद्धिमात्रपरिकल्पितं वेतनं देयं, क्वचित्ततोऽप्यधिकं देयमित्याह याज्ञवल्क्यः—

देशं कालं च योऽतीयाल्लाभं कुर्याच्च योऽन्यथा ।
तत्र स्यात्स्वामिनश्छन्दोऽधिके देयं कृतेऽधिके ॥

यो भृत्यः स्वाम्याज्ञां विना स्वातन्त्र्येण वाणिज्यादिकर्मणः फलसाधकत्वापादकं देशं कालं वाऽतिक्रामति, लाभं वा बहुतरव्ययकरणेन स्वल्पं करोति, तस्मै पूर्वपरिभाषितभृतिमध्ये स्वामी स्वेच्छानुसारेण किञ्चिद्दद्यात् । यस्तु स्वातन्त्र्येण

बहुलाभं करोति, तस्मै परिभाषितमूल्याधिकं किञ्चिद्देयं स्वामिना पारितोषकमित्यर्थः । अनेकनिर्वर्त्ये कर्मणि परिभाषितभृतेरर्पणप्रकारमाह स एव—

यो यावत्कुरुते कर्म तावत्तस्य तु वेतनम् ।
उभयोरप्यसाध्यं चेत् साध्ये कुर्याद्यथाश्रुतम् ॥

अयमर्थः—कूपे कृते तत्कर्तॄणामियद्दास्यामीति वेतने प्रतिश्रुते द्विबहुकर्तृभिरारब्धे विघ्नवशादसमाप्तौ तत्तत्कृतकर्मानुसारेण प्रतिकर्तृ किञ्चिद्देयं, अथाविघ्नेन समाप्ते यावत्परिभाषितमेव देयमिति ॥

इति स्मृतिचन्द्रिकायां वेतनसमर्पणविषयाणि.

---

## अथ भृत्यविषयाणि.

तत्र नारदः—

कर्मोपकरणं चैषां क्रियां प्रति यदाहितम् ।
आप्तभावेन तद्रक्ष्यं न जैह्मेन कदाचन ॥

एषां कर्मस्वामिनां कर्मोपकरणं लाङ्गलादिकं कृष्यादिक्रियामुद्दिश्य यद्भृत्यपार्श्वे निहितं तत्तेन सदा निश्शाठ्येन रक्ष्यमित्यर्थः । बृहस्पतिरपि—

भृतकस्तु न कुर्वीत स्वामिनश्शाठ्यमण्वपि ।
भृतिहानिमवाप्नोति ततो वादः प्रवर्तते ॥

ततः शाठ्यकरणात् विवादः स्वामिना सह स्वस्य प्रवर्तते, तत्र पराजितो भृतकः शाठ्यानुसारात् भृतिहानिमवाप्नोतीत्यर्थः। कर्मणोऽकरणेऽप्याह स एव—

गृहीतवेतनः कर्म न करोति यदा भृतः।
समर्थश्चेद्दमं दाप्यो द्विगुणं तच्च वेतनम् ॥

दमं शक्त्यपराधानुसारेण राज्ञे दद्यात्। गृहीतं च वेतनं द्वैगुण्येन स्वामिने दद्यादित्यर्थः। अस्मिन्नेव विषये वेतनाग्रहणे त्वाह याज्ञवल्क्यः—'अगृहीते समं दाप्यः' इति। यावता वेतनेन भृत्यत्वमङ्गीकृतं तावदेव स्वामिने दद्यान्न तु राज्ञे दण्डमित्यर्थः। अथवाऽङ्गीकृतां भृतिं दत्वा स्वामिना भृत्यो बलात्कारेण कारयितव्यः। यदाह नारदः—

कर्म कुर्वन् प्रतिश्रुत्य कार्यो दत्वा भृतिं बलात्।

इति। प्रतिश्रुत्येतत्प्रारम्भस्योपलक्षणार्थम्। यदाह कात्यायनः—

कर्मारम्भं तु यत्कृत्वा सिद्धं नैव तु कारयेत्।
बलात्कारयितव्योऽसावकुर्वन् दण्डमर्हति ॥

कार्षापणद्विशतमिति शेषः। यदाह वृद्धमनुः—

प्रतिश्रुत्य न कुर्याद्यस्स कार्यस्स्यात् बलादपि।
स चेन्न कुर्यात्तत्कर्म प्राप्नुयाद्द्विशतं दमम् ॥

इति। यत्तु मनुनोक्तं—

भृतोऽनार्तो न कुर्याद्यो दर्पात्कर्म यथोदितम्।
स दण्ड्यः कृष्णलान्यष्टौ न देयं चास्य वेतनम् ॥

इति, तदल्पदण्डत्वात् भागासिद्धिविषयं, दानप्रतिषेधाद्दत्त-मप्यदत्तप्रायत्वात् प्रत्याहरणीयम् । किञ्चिन्मात्रासिद्धौ तु पूर्वोक्तमेव दण्डवर्जं भवतीत्याह स एव—

यथोक्तमार्तस्स्वस्थो वा यस्तत्कर्म न कारयेत् ।
न तस्य वेतनं देयमल्पोनस्यापि कर्मणः ॥

स्वस्थो न कारयेदिति वदन्नस्वस्थेऽपि स्वयं कर्तृत्वनियमो नास्तीति दर्शयति । यस्त्वार्तस्त्वार्तिसमये धनाद्यभावेन न कारयति, किंत्वार्त्यपगमानन्तरं स्वयं करोति तत्रार्तेः दीर्घ-कालतया कालक्षेपेऽपि भृत्यदोषाभावाद्वेतनमसौ निर्विवादं लभते इत्याह स एव—

आर्तस्तु कुर्यात् स्वस्थस्सन् यथाभाषितमादितः ।
सुदीर्घस्यापि कालस्य लभेतैव च वेतनम् ॥

यस्तु कालविशेषावधिकं कर्म प्रतिज्ञाय प्रतिज्ञातकालापूर्तावेव कर्म सृजति तं प्रत्याह नारदः—

कालेऽपूर्णे त्यजन् कर्म भृतेर्नाशमवाप्नुयात् ।

अत्र दण्डमप्याह विष्णुः—'पणशतं च राज्ञे दद्यात्' इति । अस्मिन्नेव विषये महापारुष्यकरणादिस्वामिदोषतस्त्यजन् भृत्यो यावति काले कर्म तत्कालानुसारेण कल्पितं वेतनं लभत इत्याह नारदः—

स्वामिदोषादपक्रामन् यावत्कृतमवाप्नुयात् ।

इति । यस्तु प्रमादादिना स्वदोषेण स्वामिद्रव्यं बलीवर्दा-

दिकं नाशयति तं प्रत्याह विष्णुः—'तद्दोषेण च यद्विनश्येत्त-त्स्वामिने देयमन्यत्र राजदैवोपघातात्' इति। नष्टस्य यन्मूल्यं योग्यं तद्देयमित्यर्थः ।अत्र दोषविशेषाद्विशेषमाह वृद्धमनुः—

प्रमादान्नाशितं दाप्यं समं द्विर्द्रोहनाशितम् ।

इति । प्रमादान्नाशितं अनवधानान्नाशितं सममेव दद्यात्, द्रोहनाशितं तीव्रप्रहारादिना नाशितं तद्द्विर्दाप्यो द्विगुणं दद्यादित्यर्थः । भृत्यदोषाभावे यदन्यत एव नष्टं तन्न देयमित्याह स एव—

न तु दाप्यो हृतं चोरैर्दग्धमूढं जलेन वा ।

इति । ऊढं नीतम् । यस्तु वाहको वाह्यद्रव्यं प्रज्ञाहीनत्वादिना स्वदोषेण विनाशयति तं प्रत्याह नारदः—

भाण्डव्यसनमागच्छेद्यदि वाहकदोषतः ।
दाप्यो यत्तत्र नश्येत्तु दैवराजकृताद्दते ॥

भाण्डं गोण्यादिषु न्युप्य प्रापणीयं क्रमुकादिकम् । व्यसनमागच्छेत् दोषादिकं प्राप्नुयात् । अत्रापि,

प्रमादान्नाशितं दाप्यः समं द्विर्द्रोहनाशितम् ।

इति वृद्धमनूक्तो विशेषो द्रष्टव्यः । यस्तु वाहकः स्वदोषेण प्रस्थानविघ्नं करोति तं प्रत्याह कात्यायनः—

विघ्नयन्वाहको दाप्यः प्रस्थाने द्विगुणं स्मृतम् ।

इति । वाहक इत्युदाहरणमात्रमेव, न तु विवक्षितं, तेनायुधी-

यादिभृसेऽपि विघ्नकारिणि वचनमेतदिति मन्तव्यम् । अत एव नारदेन—

द्विगुणां तु भृतिं दाप्यः प्रस्थाने विघ्नमाचरन् ।

इति सामान्येनोक्तम् । विघ्नाचरणमङ्गीकृतकर्माकरणमेवात्र विवक्षितं न पुनरासेधादिकम् । अङ्गीकृतकर्माकरणस्यापि यदा सहायान्तरलाभेन प्रस्थानविघ्नानापादकत्वं तदा त्वाह याज्ञवल्क्यः—

प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन् ।
भृतिमर्धपथे सर्वां प्रदाप्यः ॥

इति । प्रक्रान्ते प्रस्थानकर्मणि स्वाङ्गीकृतं कर्म त्यजन् भृतेस्सप्तमं भागं दाप्यः । पथि गन्तव्यभागाधिक्ये त्यजन् भृतेश्चतुर्थं भागमर्धपथे त्यजन् सर्वां भृतिमित्यर्थः ॥

इति स्मृतिचन्द्रिकायां भृत्यविषयाणि.

---

## अथ स्वामिविषयाणि.

तत्र बृहस्पतिः—

प्रभुणा विनियुक्तस्सन् भृतको विदधाति यः ।
तदर्थमशुभं कर्म स्वामी तत्रापराध्नुयात् ॥

अशुभं कर्म सीमोल्लङ्घनाद्यन्यायेन क्षेत्रकर्षणादिकम् । स्वाम्यनुज्ञया भृत्येनाशुभकर्मकरणे स्वामिनो दण्ड इति वक्तुमिदमुक्तम् । कात्यायनोपि—

त्यजेत्पथि सहायं यः श्रान्तं रोगार्तमेव वा ।
प्राप्नुयात् साहसं पूर्वं ग्रामे त्र्यहमपालयन् ॥

सहायं भृत्यम् । बृहस्पतिरपि—

कृते कर्मणि यस्स्वामी न दद्याद्वेतनं भृते ।
राज्ञा दापयितव्यस्स्याद्विनयं चानुरूपतः ॥

भृते भृत्ये । विष्णुरपि—'स्वामी चेद्भृतमपूर्णकाले जह्यात्तस्य सर्वमेव मूल्यं दद्यात्, पणशतं च राज्ञे, अन्यत्र भृतदोषात्' इति । तस्येति चतुर्थ्यर्थे षष्ठी, शेष इत्यनुवृत्तौ 'चतुर्थ्यर्थे बहुलं छन्दसि' इति पाणिनिस्मरणात् । दोषोऽत्र चौर्यादिरभिप्रेतः, न पुनर्बह्वाशित्वादिः । याज्ञवल्क्योपि—

प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन् ।
भृतिमर्धपथे सर्वां प्रदाप्यस्त्याजकोपि च ॥

प्रस्थानकर्मणि प्रक्रान्ते, गन्तव्यभागाधिके पथि अर्धपथे वा यो भृत्यं कर्म कुर्वाणं स्वामी त्याजयति, सोऽत्र त्याजको मतः । सोपि पूर्वोक्तप्रदेशेषु भृत्यं त्यजन् भृत्याय सप्तमभागं दाप्य इत्यर्थः । पथि चतुर्थभागदापनमविक्रीतभाण्डस्वामिविषयम् । विक्रीतभाण्डस्वामिविषये त्वाह वृद्धमनुः—

पथि विक्रीय तद्भाण्डं वणिग्भृत्यं त्यजेद्यदि ।
अथ तस्यापि देयं स्याद्भृतेरर्धं लभेत सः ॥

पथि गन्तव्यभागाधिक इति शेषः । शौल्किकादीनामासेधेन प्रतिबद्धभाण्डस्वामिविषये राजाद्यपहृतभाण्डस्वामिविषये चाह कात्यायनः—

यदा तु पथि तत् भाण्डमासिध्येत ह्रियेत वा ।
यावानध्वा गतस्तेन प्राप्नुयात्तावतीं भृतिम् ॥

गतसरण्यनुसारेण स्वामी भृतिं प्रागदत्तां दद्यात् । प्राग्दत्तायास्तु भृतेराधिकमाददीतेत्यर्थः । भाटकगृहीतेन यानादिना भाण्डनेतारं प्रत्याह नारदः—

अनयन् भाटयित्वा तु भाण्डवान् यानवाहने ।
दाप्यो भृतिचतुर्भागं सर्वामर्धपथे त्यजन् ॥

यानं शकटादि । वाहनं अश्वादि । ते भाटयित्वा प्रापणादिकार्योपाधिकपरिक्रयं कृत्वा सहायार्थं परिक्रीतं यद्यपि न गृह्णाति, तथाऽपि भृतिचतुर्भागं मूल्यचतुर्थांशं दाप्य इत्यर्थः । अर्धपथे च सर्वदापनवचनात्ततो न्यूनपथे भाटकाहृतयानानि त्यजन् त्रिभागद्विभागकल्पनया दाप्य इत्यूह्यम् । यस्तु शकटादिकं भाटयित्वा तमेवोपकारशून्य आदाय देशान्तरं गच्छति, भाटकं तु न प्रयच्छति तं प्रत्याह वृद्धमनुः—

यो भाटयित्वा शकटं नीत्वा चान्यत्र गच्छति ।
भाटं न दद्याद्दाप्यस्स्यादरूढस्यापि भाटकम् ॥

कार्योपाधिकपरिक्रयमूल्यमिति यावत् । अरूढस्यापि अकृतोपकारस्यापि शकटादेर्भाटकं दाप्य इत्यर्थः । कात्यायनस्तु—कृते क्रये समनन्तरमसमर्पितस्य वाहनादेस्समर्पणपर्यन्तं भाटकानिवृत्तिरित्याह—

हस्त्यश्वगोखरोष्ट्रादान् गृहीत्वा भाटकेन यः ।
नार्पयेत्कृतकृत्यार्थस्स तु दाप्यस्सभाटकम् ॥

एवं गृहादेरपीत्याह स एव—

गृहवार्यापणादीनि गृहीत्वा भाटकेन यः ।
स्वामिने नार्पयेद्यावत्तावद्दाप्यस्स भाटकम् ॥

वारिशब्देनात्र तदाधारपात्रं मणिकादिकं लक्ष्यते । नार्पयेत् कृतकृत्यस्सन्निति शेषः । मणिकादिपात्रस्य कृत्स्नभ्रंशविषये त्वाह नारदः—

स्तोमवाहीनि भाण्डानि पूर्णकालान्युपानयेत् ।
ग्रहीतुराभवेत् भग्नं नष्टं चान्यत्र संप्लवात् ॥

स्तोमेन भाटकेन भाण्डानि द्रवद्रव्यप्रापणार्थं गृहीतानि स्तोमवाहीनि, तानि पूर्णभाटककालानि तत्स्वामिनं प्रापयेदित्यर्थः । सिद्धमुक्त्वा ग्रहीतुराभवेदित्याद्युक्तम् । तस्यायमर्थः—संप्लवः परस्परमन्येन वा द्रव्येण संघट्टनं, तत्र लेशतः कार्त्स्न्येन वा भिन्नं पूर्ववत्कृतं तुल्यरूपमापन्नं वा भाण्डस्वामिने देयम् । संप्लवादन्यत्र तु तथाभूतं भाटकग्रहीतुराभवेत् आत्मसंबन्धि भवेत् भाटकदात्रा न समाधेयमिति यावत् । गृहाधारदेशाय भाटकदातारं च प्रत्याह स एव—

परभूमौ गृहं कृत्वा स्तोमं दत्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम् ॥

इति । स्तोमाप्रदानेऽप्याह स एव—

स्तोमाद्विना वसित्वा तु परभूमावनिश्चितः ।
निर्गच्छंस्तृणकाष्ठादि न गृह्णीयात्कथञ्चन ॥
यान्येव तृणकाष्ठानि त्विष्टका विनिवेशिता ।
स निर्गच्छंस्तु तत्सर्वं भूमिस्वामिनि वेदयेत् ॥

इति । स्वामिनि स्वामिने । वेदयेत् निवेदयेदित्यर्थः । अनिश्चित इति वदन् तृणकाष्ठादिग्रहणाग्रहणपरिभाषाविहीनविषयमेतदिति दर्शयति । परिभाषितविषये तु यथा परिभाषा कृता तथैव । 'स तत् गृहीत्वा निर्गच्छेत्' इति मूलग्रहणव्यतिरिक्तविषयमित्याचाराविरोधाय कल्पनीयम् । शम्भुस्तु 'तत् गृहीत्वा इत्यस्य गृहं गृहीत्वा गृहोपकरणं गृहीत्वेति यावत् इति व्याख्यानं कृतवान्, तत् 'तृणकाष्ठेष्टकादिकम्' इत्यादिना विरुद्धमित्युपेक्षणीयम् । व्यासोपि मन्दिरद्रव्यस्यैव सम्बन्धमाह—

स्नेहेन तु चिरं कालं मन्दिरं कुरुते तु यः ।
निर्गच्छतस्तस्य दारु दत्तस्तोमस्य नान्यथा ॥

तस्य परभूमौ मन्दिरादि कर्तुः । निर्गच्छतः तत् स्थानं परित्यज्य गच्छतः । यद्दार्वादिकं मन्दिररूपेण स्थितं तद्भाटके दत्ते तद्दातुरेव, नो चेद्भूमिस्वामिन एवेत्यर्थः ॥

इति स्मृतिचन्द्रिकायां स्वामिविषयाणि.

---

## अथ पण्यस्त्रीतदुपभोक्तृविषयाणि.

तत्र नारदः—

शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत् ।
अनिच्छन् शुल्कदाताऽपि शुल्कहानिमवाप्नुयात् ॥

'नेच्छन्ती द्विगुणं वहेत्' त्यस्य क्वचिदपवादः स्मृत्यन्तरे दर्शितः—

व्याधिता सम्भ्रमा व्यग्रा राजधर्मपरायणा ।
आमन्त्रिता च नागच्छेदवाच्या बडबा स्मृता ॥

अत्यन्तावश्यकेषु कार्येषु जातसम्भ्रमा तदुपभोक्तृविटाविषये सम्भ्रमापदेनोक्ता । तत्रैव व्याकुला व्यग्रापदेनोक्ता । बडबा दासी, तद्ग्रहणमत्र पण्यस्त्रीप्रदर्शनार्थम्, व्याध्याद्यन्वयनिबन्धनस्यावाच्यत्वस्यान्यत्रापि तुल्यत्वात् । उपभोक्तारं तु प्रत्याह नारदः—

अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम् ।
अक्रमेण तु सङ्गच्छेत् घातदन्तनखादिभिः ॥
अयोनौ यस्समाक्रामेत् बहुभिर्वाऽपि साधनैः ।
शुल्कं सोऽष्टगुणं दाप्यो विनयं तावदेव तु ॥

इति । पण्यास्त्रियास्त्वपराधे दण्डादिकं मत्स्यपुराणे दर्शितं—

गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति ।
तां दमं दापयेद्द्व्यादितरस्यापिं भाटकम् ॥

विवादान्तरानिर्णेतॄन् विना निर्णेतॄनाह नारदः—

वेश्याप्रधाना ये तत्र कामुकास्तद्गृहोषिताः ।
तत्समुत्थेषु कार्येषु निर्णयं संशये विदुः ॥

इति स्मृतिचन्द्रिकायां पण्यस्त्रीतदुपभोक्तृविषयाणि. समाप्तश्च वेतनानपाकर्माख्यस्य पदस्य विधिवितानः.

---

अथ नारदाभिप्रायतः प्राचीनपदशेषभूतस्य स्वामिपालविवादाख्यस्य पदस्य विधिरुच्यते । मनोर्मत्या तु क्रयविक्रयानुशयाख्यपदानन्तरं स्वतन्त्रतयाऽस्य पदस्योक्तत्वादनन्तरमेवोद्देशक्रमाद्वक्तव्यम् । नारदीयोद्देशक्रमानुसारिणश्च वयमित्यनवद्यमिहाभिधानम् । अभिधानप्रतिज्ञा च मनुना स्वातन्त्र्यप्रकटनार्थं कृता—

पशुषु स्वामिनां चैव पालानां च व्यतिक्रमे ।
विवादं संप्रवक्ष्यामि यथावद्धर्मतत्त्वतः ॥

विवादं विवादापनोदकं विधिमित्यर्थः । पशुष्विति प्रतिज्ञाविषयनियमार्थमुक्तम् । तेन पशुविषये तत्स्वामिपालयोर्व्यतिक्रमे भृतिकल्पनादिविधिरस्मिन् पदे प्रतिपाद्यतया प्रतिज्ञातः, न पुनस्सस्यादिषु पशूनां स्वामिनां पालानां च व्यतिक्रमे निवारणदण्डताडनादिविधिः । अतोऽत्र निवारणादिविधिः प्रासङ्गिक एवेति मन्तव्यम् । अतोऽस्मिन् पदेऽस्मा-

भिः प्रतिज्ञातभृतिकल्पनादिविधिप्रतिपादकानि यानि वचनानि तान्येव लिख्यन्ते, तत्र नारदः—

गवां शताद्वत्सतरी धेनुस्स्याद्द्विशते भृतिः ।
प्रतिसंवत्सरं गोपे सन्दोहश्चाष्टमेऽहनि ॥

प्रतिसंवत्सरं वत्सतरी समतिक्रान्तवत्सत्वावस्था गौर्भृतिः । पालके पाल्यमानगोशतवशाद्देया भवति शतादधिके तु वत्सतरीस्थाने सवत्सा गौरष्टमेऽहनि संदोहश्च भवतीत्यर्थः । सन्दोहस्सर्वदोहः । यथाऽऽह बृहस्पतिः—

तथा धेनुभृतः क्षीरं लभेतास्याष्टमेऽखिलम् ।

इति । एतेन शम्भूक्तं धेनुसन्दोहयोर्नैरपेक्ष्येण भृतित्वं निरस्तमित्युपेक्षणीयम् । अनया दिशा शतद्विशतसङ्ख्यातो न्यूनाधिकसङ्ख्याकानां गवां महिष्यादिपश्वन्तराणां च भृतीयत्ता कल्पनीया । परिभाषितभृतिविशेषाभावविषयमेतत्, तत्सद्भावविषयेऽपीयत्तापरिभाषाभावे त्वाह मनुः—

गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम् ।
गोस्वाम्यनुमतो भृत्यः............ ॥

इति । दुह्यात् स्वभृत्यर्थमिति शेषः । एतदुक्तं भवति—दशतो दशदोग्ध्रीणां मध्ये वरामुत्कृष्टां स्वीकृत्य तत्क्षीरं क्षीरभृतो भृत्यो गृह्णीयादिति । दशदोग्ध्रीपालनार्था भृतिरियम् । अनया दिशा दशसंख्यातो न्यूनाधिकसंख्याकानां गवां पालनार्था महि-

ष्यादिपालनार्थाऽपि भृतिः कल्पनीया। अक्षीरपशूनां तु भृतिः क्षीरमूल्यतः कल्पनीया। द्रव्यान्तरेणाभृतपालकविषये क्षीर-भृते या प्रोक्ता भृतिः सैव भवतीत्याह स एव—'सा स्यात्पालेऽभृते भृतिः'। नारदस्तु स्वामिपालयोः कर्तव्यमाह—

उपानयेद्गां गोपाय प्रत्यहं रजनीक्षये।
समर्पिताश्च ता गोपः सायाह्ने प्रत्युपानयेत् ॥

गोग्रहणं पशूपलक्षणार्थम्। अत एव याज्ञवल्क्यः—

यथाऽर्पितान् पशून् गोपः सायं प्रत्यर्पयेत्तथा।

इति। यावन्तः प्रातस्समर्पितास्सायं तावन्तः प्रत्यर्पणीया इत्यर्थः। तथाच बृहस्पतिः—'सायं समर्पयेत्सर्वम्' इति। असर्वसमर्पणे त्वाह याज्ञवल्क्यः—

प्रमादमृतनष्टांश्च प्रदाप्यः कृतवेतनः।

कृतवेतनः पालक इत्यर्थः। प्रमादग्रहणं पालकदोषोपलणार्थम्। तेन मरणादौ निर्दोषः पालको न दाप्यः। न पुनः प्रमादमात्ररहितः, अत एव मनुः—

विघुष्य तु हृतं चोरैर्न पालो दातुमर्हति।
यदि देशे च काले च स्वामिनस्स्वस्य शंसति ॥

विघुष्य पशूनामनुधावनार्थं शृङ्गकळहवेण्वादिभिर्घोषं कृत्वेत्यर्थः। देशो यत्र स्वामी स्थितस्सोऽभिमतः, कालोप्याहरणकाला-दनतिविलम्बितोऽभिमतः। एवम्भूतं देशं कालं वा यदा स्व-

दोषेणातिक्रम्य देशान्तरे कालान्तरे वा शंसति तदा त्वपराधित्वात्तदनुसारेण दातुमर्हतीति गम्यते। व्यासस्त्वदाप्यत्वं निर्दोषत्वाभिधानादभिहितं भवतीत्यभिसन्धाय निर्दोषत्वमेव पालकस्य क्वचिदाह—

पालग्रहे ग्रामघाते तथा राष्ट्रस्य विभ्रमे।
यत् प्रणष्टं हृतं वा स्यान्न पालस्तत्र किल्बिषी॥

पुरुषकाराकरणेऽपीति शेषः। अन्यत्र तु पुरुषकाराकरणे भवत्येव किल्बिषी। अत एव मनुः—

नष्टं विनष्टं क्रिमिभिश्श्वहतं विषमे मृतम्।
हीनं पुरुषकारेण प्रदद्यात्पाल एव तु॥

नष्टं कुत्रेत्यविदितम्। क्रिमिभिर्विनष्टं प्रध्वस्तम्। श्वहतं शुना हतम्। विषमे हतं कन्दररन्ध्रप्रदेशादौ मृतम्। पुरुषकारस्तु नारदेन दर्शितः—

क्रिमिचोरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत्।
व्यायच्छेच्छक्तितः क्रोशेत्स्वामिने वा निवेदयेत्॥

व्यायच्छेत् व्यसननिरासाय यतेतेत्यर्थः। स्वामिने निवेदनमशक्तपालकविषयम्। यदाह स एव—

स्याच्चेद्गोव्यसनं गोपो व्यायच्छेत्तत्र शक्तितः।
अशक्तस्तूर्णमागत्य स्वामिने वा निवेदयेत्॥

पुरुषकारमकुर्वाणः प्रागुक्तविनाशकैर्विनष्टां व्यक्तिं दण्डं च यथाक्रमं स्वामिनि दातुमर्हतीत्याह स एव—

अन्यायच्छन्नाविक्रोशन् स्वामिने वाऽनिवेदयन् ।
वोढुमर्हति गोपस्तां विनयं चैव राजनि ॥

विनयप्रमाणमाह याज्ञवल्क्यः—

पालदोषाद्विनाशे तु पाले दण्डो विधीयते ।
अर्धत्रयोदशपणः स्वामिने द्रव्यमेव च ॥

अर्धत्रयोदशपणः सार्धत्रयोदशकार्षापणः, सः पाले विधेयो दण्ड इत्यर्थः । 'द्रव्यं विनष्टद्रव्यं मूल्यं विनष्टपशुमूल्यं च स्वामिने दद्यात्', इति विष्णुस्मरणात् । पालदोषप्रदर्शनार्थं तेनैव काश्चित्पालदोषोपि दर्शितः—'दिवा पशूनां वृकाद्युपघाते पाले त्वनायाति पालदोषः' इति । अनायाति उपघातनिवारणायानागच्छतीत्यर्थः । उपघातश्चात्र प्राणान्तिको विघातो विवक्षितो न पुनरुपद्रवलेशः । यदाह मनुः—

अजाविके तु संरुद्धे वृकैः पाले त्वनायति ।
यां प्रसह्य वृको हन्यात् पाले तत्किल्बिषं भवेत् ॥

यामजाविकजातीयां व्यक्तिमित्यर्थः । वृकग्रहणं तादृशहिंस्रप्रदर्शनार्थम् । सुगमस्थलस्थितविषयमेतत् । दुर्गमस्थलस्थितविषये तु शक्यपुरुषकारस्यापि पालकस्य निष्किल्बिषत्वमित्याह स एव—

तासां चेदवरुद्धानां चरन्तीनां मिथो वने ।
यामुपेत्य वृको हन्यान्न पालस्तत्र किल्बिषी ॥

वने दुर्गमारण्येऽवरुद्धानां पालकेन स्थापितानाम् । नारदेन तु मनूक्तवचनद्वयसमानार्थवचनत्रयानन्तरमजाविकेतरपशुपालकेषु स्ववचनत्रयार्थातिदेशः कृतः—

अनेन सर्वपालानां विवादस्समुदाहृतः ।

इति । तथा पालके विशुद्धिसिद्ध्युपायमाह स एव—

मृतेषु च विशुद्धिस्स्याद्वालशृङ्गादिदर्शनात् ।

इति । कालवशादप्यरण्ये मृतेषु पशुषु पश्वपहारशङ्कानिवृत्त्यर्थं वालशृङ्गादि पश्ववयवभूतं पालको दर्शयेदित्यर्थः । आदिशब्दार्थो मनुना प्रपञ्चितः—

कर्णौ चर्म च वालांश्च वस्तिं स्नायुं च रोचनाम् ।
पशुषु स्वामिनां दद्यात् मृतेष्वङ्गानि दर्शयेत् ॥

इति स्मृतिचन्द्रिकायां स्वामिपालाख्यस्य पदस्य विधिवितानम्.

---

अथ प्रासङ्गिकानि पश्वादिव्यतिक्रमविषये यानि विवादापनोदकवचनानि तानि लिख्यन्ते । तत्र कात्यायनः—

क्षेत्रारामविवीतेषु गृहेषु पशुपादिषु ।
ग्रहणं तत्प्रविष्टानां ताडनं वा बृहस्पतिः ॥

आरामः उपवनम् । विवीतशब्देन तृणकाष्ठसमृद्धः परपरिगृहीतः प्रदेश उच्यते । पशुपादिः गोष्ठादिः । ग्रहणं नि-

वारणार्थं कर्णाद्यवयवग्रहणं ताडनं वा क्षेत्रादिषु प्रविष्टानां परपशूनां कर्तव्यमिति बृहस्पतिः ब्रूत इत्यर्थः । ग्रहणं वत्सादीनां, स्थूलवृषादीनां तु ताडनमिति व्यवस्था तु योग्यतयाऽध्यवसेया । ताडनमपि निवारणार्थादधिकं न कार्यं, यदाह स एव—

अधमोत्तममध्यानां पशूनां चैव ताडने ।
स्वामी तु विवदेद्यत्र दण्डं तत्र प्रकल्पयेत् ॥

यत्र स्वामी स्मृत्याचारमार्गव्यपेतादधिकताडने विवदेत तत्र ताडनाधिक्यानुसारेण दण्डप्रकल्पनम् । पशुनिवारणोपायान्तरं चाह स एव—

अजातेष्वेव सस्येषु कुर्यादावरणं महत् ।
दुःखेनेह निवार्यन्ते लब्धस्वादुरसा मृगाः ॥

अटवीनिकटवर्तिक्षेत्रविषयमेतदिति मृगग्रहणात् गम्यते । मार्गासन्नक्षेत्रविषये त्वाह नारदः—

पथि क्षेत्रे वृतिः कार्या यामुष्ट्रो नावलोकयेत् ।
न लङ्घयेत्पशुर्नाश्वो न च भिन्द्याच्च सूकरः ॥

वृतिः वरणं कण्टकितशाखाभिः प्रान्ततः परिश्रयणमिति यावत् । पथिग्रहणं संबाधस्थानोपलक्षणार्थम् । सञ्चारपथग्रहणोपाध्यन्तरमाह—

पथि ग्रामविवीतान्ते न दोषो ह्यल्पकालकम् ।

इति। दीर्घकालचारे तु दण्डमर्हतीति व्यतिरेकाद्गम्यते, पालकस्य तत्र दोषसम्भवात्। तथाच दोष इत्यनुवृत्तौ गौतमः— 'पथि क्षेत्रेऽनावृत पालक्षैत्रिकयोः' इति। दीर्घकालं पशुतस्सस्यपीडन इति शेषः। क्षैत्रिक क्षेत्रकारी, तस्य वृतिमकुर्वतो राजभागविनाशनिबन्धनो दोष, ततश्च सोपि दोषानुसारेण दण्ड्य इत्यभिप्रायः। सपालपशुस्वामिनस्तु दोषस्तदभावे पालकस्यैव विज्ञेयो भृत्यापराधनिबन्धनत्वात्स्वाम्यपराधस्य। एवञ्च यत्र पालस्य दोषो न विद्यते तत्र सपालपशुस्वामिनोपि दोषाभावाद्विनष्टधान्यादिमूल्यं क्षैत्रिकाय स्वामिना न देयमिति मन्तव्यम्। विपालपशुस्वामिनाऽपि न देयं, पशोर्व्यतिक्रमेऽपि सपालस्येव तस्याप्यपरिहार्यतया व्यतिक्रमाभावात्। अत एवादण्ड्यत्वमपि पालकवत्तस्यास्मिन् विषये वेदितव्यम्। अत एवास्य क्षैत्रिकेणापि शदो न दाप्यः। दोषस्मरणाच्च, तथाचोशना—

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते।
पितरस्तस्य नाश्नन्ति नाश्नन्ति त्रिदिवौकसः॥

इति। एवञ्च यदुक्तं मनुना—

सर्वत्र तु शदो देयः क्षैत्रिकायेति धारणा।

इति, तत् निर्दोषविषयादन्यत्रेति मन्तव्यम्। सर्वत्रग्रहणं तु विपालेऽपि पशौ क्षैत्रिकस्य शदलाभो यथा स्यादित्येव-

मर्थम्। शदः क्षेत्रफलं इति धारणा एष निश्चय इत्यर्थः। दण्डस्तु निर्दोषविषयादन्यत्रेति स एवाह—

क्षेत्रेष्वन्येषु तु पशुः सपादं पणमर्हति।

इति। पशुरर्हति पशोस्स्वामी पालो वाऽर्हतीत्यर्थः। पशुमुखेन तत्स्वामिनः पालकस्य वाऽभिधानं पशुबहुत्वे प्रतिपशु सपादपणविधानार्थम्। तेन ग्रामादिसमीपवृत्तिक्षेत्रादावपि वृतिः कार्यैव। वृतौ श्वादिभिः कृतं छिद्रं कण्टकादिभिः पुनर्निश्छिद्रं कुर्यादित्याह मनुः—

छिद्रं च पूरयेत्सर्वं श्वसूकरमुखानुगम्।

इति। एवं पशुनिवारणोपाये कृतेऽपि तमतिक्रम्य सस्यनाशे स एवाह—

पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथवा पुनः।

सपालश्शतदण्डार्हो विपालं वारयेत्पशुम्॥

ग्रामान्तीये ग्रामारामादिसमीपवर्तिक्षेत्रे। परिवृत इति विशेषणमिहान्वीयते। एवञ्चायमर्थः—वृतिमतिक्रम्य ग्रासादाधिकसस्यघाती सपालः पशुः कार्षापणशतदण्डार्हः, तत्पशुपालकः शतदण्डनं दण्डनीय इति यावत्। विपालं पशुं पुनः क्षेत्रिको लगुडादिना निवारयेदिति। क्षेत्रिकायात्र सपालस्य पशोस्स्वामिना विनष्टधान्यं देयं, अस्मिन्नर्थे मूलं वक्ष्यामः। वृतिमुत्क्रामतः पशोर्यथाशक्त्यनिवारण एवायं दण्डः। तत्र नारदः—

उत्क्रम्य तु वृतिं यस्स्यात् सस्यघातो गवादिभिः ।
पालश्शास्यो भवेत्तत्र न चेच्छक्त्या निवारयेत् ॥

वृतिराहित्येनापरिहार्यसस्यघातविषयेऽप्याह स एव—

ग्रामोपान्ते च यत् क्षेत्रं विवीतान्ते महापथे ।
अनावृतं चेत्तन्नाशे न पालस्य व्यतिक्रमः ॥

महापथ इति वदन्नपरिहार्यमार्गगामिनो व्यतिक्रमाभावं दर्शयति । अत्रार्थाद्दण्डाभावोऽप्युक्तः । मानवे तु साक्षादेवोक्तः—

तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि ।
न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम् ॥

निवारणेऽनिच्छूनामिति शेषः । यदाह याज्ञवल्क्यः—

पथि ग्रामे विवीतान्ते क्षेत्रे दोषो न विद्यते ।
अकामतः कामचारे चोरवद्दण्डमर्हति ॥

अन्तशब्दोऽत्र समीपे वर्तते, स च पथ्यादिषु प्रत्येकमभिसम्बध्यते । अत्र दण्डव्यवस्थामाह गौतमः—'पशुपीडने स्वामिदोषः पालसंयुक्ते तु तस्मिन्' इति । पशुपीडने पशुवशात्सस्यपीडन इति यावत् । विपालपशुपीडने स्वामिन एव दोषः, पालसंयुक्ते तु पालेऽपीत्यर्थः । तत्र स्वामिन एव दोषे तस्य शददण्डौ, द्वयोर्दोषे तु स्वामिनश्शदः पालस्य दण्ड एव, न पुनः शदोपीति मन्तव्यम् । यत्तु नारदेनोक्तम्—

या नष्टा पालदोषेण गौः क्षेत्रं तु विनाशयेत् ।
न तत्र स्वामिनो दोषः पालस्तं दण्डमर्हति ॥

इति, तत्र स्वामिनो दण्डप्रापकदोषाभाव उक्तो न पुनः शदप्रापकदोषाभावोपीत्यविरोधः । नष्टा अविदितस्थाना । यत्तु बृहस्पतिनोक्तं—

सस्यान्निवारयेद्गास्तु चीर्णदोषो द्वयोर्भवेत् ।
स्वामी शददमं दाप्यः पालस्ताडनमर्हति ॥

इति, शदश्च दमश्चेति शददममित्यस्य विग्रहः । यच्च याज्ञवल्क्येनोक्तं—

गोपस्ताड्यस्तु गोमी तु पूर्वोक्तं दण्डमर्हति ।

इति, गोपः पशुपालः, गोमी पशुस्वामी । तदिदं द्वयमपि समूलसस्यनाशविषयं, तत्र पुनः प्ररोहाभावेनापराधाधिक्यात्, स्वामिनोपि दण्डार्हत्वाच्च । अत एव नारदः—

समूलसस्यनाशे तु तत्स्वामी प्राप्नुयाच्छदम् ।
वधेन गोपो मुच्येत दण्डं स्वामिनि पातयेत् ॥

तत्स्वामी सस्यस्वामी । शदोऽत्र अत्यन्तविनाशानुसारेण शदकल्पकैः कल्पितः । शदकल्पकाश्च बाधितक्षेत्रस्य समन्ततो यानि क्षेत्राणि तत्कारिणो विज्ञेयाः ।

गोभिस्तु भक्षितं सस्यं यो नरः प्रतियाचते ।
सामन्तानुमतं देयं धान्यं वा तत्र वापितम् ॥

इति तेनैवोक्तत्वात् । वधोऽत्र कशादिना ताडनम् । दण्डोऽत्र स एव वेदितव्यो यो याज्ञवल्क्येन पूर्वमुक्तः । कः पुनरसौ ? उच्यते—

माषानष्टौ तु महिषी सस्यघातस्य कारिणी ।
दण्डनीया तदर्धं तु गौस्तदर्धमजाविकम् ॥
भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः ।
सममेषां विवीतस्थे खरोष्ट्रमहिषीसमम् ॥

इति । अयमर्थः—परसस्यघातकारिण्या बालेतरमहिष्याः स्वामी प्रतिमहिष्यष्टौ माषान् दण्डनीयः । उक्तविशेषणद्वययुक्तगोस्वामी चतुरो माषान् । तथाविधच्छागमेषस्वामी च द्वौद्वौ माषौ । एषामेव पशूनां सस्यभक्षणादारभ्य यावच्छयनमनिवारितानां स्वामी यथोक्तदण्डाद्द्विगुणं पूर्ववद्दण्डनीयः । विवीतस्थतृणाद्युपघातेऽपि पूर्वोक्तपशुस्वामी सस्यक्षेत्रोपघातवद्दण्डनीयः । खरोष्ट्रस्वामी महिषीस्वामिवद्दण्डनीय इति । वाचकपदेन महिषीस्वामीत्यादिना दण्डे वक्तव्ये महिषीत्याद्यवाचकपदेन दण्डोक्तिः प्रतिपश्वेवं दण्डनीय इत्यभिधानार्थेति मन्तव्यम् । अत्रापराधानुसारेण दण्डनार्थं ताम्रिकमाषो ग्राह्यः, न पुनस्सौवर्णो राजतो वा । ताम्रिकश्च माषः कार्षापणस्य षोडशो भागो भवति । यैस्त्वनुरूपदण्डनार्थं—

माषो विंशतितमो भागः पणस्य परिकीर्तितः ।

इति नारदेनोक्तमाषः स्वीकृतः, तेषां—

सङ्ख्या रश्मिरजोमूला मनुना समुदाहृता ।
कार्षापणोना सा दिव्ये नियोज्या विनये तथा ॥

इति बार्हस्पत्यवचनविरोधो दुर्वारः, मनुनोदाहृतमाषास्वीकारात् ।

ताम्रिकमाषस्य तु मनुनोक्तस्य स्वीकारे न केनापि विरोध इत्यलं परपक्षयुक्तायुक्तचिन्तया। यत्तु मनुनोक्तं 'सपादपण-मर्हति' इति, तत् स्वामिमतिपूर्वपशुव्यतिक्रमविषयम्। याज्ञ-वल्क्यवचनं त्वबुद्धिपूर्वविषयमिति न तयोर्विरोधः। यत्तु वि ष्णुनोक्तं 'महिषी चेत् सस्यघातं कुर्यात् पालस्त्वष्टौ माषान् दण्ड्यः अपालायां स्वामी' इति, तदसमूलसस्यनाशविशयं, अन्यतरदण्डस्याल्पापराध एव युक्तत्वात्। यत्तु शङ्खलिखि ताभ्यामुक्तं 'महिषी दश' इति, तन्नारदोक्तमाषाभिप्रायं, तथात्वे फलतस्ताम्रिकाष्टमाषात्मक एव दण्डो भविष्यति, तेन न 'माषानष्टौ' इति याज्ञवल्क्यवचनेन विरोधः, न च 'सङ्ख्या रश्मि' इत्यादिबार्हस्पत्यवचनेन। यच्च ताभ्यामेवो-क्तं 'खरोष्ट्रं षोडश अजाविकं चतुरः इति, तत् भक्ष-यित्वोपविष्टखरादिविषयम्। यत्तु कात्यायनेनोक्तं—

दापयेत्पणपादं गां द्वौ पादौ माहषीं तथा।

इति, यच्च नारदेन—

गावः पादं प्रदण्ड्यास्तु महिष्यो द्विगुणं ततः।

इति, तत्ताम्रिकमाषस्वीकारपक्षे फलतः समानत्वादविरुद्ध-मेव। नारदोक्तमाषस्वीकारपक्षे तु परं विरोधः। अत एव चासौ पक्षो नास्माकमिति सर्वमविरुद्धम्। यत्तु स्मृत्यन्तरं—

पणस्य पादौ द्वौ गां तद्द्विगुणां महिषीं तथा।
तथाऽजाविकवत्सानां पादौ दण्डः प्रकीर्तितः॥

इति, तत् भक्षयित्वोपविष्टविषयं, वचोभङ्ग्या तद्विषयदण्डस्यैवाभिधानात् । यत्पुनर्नारदेनोक्तं—

माषं गां दापयेद्दण्डं द्वौ माषौ महिषीं तथा ।
तथाऽजाविकवत्सानां दण्डस्स्यादर्धमाषकः ॥

इति, अत्र राजतस्य माषस्य माषशब्देनाभिधानं भक्षयित्वोपविष्टवत्सविषयं मन्तव्यम् ।

वसतां द्विगुणः प्रोक्तः सवत्सानां चतुर्गुणः ।

इति स्मृतेस्समानार्थत्वमेवास्य वचनस्य भविष्यति । दक्षिणापथे षोडश ताम्रिकमाषाणामेकस्य राजतमाषस्य तुल्यमूलत्वात् । अथवाऽत्रापि ताम्रिकमाषस्यैवाभिधानमस्तु, तथाऽपि मुहूर्तमात्रभक्षणाविषयत्वादाविरोधः । तथाच 'दण्डं प्राप्नुयात्' इत्यनुवृत्तावाहतुश्शङ्खलिखितौ—'रात्रौ चरन्ती गौः पञ्च माषान् दिवा त्रीन् मुहूर्ते मापं ग्रासे त्वदण्डः' इति । एतदप्रत्यक्षचारकविषयं,

प्रत्यक्षचारकाणां तु चोरदण्डः स्मृतो बुधैः ।

इति नारदस्मरणात् । ग्रासे त्वदण्ड इत्यस्यायमर्थः— महिष्यादिभिः परसस्यादिषु कबळमात्रभक्षणे कथञ्चित् कृते पालस्य स्वामिनो वा स्वल्पोपि दण्डो नास्तीति । आतुरपशुविषये तु बहुसस्यनाशेऽप्येवमेवादण्ड इति दोषाभावाभिधानमुखेनाह नारदः—

राजग्रहगृहीतो वा वज्राशनिहतोपि वा ।
अथ सर्पेण वा दष्टो वृक्षाद्वा पतितो भुवि ॥
व्याघ्रादभिहतो वाऽपि व्याधिभिर्वाऽप्युपद्रुतः ।
न तत्र दोषः पालस्य न च दोषोस्ति गोमिनाम् ॥

इति । आतुराणामनिवार्यत्वादिति शेषः । निवार्याणामपि केषां चित्पशूनां व्यतिक्रमे दण्डो नास्तीत्याह स एव—

गौः प्रसूता दशाहान्तं महोक्षो वाजिकुञ्जराः ।
निवार्यास्तु प्रयत्नेन तेषां स्वामी न दण्डभाक् ॥

दशदिनपर्यन्तं प्रसूतायाः निरोद्धुमशक्यायाः तत्स्वामी न दण्डभाक् । महोक्षस्य सर्वासां गर्भाधानार्थं सर्वदा बन्धनायोगात् तत्स्वामी न दण्डभाक् । वाजिकुञ्जराणां स्वामिनोऽदण्डभाक्त्वे हेतुरुशनसा दर्शितः—

अदण्ड्या हस्तिनो ह्यश्वा प्रजापालहिताः स्मृताः ।

इति । एवञ्च राजकीयानामुक्तवद्भावाददण्ड्यत्वमेव । स्वामिग्रहणं पालस्याप्युपलक्षणार्थम् । यदाह मनुः—

अनिर्दशाहां गां सूतां वृषान् देवपशूंस्तथा ।
अपालान्वा सपालान्वा न दण्ड्यान्मनुरब्रवीत् ॥

वृषाः महोक्षाः, अथवा वृषोत्सर्गविधानेन उत्सृष्टाः,

अदण्ड्याः काणकूटाश्च वृषश्च कृतलक्षणः ।

इत्युशनसोक्तत्वात् । काणः एकाक्षः । कूटः एकशृङ्गः ।

कृतलक्षणः प्रतप्तायसेन कृतलाञ्छनः, अस्य अस्वामिकत्वात् स्वामिदण्डाभावेऽपि सस्यरक्षणार्थं कदाचित् कृतलक्षणानां पाले कृते न तस्य दण्डभागित्वं, तेषां दुर्निवारत्वादिति वक्तुं 'वृषश्च कृतलक्षणः' इत्युक्तम्। एवमेव वक्तुं मानवे 'देवपशूंस्तथा' इत्युक्तम्। देवपशवो हि देवताप्रतिमादीनां क्षीरस्नानाद्यर्थं तदुद्देशेन दत्ताः, न च तत्र वस्तुतस्स्वस्वामिभावोऽस्तीति कृतलक्षणवृषवत्पालदण्डापवादार्थमेव देवपशुग्रहणम्। प्रसूतगोवदुभयदण्डाभाव एवोशनसा गोविशेषे दर्शितः—

अदण्ड्याऽऽगन्तुकी गौश्च प्रसूता ह्यभिचारिणी।

आगन्तुकी अनभ्यस्तस्थाना। अभिचारिणी प्रचुरताडनात् प्रच्युता पुनः स्वयूथाभिगामिनी। एवं कालविशेषे तेनैव गोमात्रविषये दण्डाभावो दर्शितः—

अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च।

इति। अत्र व्यासः—

आक्रम्य यद्द्विजैर्भुक्तं परिक्षीणैश्च बान्धवैः।
गोभिश्च नरशार्दूल! वाजिमेधाद्विशिष्यते॥

अत्र मनुः—

एतद्विधानमातिष्ठेद्धार्मिकः पृथिवीपतिः।
स्वामिनां च पशूनां च पालानां च व्यतिक्रमे॥

इति स्मृतिचन्द्रिकायां पश्वादिव्यतिक्रमविषयाणि.

---

एवं वेतनानपाकर्माख्यपदशेषभूतं स्वामिपालविवादाख्यं पदं, तत्प्रसक्तानि च पश्वादिव्यतिक्रमविषयाण्युक्त्वा इदानीमुद्देशक्रमप्राप्तास्वामिविक्रयाख्यस्य पदस्य विधिरुच्यते ।

तत्र नारदः—

द्रव्यमस्वामिविक्रीतं प्राप्तस्स्वामी तदाप्नुयात् ।

इति । अस्वामिना विक्रीतं स्वकीयं द्रव्यं यस्य पार्श्वे दृष्टं तस्य सकाशात् स्वामी तत् गृह्णीयादित्यर्थः । एतत्स्वाम्यननुमत्या विक्रीतद्रव्यविषयं,

विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसंमतः ।

इति मनुना विशेषितत्वात् । परस्य स्वमित्यस्यार्थो बृहस्पतिना प्रपाञ्चितः—

निक्षेपान्वाहितन्यासहृतयाचितवन्धकम् ।
उपांशु येन विक्रीतमस्वामी सोऽभिधीयते ॥

हृतं अपहृतम् । इतराणि पूर्वार्धवर्तीनि पदानि बहुधा-व्याख्यातानि । उपांशु अप्रकाशम् । प्रपञ्चोऽयं परद्रव्यतया प्रसिद्धानां प्रदर्शनार्थः । प्रायिकाभिप्रायेणोपांशुग्रहणम् । तेन प्रणष्टाधिगतादिकमपि परद्रव्यं येन विक्रीतं, प्रकाशमपि येन निक्षेपादिकं विक्रीतं, सोऽप्यस्वामी । अस्वामिविक्रयनिरूपणस्य किं प्रयोजनमित्यपेक्षिते नारदः—

अस्वामिना कृतो यस्तु क्रयो विक्रय एव च ।
अकृतस्स तु विज्ञेयो व्यवहारेषु नित्यशः ॥

कात्यायनोपि—

अस्वामिविक्रयं दानमाधिं च विनिवर्तयेत् ।

इति । एवंच विक्रयादितः प्रागेवास्वामिहस्ते दृष्टं नष्टमपहृतं वा स्वकीयद्रव्यमस्वामिनः सकाशात् स्वामी गृह्णीयादिति दण्डापूपन्यायसिद्धं बोद्धव्यमिति । यत्तु याज्ञवल्क्येनोक्तं—

हृतं प्रणष्टं यो द्रव्यं परहस्तादवाप्नुयात् ।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान् ॥

इति । अत्र न परहस्तादवाप्तिः दण्ड्यत्वे हेतुः न्याय्यत्वात्तस्याः, किंत्वनिवेदनं, तस्य तस्करप्रच्छादनफलकत्वेनान्याय्यत्वात् । यदा पुनः परहस्तादवाप्तुमसमर्थः स्वामी तदा त्वाह स एव—

नष्टापहृतमासाद्य हर्तारं ग्राहयेन्नरम् ।
देशकालातिपत्तौ वा गृहीत्वा स्वयमर्पयेत् ॥

अयमर्थः—विनिष्टमपहृतं वा स्वकीयं द्रव्यमासाद्य अधिगन्तुरपहर्तुर्वा हस्ते दृष्ट्वा अधिगन्तारमपहर्तारं वा ग्राहयेद्राजपुरुषादिभिः सामाद्युपायैः । देशकालातिपत्तौ पुरुषाद्यानयनार्थं देशान्तरगमने कालक्षेपे च क्रियमाणे पलायनशङ्कायां स्वयमेव वा गृहीत्वा राजपुरुषेभ्यो राज्ञे वा समर्पयेदिति । ततो राजपुरुषादिभिः सामाद्युपायैः स्वामिने तद्धनं दापयित्वा दण्डयित्वा चोत्स्रष्टव्य इति ग्राहणगृहीत्वाऽर्पणविध्यो-

दृष्टार्थत्वबलाद्गम्यमानमिह बोद्धव्यम्। यदा तु विक्रयादूर्ध्वमेव क्रेतुर्हस्ते क्रीतं पश्यति तदाऽप्याह स एव—'स्वं लभेतान्यविक्रीतम्' इति। अन्यविक्रीतं स्वाम्यनुमतिमन्तरेणास्वामिना विक्रीतमात्मीयद्रव्यं क्रेतुः सकाशात् स्वामी गृह्णीयादित्यर्थः विष्णुरपि—"अज्ञानतः प्रकाशं यः परद्रव्यं क्रीणीयात् तत्र तस्यादोषः, स्वामी द्रव्यमवाप्नुयात्" इति। अज्ञानतः विक्रेतुरस्वामित्वाज्ञानतः। तत्र परद्रव्यक्रये। तस्य क्रेतुः। अदोषः तस्य तस्करदोषो नास्तीत्यर्थः। विक्रेतुस्तद्दोषोस्त्येव, तेनात्र विक्रेतैव तस्करवद्दण्ड्यः न पुनः क्रेताऽपि। यत्र पुनर्विक्रेतुरस्वामित्वं रहसि हीनमूल्येन वा विक्रयकरणादिना ज्ञात्वैव लोभादिना परद्रव्यं क्रीणाति तत्र क्रेतुरपि तस्करदोषोस्तीति सोपि तस्करवद्दण्ड्यः। तथाच स एव—'यद्यप्रकाशं हीनमूल्यं वा विक्रीणीयात्तदा क्रेता च चोरवच्छास्यः' इति। बृहस्पतिरपि ज्ञानतोऽज्ञानतश्च क्रये यथाक्रमेण स्तेनता निर्दोषता च क्रेतुर्भवतीति दर्शयति—

येन क्रीतं तु मूल्येन प्राग्राज्ञे विनिवेदितम्।
न तत्र विद्यते दोषः स्तेनः स्यादुपविक्रयात्॥

मूल्येन अहीनमूल्येन। प्राग्राज्ञे विनिवेदितं क्रयात्प्रागेव प्रकाशितमित्यर्थः। उपविक्रयपदं तु स्वयमेव व्याचष्टे—

अन्तर्गृहे बहिर्ग्रामान्निशायामसतो जनात्।
हीनमूल्यं च यत्क्रीतं ज्ञेयोसावुपविक्रयः॥

असतो जनात् चण्डालादिजनादित्यर्थः । असद्ग्रहणमस्वामित्व-ज्ञापकदासत्वादिविक्रेतृविशेषणानामुपलक्षणार्थम् । अत एव नारदः—

अस्वाम्यनुमताद्दासादसतश्च जनाद्रहः ।
हीनमूल्यमवेलायां क्रीणन् तद्दोषभाग्भवेत् ॥

अस्वाम्यनुमतात् अस्वामिनैवानुमतात्, स्वाम्यनुमतिशून्यादिति यावत् । दासग्रहणमस्वतन्त्रोपलक्षणार्थम् । तद्दोषभाक् तस्करदोषभागित्यर्थः । 'क्रेतुस्स्तेयं रहःक्रयात्' इति तेनैवोक्तत्वात् । एवं 'क्रेतुर्दोषोऽप्रकाशिते' इति याज्ञवल्क्यवचनेऽपि स्तेयदोष एवोक्त इत्यवगन्तव्यम् । तथाच तेनैव—

हीनाद्रहो हीनमूल्ये वेलाहीने च तस्करः ।

इति तस्करशब्दं प्रयुञ्जानेन स्तेयदोष एव दोषशब्देनोक्त इति सूचितम् । हीनात् क्रेयद्रव्यागमोपायहीनादित्यर्थः ॥

इति स्मृतिचन्द्रिकायां प्रतिपन्नास्वामिविक्रयविषयाणि.

---

## अथ विप्रतिपन्नास्वामिविक्रयविषयाणि.

तत्र कात्यायनः—

अभियोक्ता धनं कुर्यात् प्रथमं ज्ञातिभिस्स्वकम् ।

इति । अभियोक्ता नाष्टिकः, नष्टधनस्यैवात्राभियोक्तृत्वात् । सोऽन्यहस्ते धनं दृष्ट्वा ज्ञातिभिस्साक्षिभूतैः स्वकं स्वकीयं यथा

भवति तथा तावत्साधयेदित्यर्थः । कथं नाष्टिकेन स्वकीयत्वसाधनमित्यपेक्षिते याज्ञवल्क्यः—

आगमेनोपभोगेन नष्टं भाव्यं........ ॥

इति । आगमस्तु—

लब्धं दानक्रयप्राप्तं शौर्यं वैवाहिकं तथा ।

बान्धवादप्रजाज्जातं षड्विधस्तु धनागमः ॥

इत्यादिवचनैः भुक्तिप्रकरणे निरूपितो द्रष्टव्यः । तेन चागमेनोपभोगसहितेन ज्ञातिप्रसिद्धेन नष्टधनस्य स्वकीयत्वं साध्यमित्यर्थः । तथाच कात्यायनः—

नाष्टिकस्तु प्रकुर्वीत तद्धनं ज्ञातिभिस्स्वकम् ॥

इति । तद्धनं नष्टधनम् । स्वकं स्वकीयम् । प्रकुर्वीत साधयेदित्यर्थः । स्वकीयस्य धनस्य स्वकीयत्वावगतिरपि दानाद्यभावेन साधनीयेत्याह स एव—

अदत्तत्यक्तविक्रीतं कृत्वा स्वं लभते धनम् ॥

इति । दत्तं च त्यक्तं च विक्रीतं च दत्तत्यक्तविक्रीतं, तद्विपरीतमदत्तत्यक्ताविक्रीतं तथाभूतं भवतीति प्रमाणसिद्धं कृत्वा स्वं स्वकीयं धनं नाष्टिको विक्रेत्रादिसकाशाल्लभत इत्यर्थः । क्रेतारं प्रत्याह बृहस्पतिः—

पूर्वस्वामी तु तद्द्रव्यं यदाऽऽगत्य विचारयेत् ।

तत्र मूलं दर्शनीयं क्रेतुश्शुद्धिस्ततो भवेत् ॥

मूलं विक्रेता।शुद्धिः अभियोज्यत्वनिवृत्तिः।मूलदर्शनानन्तरं व्यासः-

मूले समाहिते क्रेता नाभियोज्यः कथञ्चन ।
मूलेन सह वादस्तु नाष्टिकस्य तदा भवेत् ॥

नाष्टिकस्य नष्टद्रव्यस्वामिनः । तस्मिन्वादे यदि मयाऽप्यन्यस्माद्विक्रेतुस्सकाशात् क्रीतमित्यभियोज्यो वदति तदा तत्राप्यय मेव मूलदर्शनादिक्रमोऽनुसरणीयः । यदि तु नष्टग्राहकत्वेनापहारकत्वेन वा अकिञ्चित्करमूलत्वेन दर्शितो ददाति तदाऽऽह बृहस्पतिः—

विक्रेता दर्शितो यत्र हीयते व्यवहारतः ।
क्रेत्रे राज्ञे मूल्यदण्डौ प्रदद्यात्स्वामिने धनम् ॥

क्रेत्रे मूल्यं राज्ञे दण्डं स्वामिने धनं प्रदद्यादित्यर्थः । नारदोपि—

विक्रेता स्वामिनेऽर्थं स्वं क्रेत्रे मूल्यं च तत्कृतम् ।
दद्याद्दण्डं तथा राज्ञे विधिरस्वामिविक्रये ॥

यदा तु मूलभूतो विक्रेता देशान्तरे स्थितः तदा त्वाह कात्यायनः—

मूलानयनकालस्तु देयो योजनसङ्ख्यया ।

इति । योजनसंख्यया देशविप्रकर्षापेक्षयेत्यर्थः । यदा तु कालविलम्बेनापि मूलदर्शनं न शक्यं तदाऽप्याह स एव—
'प्रकाशं वा क्रयं कुर्यात्' इति प्राकृतं क्रयं साक्षिवचनाल्लोकविदितं कुर्यादित्यर्थः । तथाच स एव—

प्रकाशं च क्रयं कुर्यात्साधुभिर्ज्ञा(वृ)तिभिस्स्वकैः ।
न तत्रान्या क्रिया प्रोक्ता दैविकी न च मानुषी ॥

क्रये प्रकाशिते क्रेता न राज्ञा दण्ड्य इत्याह स एव—

विशोधिते क्रये राज्ञा वक्तव्यस्स न किञ्चन ।

इति । मनुरपि—

अथ मूलमनाहार्यं प्रकाशक्रयशोधितम् ।
अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम् ॥

प्रकाशक्रयशोधितं धनं क्रेतुस्सकाशान्नाष्टिको लभते, क्रेता चादण्ड्यो भूत्वा राजकीयादवरोधान्मुच्यत इत्यर्थः । 'अथ मूलमनाहार्यम्' इत्यनेन सति सम्भवे मूलानयनपक्ष एव ग्राह्य इत्युक्तम् । उक्तं च कात्यायनेन—

असमाहार्यमूलस्तु क्रयमेव विशोधयेत् ।

इति । असमाहार्यमूल एव क्रयं विशोधयेदित्यर्थः । तत्र

यदा क्रिया(मूल)मुपन्यस्य पुनर्वादी क्रयं वदेत् ।
आहरेन्मूलमेवासौ न क्रयेण प्रयोजनम् ॥

वदेत् प्रकाशं क्रयं वदेदित्यर्थः । यदा मूलं न दर्शयति क्रेयप्रकाशनं वा न करोति तदाऽप्याह स एव—

अनुपस्थापयन्मूलं क्रयं वाऽप्यविशोधयन् ।
यथाऽभियोगं धनिने धनं दाप्यो दमं च सः ॥

नाष्टिकोपि यदा नष्टस्य स्वकीयत्वं न साधयेत्तदाऽप्याह स एव—

यदि स्वं नैव कुरुते ज्ञातिभिर्नाष्टिको धनम् ।
प्रसंगविनिवृत्त्यर्थं चोरवद्दण्डमर्हति ॥

प्रसंगः अतिप्रसंगः । याज्ञवल्क्योपि--

आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा ।
पञ्चबन्धो दमस्तत्र राज्ञस्तेनाविभाविते ॥

विवादास्पदस्य धनस्य पञ्चभागसंमितो यत्र दमो बध्यते स पञ्चबन्धः । अल्पापराधविषयमेतत् । महापराधविषये त्वाह व्यासः—

वादी चेन्मार्गितं द्रव्यं साक्षिभिर्न विभावयेत् ।
दाप्यः स्याद्द्विगुणं दण्डं क्रेता तद्द्रव्यमर्हति ॥

क्रेतुः द्रव्यलाभः पञ्चबन्धविषयेऽपि भवति । यदा च नाष्टिकः स्वकीयत्वमनुवर्तमानं न विभावयाति तत्रैव क्रेतुः क्रीतद्रव्यलाभो नान्यत्रेत्यनुसन्धेयम् । एवञ्च यन्मनुनोक्तं—

विक्रयाद्यो धनं किञ्चित् गृह्णीयात् कुलसन्निधौ ।
क्रयेण स विशुद्धं हि न्यायतो लभते धनम् ॥

इति, यच्च मरीचिनोक्तं—

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः ।
दिवा गृहीतं यत्क्रेता स शुद्धो लभते धनम् ॥

इति, तदेतन्मार्गितद्रव्याविभावनाविषयम् । मार्गितद्रव्यविभावनासद्भावविषयेऽपि मनुमरीचिवचनबलात् प्रकाशकृतक्रये क्रेतु-

धनलाभोऽस्त्विति चेन्न, न हि वचनशतेनाप्यस्वामिविक्रीतं क्रेतुस्सम्भवतीति प्रमातुं शक्यते। किञ्च सर्वत्र प्रकाशक्र यक्रेतुः धनलाभे प्रागुक्तेन 'अथ मूलमनाहार्यम्' इत्यादिव चनेन सह विरोधो दुर्वारः स्यात्। तस्मात् प्रकाशक्रयेऽपि मार्गितद्रव्यविभावनाभाव एव क्रेतुर्धनलाभ इत्यवगन्तव्यम्। शम्भुना तूक्तदोषपरिहाराय मनुमरीचिवचनाभ्यां क्रेतुर्धनयोग्यतामात्रमुच्यते, न तु वस्तुतस्तस्यैव धनं भवतीत्युच्यत इत्युक्तं, तदयुक्तं, योग्यतामात्रकथनस्योपयोगाभावात्। यदा क्रयस्यापि साक्षिभिर्विभावनाभावस्तदा त्वाह बृहस्पतिः——

प्रमाणहीनवादे तु पुरुषापेक्षया नृपः।
समन्यूनाधिकत्वेन स्वयं कुर्याद्विनिर्णयम्॥

यस्मिन् वादे नाष्टिकस्यानुवर्तमानस्वत्वसाधकप्रमाणाभावः, क्रेतुश्च प्रकाशक्रयसाधकप्रमाणाभावस्तस्मिन् वादे नाष्टिकक्रेतृपुरुषयोस्साधुत्वाद्यपेक्षया विवादास्पदं धनं समन्यूनाधिकत्वेन विभज्यैतावत्तवेति स्वयमेव राजा विनिर्णयं कुर्यादित्यर्थः। ननु प्रमाणहीनवादो न कुत्रापि सम्भवति, कथञ्चिन्मानुषाभावेऽपि दिव्याभावस्य सर्वथा वक्तुमशक्यत्वात्। मैवं, अस्वामिविक्रये वादे दिव्याभावस्तावदवगम्यते—

अभियोक्ता धनं कुर्यात् प्रथमं ज्ञातिभिस्स्वकम्।
पश्चादात्मविशुद्ध्यर्थं क्रयं क्रेता स्वबन्धुभिः॥

इत्यादिवचनानां साक्षिनियामकानां तदितरप्रमाणाभावाभिधानपरत्वात्। किंच—

प्रकाशं च क्रयं कुर्यात्साधुभिर्ज्ञातिभिः स्वकैः।
न तत्रान्या क्रिया प्रोक्ता दैविकी न च मानुषी॥

इति साक्षीतरप्रमाणनिषेधाद्दिव्याभावस्सुव्यक्तः। एवञ्च यदुक्तं कात्यायनेन—

अलेख्येऽसाक्षिके दैवीं व्यवहारे विनिर्दिशेत्॥

इति, तद्दिव्यनिषेधस्मृत्यभावविषयमिति मन्तव्यम्। एतेनैतन्निरस्तं, यच्छम्भुना मूलानयनक्रयप्रकाशनरूपमुभयमधिकृत्योक्तम्—अथोभयं कर्तुमसमर्थश्चौर्यं च न मन्यते तदा द्रव्यापेक्षया दिव्यं देयम्।

अलेख्येऽसाक्षिके दैवीं व्यवहारे विनिर्दिशेत्।

इति कात्यायनेनोक्तत्वादिति। सप्रमाणकवादेऽपि क्वचित्सममेव दीयमानं भवतीति वचोभङ्ग्या स एव दर्शयति—

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः।
अविज्ञाताश्रयात् क्रेता विक्रेता यत्र वा मृतः।
स्वामी दत्वाऽर्धमूल्यं तु प्रगृह्णीत स्वकं धनम्॥

इति। अविज्ञाताश्रयादविज्ञातस्थानकाद्विक्रेतुस्सकाशादित्यर्थः। स्वोक्तप्रकारेण ग्रहणमुपपादयितुमुक्तं तेनैव—

अर्धं द्वयोरपि हृतं तत्र स्याद्व्यवहारतः।

इति । द्वयोः क्रेतृनाष्टिकयोः व्यवहारतः स्वकृतापचारतः स्वकीयधनार्धं हृतं गतमित्यर्थः । कः पुनस्स्वकृतापचार इत्यपेक्षिते तेनैवोक्तं—

अविज्ञातक्रयो दोषः तथा चापरिपालनम् ।
एतद्द्वयं समाख्यातं द्रव्यहानिकरं बुधैः ॥

अविज्ञातस्थानकात् क्रयोऽविज्ञातक्रयः । अथवा परमार्थतोऽयं स्वामीत्यविज्ञातात् क्रयोऽविज्ञातक्रयः । स एव क्रेतुर्दोषोऽपचारः । अपरिपालनमुपेक्षा, सैव नाष्टिकस्यापचारः । एतद्द्वयमविज्ञातक्रयापरिपालनात्मकं द्वयं क्रेतृनाष्टिकयोर्द्रव्यहानिकरत्वेन समाख्यातमित्यर्थः । मरीचिरपि—

अविज्ञातनिवेशत्वाद्यत्र मूलं न लभ्यते ।
हानिस्तत्र समा कल्प्या क्रेतृनाष्टिकयोर्द्वयोः ॥

अविज्ञातनिवेशत्वादविज्ञातस्थानत्वात् । मूलं विक्रेता । बार्हस्पत्यवचनादभिन्नार्थमपि असमग्रतयाऽन्यार्थमिति एतद्वचनं मा प्रतिभात्विवतीह समुच्चितः ॥

इति स्मृतिचन्द्रिकायां विप्रतिपन्नास्वामिविक्रयविषयाणि.

---

अथ प्रसङ्गात् स्वाम्यनार्पिततदीयवस्तुभोक्तृविषयाणि कानिचिन्नारदीयानि वचनानि लिख्यन्ते—

उद्दिष्टमेव भोक्तव्यं स्त्री पशुर्वसुधाऽपि वा ।
अनर्पितं तु यो भुङ्क्ते भुक्तभोगं प्रदापयेत् ॥

अनिर्दिष्टं तु यद्द्रव्यं वासः क्षेत्रं गवादिकम् ।
स्वबलेनैव भुञ्जानश्चोरवद्दण्डमर्हति ॥
अनड्वाहं तथा धेनुं नावं दासं तथैव च ।
अनिर्दिष्टं तु भुञ्जानो दद्यात्पणचतुष्टयम् ॥
दासी नौका तथा धुर्यो बन्धकं नोपभुज्यते ।
उपभोक्त्रा तु तद्द्रव्यं पण्येनैव विशोधयेत् ॥
दिवसे द्विपणं दासीं धेनुमष्टपणं तथा ।
त्रयोदशमनड्वाहमश्वं भूमिं च षोडश ॥
नौकामश्वं च धेनुं च लाङ्गलं कार्षिकस्य च ।
बलात्कारेण यो भुङ्क्ते दाप्यश्चाष्टगुणं दिने ॥
उलूखले पणार्धं तु मुसलस्य पणद्वयम् ।
शूर्पस्य च पणार्धं तु जैमिनिर्मुनिरब्रवीत् ॥

इति स्मृतिचन्द्रिकायां स्वाम्यनर्पिततदीयवस्तुभोक्तृविषयाणि·
समाप्तश्चास्वामिविक्रयाख्यस्य पदस्य विधिवितानः.

---

अथ विक्रीयासम्प्रदानाख्यस्य पदस्य विधिरुच्यते.

तत्र नारदः—

विक्रीय पण्यं मूल्येन क्रेतुर्यो न प्रयच्छति ।
स्थावरं सक्षयं दाप्यो जङ्गमं सक्रियाफलम् ॥

यो गृहीततन्मूल्यो विक्रेता पण्यं जातानुशयः क्रेत्रे प्रार्थयमानाय नार्पयति, तच्च पण्यं यदि स्थावरात्मकं तदा क्षयेन

साहितमसौ दाप्यः । यदि तु जङ्गमात्मकं तदा क्रियाफलेन साहितमित्यर्थः । क्षयशब्देन गतभोग उक्तः, क्रेतृसम्बन्धित्वेन प्रलीनत्वात् । क्रियाफलं तु धेन्वादेः पण्यस्य क्षीरादिकं, तद्दोहनादिक्रियाफलत्वात् । क्रयकालापेक्षया दापनकालेऽर्घ-वृद्धावेतद्द्रष्टव्यम्, अर्घह्रासे त्वन्यथाऽभिधानात् । तथाच स एव—

अर्घश्चेदपहीयेत सोदयं पण्यमावहेत् ।

इति । अत्र क्रयकालगृहीतेन मूल्येन यावत्पण्यमर्पणकालेऽ-र्घह्रासवशात् साभ्यधिकं लभ्यते तत्सोदयम्, तदावहेत् क्रेतारं प्रापयेत्, क्रेत्रे दद्यादिति यावत् । क्रयकालेऽर्पणकाले वाऽर्घसाम्ये त्वाह याज्ञवल्क्यः—

गृहीतमूल्यं यः पण्यं क्रेतुर्नैव प्रयच्छति ।
सोदयं तस्य दाप्योसौ.... ................ ॥

इति । अर्घस्य ह्रासवृद्धिग्रहणाभावात्तत्साम्यविषयमिदं वच-नमिति गम्यते । सोदयमित्यादेरयमर्थः—अदीयमानपण्यस्य यावती वृद्धिः

निक्षेपं वृद्धिशेषं च क्रयविक्रयमेव च ।
याच्यमानमदत्तं चेद्वर्धते पञ्चकं शतम् ॥

इत्युक्तंतद्वृद्धिप्रकरणोक्तपरिमाणतः कल्प्यते, तत्साहितं पण्यं दाप्य इति । अर्घसाम्ये पण्योपचयरूपोदयासम्भवादेवं व्या-

ख्या कृता। तत्र नारदः—'स्थायिनामेष नियमः' इति। देशान्तरे हृत्वा विक्रेतुं ये क्रीणन्ति तदितरे क्रेतारस्स्थायिनः, तद्विषयोऽयं 'स्थावरं सक्षयं दाप्यः' इत्यादिवचनोक्तो नियम इत्यर्थः। कथं तर्ह्यस्थायिनां नियम इत्यपेक्षिते स एवाह— 'दिग्लाभं दिग्विचारिणाम्' इति। यत्पण्यं यस्मिन् दिगन्तरे विक्रेतुं क्रीतं तत्पण्यं तस्मिन् दिगन्तरे विक्रीणानस्य यो लाभः तेन सहितं देयमित्यर्थः। विष्णुस्तु विक्रेतुर्दण्डमप्याह—'गृहीतंमूल्यं यः पण्यं क्रेतुर्नैव दद्यात् तस्यासौ सोदयं दाप्यो राज्ञा च पणशतं दण्ड्यः' इति। गृहीत मूल्यं विक्रेत्रा यस्य पण्यस्य तद्गृहीतमूल्यम्। तस्य तस्मै क्रेत्र इति यावत्। यस्तु गृहीतमूल्यस्य पण्यस्य विक्रयानुशयाभावेऽप्यनर्पकः, यश्च क्रयानुशयवशाददत्तमूल्यस्य पण्यस्याग्राहकः, तौ प्रत्याह कात्यायनः—

क्रीत्वा प्राप्तं न गृह्णीयाद्यो न दद्याददूषितम्।
स मूल्याद्दशमं भागं दत्वा स्वद्रव्यमाप्नुयात्॥
अप्राप्तेऽर्थक्रियाकाले कृते नैव प्रदापयेत्।
एवं धर्मो दशाहात्तु परतोऽनुशयो न तु॥

इति। अदूषितं जलादिनेति शेषः। अर्थक्रियाकालो दोह्यवाह्यादिपण्यस्य दोहनवाहनादिकालः। तस्मिन्नप्राप्ते सति अग्रहणेऽदाने वा कृतेऽपि नैव दशमं मूल्यभागं प्रदापयेत्, किंतु

तमदत्त्वैव स्वद्रव्यमाप्नुयात् । एवमुक्तो धर्मः दशाहात् प्रागर्थक्रियाकालादूर्ध्वं वेदितव्यः । दशाहात्परतस्त्वनुशयो न कर्तव्यः, अनुशयकालस्यातीतत्वादित्यभिप्रायः । वास्तवस्यानुशयकारणस्याभावे प्रागुक्तो धर्मः । तथाच क्रेतारमुदाहृत्य तेनैवोक्तं—

क्रीत्वाऽनुशयवान् पण्यं त्यजेद्दोषादि यो नरः ।
अदुष्टमेव काले तु समूल्याद्दशमं वहेत् ॥

काले अनुशयकाले परमार्थतः पण्यमदुष्टमेव दुष्टबुद्ध्या त्यजेत् न गृह्णीयादित्यर्थः । गृहीतपण्यस्यागप्रकारोपि अस्मिन्विषये तेनैव दर्शितः—

क्रीत्वा गच्छन्ननुशयं क्रयी हस्तमुपागते ।
षड्भागं तत्र मूल्यस्य दत्त्वा क्रीतं त्यजेद्बुधः ॥

अनुशयकालादूर्ध्वमनुशये सत्येतद्वचनमित्यपरादित्यमतिः । सा त्वयुक्ता, 'परतोऽनुशयो न तु' इत्युक्तत्वात् । अनवस्थाप्रसङ्गाच्च । मनुनाऽप्यनवस्थापरिहारार्थमुक्तं—

क्रीत्वा विक्रीय वा किञ्चिद्यस्येहानुशयो भवेत् ।
सोऽन्तर्दशाहात्तद्द्रव्यं दद्याच्चैवाददीत च ॥
परेण तु दशाहस्य न दद्यान्नापि दापयेत् ।
आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट् ॥

इति । वास्तवानुशयकारणसद्भावविषयमेतद्दानादानं, मूल्यदश-

मांशदानानुक्तेः । क्रयविक्रयादन्यत्राप्यनुशये क्रयविक्रयानुशयोक्तमूल्यमित्याह स एव—

यस्मिन् यस्मिन् कृते कार्ये यस्येहानुशयो भवेत् ।
तमनेन विधानेन धर्म्ये पथि निवेशयेत् ॥

विक्रीयासंप्रयच्छतो यद्विक्रीतं पण्यं स्वपार्श्वे एव स्थितं तस्य दैवादिवशान्नाशे तत्तुल्यं पण्यं क्रेत्रे विक्रेत्रा देयमिति वचोभङ्ग्या नारद आह—

उपहन्येत वा पण्यं दह्येतापह्रियेत वा ।
विक्रेतुरेव सोऽनर्थो विक्रीयासंप्रयच्छतः ॥

याज्ञवल्क्योपि—

राजदैवोपघातेन पण्यदोष उपागते ।
हानिर्विक्रेतुरेवासौ याचितस्याप्रयच्छतः ॥

याचितस्येति वचनादयाचितस्य विक्रेतुरप्रयच्छतो न हानिरिति दर्शयति । एवञ्च 'स्थावरं सक्षयं दाप्यः' इत्यादिकमपि याचितविषयमिति मन्तव्यम् । पण्यादभ्यधिकदापनस्य तत्रैवोचितत्वात् । तेन कालान्तरेऽपि पण्यमात्रमेवायाचितविषये देयम् । यथा पण्यदोष उपागते याचितस्याप्रयच्छतो विक्रेतुरेव हानिः, तथा दीयमानं पण्यमगृह्णतः क्रेतुरेव हानिरित्याह नारदः—

दीयमानं न गृह्णाति क्रीतं पण्यं च यः क्रयी ।
स एवास्य भवेद्दोषो विक्रेतुर्योऽप्रयच्छतः ॥

अप्रयच्छतो विक्रेतुर्यो दोषः स एवास्य भवेदित्यन्वयः। क्रेतुर्दोषाभिधानस्य फलं पण्यमूल्यं क्रेत्रे विक्रेत्रा न प्रत्यर्पणीयमिति। दीयमानमिति वदन् अदीयमानमगृह्णतो न मूल्यहानिरिति दर्शयति। यत्र विक्रेत्रा न याचितं, न च क्रयी दीयमानाग्राहकः उपागतश्च पण्यदोषः, तत्र द्वयोस्समा हानिः कल्प्या, क्रयानन्तरमर्पणग्रहणशैथिल्येन द्वयोरप्यपराधसाम्यात्। यत्र पुनर्जातानुशयः क्रेता विक्रेत्रा दीयमानं न गृह्णाति तत्राप्याह स एव—

दीयमानं न गृह्णाति क्रीत्वा पण्यं च यः क्रयी।
विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात्॥

क्रयी जातानुशय इति शेषः। याज्ञवल्क्योपि—

विक्रीतमपि विक्रेयं पूर्वक्रेतर्यगृह्णति।

इति। अगृह्णति अनुशयेनेति शेषः। गृह्णाति तु न विक्रेयमित्यर्थादेव सिद्धम्। यो विक्रीणाति, यश्च सदोषं पण्यं प्रच्छादितदोषं विक्रीणीते तयोस्समानो दण्ड इत्याह स एव—

अन्यहस्ते च विक्रीतं दुष्टं वा दुष्टवद्यदि।
विक्रीणीते दमस्तत्र मूल्यात्तु द्विगुणं भवेत्॥

नारदस्त्वस्यार्थं श्लोकद्वयेन विविच्य वदन् विशेषमप्याह—

निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति।
मूल्यं तद्द्विगुणं दाप्यो विनयं तावदेव तु॥

तथाऽन्यहस्ते विक्रीय योऽन्यस्मै तत्प्रयच्छति ।
सोपि तद्द्विगुणं दाप्यो विनयं तावदेव तु ॥

इति । बुद्धिपूर्वकविषयमेतत्, दण्डदाप्यद्रव्ययोरतिमहत्त्वात् । अत एव बृहस्पतिना सदोषमुदाहृत्योक्तं—

ज्ञात्वा सदोषं यः पण्यं विक्रीणीते विचक्षणः ।
तदेव द्विगुणं दाप्यः तत्समं विनयं तथा ॥

अबुद्धिपूर्वके तु क्रयपरावर्तनमेव । अन्यत्रापि क्वचित् परावर्तमिसाह स एव—

मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा ।
अस्वतन्त्रेण मूढेन त्याज्यं तस्य पुनर्भवेत् ॥

अत्र नारदः—

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्तितः ।
अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः ॥

उत्तरार्धस्यायमर्थः—

अदत्तमूल्ये पण्ये च वाङ्मात्रेण क्रये कृते ।
न परावर्तितव्यं ........................ ॥

इत्येवमादिसमयाभावे सति प्रवृत्तौ वा निवृत्तौ वा न कश्चिद्दोष इति । यत्र पुनः वाङ्मात्रक्रयपरिहारार्थं विक्रेतृहस्ते क्रेत्रा किंचिद्दत्तं तत्र विक्रेतृदोषवशेन क्रयासिद्धौ क्रेतृदत्तद्रव्यं तस्मै द्विगुणं दद्यात् । तथाच याज्ञवल्क्यः—

सत्यंकारकृतं द्रव्यं द्विगुणं प्रतिदापयेत् ॥

इति । क्रयं सत्यं कर्तुं यत् विक्रेतृहस्ते कृतं तत्सत्यंकारकृतम् । क्रेतृदोषवशेन क्रयासिद्धौ त्वाह व्यासः—

सत्यंकारं च यो दत्वा यथाकालं न दृश्यते ।
पण्यं भवेन्निसृष्टं तत् दीयमानमगृह्णतः ॥

निसृष्टं भवेदुत्सृष्टं भवेदित्यर्थः । अत्र पणस्योत्सर्गः सत्यंकारद्रव्योत्सर्गान्तोऽभिमतः, अन्यथा वाङ्मात्रक्रयकर्तृतौल्ये विक्रेतुः सत्यंकारग्राहकता न स्यात् । अत्रापि विक्रीतमपि विक्रेयमित्युक्तमनुसंधेयम् ॥

इति स्मृतिचन्द्रिकायां विक्रीयासम्प्रदानाख्यस्य पदस्य विधिवितानम्.

---

अथ क्रीत्वाऽनुशयाख्यस्य पदस्य विधिरुच्यते.

तत्र नारदः—

क्रेता पण्यं परीक्षेत प्राक्स्वयं गुणदोषतः ।

इति । क्रीत्वाऽनुशयो मा भूदिति स्वयं क्रेता प्रागेव क्रयात् पण्यं गुणाढ्यं दुष्टं वेत्यवधारणार्थं परीक्षेतेत्यर्थः । बृहस्पतिरपि—

परीक्षेत स्वयं पण्यमन्येषां च प्रदर्शयेत् ।

इति । अन्येषां पण्यगुणदोषाविदामिति शेषः । एवंच तत्क्षण एव परीक्षणं चर्मादिपण्यविषयम् । यदाह व्यासः—

चर्मकाष्ठेष्टकासूत्रधान्यासवरसस्य तु ।
वसुकुप्यहिरण्यानां सद्य एव परीक्षणम् ॥

वसुशब्दो यद्यप्यर्थमात्रवाची, तथाऽप्यत्र गोबलीवर्दन्यायाच्च-र्मादिव्यतिरिक्तार्थपरः । कुप्यं तु हेमरूप्यव्यतिरिक्तत्रपुसीसादिकं विज्ञेयम् । तथाच हेमरूप्ये प्रस्तुत्यामरसिंहेनोक्तं—'ताभ्यां यदन्यत्तत्कुप्यम्' इति । एवं चर्मादिकमत्यन्तास्थया परीक्ष्यम् । परीक्ष्य क्रीतस्य दोषदर्शनेऽपि त्यागायोगात् । तथाच बृहस्पतिः—

परीक्षितं बहुमतं गृहीत्वा न पुनस्त्यजेत् ।

इति । बहुमतं क्रीतमिति शेषः । तथाच नारदः—

परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः ॥

इति । दोषदर्शनेऽपीति शेषः । अस्यापवादमाह स एव—

त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव तु ।
मुक्तावज्रप्रवाळानां सप्ताहं स्यात्परीक्षणम् ॥
द्विपदामर्धमासं तु पुंसां तद्द्विगुणं स्त्रियाः ।
दशाहं सर्वबीजानामेकाहं लोहवाससाम् ॥
अतोऽर्वाक्पण्यदोषस्तु यदि सञ्जायते क्वचित् ।
विक्रेतुः प्रतिदेयं तत् क्रेता मूल्यमवाप्नुयात् ॥

इति । त्र्यहात् क्रयदिनमारभ्येति शेषः । एवं पञ्चाहादावपि शेषो द्रष्टव्यः । अत्र विक्रेतुः प्रतिदेयमित्यादिविधिदर्श-

नात्त्रचहाद्दोह्यमित्यादिपरीक्षणं क्रीतदोह्यादिद्रव्यविषयमिति गम्यते। द्विपदां पुंसां दासानामित्यर्थः। तद्द्विगुणं मासमिति यावत्। स्त्रियाः दासीजनस्येत्यर्थः। अतोऽर्वाक् त्र्यहादेरभ्यन्तर इत्यर्थः। संजायत इत्यनेन ज्ञानतः सिद्धिरुक्ता न वस्तुनि निष्पत्तिः। परीक्षाया ज्ञानतः सिद्धिहेतुत्वादित्युक्तम्। ज्ञानतः सिद्ध्यसिद्धी च कात्यायनेन स्पष्टीकृते—

अविज्ञातं तु यत्क्रीतं दुष्टं पश्चाद्विभावितम्।
क्रीतं तत्स्वामिने देयं काले चेदन्यथा न तु॥

अविज्ञातं परीक्षाशैथिल्यात्तत्त्वतोपरिज्ञातम्। काले यस्य द्रव्यस्य यावान् परीक्षाकाल उक्तस्तस्मिन्नित्यर्थः। अन्यथा तत्कालात्यये दुष्टत्वेन विभावितमपि क्रीतं न तत् स्वामिने देयं, एवं निर्गुणत्वेन विभावितमपि क्रीतं तत् स्वामिने देयम्, दुष्टग्रहणस्यानुशयहेतुमत्परत्वात्। नारदस्तु क्रयानुशयानुत्पत्त्यर्थं क्रयात् प्राक् ज्ञातव्यमाह—

क्षयं वृद्धिं च जानीयात्पण्यानामागमं तथा।

इति। अश्वादिपण्यानामत ऊर्ध्वमपचयो वृद्धिर्वा भविष्यतीति देशकालादिवशाज्जानीयात्। कुलीनत्वादिज्ञानार्थं उत्पादकं जन्मभूम्यादिकं च जानीयादित्यर्थः। यस्तु न जनाति तं प्रत्याह याज्ञवल्क्यः—

क्षयं वृद्धिं च वणिजा पण्यानामविजानता।
क्रीत्वा नानुशयः कार्यः कुर्वन् षड्भागदण्डभाक्॥

अनुशयः पश्चात्तापः । स चापचयादिकमविजानता वणिजा क्रीत्वा वृथा न कार्यः दौर्मत्यापत्तेः ।

क्रीत्वा नानुशयं कुर्यात् वणिक्पण्यविचक्षणः ।

इत्युक्तनिषेधातिक्रमापत्तेश्च । अत एवानुशयं कुर्वन्नसौ मूल्यषड्भागदण्डभाक् भवतीत्यन्त्यपादेन दण्डाभिधानमुपपन्नम् । ननु विजानताऽप्यनुशयो न कार्यः निषेधसद्भावात्, सत्यं, किन्त्वपवादबलात् क्रियते, स चापवादोऽनुशयात्तस्य प्रतिदानस्य प्रतिपादानं कुर्वता नारदेनार्थाद्दर्शितः—

क्रीत्वा मूल्येन यत्पण्यं दुष्क्रीतं मन्यते क्रयी ।
विक्रेतुः प्रतिदेयं तत् तस्मिन्नेवाह्न्यविक्षतम् ॥
द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमावहेत् ।
द्विगुणं तत्तृतीयेऽह्नि परतः क्रेतुरेव तत् ॥

इति । यो दुष्क्रीतं जातमिति क्षयादिकं जानन् दृढं मन्यते तेन दुष्क्रीतं प्रतिदेयमिति सम्बन्धः । अविक्षतं अविकृतम् । विकृतं चेद्वैकृत्यसमाधानार्थं मध्यस्थजनकल्पितद्रव्यसहितमेव क्रयदिनेऽपि प्रतिदेयम् । द्विगुणं पञ्चदशांशम् । परतः तृतीयस्याह्नः परतः । क्रेतुरेव तत् क्रीत्वाऽनुशयं क्षयादिकं जानन्नपि न कुर्यादित्यर्थः । अपशकुनतोऽनुशये कृतेऽपि यदि क्रेता शकुनाभिज्ञः तदा याज्ञवल्क्येनोक्तं द्रष्टव्यम् । यदा तु शकुनानभिज्ञस्तदा नारदोक्तं कार्यं, न्यायसाम्यात्, दुष्क्रीतं मन्यत इति सामान्येनोक्तेश्च । अपशकुनतोपि क्रेता दुष्क्रीतं

मन्यत एव। यत्र तु बहुदोषत्वेन ज्ञात्वाऽपि पण्यं स्वल्प मूल्येन क्रीणाति न तत्र दुष्क्रीतं मन्यत इति न क्रयः परावर्तते। तदेतदुदाहरणमुखेनाह स एव—

परिभुक्तं तु यद्वासः क्लिष्टरूपं मलीमसम्।
सदोषमपि तत्क्रीतं विक्रेतुर्न भवेत्पुनः॥

परावर्त्यसमयमङ्गीकृत्य क्रीतं यदि सदोषं भवति तदपि विक्रेतुर्न भवति दुष्क्रीतत्वेऽपि समयस्य बलीयस्त्वात्। एवमुक्तविशेषशास्त्राविषयक्रीत्वाऽनुशये क्रयपरावृत्तिप्रकारोपि विक्रयानुशयप्रसङ्गतः पूर्वस्मिन् पदेऽस्माभिर्दर्शितः स इहाप्यनुसंधेयः। मनुस्तु क्रीत्वाऽनुशयानुत्पत्त्यर्थं कतिपयपण्यानां विक्रयानर्हत्वमाह—

नान्यदन्येन संसृष्टरूपं विक्रयमर्हति।
न सावद्यं न च न्यूनं न दूरे न तिरोहितम्॥

दूरे स्थितमिति शेषः॥

इति स्मृतिचन्द्रिकायां क्रीत्वाऽनुशयाख्यस्य पदस्य विधिवितानः.

---

अथ समयानपाकर्माख्यस्य पदस्य विधिरुच्यते.

तत्र तदुपयोगिनमर्थं तावदाह बृहस्पतिः—

वेदविद्याविदो विप्रान् श्रोत्रियानग्निहोत्रिणः।
आहृत्य स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत्॥

तत्र राजधान्याम्, आर्यनिवासार्हतया कृते स्थान इत्यर्थः। तथाच याज्ञवल्क्यः—

राजा कृत्वा पुरे स्थानं ब्राह्मणान् न्यस्य तत्र तु।

इति। तेषां वृत्तिं प्रकल्पयेत् इत्येतस्यार्थस्स्वेनैव विवृतः—

अनाच्छेद्यकरास्तेभ्यः प्रदद्यात् गृहभूमयः।

मुक्तभाव्याश्च नृपतिः लेखयित्वा स्वशासने॥

अनाच्छेद्यकरा अग्राह्यकराः। अग्राह्यराजभागधेयका इति यावत्। एतदुक्तं भवति—आगामिनृपतिभिरग्राह्यकराः स्वेन विसृष्टकराश्च गृहभूमीः प्रदद्यादिति। स्वशासनलेखनप्रकारो लेख्यप्रकरणोक्तोऽनुसंधेयः। एवं प्रकल्पितवृत्तिशालीनमार्यबृन्दं स्वधर्मानुष्ठाननिष्ठं कर्तुं राजा प्रार्थयेत्। तथाच याज्ञवल्क्यः—

त्रैविद्यं वृत्तिमद्ब्रूयात् स्वधर्मः पाल्यतामिति।

पौरत्रैवर्णिककृत्येष्वेतैरार्त्विज्यादिकमपि कार्यम्। तथाच बृहस्पतिः—

नित्यं नैमित्तिकं कार्यं शान्तिकं पौष्टिकं तथा।

पौराणां कर्म कुर्युस्ते संदिग्धे निर्णयं तथा॥

एवं समुदायविशेषस्य कार्यविशेष उक्तः। सर्वसमुदायानां च कार्यमाह स एव—

ग्रामश्रेणीगणानां च सङ्केतस्समयक्रिया।

बाधकाले तु सा कार्या धर्मकार्ये तथैव च॥

गणानां चेत्यत्र चशब्दः पाषण्डनैगमादीनां समुच्चयार्थः। एवंचायमर्थः—ग्रामश्रेणीगणपाषण्डनैगमादीनां क्षुद्रोपद्रवकाले जीर्णोद्धारादिधर्मकार्ये च यां पारिभाषिकीं समयक्रियां विनोपद्रवो दुष्परिहरः धर्मकार्यं च दुस्साधं, सा पारिभाषिकी समयाक्रिया येनयेनोपाधिना नराः ग्रामादिशब्दाभिलप्यजातास्ता कृताः तत्तदुपाध्युपहितैर्नरैर्बहुभिर्मिळितैः कार्येति। तथा चोक्तं तेनैव—

चाटचोरभये बाधा सर्वसाधारणी स्मृता।
तत्रोपशमनं कार्यं सर्वैर्नैकेन केनचित्॥

चाटो वृकः। उपशमनं उपशमनादानं, समय इति यावत्। समयस्वरूपनिरूपणार्थं द्वित्रास्समयाः प्रदर्श्यन्ते—अवर्षणोपद्रवे प्रतिक्षेत्रं प्रतिगृहं वा एतावद्धनं ग्रहयज्ञादिशान्तिकसिद्धये देयमित्येकस्समयः, तथा चोरोपद्रवे प्रतिगृहमेकैको दक्षश्शस्त्रपाणिरेकत्रागन्तव्य इति, तथा राजोपद्रवे राजदर्शनार्थं प्रतिग्रहमेकैकः श्रेष्ठ आगन्तव्य इति। धर्मकार्ये तु समयस्तेनैव निरूपितः—

सभाप्रपादेवगृहतटाकारामसंस्कृतिः।
तथाऽनाथदरिद्राणां संस्कारो यजनाक्रिया॥
कुलायनं निरोधश्च कार्यमस्माभिरंशतः।
यत्रैतल्लेखितं पत्रे धर्म्या सा समयाक्रिया॥
पालनीया समस्तैस्तु………………… ॥

इति। सभा जनाश्रयो मण्टपः। प्रपा पानीयशालिका। आरामः उपवनम्। संस्कृतिः जीर्णोद्धारः। संस्कार उपनयनादिकः, प्रेतदहनादिश्च। यजनक्रिया सोमयागादिकर्त्रे दानम्। कुलायनं दुर्भिक्षादिपीडाहतयूथागमनम्। तस्मिन् सति यत्संविधानं विधेयं तदेव तच्छब्देनोक्तम्। निरोधः निरोधनं, दुर्भिक्षाद्यपगमपर्यन्तं कुलायनधारणमिति यावत्। अस्माभिः ग्रामादिशब्दप्रवृत्तिनिमित्तभूतोपाधिशालिभिः। अंशतः गृहक्षेत्रपुरुषादिप्रयुक्त्या सङ्गृहीतधनेन, मध्यकत्वेन स्थितेन धनेन वा। समस्तैः समुदायिभिरिति शेषः। एवं कृता समयक्रिया सम्प्रदायप्राप्ता च न केवलं समुदायिभिः पालनीया, किंतु राज्ञाऽपि। तथाच नारदः—

पाषण्डनैगमश्रेणीपूगव्रातगणादिषु।
संरक्षेत्समयं राजा दुर्गे जनपदे तथा॥

पाषण्डाः वेदोक्तलिङ्गधारिव्यतिरिक्ताः सर्वे लिङ्गिनः। तेषु मठादिहिताचरणाद्याः समयास्सन्ति। नैगमाः सार्थकवणिक्प्रभृतयः, तेषु सकञ्चुकसंदेशहरपुरुषातिरस्कारिणो दण्ड्या इत्येवमादयो बहवस्समया विद्यन्ते। श्रेणयः एकशिल्पोपजीविनः कुविन्दादयः, तास्विदमनयैव श्रेण्या विक्रेयमित्यादिकाः समयास्सन्ति। पूगाः हस्त्यश्वारोहकादयः। व्रातगणशब्दौ कात्यायनेन व्याख्यातौ—

नानायुधधराः व्रातास्समवेतास्तु कीर्तिताः ।
कुलानां हि समूहस्तु गणस्स परिकीर्तितः ॥

इति । तत्र पूगे व्राते चान्योन्यमुत्सृज्य समरे न गन्तव्यमित्यादयस्सन्ति समयाः । गणे तु पञ्चमेऽह्नि पञ्चमे वाऽब्दे कर्णवेधः कर्तव्य इत्येवमादिरस्ति समयः । गणादिष्वित्यत्रादिशब्देन ब्रह्मपुरी महाजनपरिगृहीता, तत्र गुरुदक्षिणाद्यर्थमागतो माननीय इत्यादिः समयोस्ति । दुर्गे तु धान्यादिकं गृहीत्वाऽन्यत्र यास्यतो न तद्विक्रेयमित्यादिरस्ति समयः । जनपदे तु क्वचिद्विक्रेतृहस्ते दशबन्धग्रहणं ग्राह्यम् । क्वचित् क्रेतृहस्त इत्यादिकोस्त्यनेकविधस्समयः । जनपदे तथेत्यत्र तथाशब्दोऽनुक्तग्रामघोषपुरादीनां प्रदर्शनार्थः । तत्र न गोप्रचारस्थाने स्थातव्यमित्यादिकोस्ति ग्रामे समयः । आभीरस्त्रीपुरुषव्यभिचारे न दण्ड इत्यादिकोस्ति घोषे समयः । पुरे तु विनैवार्थार्पणमाढ्यादीन्यथाशक्ति परिपालयद्भिः बन्दिग्राहकादयो निहन्तव्या इत्यादयस्समयास्सन्ति । तदेतत्समयजातं यथा स्वयं न भ्रश्यति न व्यतिवर्तते तथा राजा कुर्यादित्यर्थः ।
समुदायपुरुषानधिकृत्य बृहस्पतिः—

कोशेन लेख्यक्रियया मध्यस्थैर्वा परस्परम् ।
विश्वासं प्रथमं कृत्वा कुर्युः कार्याण्यनन्तरम् ॥

लेख्यक्रियया समयपत्रेण । मध्यस्थैः प्रतिभूभिरित्यर्थः । कार्याणि समूहकार्याणि । कात्यायनोपि—

समूहिनां तु यो धर्मस्तेन धर्मेण ते सदा ।

प्रकुर्युस्सर्वकर्माणि स्वधर्मेषु व्यवस्थिताः ॥

सामयिकनिजधर्मानतिक्रमेण समूहिकार्याणि समुदायिनः कुर्यु-र्रित्यर्थः । याज्ञवल्क्योपि—

निजधर्माविरोधेन यस्तु सामायिको भवेत् ।

सोपि यत्नेन संरक्ष्यो धर्मो राजकृतश्च यः ॥

निजधर्मो वर्णाश्रमादिधर्मः । सामयिकः समयनिर्वर्त्यो धर्मः । यः पुनः निजधर्मविरोधी सामायिको धर्मः यथा— सन्ध्याव-न्दनवेळायां सर्वैरेव स्वस्वव्यापारपरिहारेण राजभवनं प्रत्या-गन्तव्यं, यो न गच्छति तस्य प्रथमसाहसो दण्ड इति । नासौ रक्ष्य इति अर्थात् गम्यते । अस्मदरातिमण्डलमश्वा-दयः प्रस्थापनीयाः, इत्यादिको यो निजधर्माविरोधेन राजा-ज्ञया कृतो धर्मस्सोपि समूहेनानुसरणीय इत्यन्त्यपादस्यार्थः । कात्यायनोपि—

अविरोधेन धर्मस्य निर्गतं राजशासनम् ।

तस्यैवाचरणं पूर्वं कर्तव्यं तु नृपाज्ञया ॥

धर्मस्य श्रौतस्मार्तादिधर्ममार्गस्य । निर्गतं निष्ठितमित्यर्थः । राजशासनं राज्ञाऽनुशिष्टो धर्मः । तस्यैव श्रौतस्मार्तमार्गा-विरोधेन विहितस्यैव । यः पुनः श्रौतस्मार्तमार्गविरोधेन रा-जाज्ञानिर्मितो धर्मः यथा—अस्माभिर्दत्तस्य गृहक्षेत्रादेराधि-विक्रयदानादिकं न कार्यमिति, तस्याचरणं न कर्तव्यमित्येवका-

रात् गम्यते। कथमत्र श्रौतस्मार्तमार्गविरोधः उच्यते—द्रव्यार्जनविधिनाऽऽर्जितस्य द्रव्यस्य यथेष्टं विनियोगः कार्य-इत्ययमपि श्रौतस्मार्तमार्ग एव, तद्विरोधस्तत्रास्त्येवेत्यलं प्रत्युदाहरणसमर्थननिर्बन्धेन। यत्पुनस्तेनैवोक्तं—

राजप्रवर्तितान् धर्मान् यो नरो नानुपालयेत् ॥
गर्ह्यस्स पापो दण्ड्यश्च लोपयन्राजशासनम् ॥

इति, तत् श्रौतस्मार्तमार्गाविरुद्धराजप्रवर्तितधर्मविषयमिति मन्तव्यम्। समुदायिभिर्विचित्रमतिभिरपरिमितैश्च सम्यगसम्यक्त्वं ऐकमत्येन कार्यस्य निश्चेतुमशक्यमिति मत्वा द्वित्राः पञ्च वा कार्यचिन्तकाः कार्या इत्याह बृहस्पतिः—

द्वौ त्रयः पञ्च वा कार्यास्समूहहितवादिनः।
कर्तव्यं वचनं तेषां ग्रामश्रेणीगणादिभिः ॥

इति। कार्यचिन्तकेषु हेयाः उपादेयाश्च तेनैव दर्शिताः—

विद्वेषिणो व्यसनिनः शालीनालसभीरवः।
लुब्धातिवृद्धबालाश्च न कार्याः कार्यचिन्तकाः ॥
शुचयो वेदधर्मज्ञाः दक्षाश्शान्ताः कुलोद्भवाः।
सर्वकार्यप्रवीणाश्च कर्तव्याश्च महत्तमाः ॥

इति। शालीनाः लज्जाशीलाः। कार्यचिन्तकाः समूहकार्यसाधकबाधकविचारकाः। याज्ञवल्क्यस्त्वकार्यचिन्तकानामपि समूहहितवादिनां वचनं सर्वैस्समूहिभिः कार्यमित्याह—

कर्तव्यं वचनं सर्वैस्समूहहितवादिनाम्।

इति। यस्तु हितवादिनां प्रतिकूलस्स्यात् स समूहेन प्रथम-साहसं दण्ड्य इत्याह स एव—

यस्तत्र विपरीतस्स्यात् स दाप्यः प्रथमं दमम् ॥

इति। कात्यायनोपि—

युक्तियुक्तं च यो हन्याद्वक्तुर्योऽनवकाशदः।
अयुक्तं चैव यो ब्रूते स दाप्यः पूर्वसाहसम् ॥

बृहस्पतिः—

यस्तु साधारणं हिंस्यात् क्षिपेत्त्रैविद्यमेव वा।
सन्धिक्रियां विहन्याच्च स निर्वास्यस्ततः पुरात् ॥

साधारणं दण्डादिद्रव्यं दण्ड्यादेस्साहाय्यकरणादिना नाशयेदित्यर्थः। क्षिपेत् आक्षिपेत्। ततःपुरात् समुदायस्थानात्। अत्रैविद्याक्षेपे तु वाक्पारुष्यपदे दण्डो वक्ष्यते। समुदायिमात्रस्य मर्मोद्घाटकादौ निर्वासनमेव दण्डः। तथाच स एव—

अरुन्तुदस्सूचकश्च भेदकृत् साहसी तथा।
श्रेणिपूगनृपद्विष्टः क्षिप्रं निर्वास्यते ततः ॥

अरुन्तुदो मर्मोद्घाटकः। सूचकः पिशुनः। भेदकृत् समूहिषु विमतिकृत्। ततः समूहस्थानात्। निर्वास्यते समूहेनेति शेषः। न च वाच्यं समूहस्य दण्डनेऽनधिकारात् समूहेनेति शेष इत्येतदयुक्तमिति। यत आह स एव—

कुलश्रेणीगणाध्यक्षाः पुरदुर्गनिवासिनः।
वाग्धिग्दमं परित्यागं प्रकुर्युः पापकर्मणाम् ॥

तैः कृतं यच्च धर्मेण निग्रहानुग्रहं नृणाम् ।
तद्राज्ञाऽप्यनुमन्तव्यं निसृष्टार्था हि ते स्मृताः ॥

इति । वाग्दमः पापिष्ठोसीत्यादिभर्त्सनम् । धिग्दमो धिगिति कुत्सनम् । परित्यागः अङ्ककरणं निर्वासनं वा । एतत् अर्थदण्डादेरप्युलक्षणार्थं, निग्रहानुग्रहमिति सामान्यतः पुनरभिधानात् । निसृष्टार्थाः अनुज्ञातकार्याः । अधर्मेण तैः कृतेऽप्याह स एव—

बाधां कुर्युर्यदेकस्य सम्भूता द्वेषसंयुताः ।
राज्ञा ज्ञात्वा निवार्यास्तु शास्याश्चैवानुबन्धतः ॥

इति । अनुबन्धतः निबन्धानुसारेण शास्या दण्ड्या इत्यर्थः । नारदोपि दण्ड्यानाह—

पृथग्गणांस्तु ये भिन्द्युः ते विनेया विशेषतः ।
आवहेयुर्भयं घोरं व्याधिवत्ते ह्युपेक्षिताः ॥

गणग्रहणमत्र समूहमात्रपरं, न पुनः कुलसमूहरूपविशेषपरम् । तेन पाषण्डादावपि भेदका ये ते राज्ञा विशेषतो विनयाः । विशेषग्रहणाच्छारीरेणापि दण्डेन विनेयाः । पाषण्ड्यादिसर्वसमूहिषु राज्ञा यथा वर्तितव्यं तथाऽप्याह स एव—

यो धर्मः कर्म यच्चैषां उपस्थानविधिश्च यः ।
यच्चैषां प्रत्युपादानमनुमन्येत तत्तथा ॥

धर्मो जटाधारित्वादिकः । कर्म व्रतं पर्युषितभिक्षाटनादिकम् । उपस्थानविधिः समुदायिकार्यार्थं पटहादिध्वनिमाकर्ण्य मण्टपादौ

मेळनम् । प्रत्युपादानं जीवनाय तापसवेषादिपरिग्रहः । एषां पाषण्डादीनामित्यर्थः । अन्यदपि राजकृत्यमाह स एव—

प्रतिकूलं च यद्राज्ञः प्रकृत्याऽवमतं च यत् ।
बाधनं च यदर्थानां तत्तेभ्यो विनिवर्तयेत् ॥

प्रतिकूलं यथा—

यस्य राज्ञस्तु कुरुते शूद्रो धर्मविवेचनम् ।
तस्य प्रक्षुभ्यते राष्ट्रं बलं कोशश्च नश्यति ॥

इति । एवञ्च सार्थकादिशूद्रकर्तृकं त्रैवर्णिकपौरादीनां विवादे धर्मविवेचनादिकं 'प्रतिकूलं च यद्राज्ञः' इत्यस्योदाहरणमिति मन्तव्यम् । प्रकृत्या स्वभावत एवावमतं अवज्ञातं, तद्यथा— पाषण्डादिषु ताम्बूलभक्षणादिकम् । यच्चार्थानां बाधनं रसवादादिकं तत्तेभ्यस्सकाशाद्राजा विनिवर्तयेत् । अन्यान्यपि निवर्तनीयान्याह स एव—

मिथस्सङ्घातकरणमहिते शस्त्रधारणम् ।
परस्परोपतापं च तेषां राजा निवर्तयेत् ॥

मिथस्सङ्घातकरणं उपस्थानविधेः पूर्वं पृथक्पृथगवान्तरस्तोमकरणम् । अहिते कुलजादौ । परस्परोपतापो राजकीयाश्रयेण अन्योन्यमर्थाहरणादिकम् । अन्यदपि निवर्त्यमाह स एव—

दोषवत्कारणं यत्स्यादधुना च प्रकल्पितम् ।
प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्तयेत् ॥

लोभादिदोषवत्कारणकं श्रुतिस्मृतिविरुद्धं विधवादौ वेश्यात्वादिकं पाषण्डादिभिः प्रकल्पितं बहुकालं प्रवृत्तमपि राजा निवर्तयेदित्यर्थः। समूहिषु यत्समूहेन कर्तुमशक्यं मुख्यानामौद्धत्यनिवारणादिकं तदपि राजा कुर्यात्। तथाच बृहस्पतिः—

मुख्यैस्सह समूहानां विसंवादो यदा भवेत्।
तदा विचारयेद्राजा स्वमार्गे स्थापयेच्च तान्॥

यस्तु मुख्यस्स्वमार्गे राज्ञाऽपि स्थापयितुमशक्यस्तत्रोक्तं याज्ञवल्क्येन—

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेच्च यः।
सर्वस्वहरणं कृत्वा तं राष्ट्राद्विप्रवासयेत्॥

राजेति शेषः। एवंविधदण्डप्रयोगे तस्यैव सामर्थ्यात्। यदा समूहस्यापि कथञ्चित् सामर्थ्यमस्ति तदा प्रकृतत्वात् गणस्यैव दण्डप्रयोगकर्तृत्वमवगन्तव्यम्। कात्यायनेनाप्युक्तं—

साहसी भेदकारी च गणद्रव्यविनाशकः।
उच्छेद्यास्सर्व एवैते विख्याप्यैवं नृपैर्भृगुः॥

केचिन्नृपे भृगुरिति पठन्ति, तदा अयमर्थः—साहसिकत्वादिकं नृपे विख्याप्य गणेनोच्छेद्या इति। यस्तु मुख्यः शपथेन स्वमार्गे स्थापयितुमशक्यस्तत्रोक्तं मनुना—

यो ग्रामदेशसङ्घेषु कृत्वा सत्येन संविदम्।
विसंवदेन्नरो लोभात्तं राष्ट्राद्विप्रवासयेत्॥

निगृह्य दापयेदेनं समयव्याभिचारिणम् ।
चतुस्सुवर्णं षण्णिष्कं शतमानं च राजतम् ॥
एवं दण्डविधिं कुर्याद्धार्मिकः पृथिवीपतिः ।
ग्रामजातिसमूहेषु समयव्यभिचारिणाम् ॥

इति । सत्येन शपथेनेत्यर्थः । सुवर्णनिष्कशतमानशब्दाः प्राग्दिव्यप्रकरणे व्याख्याताः । तत्र त्रयोऽर्थदण्डाः दण्ड्यानामर्थसत्त्वानुसारेण व्यवस्थापनीयाः । निर्वासनं तु निर्बन्धविषये व्यवस्थापनीयम् । धार्मिकग्रहणादधार्मिकस्य दण्डविधावौदासीन्यमप्यस्तीत्यवगम्यते । यदा च धार्मिको राजा दण्डविधावुदासीनस्तदा ग्रामादय एव दण्डविधिं कुर्युः । 'निसृष्टार्था हि ते स्मृताः' इत्युक्तत्वात् । अमुख्यानां तु समयव्यभिचारिणामौद्धत्यानुसारेण दण्डः कल्पनीयः । तेषामपि सामर्थ्यतो मुख्यतुल्यत्वे जाते बृहस्पतिनोक्तं—

.................... यस्समर्थो विसंवदेत् ।
सर्वस्वहरणं दण्डस्तस्य निर्वासनं पुरात् ॥

इति । समर्थः समयं पालयितुं समर्थो मुख्यतुल्य इति यावत् । विसंवदेत् समयं लङ्घयेत् । अपरानपि दण्ड्यानाह स एव—

सम्भूयैकमतिं कृत्वा राजभाव्यं हरन्ति ये ॥
ते तदष्टगुणं दाप्याः वणिजश्च पलायिनः ।

'राजभाव्यं हरन्ति ये' इति चतुर्थपादेऽनुषञ्जनीयः । समू-

हपूजार्थं यद्राज्ञा समूहकार्यार्थमागताय दत्तं तद्यदि समूहपार्श्वमागत्यासौ समूहाय स्वयं न ददाति, तदा राज्ञा दत्तमेकादशगुणं दाप्यः। तथाच याज्ञवल्क्यः—

समूहकार्य आयातान् कृतकार्यान्विसर्जयेत्।
सदानमानसत्कारैः पूजयित्वा महीपतिः॥
समूहकार्यप्रहितो यल्लभेत तदर्पयेत्।
एकादशगुणं दाप्यो यद्यसौ नार्पयेत्स्वयम्॥

इति। यल्लभेत समूहमान्यत्वनिमित्तेनेति शेषः, स्वकीयसेवाध्ययनादिनिमित्तेन तु लब्धस्य प्रातिस्विकत्वेन समुदायेऽर्पणविध्ययोगात्। समूहकार्यप्रहितेनार्पितं च सर्वे समूहिनः समं विभागेन विभज्य गृह्णीयुः।

ततो लभ्येत यत्किञ्चित् सर्वेषामेव तत्समम्।

इति बृहस्पतिस्मरणात्। एवं विभज्य ग्रहणमतुच्छद्रव्यविषयं, तुच्छद्रव्यं तु लब्धं निस्स्वादिभ्यस्समूहेन देयम्। यदाह स एव—

षाण्मासिकं मासिकं वा विभक्तव्यं यथांऽशतः।
देयं वा निस्स्ववृद्धार्तस्त्रीबालातुररोगिषु॥
सान्तानिकादिषु तथा धर्म एष सनातनः।

इति। एकस्य पुरुषस्य षण्मासानिर्वाहायापर्याप्तं कुटुम्बस्य वैकमासानिर्वाहायापर्याप्तं लब्धं चेन्निस्स्वादिभ्यो देयमिति तात्पर्यार्थः। यत्पुनस्तेनैवोक्तं—

यत्तैः प्राप्तं रक्षितं वा गणार्थे वा ऋणं कृतम् ।
राजप्रसादलब्धं वा सर्वेषामेव तत्समम् ॥

इति, तस्यायमर्थः—तैः समूहकार्यार्थप्रहितैर्यत्सीमाविवादादावधिकं क्षेत्रारामादिकं धर्माधिकरणे न्यायतः प्राप्तं परैरपह्रियमाणं वा रक्षितं, तथा समूहप्रयोजनार्थमुपात्तमृणं समूहकृतानुकूल्यादिजनितराजप्रसादलब्धं वा यत् तदेतत्सर्वं सर्वेषां समूहिनां समं ज्ञेयमिति । गणार्थे कृतमृणं सर्वेषां समामित्यस्य क्वचिदपवादमाह कात्यायनः—

गणमुद्दिश्य यत्किञ्चित् कृत्वर्णं भक्षितं भवेत् ।
आत्मार्थं विनियुक्तं वा देयं तैरेव तद्भवेत् ॥

तैरेव समूहकार्यप्रहितैरेव प्रातिदेयं तदृणं भवतीत्यर्थः । परिभाषितपाथेयानर्पणेऽपि तैः कृतमृणं गणेन न देयं, एवकारकरणात् । किंतु पाथेयमेव देयम् । ये पुनस्समुदायं प्रसाद्य तदन्तर्भावमापन्नाः, ये च समुदायक्षोभादिना ततो बहिर्भूताः तान् प्रत्याह स एव—

गणिनां शिल्पिवर्गाणां गतास्स्युर्ये तु मध्यताम् ।
प्राक्तनस्य धनर्णस्य समांशास्सर्वे एव ते ॥
तथैव भोज्यवैभाव्यदानधर्मक्रियासु च ।
समूहस्थोंशभागी स्यात् प्रगतस्त्वंशभाङ्न तु ॥ इति ॥

इति स्मृतिचन्द्रिकायां समयानपाकर्माख्यस्य
पदस्य विधिवितानः.

---

अथ क्षेत्रजविवादाख्यस्य पदस्य विधिरुच्यते.

तत्र बृहस्पतिः—

निवेशकाले कर्तव्यः सीमाबन्धविनिश्चयः ।
प्रकाशोपांशुचिह्नैश्च लक्षितस्संशयापहः ॥

निवेशकालः ग्रामादिप्रवेशकालः । सीमाया बन्धो निबन्धो नियामक इति यावत् । विनिश्चीयते सीमाबन्धो येन स विनिश्चयः पाषाणादिमयस्स्थूलगुडकः । सीमाबन्धश्चासौ विनिश्चयश्चेति सीमाबन्धविनिश्चयः, सीमानियामकस्थूलगुडक इत्यर्थः । एतदुक्तं भवति—ग्रामादिप्रवेशकाले तत्सीमानियामकः स्थूलगुडकः प्रकाशगुप्तलिङ्गोपेतः सीमासन्धौ स्थापनीय इति । प्रकाशगुप्तलिङ्गान्यपि तेनैव दर्शितानि—

वापीकूपतटाकानि चैत्यारामसुरालयाः ।
स्थलनिम्ननदीस्रोतश्शरगुल्मनगादयः ॥
प्रकाशचिह्नान्येतानि सीमायां कारयेत्सदा ।
करीषास्थितुषाङ्गारशर्कराश्मकपालिकाः ॥
सिकतेष्टकगोवालकार्पासास्थीनि भस्म च ।
प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत् ॥

इति । वापी पुष्करिणी । चैत्यं इष्टकाद्यैर्विरचितं स्थण्डिलम् । स्थलं उन्नतो भूप्रदेशः । निम्नं परिघा । शराः तृणविशेषाः । गुल्माः कन्दशून्याः करवीरप्रकाराः । नगाः वृक्षाः । ते तु मनुना विशेषिताः—

सीमावृक्षांस्तु कुर्वीत न्यग्रोधाश्वत्थकिंशुकान् ।
शल्मलीन् सालतालांश्च क्षीरिणश्चैव पादपान् ॥

न्यग्रोधो वटः। किंशुकः पलाशः। नगादय इत्यत्रादिशब्देन वेणुवल्लीवल्मीकवर्त्मपुरातनसेत्वादीनां स्मृत्यन्तरोक्तानां ग्रहणम्। करीषं शुष्कगोमयम्। अस्थीनि पश्वादीनाम्। तुषाः व्रीह्यादित्वचः। अङ्गारा दग्धकाष्ठावयवाः शान्ताग्नयः। शर्कराः पाषाणवत् कठिना मृदः। कपालिकाः पक्वघटावयवानामवयवाः। कार्पासास्थीनि कार्पासबीजानि। निधापयेत् गर्ताभ्यन्तरेषु कुम्भीः निधाय मृद्भिः प्रच्छादयेत्। तथाच मनुः—

उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् ।
सीमाज्ञाने नृणां वीक्ष्य लोके नित्यं विपर्ययम् ॥

उपच्छन्नानि प्रच्छादितानि अन्यानि प्रकाशचिह्नेभ्योऽन्यानि तानि चाधस्तादेवोक्तानि। तत्र कार्पासास्थिवर्जानि सर्वाणि मानवेऽप्यनुकीर्तितानि। लिङ्गानामनुकीर्तनमुपलक्षणार्थमिति दर्शयितुं कार्पासास्थिकीर्तने मनोरनास्था। अत एव उपांशुलिङ्गान्यभिधायाभिहितं मनुना—

यानि चैवंप्रकाराणि कालात् भूमिर्न भक्षयेत् ।
तानि सन्धिषु सीमायामप्रकाशानि कारयेत् ॥

तानि शुक्तिशङ्खगैरिकखादिरसारप्रभृतीनि। एवमुक्तलिङ्गानां मध्ये वृक्षलिङ्गान्विता सीमा ध्वजिनीत्युच्यते। जललिङ्गा-

न्विता मात्सिनी । तुषाङ्गारादिगुप्तलिङ्गान्विता नैधानीत्युच्यते । तथाच व्यासः—

ग्रामयोरुभयोस्सीम्नि वृक्षा यत्र समुन्नताः ।
समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्तिता ॥
स्वच्छन्दगा बहुजला मत्स्यकूर्मसमन्विता ।
नित्यप्रवाहिणी यत्र सीमा सा मात्सिनी मता ॥
तुषाङ्गारकपालैस्तु कुम्भैरायतनैस्तथा ।
सीमा प्रचिह्निता कार्या नैधानी सा निगद्यते ॥

इति । समुन्नताः कौटिल्यविकलाः । समुच्छ्रिताः उच्चाः । सीमालिङ्गानि यत्नसिद्धानि स्वतस्सिद्धानि वा प्रथमवयसां गलितवयस्कैर्ज्ञापनीयानि । तथाच बृहस्पतिः—

ततः पौगण्डबालानां प्रयत्नेन प्रदर्शयेत् ।
वार्धक्ये च शिशूनां ते दर्शयेयुस्तथैव च ॥
एवं परम्पराज्ञाने सीमाभ्रान्तिर्न जायते ॥

इति । पौगण्डबालाः किञ्चित्प्रबुद्धबालाः । तेऽपि च पौगण्डबालाः कालेन वार्धक्यमापन्नाः शिशूनां किञ्चित्प्रबुद्धानां स्वज्ञातिज्ञापितानि सीमालिङ्गानि प्रयत्नेन दर्शयेयुः । एवमविच्छिन्ना ज्ञातृपरम्परा बहुतरकालात्ययेऽपि सीमाभ्रान्त्यनुत्पत्त्यर्थं कार्येत्यर्थः ॥

इति स्मृतिचन्द्रिकायां सीमालिङ्गनिरूपणम्.

---

## अथ सीमाविवादनिर्णयः.

तत्र मनुः—

एतैर्लिङ्गैर्नयेत्सीमां राजा विवदमानयोः ॥

इति । एतैः प्राङ्निरूपितैः सीमालिङ्गैरर्थिप्रदर्शितैः सीमां नयेत् निर्णयेदित्यर्थः । अथार्थिन्यविश्वासः तदा साक्षिप्रत्ययादेव निर्णयेत् । तदाह स एव—

यदि संशय एव स्याल्लिङ्गानामपि दर्शने ।
साक्षिप्रत्यय एव स्यात् सीमावादविनिश्चये ॥

लिङ्गविषयकस्सीमाविषयको वा साक्षिप्रत्ययस्सीमाविवादनिश्चयहेतुस्स्यादित्यर्थः । तत्र लिङ्गविषयकप्रत्ययशालिनां साक्षिणां साक्षिप्रकरणोक्तलक्षणमेवानुसंधेयम् । सीमाविषयकप्रत्ययशालिनां तु साक्षिणां लक्षणाधिक्यमिह बृहस्पतिना दर्शितं—

आगमं च प्रमाणं च भोगं कालं च नाम च ।
भूभागलक्षणं चैव ये विदुस्तेऽत्र साक्षिणः ॥

आगमः स्वत्वापादकः क्रयादिः । प्रमाणं दण्डादिना परिकल्पितं परिमाणम् । यदा तूक्तविधसाक्ष्यभावः तदा सामन्तप्रदर्शितैर्लिङ्गैर्निर्णयेत् । एतदपि वचोभङ्ग्याऽऽह मनुः—

साक्ष्यभावे तु चत्वारो ग्रामसीमान्तवासिनः ।
सीमाविनिर्णयं कुर्युः प्रयता राजसंनिधौ ॥

कात्यायनोपि—'तेषामभावे सामन्ताः' इति । तेषां द्विविधसाक्षिणाम् । के पुनस्सामन्ता इत्यपेक्षिते स एवाह—'संस-

क्तकास्तु सामन्ताः' इति । विप्रतिपन्नसीमकस्य ग्रामादेश्चतसृषु दिक्ष्वनन्तरग्रामादिभोक्तारः संसक्तकाः, त एव सामन्ता ज्ञेया इत्यर्थः । एवमुक्तानां सामन्तानां यदा रागद्वेषादिप्रकटदोषसद्भावस्तदाऽप्याह स एव—

स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात् ।
तत्संसक्तेषु कर्तव्यः उद्धारो नात्र संशयः ॥

तत्संसक्तेषु सामन्तसंसक्तेषु । उद्धारः सीमाया उद्धारः सीमानिर्णय इति यावत् । एतदुक्तं भवति—चतसृषु दिक्षु स्थितसामन्तग्रामादिभ्योऽनन्तरत्वेन तत्तद्दिशि स्थितग्रामादिभोक्तारः तत्संसक्ताः, तैः प्रदर्शितसीमालिङ्गैर्ग्रामादेस्सीमां निर्णयेदिति । यदा तेषामपि प्रकटदोषसद्भावः तदाऽप्याह स एव—

संसक्तसक्तदोषे तु तत्संसक्ताः प्रकीर्तिताः ।

इति । तत्संसक्ताः संसक्तसक्तसंसक्ताः । एतदुक्तं भवति—चतसृषु दिक्षु स्थितसंसक्तसक्तग्रामादिभ्योऽनन्तरत्वेन तत्तद्दिशि स्थितग्रामादिभोक्तारः संसक्तसक्तसंसक्ताः, तैः प्रदर्शितसीमालिङ्गैः ग्रामादिसीमां निर्णयेदिति । यदा तु तेषामपि प्रकटदोषसद्भावः तदाऽप्याह स एव—

सक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिस्सह ।
संमश्यं कारयेत् सीमामेवं धर्मविदो विदुः ॥

संसक्तसक्तसंसक्ता अपि सामन्तकोटिनिविष्टाः, तेन एतेषां सामन्तशब्देन निर्देशो नानुपपन्नः । ततश्चायमर्थः—दुष्टान् संसक्तसक्तसंसक्तान् त्यक्त्वा साक्षिसामन्ततत्कोटिभ्योऽन्यान् सीमालिङ्गाभिज्ञान्मौलवृद्धोद्धृतसहितान् सीमान्तप्रतिनिर्णायकान् कारयेदिति । के पुनस्साक्षिसामन्ततत्कोटिभ्योऽन्य इत्यपेक्षिते नारदः—

नगरग्रामगणिनो ये च वृद्धतमा नराः ।

इति । सीमालिङ्गज्ञा इति शेषः । मौलवृद्धोद्धृतास्तु कात्यायनेन दर्शिताः—

ये तत्र पूर्वसामन्ताः पश्चाद्देशान्तरं गताः ।
तन्मूलत्वात्तु ते मौला ऋषिभिस्सम्प्रकीर्तिताः ॥
निष्पाद्यमानं यैर्दृष्टं तत्कार्यं नृगुणान्वितैः ।
वृद्धा वा यदि वाऽवृद्धास्ते वृद्धाः परिकीर्तिताः ॥
उपश्रवणसम्भोगकार्याख्यानोपचिह्निताः ।
उद्धरन्ति ततो यस्मादुद्धृतास्ते ततः स्मृताः ॥

इति । नृगुणान्वितैः पुरुषगुणान्वितैः । वयोवृद्धत्वं न तन्त्रमिति विकल्पोक्त्या दर्शितम् । कार्यज्ञातृत्वं येषां पारम्पर्येण ते उद्धृता इति तृतीयश्लोकस्य तात्पर्यार्थः । एवंच प्रकटदोषेण संसक्तसक्तसंसक्तेषु दुष्टेषु पूर्वसामन्ताद्युपेतनागरग्राम्यजनश्रेणीवयोवृद्धदर्शितैः सीमालिङ्गैस्सीमानिर्णयः कार्य

इत्यत्रबोद्धव्यम्। गुप्तदोषेषु सामन्तेषु विशेषमाह स एव—

सामन्तास्साधनं पूर्वमनिष्टोक्तौ गुणान्विताः।
द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः॥

अनिष्टोक्तौ प्रतिवादिना गुप्तदोषोद्भावने कृते इत्यर्थः। उत्तराः तत्संसक्तादयोऽन्तरङ्गास्सामन्तकोटयो द्विगुणा ज्ञेयाः। ततस्सामन्तकोटिभ्योऽन्ये बहिरङ्गा नागरादयो मौलवृद्धोद्धृतसहितास्त्रिगुणा मताः। एवं तत्संसक्तकादिष्वपि गुप्तदोषोद्भावने सत्युत्तरेषां द्वैगुण्यादिकमूह्यम्। साक्षिप्रभृत्युद्धृतपर्यन्तानामभावे तु मनुराह—

सामन्तानामभावे तु मौलानां सीमसाक्षिणाम्।
इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान्॥

सामन्तादीनामनुग्राहकमौलादीनां सीमासाक्षिणां चाभावे इमानभ्यानपि वक्ष्यमाणान् पुरुषाननुयुञ्जीत सीमालिङ्गानि पृच्छेदित्यर्थः। तानेव दर्शयति—

व्याधान् शाकुनिकान् गोपान् कैवर्तान्मूलखानकान्।
व्याळग्राहानुञ्छवृत्तीनन्यांश्च वनगोचरान्॥

व्याधादीनां द्वितीयान्ततया निर्देशः पूर्वश्लोकस्थेनानुयुञ्जीतेतिपदेनान्वयार्थः। कैवर्ताः तटाकादिखननोपजीविनः। अन्यान् काष्ठादिवाहनवृत्तीन् वनगोचरान् काननोपजीविनः। नारदस्तु मौलादिसहितान्येषामभावे सीमान्तिकप्रदेशकर्षकाः

तेषामभावे वनगोचरा इति दर्शयितुं वनगोचरेभ्यः साक्सी-माकर्षकान् दर्शयति—

ग्रामसीमासु च बहिः ये स्युस्तत्कृषिजीविनः ।
गोपाश्शाकुनिका व्याधा ये चान्ये वनगोचराः ॥

इति । एवं सामन्ताद्युद्धृतपर्यन्तेष्वप्युत्कृष्टानामभावे निकृष्टानामनुयोजनमूह्यम् । अनुयोजनं सत्यानृतजन्यपुण्यपापप्रतिपादकमन्वादिवचनैर्यथार्थकथनपरान् कृत्वा प्रस्तुतार्थप्रश्नकरणम् । तानि च वचनानि साक्ष्यनुयोजनविधिप्रकरणोक्तान्यनुसन्धेयानि। साक्षिप्रश्नविधिप्रकरणोक्तशपथैः शापिता एव सामन्तादयो विनिर्णयं ब्रूयुः । तथाच बृहस्पतिः—

शपथैश्शापितास्स्वैस्स्वैः ब्रूयुस्सीमाविनिर्णयम् ।
दर्शयेयुश्च लिङ्गानि तत्प्रमाणमिति स्थितम् ॥

शपथैस्स्वैः स्वैः—

सत्येन शापयेद्विप्रं क्षत्रियं वाहनायुधैः ।

इत्यादिनोक्तव्यवस्थानातिक्रमेणेत्यर्थः । मनुनाऽपि—

ग्रामेयककुलानां तु समक्षं सीमसाक्षिणः ।
प्रष्टव्यास्सीमलिङ्गानि तयोश्चैव विवादिनोः ॥

इत्युक्त्वोक्तं—

ते पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम् ।
तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः ॥

इति। ग्रामीणपुरुषसमूहस्य चित्रादिनोश्च समक्षं सीमालिङ्गानि तत्साक्षिप्रभृतयः प्रष्टव्या इति प्रथमश्लोकस्यार्थः। द्वितीयश्लोकार्थस्तु सुव्यक्तः। सीमाया एव ये साक्षिणस्ते सीमार्थमेव प्रष्टव्याः, पृष्टाश्च यथा सीमां ब्रूयुः तथा ज्ञापयेदित्यूह्यम्। यदा तु सीमालिङ्गसाक्षिणो लक्षणानि कथञ्चित् प्रदर्शयितुं न शक्नुवन्ति केवलं सीमां वदन्ति तदा तान् प्रत्याह स एव—

शिरोभिः स्वैः गृहीत्वोर्वीं स्रग्विणो रक्तवाससः।
सुकृतैश्शापिताः स्वैः स्वैः नयेयुस्तान् समञ्जसम्॥

यावन्तस्सीमालिङ्गसाक्षिणः ते सर्वे लोहितकुसुमस्रग्विणो लोहितवसनाः लोष्टं शिरासि धारयन्तः सीमानुयायिना चङ्क्रमेण सीमान्तं प्रदर्शयन्तस्तां सीमां समञ्जसं सम्यक् निर्णयेयुरित्यर्थः। याज्ञवल्क्यस्तु सामन्तादीन् प्रत्याह—

सामन्ता वा समग्रामाश्चत्वारोऽष्टौ दशापि वा।
रक्तस्रग्वसनास्सीमां नयेयुः क्षितिधारिणः॥

वाशब्दात्तत्संसक्तकादयोप्येवमेव लिङ्गप्रदर्शनासम्भवे सीमां नयेयुरिति गम्यते, लिङ्गप्रदर्शकेषु विकल्पार्थत्वात्। समग्रामाः समसङ्ख्याताः समुदायभावमापन्नाश्चत्वार इत्यादिविशेषोपादानमन्यसमसङ्ख्यानिरासार्थम्। समग्रामा इत्यत्र समग्रहणं विषमसङ्ख्यानिवृत्त्यर्थम्। तत्राप्यत्यर्थमेकसङ्ख्यानिवृत्त्यर्थमाह नारदः—

नैकस्समुन्नयेत्सीमां नरः प्रत्ययवानपि।
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता ॥

अस्य प्रतिषेधस्य क्वचित्प्रतिप्रसवमाह बृहस्पतिः—

ज्ञातृचिह्नैर्विना साधुरेकोप्युभयसम्मतः ।
रक्तमाल्याम्बरधरो मृदमादाय मूर्धनि ॥
सत्यव्रतस्सोपवासस्सीमान्तं दर्शयेन्नरः ।

इति । ज्ञातृचिह्नैर्विना ज्ञातॄणां चिह्नानां चाभाव इत्यर्थः। एतदुक्तं भवति—साक्ष्यादिवनगोचरान्तानां सीमाज्ञातॄणां प्रप्रकाशोपांशुलिङ्गानामभावे यःकश्चिदुक्तविशेषणविशिष्टो नरः सीमावित्सीमान्तमुक्तविधिना चङ्क्रममाणो दर्शयेदिति । यद्यप्यत्र मन्वादिवचनाच्चङ्क्रमणानन्तरमेव निर्णयः सम्पद्यत इति प्रतिभाति, तथाऽपि चङ्क्रमणदिनमारभ्य सार्धमासान्ते निर्णयो न ततोऽर्वागित्यवगन्तव्यम् । यदाह कात्यायनः—

सीमाचङ्क्रमणे कोशे पादस्पर्शे तथैव च ।
त्रिपक्षपक्षसप्ताहं दैवराजकमिष्यते ॥

इति । यथासङ्ख्यमिति शेषः । यदाऽप्युक्तलक्षणस्य (नरस्या) प्रमाणस्याभावः तदाऽपि न दिव्येन निर्णयः,

वाक्पारुष्ये महीवादे दिव्यानि परिवर्जयेत् ।

इत्याद्यनेकवचनेन भूविवादे दिव्यनिषेधात् । सीमाविवादश्च भूविवाद एव । यदाह कात्यायनः—

आधिक्यं न्यूनता चांशे अस्तिनास्तित्वमेव च ।
अभोगभुक्तिस्सीमा च षट् भूवादस्य हेतवः ॥

इति । कथं तर्ह्यत्र निर्णय इत्यपेक्षिते नारदः—

यदा तु न स्युर्ज्ञातारः सीमाया न च लक्षणम् ।
तदा राजा द्वयोस्सीमामुन्नयेदिष्टतस्स्वयम् ॥

इष्टतः इच्छात इत्यर्थः । इष्टत इत्यस्य क्वचिदपवादमाह मनुः—

सीमायामविषह्यायां स्वयं राजैव धर्मवित् ।
प्रविशेद्भूमिमेकेषामुपकारादिति स्थितिः ॥

अविषह्या ज्ञातृज्ञापकशून्या । एतदुक्तं भवति—यत्र विवादविषयो भूरेकस्य निरवकाशस्य ग्रामक्षेत्रादेरत्यन्तोपकारिका अन्यस्य तु सावकाशस्य न तथा तत्र महोपकारार्थं निरवकाशग्रामादिशेषतया तां भूमिं प्रवेशयेदिति । एवमुक्तविधिना सीमानिर्णयो नावेदनानन्तरमेव ऋणादिनिर्णयवत् कर्तुं सर्वदा सुकरः, प्रावृडादिकाले सस्यादिभिस्तिरोहितेषु सेत्वादिसीमालिङ्गेषु दुष्करत्वात् । तेन यदा सेत्वादिसीमालिङ्गानां तिरोधायकसस्याद्यभावः तदा निर्णयः कार्यः । तथाच मनुः—

सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः ।
ज्येष्ठमासि नयेत्सीमां सुप्रकाशेषु सेतुषु ॥

द्वयोर्ग्रामाधिपयोर्विवादे सीमां प्रति समुत्पन्ने ज्येष्ठमासि मासान्तरे वा सेतुप्रभृतिषु सीमालिङ्गेषु सुव्यक्तेषु विवादाध्यासितां

सीमां निर्णयेदित्यर्थः। ग्रामग्रहणं क्षेत्रादीनामुपलक्षणार्थम्। अत एव बृहस्पतिना—

ग्रामक्षेत्रगृहादीनां सीमावादं निबोधत।

इत्युपक्रान्तम्। गृहादीनामित्यादिशब्देन नगरदेशौ स्वीक्रियेते, तत्रापि सीमावादसद्भावात्। अत एव कात्यायनेन—

सामन्तभावे सामन्तैः कुर्यात् क्षेत्रादिनिर्णयम्।
ग्रामे सीमासु च तथा तद्वन्नगरदेशयोः॥

इत्युक्तम्। क्षेत्रादिनिर्णयं क्षेत्रगृहयोः सीमानिर्णयमित्यर्थः। न चैवं ग्रामक्षेत्रगृहादिष्वन्योन्यसामन्तैरन्योन्यनिर्णयः कार्यः, ग्रामसामन्तानां क्षेत्रगृहसीमास्वपरिचितत्वात्, एवं क्षेत्रसामन्तानां ग्रामगृहसीमासु अपरिचितत्वात्। अत एवाह स एव—

ग्रामो ग्रामस्य सामन्तः क्षेत्रं क्षेत्रस्य कीर्तितम्।
गृहं गृहस्य निर्दिष्टं सामन्तान् परिभावयेत्॥

अत्र ग्रामादिशब्देन प्रथमान्तेन लक्षणया ग्रामादिभोक्ता कथितः। ततश्चायमर्थः—विवादविषयस्य ग्रामादेस्समन्ततः पूर्वदक्षिणपश्चिमोत्तरादिक्षु स्थितग्रामादिभोक्तृजनस्तस्य सामन्तः ततस्सकाशाद्विवादविषयग्रामादिसीमालिङ्गानि परिभावयेत् निश्चिनुयात् निर्णेता राजादिरिति। एवं नगरदेशयोरपि तत्तत्सामन्तात्परिभावयेदिति विधिरुदाहरणमुखेनास्मिन्वचने सू-

चित इत्यवगन्तव्यम् । एवमेव केदारारामोद्यानदेवालयकूप-तटाकप्रवर्षणोद्भूतजलप्रवाहस्थानादिसीमाविवादे साक्षितत्तत्सा-मन्तादितो निर्णेता निर्णयेत् । तथाच बृहस्पतिः—

सर्वस्मिन् स्थावरे वादे विधिरेष प्रकीर्तितः ॥ इति ॥

इति स्मृतिचन्द्रिकायां सीमाविवादनिर्णयः.

---

## अथ सीमासाक्ष्याद्यपराधविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र कात्यायनः—

बहूनां तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम् ॥

सीमासाक्षित्वेन प्रकीर्तितानां अशेषाणां साक्ष्यवादार्थं मेळने कृते ते सर्वे यदि भयादिना साक्ष्यवादं न ब्रूयुः तदा ते प्रत्येकमुत्तमसाहसं दाप्या इत्यर्थः । प्रत्येकमित्यनुक्तावपि एकैकस्यैव साक्षित्वात्तदत्र लभ्यते । यदा तु ते भयादिना सर्वे संशयमुत्पादयित्वाऽनैकमत्येन ब्रूयुस्तदाऽप्येवमेव दाप्या इत्याह स एव—

कीर्तिते यदि भेदः स्यात् दाप्यास्तूत्तमसाहसम् ।

इति । यदा त्वनृतं ब्रूयुस्तदा त्वाह विष्णुः—'कूटसाक्षिणां सर्वस्वापहारः कार्यः' इति । सामान्येनाभिधानेऽपि दण्ड

गौरवात् भूत्रादविषयमेतदवसेयम् । सामन्तानामनृतवादित्वे त्वाह नारदः—

अथ चेदनृतं ब्रूयुः सामन्तास्सीमनिर्णये ।
सर्वे पृथक् पृथक् दण्ड्या राज्ञा मध्यमसाहसम् ॥

अनृतं ब्रूयुः साक्ष्यवादे सीमालिङ्गानि वञ्चयित्वा ब्रूयुरित्यर्थः । अज्ञानोक्तौ त्वाह कात्यायनः—

नाज्ञानेन हि मुच्यन्ते सामन्ता निर्णयं प्रति ।
अज्ञानोक्तौ दण्डयित्वा पुनस्सीमां विचारयेत् ॥

अज्ञानोक्ताविति निर्णयाभावोपलक्षणार्थं, तेन भेदेनोक्तावपि निर्णयाभावात् पुनस्सीमां विचारयेत् । कस्तत्र निर्णायक इत्यपेक्षिते शङ्खलिखितौ—'सामन्तविरोधे लेख्यप्रत्ययो लेख्यविरोधे ग्रामनगरवृद्धश्रेणीप्रत्ययो ग्रामनगरवृद्धश्रेणीविरोधे दशवर्षा भुक्तिरन्यत्र राजविप्लवात्' इति । लेख्यप्रत्ययो निर्णायक इति शेषः । एवमुत्तरत्रापि शेषो द्रष्टव्यः । तत्संसक्तादिवनगोचरान्तानामनृतवादित्वे तु नारद आह—

शेषाश्चेदनृतं ब्रूयुः नियुक्ता भूमिकर्मणि ।
प्रत्येकं तु जघन्यास्ते विनेयाः पूर्वसाहसम् ॥
गणवृद्धादयस्त्वन्ये दण्डनीयाः पृथक् पृथक् ।
विनेयाः प्रथमेनैव साहसेनानृते स्थिताः ॥

इति । शेषास्सामन्तेभ्योऽवशिष्टाः तत्संसक्ताः । तेभ्यो जघन्याः

संसक्तसंसक्ताः । गणवृद्धादय इत्यत्रादिशब्देन ग्रामनगर-मौलवृद्धोद्धृतसीमाकर्षकवनगोचरास्सङ्गृहीताः । मनुस्तु सीमाचङ्क्रमणकर्तॄणामनृते स्थितानां दण्डमाह—

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः ।
विपरीतं नयन्तस्तु दाप्यास्तु द्विशतं दमम् ॥

यथोक्तेन 'शिरोभिस्ते गृहीत्वोर्वीम्' इत्यादिनोक्तमार्गानतिक्रमेण नयन्तस्सीमाचङ्क्रमणं कुर्वाणास्सत्यसाक्षिणः सत्यभूतसीमानुभवशालिनः पूयन्ते पापेन न सम्बध्यन्ते । विपरीतं नयन्तः पूर्वसीमातिक्रमेण चङ्क्रमणं कुर्वाणाः कार्षापणानां द्विशतं दाप्या इत्यर्थः । विपरीतनयनं तु चङ्क्रमणानन्तरक्षणमारभ्य सार्धमासाभ्यन्तरे दैवराजकृतव्यसनदर्शने वेदितव्यम् ॥

इति स्मृतिचन्द्रिकायां सीमासाक्ष्याद्यपराधविषयाणि.

---

## अथ नद्यादिवशात् प्राप्तभूविषयाणि.

तत्र बृहस्पतिः—

अन्यग्रामात्समाहृत्य दत्ताऽन्यस्य यदा मही ।
महानद्याऽथवा राज्ञा कथं तत्र विचारणा ॥
नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही ।
अन्यथा न भवेल्लाभो नराणां राजदैविकः ॥

क्षयोदयौ जीवनं च दैवराजवशान्नृणाम् ।
तस्मात्सर्वेषु कार्येषु तत्कृतं न विचालयेत् ॥

इति । तत्कृतं दैवराजकृतम् । यद्यपि दैवशब्दो भाग्यमाचष्टे तथाऽपि नदीकृते दैवकृतमित्युच्यते, भाग्यस्यैव मूलकारणत्वात् । तथाच स एव—

ग्रामयोरुभयोर्यत्र मर्यादा कल्पिता नदी ।
कुरुते दानहरणं भाग्याभाग्यवशान्नृणाम् ॥
एकत्र कूलपातं तु भूमेरन्यत्र संस्थितिम् ।
नदी तीरे प्रकुरुते तस्य तां न विचालयेत् ॥

इति । तीरे नदी प्रकुरुते इत्यन्वयः । तस्य नदीवशाल्लब्धभूमिकस्य तां नदीकृतभूमिसंस्थितिं पूर्वस्वामी न विचालयेदित्यर्थः । एतदनुप्तसस्यतीराविषयम् । उप्तसस्यतीरविषयेऽप्याह स एव—

क्षेत्रं ससस्यमुल्लङ्घ्य भूमिश्छिन्ना यदा भवेत् ।
नदीस्रोतःप्रवाहेण पूर्वस्वामी लभेत ताम् ॥

तां ससस्यां भूमिम् । छेदनादूर्ध्वमपि पूर्वस्वामी यावदुप्तसस्यफलप्राप्तिस्तावल्लभत इत्यर्थः । फललाभादूर्ध्वं तु प्राचीनवचनविषयतुल्यतैव । राजदत्तभूमिविषयेऽपि क्वचित्पूर्वस्वामी विचालयेत् क्वचिन्न विचालयेदित्याह स एव—

या राज्ञा क्रोधलोभेन छलन्यायेन वा कृता ।
प्रदत्ताऽन्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात् ॥

प्रमाणरहितां भूमिं भुञ्जतो यस्य या हृता ।
गुणाधिकाय वा दत्ता तस्य तां न विचालयेत् ॥

इति । प्रमाणरहितां भूमिं भुञ्जतः स्वत्वे लिखितादिप्रमाणरहितां भूमिं भुञ्जत इत्यर्थः ।

इति स्मृतिचन्द्रिकायां नद्यादिवशात् प्राप्तभूविषयाणि·

---

## अथ गृहादिविषयाणि.

तत्र बृहस्पतिः—

निवेशकालादारभ्य गृहवार्यापणादिकम् ।
येन यावद्यथाभुक्तं तस्य तन्न विचालयेत् ॥

ग्रामादिप्रवेशकालादारभ्य गृहादिकं तत्स्वामिना येन यावत्प्रचारभूम्याद्युपेतं तथा यस्यां दिशि द्वारादिमद्भुक्तं तस्य तन्न विचालयेत् प्रातिवेश्यादिर्जन इत्यर्थः। 'निवेशकालादारभ्य' इति वदन् कालान्तरादारभ्य भुक्तं विप्रतिपन्नं चेत् विचालयेदिति दर्शयति । एवं निवेशकाले कल्पितं गवाक्षादिकं प्रातिवेश्याद्यनिष्टकार्यपि न केनचिच्चालनीयमित्याह स एव—

वातायनं प्रणाळीं च तथा निर्यूहवेदिकाः ।
चतुश्शालस्यन्दनिकाः प्राङ्निविष्टा न चालयेत् ॥

वातायनं गवाक्षः । प्रणाळी काष्ठादिमयो जलनिर्गमोपायः । निर्यूहः गृहघोणा । वेदिका दारुपरिष्कृता चतुरश्रा विश्रा-

न्तिभूमिः। चतसृणां शालानां समाहारश्चतुश्शालम् । एतच्च तृणमयगृहोपलक्षणार्थमुक्तम् । तस्माद्वृष्ट्युदकनिपातस्यन्दनिकाः। अत्रापि मध्ये नित्रिष्टानां विचालनं पूर्ववदर्थादुक्तम् । अत एव गवाक्षादिकं परानिष्टकारितया न कार्यमित्याह कात्यायनः—

निवेशसमयादूर्ध्वं नैते योज्याः कदाचन ।

इति । परानिष्टकारितयेति शेषः । तथाच स एव—

दृष्टिप्रासं प्रणाळीं च न कुर्यात्परवेश्मसु ॥

इति । दृष्टिप्रासो गवाक्षः । परवेश्मसु परवेश्माभिमुख्येनेत्यर्थः । एवं कृते परानिष्टं भवतीत्यभिप्रायः । अनेनैवाभिप्रायेण बृहस्पतिनाऽप्युक्तं—

वर्चस्स्थानं वह्निचयं गर्तोच्छिष्टाम्बुसेचनम् ।
अत्यारात्परकुड्यस्य न कर्तव्यं कदाचन ॥

वर्चस्स्थानं विष्ठास्थानम् । अत्यारात् अरत्निद्वयमविविहायेत्यर्थः । अत एव कात्यायनः—

विण्मूत्रोदकवप्रं च वह्निश्वभ्रनिवेशनम् ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥

बृहस्पतिस्तु शकटादिकं संकटहेतुभूतं संसरणे न चिरं धार्यमित्याह—

यान्त्यायान्ति जना येन पशवश्चानिवारिताः ।
तदुच्यते संसरणं न रोद्धव्यं तु केनचित् ॥

एवं चतुष्पथादावप्यवरोधनं न कार्यम् । अत एव नारदः—

चतुष्पथसुरस्थानराजमार्गान् न रोधयेत् ।

इति । सुरस्थानं देवकुलादिकम् । चतुष्पथराजमार्गयोस्स्वरूपमाह कात्यायनः—

सर्वे जनास्सदा येन प्रयान्ति स चतुष्पथः ।
अनिरुद्धा यथाकालं राजमार्गस्स उच्यते ॥

अवेळायां यत्र मार्गे राजकीयैश्चङ्क्रमणं निषिध्यते स राजमार्ग इत्यर्थः । यस्य क्षेत्रस्यान्तिके मध्ये वा मार्गोऽस्ति तं प्रत्याहतुः शङ्खलिखितौ—'मार्गक्षेत्रे पथिविसर्गः' इति । कार्य इति शेषः । यस्तु संसरणादाववरोधं करोति तस्य दण्डमाह बृहस्पतिः—

यस्तत्र सङ्करं श्वभ्रं वृक्षारोपणमेव च ॥
कामात्पुरीषं कुर्याद्यस्तस्य दण्डस्तु माषकः ॥

सङ्करः सङ्कीर्णता अवरोध इति यावत् । वृक्षग्रहणं सस्यादेरुपलक्षणार्थम् । यद्यपि पञ्चकृष्णलको माषोऽत्रापि ग्राह्यतया प्रतिभाति, तथाऽप्यपराधानुरूपत्वाय कार्षापणस्य विंशो भागो ग्राह्यः । तत्रापि माषव्यवहारात् । राजमार्गे पुरीषकर्तुर्दण्डाधिक्यमाह मनुः—

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।
स द्वौ कार्षापणौ दद्यादमेध्यं चाशु शोधयेत् ॥

मार्गवैशिष्ट्यादत्रापराधाधिक्यमभिसन्धाय दण्डाधिक्याभिधानं मनोरिति मन्तव्यम्। आपदि तु नार्थदण्डः किंतु वाग्दण्ड इत्याह स एव—

आपद्गतस्तथा वृद्धः गर्भिणी बाल एव वा।
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः॥

तटाकादावमेध्यकर्तुरत्यन्तापराधित्वाद्दण्डेऽप्यत्यन्ताधिक्यमाह कात्यायनः—

तटाकोद्यानतीर्थानि योऽमेध्येन विनाशयेत्।
अमेध्यं शोधयित्वा तु दण्डयेत्पूर्वसाहसम्॥

कश्मलचेलनिर्णेजनादिना तीर्थदूषकस्याप्ययमेव दण्ड इत्याह स एव—

दूषयेत्सिद्धतीर्थानि स्थापितानि महात्मभिः।
पुण्यानि पावनीयानि प्राप्नुयात्पूर्वसाहसम्॥

अपराधान्तरेषु दण्डानाह याज्ञवल्क्यः—

मर्यादायाः प्रभेदे तु सीमातिक्रमणे तथा।
क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः॥

सीमालिङ्गविनाशकस्य प्रथमसाहसो दण्डः, क्षेत्रस्यापहरणेऽपहर्तुर्मध्यमसाहसो दण्ड इत्यर्थः। यत्तु विष्णुनोक्तं— 'सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनस्सीमां कारयेत्' इति, तत्र सीमाभेत्तारमित्यस्य सीमामुल्लङ्घ्य कर्षकमित्यर्थोऽध्यवसे-

यः। सीमाप्रदेशे पुनःकर्षणाद्यकरणमेव पुनस्सीमाकरणं, तद्यथा भवति तथा राजा यतेतेति पुनस्सीमां कारयेदित्यस्यार्थः। उत्तमसाहसाभिधानमर्धसीमातिक्रमविषयम्। समग्रसीमातिक्रमविषये त्वाहतुः शङ्खलिखितौ—'सीमातिक्रमेष्वष्टसहस्रम्' इति। दण्ड इति शेषः। दण्डाधिक्यात्समग्रसीमातिक्रमविषयत्वमस्य वचनस्य न्याय्यम्। स्वल्पसीमातिक्रमविषये त्वाह वृद्धमनुः—

स्थापितां चैव मर्यादामुभयोर्ग्रामयोस्तथा।
अतिक्रामन्ति ये दर्पात्ते दण्ड्याः द्विशतं दमम्॥

दण्डाल्पत्वादल्पातिक्रमविषयमेतदिति न्याय्यम्। यस्तु याज्ञवल्कीये सीमालिङ्गविनाशे प्रथमसाहस उक्तः स गृहसीमालिङ्गविनाशविषयः दण्डस्याल्पत्वात्। क्षेत्रसीमालिङ्गविनाशविषये त्वपराधाधिक्याद्दण्डाधिक्यमाहतुः शङ्खलिखितौ—'क्षेत्रमर्यादाभेदे त्वष्टशतम्' इति। दण्ड इति शेषः। एवं ग्रामादिसीमालिङ्गविनाशे दण्डाधिक्यमूह्यम्। उक्तविधिना दण्डयित्वा पुनर्गृहादीनां सीमालिङ्गानि कारयेदिति चोह्यम्। यस्तु याज्ञवल्कीये क्षेत्रापहरणे मध्यमसाहस उक्तः स तु बलादपहारविषयः। चत्वारिंशदधिकपञ्चशतकार्षापणात्मकस्य मध्यमसाहसस्य गुरुदण्डत्वात्। भयप्रदर्शनेनाज्ञानेन वाऽपहरणे कृते तु मनुराह—

गृहं तटाकमारामं क्षेत्रं वा भीषया हरन्।
शतानि पञ्च दण्ड्यस्स्यादज्ञानाद्द्विशतो दमः॥

यत्तु शङ्खलिखिताभ्यामुक्तं 'क्षेत्रोदकापहरणे अष्टशतम्' इति, दण्ड इति शेषः। तदेतत् बलात्कारेण सोदकशाल्यादिक्षेत्रापहरणे द्रष्टव्यम्। एवमपह्रियमाणक्षेत्रादिभूयस्त्वापेक्षया दण्डाधिक्यमूह्यम्। सीमोत्पन्नवृक्षादिफलपुष्पापहारदण्डप्राप्तिपरिहारोपयोगिनमर्थमाह कात्यायनः—

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः।
फलं पुष्पं च सामान्यं क्षेत्रस्वामिषु निर्दिशेत्॥

सामान्यं साधारणम्। क्षेत्रस्वामिषु सवृक्षसीमकक्षेत्रयोः स्वामिषु। यद्येकक्षेत्रस्वाम्येव सर्वफलमाहरेत् तदा तस्मिन्नर्धफलापहारदण्डप्राप्तिः। येषां तु वृक्षादीनामेकस्य क्षेत्रे मूलप्रदेशा वर्तन्ते अन्यक्षेत्रस्योपरि शाखास्तद्विषयेऽप्याह स एव—

अन्यक्षेत्रे तु जातानां शाखा यत्रान्यसंश्रिताः।
स्वामिनं तं विजानीयाद्यस्य क्षेत्रेषु संश्रिताः॥

संश्रिता आश्रिताः जाता इति यावत्।

इति स्मृतिचन्द्रिकायां गृहादिविषयाणि.

---

## अथ सेत्वादिविषयाणि.

तत्र नारदः—

सेतुस्तु द्विविधो ज्ञेयः खन्यो बन्ध्यस्तथैव च।
तोयप्रवर्तने खन्यो बन्ध्यः स्याद्विनिवर्तने॥

क्षेत्रस्थिताधिकोदकनिर्गमनार्थं खात्वा यः क्रियते सेतुः स खन्यः,

आगतोदकधारणार्थं मृदादिभिः यत्र जलप्रवाहो बध्यते स सेतुः बन्ध्य इत्यर्थः । तत्र नातिनिम्नतया खन्यः कार्यः, नात्युच्चतया बन्ध्य इति दर्शयितुमनुदकात्युदकानिन्दामाह स एव—

नान्तरेणोदकं सस्यं नाशश्चात्युदके सति ।
य एवात्युदके दोषः स एवानुदके भवेत् ॥

अतो यथा न सर्वोदकहानिस्तथा खन्यः कार्यः, यथाच नातिबहूदकस्थितिः तथा बन्ध्यः कार्यः इत्यभिप्रायः । सेतुबन्धप्रातिबन्धकमपि प्रत्याह स एव—

परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते ।
महागुणोऽल्पदोषश्चेद्वृद्धिरिष्टा क्षये सति ॥

अस्यार्थः—स्वक्षेत्रे परेण क्रियमाणः सेतुस्स्वक्षेत्रेऽप्यपेक्षितोदकस्थापकत्वादिमहागुणवान्, स्वक्षेत्रलवनाशकरतयाऽल्पदोषवान् क्षेत्रस्वामिना न प्रतिषेध्यो यस्मात् अल्पक्षेत्रक्षये सत्यपि सस्यसमृद्धिरिष्टेति । चेच्छब्दात्कुत्रचित् उक्तवैपरीत्ये प्रतिषेध्य इति दर्शयति । याज्ञवल्क्योपि—

न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः ।
परभूमिं हरन् कूपः स्वल्पक्षेत्रो बहूदकः ॥

न निषेध्य इत्यनुषङ्गात् कूपपदेनापि सम्बध्यते । स्वल्पक्षेत्रः स्वल्पक्षेत्रवर्ती । एवञ्चायमर्थः—परभूमिं स्वल्पां हरन् बहूदकः

कूपः परेण भूस्वामिना न प्रतिषेध्य इति । विपरीतस्त्वत्रापि निषेध्य एव । यत् पुनस्तेनोक्तम्—

स्वामिने योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्तयेत् ।
उत्पन्ने स्वामिनो भोगः तदभावे महीपतेः ॥

इति, तस्य सति सम्भवे क्षेत्रस्वामिनं तदभावे राजानं वाऽनुज्ञाप्यैव परेण परक्षेत्रे सेत्वादिकः प्रवर्तनीय इत्यत्र तात्पर्यं, न पुनरनिवेदने सेत्वादिवशादुत्पन्नपरक्षेत्रफलभोक्तृनिरूपणे, वचनवैयर्थ्यप्रसङ्गात् । न हि सेत्वादिप्रवर्तनमात्रेण परः परक्षेत्रोत्पन्नफलभोक्तृतां प्रतिपद्यते, येन तन्निवारणार्थं वचनमर्थवत् भवेत् । केचित्तु सेत्वादिनिर्माणोत्पन्नदृष्टादृष्टफलभोक्तृनिरूपणार्थं वचनमेतदिति वदन्ति । यदत्र युक्तं तद्ग्राह्यम् । एवमेवानिवेद्य जीर्णोद्धारे कृतेऽपि बोद्धव्यम् । तथाच नारदः—

पूर्वप्रवृत्तमुत्पन्नमपृष्ट्वा स्वामिनं तु यः ।
सेतुं प्रवर्तयेत्कश्चिन्न स तत्फलभाग्भवेत् ॥
मृते तु स्वामिनि पुनः तद्वंश्ये वाऽपि मानवे ।
राजानमामन्त्र्य ततः कुर्यात्सेतुप्रवर्तनम् ॥
अतोऽन्यथा क्लेशभाक्स्यात् मृगव्याधावमर्शनात् ।
इषवस्तस्य नश्यन्ति यो विद्धमनुविध्यति ॥

इति । अवमर्शनं निदर्शनम् । तस्य मृगव्याधस्य । कात्यायनोपि—

अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः ।
गृहोद्यानतटाकानां संस्कर्ता लभते न तु ॥
व्ययं स्वामिनि चायाते न निवेद्य नृपे यदि ।
अथावेद्य प्रयुक्तस्तु तद्गतं लभते व्ययम् ॥

इति । आवेद्य नृपे तत्प्रयुक्तः संस्कर्ता संस्कारकृतं व्ययं लभते॥

इति स्मृतिचन्द्रिकायां सेत्वादिविषयाणि.

---

## अथ क्षेत्रकर्तृविषयाणि.

तत्र बृहस्पतिः—'गृहीत्वा वाहयेत्काले' इति । क्षेत्रादिविषये क्षेत्रादिस्वामिपार्श्वे अहमिदं करिष्यामीति कृषीवलः क्षेत्रं गृहीत्वा ग्रीष्मादिकाले लाङ्गलादिकं बलीवर्दादिभिर्वाहयेदित्यर्थः। वाहनग्रहणं तदादिफलसङ्ग्रहणान्तव्यापारस्योपलक्षणार्थम् । अत एव कृषिमात्रं कुर्वन् कृषीवलो व्यापारैकदेशकरतया दुष्टत्वात् क्षेत्रफलमूल्यतया कल्पितं क्षेत्रस्वामिने राज्ञा दाप्य इत्याह स एव—'वापगोपनसंग्रहान् । अकुर्वन् स्वामिने दाप्यः' इति । वापो बीजानामावापः । गोपनं सस्यादिरक्षणम् । सङ्ग्रहः फलसङ्ग्रहणम् । वाक्यार्थस्तु याज्ञवल्क्येन विवृतः—

फालाहतमपि क्षेत्रं यो न कुर्यान्न कारयेत् ।
तं प्रदाप्याकृष्टशदं क्षेत्रमन्येन कारयेत् ॥

फालाहतं फालेन विदारितं कृष्टमिति यावत्। न बीजावापयोग्यं मार्दवादिकं कुर्यात्। अकृष्टशदं अकृष्टत्वेन स्थितक्षेत्राद्यत् तृणादि फलं लभ्यते तत् अकृष्टशदम्। अन्येन कृषीवलान्तरेण। यस्तु क्षेत्रं गृहीत्वा क्षेत्रकरणकालार्धे गते कर्षणं कुरुते स कालात्ययापराधानुरूपं दमं दाप्य इत्याह बृहस्पतिः—'मध्ये कृष्टे दमं तु सः' इति। दाप्य इत्यनुषज्यते। यस्तु क्षेत्रं गृहीत्वा तत्करणकालान्तपर्यन्तं न किञ्चित्करोति कारयति च, तमपि प्रत्याह स एव—

क्षेत्रं गृहीत्वा यः कश्चित् न कुर्यान्न च कारयेत्।
स्वामिने स शदं दाप्यो राज्ञा दण्डं च तत्समम्॥

शदं क्षेत्रफलं, तत्समं स्वामिग्राह्यशदसमम्। स्वामिग्राह्यशदोपि क्रियानिरपेक्षिते स एवाह—

चिरावसन्ने दशमं कृष्यमाणे तथाऽष्टमम्।
स्वसंस्कृते तु षष्ठं स्यात् परिकल्प्य यथास्थितम्॥

चिरावसन्ने चिरकालमकृष्टक्षेत्रं करिष्यामीति स्वीकृत्य उपेक्षिते, यावत्फलमनुपेक्षिते लभ्यते तस्य दशमं भागं मूल्यद्वारेण दाप्यः। कृष्यमाणे अचिरावसन्ने क्षेत्रे स्वीकृत्योपेक्षिते त्वष्टमं भागं दाप्यः। स्वसंस्कृते तु क्षेत्रे स्वीकृत्योपेक्षिते षष्ठं भागं दाप्य इत्यर्थः। यत्तु क्षेत्रं स्वामिनः सामर्थ्यवैकल्यादिना खिलत्वाद्यवस्थया स्थितं गृहीत्वा तद्येन कृषीवलेन स्वाम्यनिवारितेन कृतं तत्प्रत्याह नारदः—

अशक्तप्रेतनष्टेषु क्षेत्रिकेष्वनिवारितः ।
क्षेत्रं चेद्विकृषेत्कश्चिदश्नुवीत स तत्फलम् ॥

अशक्ताः क्षेत्रकरणसामर्थ्यविकलाः । प्रेताः स्वर्याताः । नष्टाः कुत्र गता इति चिरकालमविज्ञाताः । क्षेत्रिकाः क्षेत्रस्वामिनः । एतदुक्तं भवति—परक्षेत्रत्वेऽपि खिलभूतभूविषये कर्तुः फलभोगो न जातु फलदण्डदापनमिति । प्रसङ्गात् क्षेत्र स्वामिनमागतमपि प्रत्याह स एव—

विकृष्यमाणे क्षेत्रे तु क्षेत्रिकः पुनराव्रजेत् ।
खिलोपचारं तत्सर्वं दत्वा स्वं क्षेत्रमाप्नुयात् ॥

खिलोपचारः खिलभञ्जनार्थो व्ययः । तस्येयत्तावधारणं खिलभूतक्षेत्रकाठिन्यतारतम्यायत्तामिति तत्तारतम्यमाह स एव—

संवत्सरेणार्धखिलं खिलं स्याद्वत्सरैस्त्रिभिः ।
पञ्चवर्षावसन्नं तु क्षेत्रं स्यादटवीसमम् ॥

संवत्सरोपेक्षितं क्षेत्रमर्धखिलमीषद्दुष्कर्षं भवति, त्रिवत्सरोपेक्षितं तु खिलं स्याद्दुष्कर्षं भवेत् । पञ्चवर्षोपेक्षितं पुनरटवीसमं स्यात् अत्यन्तदुष्कर्षं भवेदित्यर्थः । यदा खिलभञ्जनार्थं व्ययं स्वामी न दातुमुत्सहते तदा त्वाह कात्यायनः—

अशक्तितो न दद्याच्चेत् खिलार्थे यत्कृतो व्ययः ।
तदष्टभागहीनं तु कर्षकः फलमाप्नुयात् ॥
वर्षाण्यष्टौ स भोक्ता स्यात्परतस्स्वामिने तु तत् ।

इति। खिलार्थे यः कृतो व्ययः तत्प्रतिदानासमर्थः स्वामी कर्षकाय यदि खिलव्ययं न दद्यात् तदा कर्षकः क्षेत्रफलस्याष्टमं भागमष्टौवर्षाणियावत् स्वामिने दत्वा अवशिष्टं गृह्णीयात् तदूर्ध्वं स्वामिने तत् क्षेत्रं समर्पयेदित्यर्थः। यदेतत् 'विकृष्यमाणे क्षेत्रे' इत्यादिना 'परतः स्वामिने तु तत्' इत्यन्तेनोक्तं तत्सर्वं प्रेतक्षेत्रविषये तत्पुत्राद्यागमनेऽपि कार्यं, अशक्तनष्टक्षेत्रविषये तु तेषामागमने तत्पुत्रादीनामागने वा कार्यमिति मन्तव्यम्॥

इति स्मृतिचन्द्रिकायां क्षेत्रकर्तृविषयाणि.

समाप्तश्च क्षेत्रजविवादाख्यस्य पदस्य विधिवितानः.

---

## अथ स्त्रीपुंसंबन्धाख्यस्य पदस्य विधिरुच्यते.

तत्र मनुः—

पुरुषस्य स्त्रियाश्चैव धर्म्ये वर्त्मनि तिष्ठतोः।
संयोगे विप्रयोगे च धर्मान् वक्ष्यामि शाश्वतान्॥

धर्म्ये वर्त्मनि शास्त्रीये मार्गे। संयोगे अन्योन्यसंनिधाने। विप्रयोगे देशतः कालतो वा व्यवधाने। शाश्वतान् नित्यानव श्यानुष्ठेयानिति यावत्। एतदुक्तं भवति—अनुच्छृङ्खलयोः

जायापत्योः अन्योन्यमविप्रतिपत्तिसिद्ध्यर्थमवश्यं ये धर्माः परस्परसंनिधावसंनिधौ चानुष्ठेयाः तान्वक्ष्यामीति । के पुन स्ते धर्मा इत्यपेक्षिते स एवाह—

अस्वतन्त्राः स्त्रियः कार्याः पुरुषैस्स्वैः दिवानिशम् ।
विषये सज्जमानाश्च संस्थाप्या ह्यात्मनो वशे ॥

स्वैः पुरुषैः भर्त्रादिपुरुषैः । विषये विनाशहेतुभूतशीतादिविषये । नारदोपि—

स्वातन्त्र्याद्विप्रणश्यन्ति कुले जाता अपि स्त्रियः ।
अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत् ॥

अतोऽन्यैरपि स्वस्त्रीणां यथा भवत्यस्वातन्त्र्यं तथैव कल्पयितव्यमिति शेषः । दुष्प्रसङ्गादपि रक्षणं कर्तव्यम् । तथाच हारीतः—'जायानाशे कुलनाशः कुलनाशे तन्तुनाशः तन्तुनाशे देवपितृनाशो यज्ञनाशो धर्मनाशो धर्मनाशे आत्मनाशः आत्मनाशे सर्वनाशः तस्मादेनां धर्मशीलां सुगुप्तां पत्नीं रक्षेत्' इति । मनुरपि—

सूक्ष्मेभ्योपि प्रसङ्गेभ्यः स्त्रियो रक्ष्या विशेषतः ।
द्वयोर्हि कुलयोश्शोकमावहेयुररक्षिताः॥
इमं हि सर्ववर्णानां पश्यन्तो धर्ममुत्तमम् ।
यतन्ते रक्षितुं भार्यां भर्तारो दुर्बला अपि ॥
स्वां प्रसूतिं चरित्रं च कुलमात्मानमेव च ।

स्वं च धर्मं प्रयत्नेन जायां रक्षन् स रक्षति ॥

इति। अरक्षिताः स्त्रियो दुश्चरितेन द्वयोः कुलयोः भर्तृपितृकुलयोः शोकमावहेयुः कुर्युरित्यर्थः। अनेन कुलद्वयवृद्धैरपि रक्ष्या इति तत्क्लेशकथनमुपदर्शितम्। दर्शितं चासां रक्षणं बृहस्पतिना—

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो निवार्या स्त्री स्वबन्धुभिः।
स्वस्रादिभिः गुरुस्त्रीभिः पालनीया दिवानिशम् ॥

मनुस्त्वात्मनैव पुरुषवत् स्त्रियोऽपि गुप्ता भविष्यन्तीति बुद्ध्या स्त्रीरक्षणे पुरुषेणानास्था न कार्येति प्रतिपादनार्थमाह—

नैता रूपं प्रतीक्षन्ते नासां वयसि संस्थितिः।
सुरूपं वा विरूपं वा पुमानित्येव भुञ्जते ॥
पौंश्चल्याच्चलचित्तत्वान्नैस्स्नेह्याच्च स्वभावतः।
रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्वते ॥
शय्यासनमलङ्कारं कामं क्रोधमनार्यताम्।
द्रोहभावं कुचर्यां च स्त्रीभ्यो मनुरकल्पयत् ॥
एवं स्वभावं ज्ञात्वाऽऽसां प्रजापतिनिसर्गजम्।
परमं यत्नमातिष्ठेत् पुरुषो रक्षणं प्रति ॥

इति। द्रोहभावो दक्षेण प्रपञ्चितः—

जलूकावत् स्त्रियस्सर्वा भूषणाच्छादनाशनैः।
संभृताऽपि कृता नित्यं पुरुषं ह्यपकर्षति ॥

जलूका रक्तमादत्ते केवलं सा तपस्विनी ।
इतरा तु धनं वित्तं मांसं वीर्यं बलं सुखम् ॥
साशङ्का बालभावे तु यौवने विमुखी भवेत् ।
तृणवन्मन्यते नारी वृद्धभावे पुनः पतिम् ॥

इति । भूषणाभिस्संभृता कृताऽपि पुरुषं नित्यमपकर्षति सततमवज्ञापात्रं करोतीत्यर्थः । इतरा स्त्रीत्यर्थः । धनमित्यादौ प्रतिपदमादत्त इत्यनुषज्यते । एवं द्रोहभावमतिशयेन वदतो दक्षस्यायमभिप्रायः—भार्यायां बहुधा बहुविधदौष्ट्यदर्शनेऽपि जातिस्वभावनिबन्धने किमत्र चित्रमित्युद्वेगमुत्सृज्य पालने यत्नानुवृत्तिः कार्येति । भार्याया भरणेऽपि च पुरुषेण यौवने यतितव्यम् । तथाच मनुः—

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।
रक्षन्ति स्थाविरे पुत्रा न स्त्री स्वातन्त्र्यमर्हति ॥

पतिपुत्रविहीनायास्तूभयविधरक्षणं पतिपक्षान्तर्गतेन प्रत्यासन्नेन कार्यम् । तथाच नारदः—

मृते भर्तर्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः ।
विनियोगात्मरक्षासु भरणे च स ईश्वरः ॥

विनियोगः कर्मणि नियोजनम् । पतिपक्षस्याप्यभावे स एवाह—

परिक्षीणे पतिकुले निर्मनुष्ये निराश्रये ।
तत्सापिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः ॥

विनियोगादिष्विति शेषः। पितृपक्षस्याप्यभावे स एवाह—

पक्षद्वयावसाने तु राजा भर्ता स्मृतः स्त्रियाः।
स तस्या भरणं कुर्यान्निगृह्णीयात्पतिच्युताम्॥

भर्ता भरणकर्ता॥

इति स्मृतिचन्द्रिकायां स्त्रीरक्षणविधिः.

---

## अथ स्त्रीरक्षणप्रकारः.

तत्र मनुः—

न कश्चिद्योषितश्शक्तः प्रसह्य परिरक्षितुम्।
एतैरुपाययोगैस्तु शक्तस्ताः परिराक्षितुम्॥

प्रसह्य आक्रम्य अवरुध्येति यावत्। यद्यप्यवरोधेन शारीरव्यभिचाराद्रक्षणं शक्यं, तथाऽपि मानसव्यभिचाराद्रक्षणमशक्यमिति मन्वानेन मनुना—

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम्।

इत्याद्युक्तम्। न च माऽस्तु मानसव्यभिचाराद्रक्षणं, अन्यजात्यसम्भवेन प्रजाशुद्धिविघाताभावादिति वाच्यम्। यत आह स एव—

यादृशं भजते हि स्त्री सुतं सूते तथाविधम्।
तस्मात् प्रजाविशुद्ध्यर्थं स्त्रियं रक्षेत् प्रयत्नतः॥

यादृशं पुरुषं ऋतुकाले स्त्री मनसा भजते तत्समानशीलं पुत्रं जनयतीति पूर्वार्धस्यार्थः । तथाच शङ्खलिखितौ—'यस्मिन् भावोऽर्पितस्त्रीणामार्तवे तच्छीलं पुत्रं जनयति' इति । अतो मानसव्यभिचारादपि स्त्रियः रक्षेदिति शेषः । तथाच मनुना तस्मादित्यादिना उत्तरार्धेन अयमेव विधिर्दर्शितः । परिरक्षणोपाया अपि मनुना दर्शिताः—

अर्थस्य सङ्ग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचे धर्मेऽन्नपक्त्यां च पारीणह्यस्य चेक्षणे ॥

सङ्ग्रहे स्वेन समानीतार्थसंनिधाने । व्यये स्वेनोक्तव्यये । शौचे गृहादिशुद्धिकरसंमार्जनानुलेपनादौ । धर्मे अग्निहोत्राद्यनुकूललौकिकव्यापारे । अन्नपक्त्यां चुल्लीसंमार्जनादिपाकव्यापारे । पारीणह्यस्येक्षणे पिठरादिगृहोपकरणप्रतीक्षणे । एतदुक्तं भवति—अकुत्सितावश्यकव्यापारनैयग्र्यवशेन पुरुषान्तरचिन्तनाद्यवसरराहित्यं भार्याया यथा भवति तथा कुर्यादिति । बृहस्पतिनाऽपि पूर्वोक्ता एवोपाया उक्ताः—

आयव्ययेऽन्नसंस्कारे गृहोपस्काररक्षणे ।
शौचेऽग्निकार्ये संयोज्याः स्त्रीणां शुद्धिरियं स्मृता ॥

इयमुक्तोपायप्रभवा स्त्रीणां शुद्धिः साध्वी स्मृतेत्यर्थः । तथाच मनुना स्मर्यते—

आत्मानमात्मना यास्तु रक्षेयुस्तास्सुरक्षिताः ।

इति । आत्मना अर्थसङ्ग्रहाद्यासक्तचित्तेनेत्यर्थः । आप्तपुरुषैस्तु रक्षिताः स्त्रियो न सम्यग्रक्षिता इत्याह स एव—

अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः ।

इति । आप्तकारिभिः पुरुषैर्गृहे रुद्धा इत्यन्वयः । अरक्षिताः सम्यग्रक्षाविहीना इत्यर्थः । सम्यग्रक्षाविहीनत्वं च प्रागेवाभिहितम् । पानादिनिवारणमपि नारीरक्षणप्रकार इति दर्शयितुमाह स एव—

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम् ।
स्वप्नोऽन्यगेहे वासश्च नारीणां दूषणानि षट् ॥

इति । तेनैतान्यवहितेन पतिप्रभृतिना नारीषु प्रतिषेद्धव्यानीति शेषः । पानं मद्यादीनाम् । पत्या च विरहो देशान्तरे पतिमुत्सृज्यावस्थानम् । अटनं विना पत्या तीर्थयात्रादिकरणम् । स्वप्नो यत्रकुत्र वा शयनम् । अन्यगेहे वासः परगृहे वसनम् । पत्युः शैष्ट्यमपि स्त्रीरक्षणप्रकार इति दर्शयितुमाह स एव—

यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥

अव्यभिचारव्यभिचारयोः शुभाशुभफलज्ञापनमपि स्त्रीरक्षणप्रकार इति दर्शयितुं तयोः फलमाह स एव—

पतिं या नातिचराति मनोवाक्कायसंयता ।
सा भर्तृलोकानाप्नोति सद्भिस्साध्वीति चोच्यते ॥

व्यभिचारात्तु भर्तुः स्त्री लोके प्राप्नोति निन्द्यताम् ।
सृगालयोनिं प्राप्नोति पापरोगैश्च पीड्यते ॥

इति । भरणरूपरक्षणस्यापि प्रकारं दर्शयितुमाह स एव—

देवदत्तां पतिर्भार्यां विन्दते नेच्छयाऽऽत्मनः ।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥

देवैर्दत्ता देवदत्ता देववशायातेति यावत् । तां भार्यां स्वयंवरे पतिर्विन्दते न पुनरात्मेच्छया आत्मव्यापारेण विन्दते। तत्र स्वव्यापाराभावात्तां देववशायातां साध्वीं शोभनां नित्यं बिभृयात् पोषयेदित्यर्थः । न चैवं मानुषवशादायातायां भार्यायां भरणमनावश्यकमिति वाच्यम् । दण्डापूपन्यायेन तत्रापि नित्यं बिभृयादिति विधिर्गम्यते यतः । तथाहि— वरेणावृताऽप्यवश्यं भर्तव्येत्युक्ते वरवृता तु सुतरामिति गम्यते। न च साध्वीमित्यस्य पतिव्रतामित्यर्थान्तरपरत्वेन न व्यभिचारिणीं बिभृयादित्यर्थोऽर्थाद्गम्यत इति व्यभिचारिण्याः भरणमनावश्यकमिति वाच्यं, तस्या अप्यवश्यभरणीयत्वात्। तत्रानुत्कटव्यभिचारिणी सतीव भरणीया, असंव्यवहार्यैव परमाप्रायश्चित्तकरणात् । उत्कटव्यभिचारिण्यपि पश्चात्तापाख्यप्रायश्चित्ताधिकारविशेषेण सिद्धिपर्यन्तमवश्यं भर्तव्या, किंतु कदन्नादिना । तथाच नारदः—

व्यभिचारे स्त्रिया मौण्ड्यमधश्शयनमेव च।
कदन्नं च कुवासश्च कर्म चावस्करोऽन्वहम् ॥

स्त्रिय। अत्यन्तव्यभिचारे जाते मौण्ड्यमधश्शयनं च साधयेत्, कदन्नं कुवासश्च भरणार्थं दद्यात्। अमेध्यशोधनरूपं च कर्म कारयेदित्यर्थः। एवञ्च मनुवृत्तौ साध्वीमित्यस्य यदर्थान्तरमुक्तं 'यद्वा साध्वीं पतिव्रतां बिभृयात् न व्यभिचारिणीम्' इति तत्तु हेयम्। हारीतोपि अत्यन्तव्यभिचारिण्याः भरणमावश्यकमित्याह—

भार्याया व्यभिचारिण्याः परित्यागो न विद्यते।
दद्यात्पिण्डं कुचेलं चाप्यधश्शय्यां च शोधयेत्॥

पिण्डं क्षुन्निवारणमात्रकृत् कदन्नमित्यर्थः। अधः शय्या यस्यास्सा अधश्शय्या ताम्। याज्ञवल्क्योपि—

हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम्।
परिभूतामधश्शय्यां वासयेद्व्यभिचारिणीम्॥

हृताधिकारां श्रौतस्मार्तादिकर्मणि निवृत्ताधिकाराम्। परिभूतां अनधिकृताम्। वासयेत् स्वगृहैकदेश इति शेषः।

विप्रदुष्टां स्त्रियं भर्ता निरुन्ध्यादेकवेश्मनि।

इति मनुस्मरणात्। विप्रदुष्टां कायिकव्यभिचारेणात्यन्तदुष्टामित्यर्थः। तथाच शङ्खलिखितौ—'कामचारिणीं मलिनां कुचेलां पिण्डमात्रोपजीविनीं निवृत्ताधिकारामधश्शय्यां निरुद्धां निवासयेदत्यर्थव्यभिचारिणीम्' इति। कामचारिणीं परपुरुषकामनया चरन्तीमित्यर्थः। स्वच्छन्दचारिण्यास्त्याज्यत्वादेवं व्याख्या कृता। तस्यास्त्याज्यत्वमाह यमः—

स्वच्छन्दगा च या नारी तस्यास्त्यागो विधीयते ।

इति । संव्यवहार्यत्वापादकप्रायश्चित्ताभावो यद्गमने भवति तमपि या गच्छति सा स्वच्छन्दगा । अत्यर्थव्यभिचारिणी तु न त्याज्या, प्रायश्चित्तेन संव्यवहार्यत्वसम्भवात् । यत्तु याज्ञवल्क्येनोक्तं—

सोमश्शौचं ददौ स्त्रीणां गन्धर्वश्च शुभां गिरम् ।
पावकस्सर्वमेध्यत्वं मेध्या वै योषितो ह्यतः ॥

इति, सर्वमेध्यत्वं सर्वयज्ञार्हत्वमित्यर्थः । तदेतत्प्रशंसामात्रं, तेन विप्रदुष्टत्वं हृताधिकारत्वं च व्यभिचारिण्या उक्तमविरुद्धम् । यत्पुनर्मनुनोक्तं—

प्रजनार्थं महाभागाः पूजार्हा गृहदीप्तयः ।
स्त्रियश्श्रियश्च गेहेषु न विशेषोस्ति कश्चन ॥

इति, पूजार्हाः पूजास्पदीभूता इत्यर्थः । तदेतदविप्रदुष्टस्त्रीविषयम् । तेन परिभावास्पदत्वं व्यभिचारिण्या उक्तमविरुद्धम् । मङ्गळार्थमप्यविप्रदुष्टाः स्त्रियः पित्रादिभिः पूज्या इत्याह स एव—

पितृभिर्भ्रातृभिश्चैताः पतिभिर्देवरैस्तथा ।
पूज्या भूषयितव्याश्च बहुकल्याणमीप्सुभिः ॥

देवराः पत्युः भ्रातरः । याज्ञवल्क्योपि—

भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ॥

अत्र भर्तृव्यतिरिक्तैः पूजनमुत्सवविषये द्रष्टव्यम् । तथाच बृहस्पतिः—

भर्त्रा पत्नी समभ्यर्च्या वस्त्रालङ्कारभोजनैः ।
उत्सवे तु पितृभ्रातृश्वशुराद्यैश्च बन्धुभिः ॥

तत्र मनुः—

यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्र तास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ॥
शोचन्ति योषितो यत्र विनश्यत्याशु तत्कुलम् ।
न शोचन्ति तु यत्रैता वर्धते तत्र सर्वदा ॥

इति । शोचन्ति भरणपूजनयोरभावेनेति शेषः । यत्र कुल इत्यर्थः । प्रवत्स्यता तु प्रत्यागमनपर्यन्तं भरणार्थमर्थसंविधानं विधातव्यम् । अन्यथा सन्मार्गे स्थिताऽपि वर्धनराहित्याद्धैर्यच्युता वृत्त्यर्थं व्यभिचरेदित्याह स एव—

विधाय वृत्तिं भार्यायाः प्रवसेत्कार्यवान्नरः ।
अवृत्तिकर्शिता हि स्त्री प्रदुष्येत् स्थितिमत्यपि ॥

द्वेषानुवृत्तिमत्यास्तु भार्यायाः द्वेषानुवृत्तेः प्राक् पूजनाय दत्तं वस्त्राभरणादिकं संवत्सरादूर्ध्वं हृत्वा तामृतुकालेऽपि न सेवेतेत्याह स एव—

संवत्सरमुदीक्षेत द्विषन्तीं योषितं पतिः ।
ऊर्ध्वं संवत्सरात्त्वेनां दायं हृत्वा न संवसेत् ॥

उदीक्षेत द्वेषानुवृत्तिं प्रतीक्षेत । ऊर्ध्वं संवत्सरात् द्वेषानुवृत्तौ

सत्यामिति शेषः। दायं पूजनाय दत्तम्। वृत्त्यर्थं तु कल्पितमनाहार्यं, भार्याया द्वेषानुवृत्तिशालिन्या अपि भरणस्यावश्यकत्वात्। उक्तार्थस्य क्वचिदपवादमाह स एव—

उन्मत्तं पतितं क्लीबमबीजं वाऽपि रोगिणम्।
न प्रद्विषन्त्यास्त्यागोस्ति न च दायापवर्तनम्॥

क्लीबं निरुत्साहम्। अबीजं निर्वीर्यम्। एतदुक्तं भवति—दृष्टादृष्टवैकल्यनिबन्धनद्वेषानुवृत्तावप्ययुक्तकारित्वाभावादृतुगमनत्यागादिरत्र नास्तीति। याज्ञवल्क्यस्त्वाधिविन्नाया भरणमेवावश्यकं न पूजनादिकमित्याह—

अधिविन्ना च भर्तव्या महदेनोऽन्यथा भवेत्।

भर्तव्या पूर्ववदेवेति शेषः॥

इति स्मृतिचन्द्रिकायां स्त्रीरक्षणप्रकारः.

---

अथाधिवेदनविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र मनुः—

मद्यपाऽसभ्यवृत्ता च प्रतिकूला च या भवेत्।
व्याधिता चाधिवेत्तव्या हिंस्राऽर्थघ्नी च सर्वदा॥

अधिवेदनमात्रयोग्यपातित्यरहिता मद्यपाऽत्र विवक्षिता, न पुनर्महापातकवशात्त्यागेऽपि योग्या सुरापी। असभ्यवृत्ता व्यभिचाररता दुराचारा वा। प्रतिकूला नित्यमिष्टविपरी

तकारिणी। व्याधिता दीर्घरोगा। हिंस्रा अतिक्रूरा। अर्थघ्नी स्वातन्त्र्येणार्थव्ययशीला। अधिवेत्तव्येति पञ्चस्वनुषज्यते। अधिवेदनं पूर्वस्थितभार्योपरि परिणयनम्। अर्थघ्नी चेति चशब्दोऽनुक्तसमुच्चयार्थः। काः पुनश्चशब्दसमुच्चिता इत्यपेक्षिते शङ्खलिखितौ—'धूर्तां वैनासिकीं स्त्रीजननीं वन्ध्यामप्रियवादिनीमप्रियशीलां पुरुषद्वेषिणीमननुकूलां चाधिविन्देत्' इति। धूर्ता प्रतारिका। वैनासिकी विगतनासा। स्त्रीजननी स्त्र्यपत्यमात्रजननी। एतदुक्तं भवति—धर्मकार्यपुत्रलाभयोः सिद्धिर्यया सह न सम्भवति तामतीत्य भार्यान्तरं विन्देदिति। कामसिद्धिस्तु यया सह न सम्भवति परिपूर्णा वा न भवति तामर्थैस्तोषयित्वा भार्यान्तरमुद्वहेदित्याह देवलः—

एकामुत्क्रम्य कामार्थमन्यां लब्धुं य इच्छति।
समर्थस्तोषयित्वाऽर्थैः पूर्वोढामपरां वहेत्॥

क्वचित्पूर्वभार्यातः विवाहन्तरेऽनुज्ञां प्राप्यान्यामुद्वहेदित्याह मनुः—

या रोगिणी स्यात्तु हिता सम्पन्ना चैव शीलतः।
साऽनुज्ञाप्याधिवेत्तव्या नावमान्या च कर्हिचित्॥

रोगिणी दीर्घरोगा। हिता भर्तुरभ्युदयार्थिनी। क्वचित्कालक्षेपेण क्वचित्तं विनैवाऽधिवेदनं कार्यमित्याह स एव—

वन्ध्याऽष्टमेऽधिवेद्याऽब्दे दशमे तु मृतप्रजा।

एकादशे स्त्रीजननी सद्यस्त्वप्रियवादिनी ॥

अष्टमेऽब्दे गते इति शेषः । 'अप्रजां नवमे वर्षे' इति हारीतस्मरणात् । एवमेकादशे इत्यत्रापि शेषोऽवगन्तव्यः ।

आकाङ्क्षिताष्टवर्षाणि भर्ताऽतिप्रसवां स्त्रियम् ।
दश वन्ध्यां च निन्द्यां च द्वादशे स्त्रीप्रसविनीम् ॥

इति देवलस्मरणात् । अतिप्रसवा अतिक्रान्तप्रसवा प्रतिगर्भं गर्भस्रावववतीति यावत् । वन्ध्या अनपत्या । निन्द्या मद्यपाऽसभ्यवृत्तेत्येवमादिका । दश वन्ध्यामिति प्रियतरवन्ध्याविषयम् । अत्र मनुः—

अधिविन्ना तु या नारी निर्गच्छेत् रुषिता गृहात् ।
सा सद्यस्सन्निरोद्धव्या त्याज्या वा कुलसन्निधौ ॥

उपरि यस्या अभूत् परिणयनं साऽधिविन्नोच्यते । कुलसंनिधौ अधिविन्नायाः पित्रादिकुलसंनिधावित्यर्थः । तत्कुलसंनिधौ त्यक्तायाः अपि भरणं पतिरेव संनिधानकरणेन कुर्यात् ।

पिता रक्षति कौमारे भर्ता रक्षति यौवने ।

इत्युक्तत्वात् ।

अधिविन्ना तु भर्तव्या महदेनोऽन्यथा भवेत् ।

इत्युक्तत्वाच्च । या त्वध्यूढा नारी पत्युरौचित्याज्ञानदोषात् कुपिता तद्गृहान्निर्गता बन्धुभ्योऽन्यमनाश्रिता सा प-

तिगृहे बन्धुभिराश्रयभूतैः प्रवेशनीया। बन्धुरहिता चेत् स्वयमेव विमृश्य पतिगृहमाश्रयेदित्याह नारदः—

अज्ञानदोषादूढा या निर्गता नान्यमाश्रिता।
बन्धुभिस्सा नियोक्तव्या निर्बन्धुस्स्वयमाश्रयेत्॥

याज्ञवल्क्यस्तु अधिविन्नस्त्रीभ्योऽधिवेदननिमित्तकं भर्तुर्देयमाह—

अधिविन्नस्त्रियै दद्यादाधिवेदनिकं समम्।
न दत्तं स्त्रीधनं यस्यै दत्तं त्वर्धं प्रकीर्तितम्॥

अधिविन्नायै स्त्रियै स्त्रीधनरहितायै यावदधिवेदनार्थं व्ययीकृतं यावद्वाऽधुना परिणीतायै दत्तं तत्समं अधिवेदननिमित्तकधनं भर्त्रा देयम्। तदर्धं तु स्त्रीधनसाहितायै देयत्वेन भर्तुः प्रकीर्तितमित्यर्थः॥

इति स्मृतिचन्द्रिकायामधिवेदनविषयाणि.

---

## अथात्याज्यस्त्रीविषयाणि.

तत्र देवलः—

स्वदारान् त्यजतो मोहान्नरस्यान्यायमोचिनः।
धर्मवंशपरित्यक्तुर्निष्कृतिर्न विधीयते॥

शास्त्रोक्तत्यागहेतून् विनैव यो मोहादिना स्वस्त्रियं त्यजति तस्यान्यायेन स्वदारमोचिनः तन्मोचनद्वारेण तया सह विहितश्रौतस्मर्तादिधर्मस्य तस्यामुत्पाद्यमानसन्तानस्य च त्य-

कुर्निष्कृतिर्नास्तीत्यर्थः । इह लोकेऽपि तस्य राज्ञा चोरव-दण्डनं कार्यम् । तथाच 'चोरवच्छास्यः' इत्यनुवृत्तौ विष्णुः—'निर्दोषां परित्यजन् पत्नीं च' इति । त्यागहेतुभूत-दोषरहितां भार्यां परित्यजन्नपि चोरवद्दण्ड्य इत्यर्थः । गुणवतीं पुनः परित्यजन् महता दण्डेन वशीकृत्य तस्यामेव भर्यायामवस्थाप्यः । तथाच नारदः—

अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम् ।
त्यजन् भार्यामवस्थाप्यो राज्ञा दण्डेन भूयसा ॥

यदा पुनर्दण्डेन महता तस्यामवस्थापयितुमशक्यस्तदा त्वाह याज्ञवल्क्यः—

आज्ञासम्पादिनीं दक्षां वीरसूं प्रियवादिनीम् ।
त्यजन्दाप्यस्तृतीयांशमद्रव्यो भरणं स्त्रियाः ॥

गुणवतीमपि भार्यां यो दुराग्रहेण उत्सृजति तद्धनतृतीयांशं त्यक्ष्यमाणभार्यायै राज्ञाऽसौ दाप्यः । अल्पधनश्चेद्भरण-मात्रपर्याप्तं धनं दाप्य इत्यर्थः ।

इति स्मृतिचान्द्रिकायां अत्याज्यस्त्रीविषयाणि.

---

## अथ त्याज्यस्त्रीविषयाणि.

तत्र नारदः—

अन्योन्यं त्यजतोर्धर्मः स्यादन्योन्यं विकुर्वतोः ।
स्त्रीपुंसयोर्न चोढाया व्यभिचाराद्दते स्त्रियाः ॥

विवाहसंस्काराविहीनयोः हीनजातीयस्त्रीपुंसयोरन्योन्याविरोधेनान्योन्यं त्यजतोः धर्मः स्याद्दोषो न स्यादित्यर्थः। ऊढा विवाहसंस्कृता। तस्यास्तु व्यभिचाररूपनिमित्तमन्तरेण नास्ति त्यागः। अनेन व्यभिचारे सत्यूढाया अप्यस्त्येव त्यागइत्यर्थादुक्तम्। तच्च स्वच्छन्दव्यभिचारिणीविषयम्।

स्वच्छन्दगा च या नारी तस्यास्त्यागो विधीयते।

इति यमस्मरणात्। त्यागोत्र वधप्रतिनिधित्वेन कार्यः। तथाच स एव—

स्वच्छन्दव्यभिचारिण्या विवस्वांस्त्यागमब्रवीत्।
न वधं न च वैकृत्यं वधः स्त्रीणां विसर्जनम्॥

स्त्रीणां महापराधे वधं कुर्वन् विसर्जनमेव तासां कुर्यादित्यर्थः। वैकृत्यं कर्णनासाद्यङ्गविकर्तनम्। तदपि भर्त्रा न कदाचित् कार्यमित्यर्थः।

न चैव स्त्रीवधं कुर्यान्न चैवाङ्गविकर्तनम्।

इति तेनैवोक्तत्वात्। एवमेव शिष्यगाऽपि नारी परित्याज्यैव। तथाच वसिष्ठः—

चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या।
पतिघ्नी च विशेषेण जुङ्गितोपगता च या॥

शिष्यो भर्तृशिष्यः। गुरुः पिता। जुङ्गितः पतितः, प्रतिलोमजो वा। पतिघ्नी तु ज्ञातिभिः परित्याज्या। ज्ञातिपरित्यक्ता-

याः कदन्नप्रदानादिकमपि न कर्तव्यं, विशेषेणेत्युक्तत्वात्। चतस्र इत्युक्तिः न ततोऽधिकपरित्याज्ययोषिदभावबोधनार्था, जुङ्गितोपगतपदेन पतितोपगतप्रतिलोमजोपगतयोरभिधानात् पूर्वापरविरोधापत्तेः। कथं तर्हि चतस्र इत्युक्तम्? उच्यते— पतितप्रतिलोमजोपगतयोर्जुङ्गितोपगतपदार्थतयैक्यमुपेत्य चतस्र इति संकलीकृता। यत एव चतस्र इत्युक्तिः परित्याज्यान्तराभावं न बोधयाति अत एव परित्याज्यान्तराण्याह याज्ञवल्क्यः—

................गर्भे त्यागो विधीयते।
गर्भभर्तृवधे तासां तथा महति पातके॥

इति। यत्र द्विजस्त्रीणां शूद्रात् गर्भे सति प्रायश्चित्तेन संव्यवहार्यत्वाभावात्तत्रैव विषये गर्भे सति त्यागो विधीयत इति मन्तव्यम्। तथाच वसिष्ठेनोक्तं—

ब्राह्मणक्षत्रियविशां स्त्रियश्शूद्रेण संगताः।
अप्रजाता विशुध्यन्ति प्रायश्चित्तेन नेतराः॥

इति। हारीतोपि—'गर्भघ्नीमधोवर्णशिष्यगुरुगामिनीं पानव्यासक्तां धनधान्यविक्रयकारिणीं च वर्जयेत्' इति अत्रापि यत्राधोवर्णगमने पानव्यसने धनधान्यविक्रये च प्रायश्चित्तेन शुद्धिर्नास्तीति शास्त्राद्गम्यते तत्रैव विसर्जनविधानमिति मन्तव्यम्। विसर्जनं व्यवहारपरित्यागः। तथाच वसिष्ठः—

व्यवाये तीर्थगमने धर्मेभ्यश्च निवर्तते।

इति। व्यवायः सम्भोगः। तीर्थगमनशब्देनात्र स्मार्तकर्म प्रदर्शितम्। धर्मशब्देन श्रौतम्। चशब्देन स्पर्शनादि लौकिकम्। ततश्चायमर्थः—भोगसहायकारिसंस्पर्शसम्भाषणादिभ्यो वर्जिता स्त्री निवर्तेत इति। अनेन वचोभङ्ग्या सम्भोगादेरात्यन्तिकवर्जनं विसर्जनमित्युक्तम्। एवं सम्भोगादौ निवृत्ताया अपि स्त्रियाः कदन्नादिं कल्पयितव्यम्। गृहसमीपे गृहान्तरं चेत्याह मनुः—

एवमेव विधिं कुर्याद्योषित्सु पतितास्वपि।
वस्त्रान्नमासां देयं तु वसेयुश्च गृहान्तिके॥

देवलस्तु व्याध्यादिना त्याज्यासु संभोगमात्रस्य त्यागो न सहाधिकारादीनामित्याह—

व्याधितां स्त्रीप्रजां वन्ध्यां उन्मत्तां विगतार्तवाम्।
अदुष्टां लभते त्यक्तुं तीर्थान्न त्वेव कर्मणः॥

तीर्थात् सम्भोगादित्यर्थः। तथाच नारदः—

वन्ध्यां स्त्रीजननीं निन्द्यां प्रतिकूलां च सर्वदा।
कामतो नाभिनन्देत कुर्वन्नेतन्न दोषभाक्॥

निन्द्यां मरणशीलापत्यप्रसवेनेति शेषः। सर्वदा प्रतिकूलां नित्यमिष्टविपरीतकारिणीम्। कामतः सम्भोगकरणेनेत्यर्थः। न दोषभागिति वदन् प्रतिषेधविधेरानित्यतां दर्शयति अत्र बोधायनः—

अप्रजां नवमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत् ।
मृतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम् ॥

त्यजेत् सम्भोगत इति शेषः। अप्रियवादिनीं तु सहवासतोपि त्यजेत्। तथाच नारदः—

अनर्थशीला सततं तथैवाप्रियवादिनी ।
पूर्वाशना च या भर्तुः तां स्त्रीं निर्वासयेद्गृहात् ॥

अपरा आपि गृहान्निर्वासनीयाः स्त्रियस्तेनैव दर्शिताः—

स्त्रीधनभ्रष्टसर्वस्वां गर्भविस्रंसिनीं तथा ।
भर्तुश्च वधमिच्छन्तीं स्त्रियं निर्वासयेद्गृहात् ॥

स्त्रीधनेन सह भ्रष्टं सर्वस्वं यस्याः सा तथोक्ता। गर्भाविस्रंसिनी औषधादिसेवनया संपादितगर्भस्रावा । भर्तुर्वधमिच्छन्ती विषप्रदानादिनेति शेषः । बोधायनेनापि निर्वासनीयाः स्त्रियो दर्शिताः—

भर्तुः प्रतिनिवेशेन या भार्या स्कन्दयेदृतुम् ।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीं तु नयेद्गृहात् ॥
अशुश्रूषाकरीं नारीं बन्धकीं परिहिंसिकाम् ।
त्यजन्ति पुरुषाः प्राज्ञाः क्षिप्रमप्रियवादिनीम् ॥

इति। बन्धकी पुंश्चली ॥

इति स्मृतिचन्द्रिकायां त्याज्यस्त्रीविषयाणि.

---

एवं संयोगे विप्रयोगे च पुरुषस्य धर्मा उक्ताः । अधुना संयोगे एव द्वयोर्जायापत्योर्धर्मा उच्यन्ते ।

तत्र मनुः—

सन्तुष्टो भार्यया भर्ता भर्त्रा भार्या तथैव च ।
यस्मिन्नेतत्कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥

तथैव भर्तृवदेव भार्या भर्त्रा सन्तुष्टेति विपरिणम्य पूरणीयं, यथास्थितस्य पुंलिङ्गत्वेनात्रान्वयासम्भवात् । यस्मिन् कुले नित्यमेतदन्योन्यसंतुष्टत्वं तत्र कल्याणं, सुपुत्रजन्मलक्षणं भार्याबन्धुवर्गे प्रीतिमत्त्वलक्षणं परस्पराव्यभिचारित्वादिलक्षणं चावश्यं भवतीत्यर्थः । तथाच स्वयमेव व्यतिरेकमुखेनान्वयमुखेन च कल्याणशब्दस्य विवक्षितार्थं विवृणोति—

यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत् ।
अप्रमोदात्पुनः पुंसः प्रजनं न प्रवर्तते ॥

स्त्रियां तु रोचमानायां सर्वं तद्रोचते कुलम् ।
तस्यामरोचमानायां सर्वमेव न रोचते ॥

अन्योन्यस्याव्यभीचारो भवेदामरणान्तिकः ।

इति । पुंसः प्रजनं पुत्रजननमित्यर्थः । तत्कुलं स्त्रीकुलम् । दम्पत्योर्धर्मान्तरमाह स एव—

तथा नित्यं यतेयातां स्त्रीपुंसौ च कृतक्रियौ ।
यथा नातिचरेयातां वियुक्तावितरेतरम् ॥

नातिचरेयातां धर्मार्थकामेष्विति शेषः। दक्षोपि--

स्वर्गेऽपि दुर्लभं ह्येतदनुरागः परस्परम्।
रक्तमेकं विरक्तं वा ततः कष्टतरं नु किम्॥

दम्पत्योः परस्परमनुराग इत्येतत् स्वर्गेऽपि दुर्लभम्। तथा तयोरेकतरत्स्वरूपमनुरक्तं विरक्तं वा स्यात्ततः कष्टतरं नु किं न किमपि, तदेव परमं कष्टमित्यर्थः। तेन मिथोऽनुरागो यथा भवति तथा स्त्रीपुंसौ यतेयातामिति शेषः। याज्ञवल्क्योपि—

यत्रानुकूल्यं दम्पत्योस्त्रिवर्गस्तत्र वर्धते।

इति। तेन मिथोऽनुकूलत्वं यथा भवति तथा स्त्रीपुंसौ यतेयातामिति शेषः। त्रिवर्गो धर्मार्थकामाः। तथाच दक्षः—

गृहाश्रमात्परं नास्ति यदि भार्या वशानुगा।
तया धर्मार्थकामात्मत्रिवर्गफलमश्नुते॥

तया वशवर्तिन्या धर्मार्थकामात्मकं त्रिवर्गाख्यफलमश्नुते गृहीत्यर्थः। वशानुगेति गुणान्तराणामुपलक्षणार्थम्। तथाच स एव—

गृहे वासस्सुखार्थो हि पत्नीमूलं च तत्सुखम्।
सा पत्नी या विनीता च चित्तज्ञा वशवर्तिनी
अनुकूला त्ववाग्दुष्टा दक्षा साध्वी प्रजावती॥

इति। पत्नी यज्ञाधिकारसंपद्युक्ता भार्या, तद्विकला तु स्त्र्येव न पत्नी। साऽपि भार्या प्रागुक्तविनीतत्वादिगुणान्वितेत्याह स एव—

एभिरेव गुणैर्युक्ता भार्यैव स्त्री न संशयः।

इति। एभिरेवेत्येवकारोऽत्रायोगव्यवच्छेदार्थो न पुनरन्ययोगव्यवच्छेदार्थः, गुणान्तरयोगस्यापीष्टत्वात्। या पुनर्निर्गुणा सा जरेत्याह स एव—

अदुष्टमानसा नित्यं स्थानमानविचक्षणा।
भर्तुः प्रियकरी या तु सा भार्या त्वितरा जरा॥

इतरा गुणरहिता जरा क्लेशकारिणीत्यर्थः। पत्न्यादावेव पत्न्यादिशब्दप्रयोगो विनीतत्वादिगुणान्वितायामेव समग्रं पत्न्यादिनिर्वर्त्यकार्यं भवति नान्यस्यामिति प्रशंसार्थः। यथा 'पशवो गोऽश्वाः' इति श्रुतौ गवाश्वपशुष्वेव पशुशब्दप्रयोगो गोऽश्वेष्वेव समग्रं पशुनिर्वर्त्यं कार्यं, न पुनरजादिष्विति प्रशंसार्थः तद्वदत्रापीति सर्वमनवद्यम्। सुशिक्षिता भार्या तु बाह्याभ्यन्तरशुद्धिमद्भ्रात्रादिसमेत्याह स एव—

शिष्टा भार्या शुचिभ्रातृमित्रदाससमा स्मृता।
यस्यैतानि विनीतानि तस्य लोकेषु गौरवम्॥

मित्रदासोऽनुकूलदासः। एतानि पूर्वोक्तोपसर्जनानि। व्यासस्तु स्त्रीधर्मैः पूर्वोक्तगुणैश्च युक्ता स्त्री पुण्यकर्मणः कस्यचिदेव सम्पद्यत इत्याह—

पूर्वोत्थानपरा दक्षा जघन्यासनशायिनी।
अवाग्दुष्टाऽनुकूला स्त्री भवेद्वै पुण्यकर्मणः॥

उक्तलक्षणस्त्रीकस्य स्वर्गसंनिभं सुखं तया लभ्यत इत्याह दक्षः—

अनुकूलकळत्रस्य स्वर्गस्तेन न संशयः ।

इति । तेन कळत्रेणेत्यर्थः । विपरीतकळत्रस्य नरकसंनिभं दुःखमित्याह स एव—

प्रतिकूलकळत्रस्य नरको नात्र संशयः ।

इति । प्रतिकूलकळत्रद्वयशालिनो दुःखविशेषमाह स एव—

दुःखासिका कलिर्भेदश्छिद्रपीडा परस्परम् ।
प्रतिकूलकळत्रस्य द्विदारस्य न संशयः ॥

इति । दुःखासिका दुःखेन वसनम् । कलिः कलहः । भेदो विमतिः । छिद्रपीडा छिद्रान्वेषणनिबन्धनपीडा । परस्परं कळत्रयोर्मिथ इत्यर्थः । कथं तर्हि प्रतिकूलद्विकळत्रस्य कलहादिजन्यदुःखविशेषकथनं ? उच्यते—मिथः कळत्रयोरुत्पन्नः कलहादिः तद्भर्तृपर्यन्ततामायातीत्याभिसन्धायोक्तं 'प्रतिकूलकळत्रस्य द्विदारस्य' इति ।

इति स्मृतिचन्द्रिकायां जायापत्योर्धर्माः.

---

## अथ स्त्रीधर्माः.

तत्र मनुः—

बालया वा युवत्या वा वृद्धया वाऽपि योषिता ।
न स्वातन्त्र्येण कर्तव्यं कार्यं किञ्चिद्गृहेष्वपि ॥
बाल्ये पितुर्वशे तिष्ठेत् पाणिग्राहस्य यौवने ।
पुत्रस्य भर्तरि प्रेते न भजेत स्वतन्त्रताम् ॥

पित्रा भ्रात्रा सुतैर्वाऽपि नेच्छेद्विरहमात्मनः ।
एषां हि विरहेण स्त्री गर्ह्ये कुर्यादुभे कुले ॥

इति । उभे कुले पितृभर्तृकुले । स्वयं च गर्ह्या भवतीति दण्डापूपन्यायेन गम्यते, या कुलस्यापि गर्ह्यतामावहति सा सुतरामात्मन इति । उक्तं च बृहस्पतिना—

भर्त्रा पित्रा सुतैर्न स्त्री वियुक्ताऽन्यगृहे वसेत् ।
असत्सङ्गे विशेषेण गर्ह्यतामेति सा ध्रुवम् ॥

याज्ञवल्क्येनाप्युक्तं—

पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः ।
हीना न स्याद्विना भर्त्रा गर्हणीयाऽन्यथा भवेत् ॥

व्यासस्तु वेश्यावदाचरणप्रतिषेधार्थमाह—

द्वारोपवेशनं नित्यं गवाक्षावेक्षणं तथा ।
असत्प्रलापो हास्यं च दूषणं कुलयोषिताम् ॥

नित्यमित्यवेक्षणादावनुषज्यते । बृहस्पतिस्तु स्वैरणीवदाचरणप्रतिषेधार्थमाह—

पानाटनदिवास्वापमक्रिया दूषणं स्त्रियाः ।

इति । अक्रिया अकरणं निर्व्यापारतया स्थानमिति यावत् । शङ्खलिखितौ वेश्यावदाचरणप्रतिषेधार्थमाहतुः—"स्त्री नानुक्ता बहिर्निष्क्रामेन्नानुत्सवे गन्धमाल्याभरणानि विकृतानि वासांसि बिभृयान्न परपुरुषमभिभाषेतान्यत्र वणिक्प्रव्रजितवृद्धेभ्यो न नाभिं दर्शयेदा गुल्फाभ्यां वासः परिदध्यान्न स्तनौ

विवृतौ कुर्यान्न हसेदनपावृतं न महाजने" इति । विकृतानीति पुरस्तात् परस्ताच्च सम्बध्यते । प्रव्रजितश्चतुर्थाश्रमी । अनपावृतं असंवृतं, क्रियाविशेषणं चैतत् । महाजनसमीपे तु संवृतस्यापि हसनस्य प्रतिषेधार्थं पुनर्निषेधः कृतः । वेश्यादिस्त्रीभिस्सहैकत्रावस्थानप्रतिषेधोपि ताभ्यां दर्शितः—'न गणिकाधूर्ताचारिणीमायाविनीकुहकशीलाविप्लुताभिस्सहैकतास्तिष्ठेत्। संसर्गेण हि चारित्रं दुष्यति' इति । कुहकशीला शठस्वभावा । विप्लुता जारादिभिर्नष्टा । एकतस्स्थितिनिषेधोऽयं पुनःपुनः क्रियमाणविषय इति हेत्वभिधानादवगम्यते । न हि सकृदेकत्र स्थित्या कुलवधूनां चारित्रं दुष्यति । एवं कायशुद्ध्युपहतिहेतुभूतपरशयनादिसंसर्गं वर्जयेत् । तथाच हारीतः—'परशयनासनवस्त्राभरणानि मनसाऽपि नाध्यवस्येत् आ पुनस्संस्कारात् । तथैकपात्रे मद्यमांसादीन्युच्छिष्टनिर्माल्ये चान्यत्र गुरुभर्तृसुतेभ्यः' इति । आ पुनस्संस्कारात् आ पुनर्निर्णेजनसंस्कारात् । एकपात्रग्रहणमन्येन सह भोजनोपलक्षणार्थम् । मद्यमांसग्रहणमपेयाभक्ष्याणामुपलक्षणार्थम् । अत एव सुराप्याऽत्यर्थोपहतकायया संस्पृष्टं दुष्टं भवतीत्याह स एव—

दैवे वा यदि वा पित्र्ये सुराप्यायतनं स्पृशेत् ।
रजस्वला पुंश्चली वा रक्षसां गच्छतीह तत् ॥

अत एव मद्यमांसादीनीत्यादिग्रहणं कृतम् । उच्छिष्टं च निर्माल्यं चोच्छिष्टनिर्माल्ये । गुरुः पिता अन्यत्र गुरुभर्तृसु-

तेभ्य इति वदन् गुर्वादीनामुच्छिष्टनिर्माल्यवर्जनेऽपि न दोष इति दर्शयति । अपेयादिवर्जनमवश्यं कार्यम्, गर्भस्यापि दोषहेतुत्वात् । न हि दुष्टकारणजन्यमदुष्टं भवितुमर्हति । मात्रा यत्सेवितं दुष्टमदुष्टं वा तदपि गर्भकारणम् । तदेतदाहतुः शङ्खलिखितौ— 'सुरालशुनपलाण्डुगृञ्जनकलञ्जमांसादीन्यभक्ष्याणि वर्जयेन्मातुरशितपीताद्धि गर्भस्सम्भवति' इति । लशुनादीनामवान्तरजातिभेदस्सुश्रुते निरूपितः । तेन भेदेन त्रयाणां ग्रहणमर्थवत् । सुरा तु स्त्रिया विशेषतो वर्जनीया, भर्तुरपि दोषावहत्वात् । तथाच हारीतः—

पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत् ।
पतितार्धशरीरस्य निष्कृतिर्न विधीयते ॥

यमोपि—

वारुणीं यस्य विप्रस्य भार्या सेवेत संनिधौ ।
स शूद्रवद्बहिष्कार्यः सर्वस्माद्द्विजकर्मणः ॥

संनिधाविति वदन् संसर्गिण्येव भर्तरि बहिष्कारविधिरिति दर्शयति । तेन सुरापीपरित्यागिनो नोक्तदोष इत्यवगन्तव्यम् । याज्ञवल्क्योपि सुरा विशेषतो वर्ज्या ब्राह्मण्या इति दर्शयितुं तत्पानजन्यप्रत्यवायस्य फलमाह—

पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत् ।
इहैव सा शुनी गृध्री सूकरी वोपजायते ॥

तेन पुरा प्रयत्नतो वर्ज्येत्यभिप्रायः । विष्णुस्तु धर्मान्तराण्याह--'अथ स्त्रीधर्माः—क्वचित् समानवृत्तचरित्रत्वं सुसंस्कृतोपस्करता अमुक्तहस्तता सुगुप्तता मूलक्रियास्वनभिरतिर्मङ्गळाचारतत्परता' इति। सुसंस्कृतोपस्करता प्रक्षाळनादिभिस्संस्कृतपीठादिगृहोपकरणता। अमुक्तहस्तता असद्व्ययपराङ्मुखता। मूलक्रिया मूलकर्म, मन्त्रतन्त्रादिना भर्तुर्वशीकरणमिति यावत्।

इति स्मृतिचन्द्रिकायां स्त्रीधर्माः.

---

## अथ स्त्रीकर्माणि.

तत्र बृहस्पतिः—

पूर्वोत्थानं गुरुष्वर्वाक् भोजनव्यञ्जनक्रिया ।
जघन्यासनशायित्वं कर्म स्त्रीणामुदाहृतम् ॥

पूर्वोत्थानं भर्तुरुत्थानापेक्षया। एवं जघन्यासनादिविधावपि भर्त्रासनाद्यपेक्षया जघन्यत्वम्। मान्येष्वादौ भोजनप्रदानादिव्यापारः। देवलोपि—'पतिशुश्रूषा सहधर्मचर्या तत्पूज्यमानपूजनं तद्द्वेष्यद्वेषणम्' इति। शङ्खलिखितावपि—'श्वःपचनभाण्डानामुपलेपनं सुसंमृष्टगृहद्वारोपलेपनं दध्यक्षतदूर्वाप्रवाळपुष्पकृतबलिकर्म श्वशुरयोरभिवादनं महावश्यकानि कुर्यात्' इति। श्वःपचनभाण्डानामुपलेपनं पूर्वेद्युरिति शेषः। ऋष्यशृङ्गोपि—

गृहमेधी भवेन्नित्यं भूषणानि च भूषयेत् ।
नित्यं स्नानकृतां वेणीमञ्चयेत्पुष्पमालया ॥
पूर्वमेव रहो गच्छेत् यावन्नार्यः प्रबुध्यते ।
देवताराधनं कुर्यात् धूपपुष्पाक्षतादिभिः ॥

इति । गृहमेधी गृहदेवतापूजापरा । स्नानकृतां स्नानेन संस्कृताम् । रहो गच्छेत् रहसि भर्तुः सकाशात् गच्छेत् । कात्यायनोपि—

पत्या चाप्यवियोगिन्या शुश्रूष्योऽग्निर्विनीतया ।
सौभाग्यवद्वैधव्यकाम्यया भर्तृभक्तया ॥

अग्निर्गार्हपत्यादिः; औपासनाख्यो वा । सौभाग्यवद्वैधव्यकाम्यया । सौभाग्योपेतमवैधव्यं कामयमानया अनेन सौभाग्यमवैधव्यं चाग्निपरिचर्याफलमित्युक्तम् । श्लोकादावन्ते च उक्तविशेषणवशाद्विनीतया पतिरपि सततं शुश्रूष्य इति गम्यते । न केवलं शुश्रूष्यः अपितु दुर्दशायामप्यलङ्घ्यः पतिरित्याह मनुः—

यस्मै दद्यात्पिता त्वेनां भ्राता वाऽनुमते पितुः ।
तं शुश्रूषेत जीवन्तं दुस्स्थितं च न लङ्घयेत् ॥

इति । न च तं द्विष्यादिति चशब्दार्थः । तथाच शङ्खलिखितौ—'न भर्तारं द्विष्यादष्ठीवलस्स्यात् पतितोऽङ्गहीनो व्याधितो वा पतिर्हि दैवतं स्त्रीणाम्' इति । अष्ठीवलस्स्यात् अष्ठीवलाख्यरोगी स्यादित्यर्थः । पतितस्य तु पातित्यापगमपर्यन्तं भार्ययाऽसौ पतिः शुश्रूषार्थं प्रतीक्ष्य इत्याह याज्ञवल्क्यः—

आशुद्धेस्सम्प्रतीक्ष्यो हि महापातकदूषितः ।

इति । पतितावस्थायां पतिः न शुश्रूष्य इत्यार्थिकोऽर्थः प्रत्येतव्यः। दुश्शीलादिस्तु पतिर्नैव दौश्शील्याद्यपगमपर्यन्तं प्रतीक्ष्यः । यदाह मनुः—

विशीलः कामवृत्तो वा गुणैर्वा परिवर्जितः ।
उपचर्यः स्त्रिया साध्व्या सततं देववत्पतिः ॥

कामवृत्तः स्वच्छन्दचारी । देववदुपचर्यः देवो यथा ऐहिकामुष्मिकसुखसंपादकत्वादुपचर्यः तद्वत्पतिरपीत्यर्थः । तथाच स एव—

अनृतावृतुकाले च मन्त्रसंस्कारकृत्पतिः ।
सुखं नित्यं ददातीह परलोके च योषितः ॥

मन्त्रसंस्कारकृत् मन्त्राद्यसंस्कारकृत्, विवाहादिसंस्कारकृदिति यावत् । याज्ञवल्क्यस्तु पतिशुश्रूषणात्मकधर्मानुरोधेनैव अन्यो धर्मः कार्य इति प्रतिपादनार्थमाह—

स्त्रीभिः भर्तृवचः कार्यमेष धर्मः परः स्त्रियाः ।

इति । परः उत्कृष्ट इत्यर्थः । एतच्चोत्कृष्टानुरोधेनापकृष्टानुष्ठानमित्यर्थात् प्रतिपादितम् । मनुरप्यर्थादेतदेव वक्तुमाह—

नास्ति स्त्रीणां पृथग्यज्ञः न व्रतं नाप्युपोषणम् ।
पतिः शुश्रूष्यते येन तेन स्वर्गे महीयते ॥

शङ्खोपि—

न व्रतेनोपवासेन धर्मेण विविधेन च ।

नारी स्वर्गमवाप्नोति प्राप्नोति पतिपूजनात् ॥

विष्णुस्तु—पतिशुश्रूषणमकृत्वा उपवासव्रतं न कार्यमिति प्रतिपादयितुमाह—

पत्यौ जीवति या योषित् उपवासव्रतं चरेत् ।
आयुर्हरति सा भर्तुः नरकं चैव गच्छति ॥

इति । यत्तु शङ्खलिखिताभ्यामुक्तं—'भर्तुरनुज्ञया व्रतोपवासनियमेज्यादीनामारम्भः स्त्रीधर्मः' इति, तत् पतिशुश्रूषणानुपमर्देन संपादितव्रतादिविषयम् । यत्तु पैठीनसिनोक्तं—'स्त्रियो गृहदेवतास्तासां नाशौचं न व्रतं नोपवासः पतिशुश्रूषयैव गच्छन्ति परमां गतिम्' इति, तत् पतिशुश्रूषायाः प्राशस्त्यमात्रपरं न पुनश्शौचादिनिवारणपरमिति मन्तव्यम् । एवं कुर्वन्त्याः फलमाह मनुः—

अनेन नारी वृत्तेन मनोवाग्देहसंयता ।
इहाग्र्यां कीर्तिमाप्नोति पतिलोकं परत्र च ॥

याज्ञवल्क्योपि—

पतिप्रियहिते युक्ता स्वाचारा विजितेन्द्रिया ।
इह कीर्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥

इति । कात्यायनोपि—

पतिशुश्रूषयैव स्त्री सर्वान् कामान् समश्नुते ।
दिवः पुनरिहायाता सुखानां शेवधिर्भवेत् ॥

दिवः सकाशात् पुनरिहागता सुखानां निधिर्भवेदित्यर्थः । पृथिवीं प्रति लक्ष्मीवाक्यमपि—

नारीषु नित्यं सुविभूषितासु
पतिव्रतासु प्रियवादिनीषु ।
अमुक्तहस्तासु शुभान्वितासु
सुगुप्तभाण्डासु बलिप्रियासु ॥
संमृष्टगेहासु जितेन्द्रियासु
कलिव्यपेतासु विलोलुपासु ।
धर्मव्यपेक्षासु दयान्वितासु
स्थिता सदाऽहं मुदितासु धात्रि ॥

इति । कलिव्यपेतासु कलहरहितासु । हारीतस्तु अपतिव्रताया दोषमाह—

असाध्वी या पतिं त्यक्त्वा वर्तते कामकारतः ।
न सा सुखमवाप्नोति कल्पते नरकाय च ॥

इति स्मृतिचन्द्रिकायां स्त्रीकर्माणि.

---

## अथ प्रोषितभर्तृकायाः स्त्रिया धर्माः.

तत्र मनुः—

विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता ।
प्रोषिते त्वविधायैव जीवेच्छिल्पैरगर्हितैः ॥

जीवनार्थं व्ययं परिकल्प्य प्रोषिते भर्तरि तद्भार्या वक्ष्यमाणनियमस्था पुनरागमनपर्यन्तं परिकल्पितं व्ययार्थं द्रव्यमुपजीवेत् ।

तत्क्षये तदकल्पने वा कर्तनादिशिल्पैः परगृहप्रवेशनदुस्सङ्गत्यादिहेतुत्वादिराहित्येनागार्हैतैर्जीवेदित्यर्थः। के पुनर्वक्ष्यमाणा नियमा इत्यपेक्षिते विष्णुः—'भर्तरि प्रोषिते प्रतिकर्माक्रिया परगृहेष्वनभिगमनं द्वारदेशगवाक्षेष्वनवस्थानम्' इति। प्रतिकर्माक्रिया अलङ्कृतेरकरणम्। तथाच हारीतः—'न प्रोषितेऽलं कुर्यान्न वेणीं मुञ्चेत्' इति। शङ्खलिखितावपि नियमानाहतुः— 'प्रेङ्खाताण्डवविहारचित्रदर्शनाङ्गरागोद्यानयानविवृतशयनोत्कृष्टपानभोजन कन्तुकक्रीडाधूपगन्धमाल्यालङ्कारदन्तधावनाञ्जनादर्शनप्रसाधनादीनामस्वतन्त्राणां प्रोषितभर्तृकाणां कुलस्त्रीणामनारम्भः' इति। प्रेङ्खा डोलाविहारो रथ्यादौ, न पुनर्गृहेऽपि। विवृतशयनं निष्प्रावरणतया शयनम्। प्रेङ्खादिप्रसाधनान्तानामनारम्भोऽस्वतन्त्राणां प्रोषितभर्तृकाणां कुलस्त्रीणामित्यन्वयः। प्रसाधनादीनामित्यादिग्रहणलब्धानाह बृहस्पतिः—

प्रसाधनं नृत्तगीतसमाजोत्सवदर्शनम्।
मांसमद्याभियोगं च न कुर्यात्प्रोषिते प्रभौ॥

प्रोषितभर्तृकाणां दुष्प्रसङ्गेभ्यो रक्षकजने व्यवस्थामाहतुः शङ्खलिखितौ—'सर्वासां प्रोषिते भर्तरि ब्राह्मणी चारित्रं रक्षेत्। इतरासां मातापितरौ अनन्तरो वा राजन्यो वा' इति। सर्वासां क्षत्रियादिस्त्रीणाम्। इतरासां विप्रास्त्रीणाम्। अनन्तरः प्रत्यासन्नबन्धुः॥

इति स्मृतिचन्द्रिकायां प्रोषितभर्तृकायाः स्त्रियो धर्माः

---

## अथ मृतभर्तृकाया स्त्रिया धर्माः.

तत्राहिताग्नेर्भार्यां प्रत्याह हारीतः—'आहिताग्निश्चेत्प्रमीयेत औपासनावक्षाणाग्निं परिगृह्य सर्पराज्ञीभिरनुसवनमिन्धाना वसेत्' इति । अर्धाधानपक्षेमृतस्याहिताग्नेस्त्रेताग्निना दहनम् । औपासनाग्निस्तु पत्न्यर्थमिन्धने ध्रियते । उल्मुकावस्थेन्धनान्यवक्षाणान्युच्यन्ते । एवञ्चायमर्थः—उल्मुकावस्थमौपासनाग्निं परिगृह्य 'भूमिर्भूम्ना' इति चतसृभिरनुसवनमिन्धाना श्वशुरादिगृहे वसेदिति । एव मेवानाहिताग्नेर्मृतस्य भार्या वसेत् । इयांस्तु विशेषः—औपासनाग्नेस्स्वगृह्योक्तविधिना पुनस्सन्धानं लौकिकाग्नेर्वा परिग्रहं कुर्यात् । तथाच स एव—'अनाहिताग्निश्चेदन्यमादध्याज्जनाग्निं वा परिगृह्य' इति । अनाहिताग्निश्चेत् प्रमीयीतेत्यनुषज्यते। परिगृह्य पूर्ववत् समिन्धनमाचरेदिति शेषः। अनाहिताग्नेर्दहनकर्मणि पूर्वस्थितस्यौपासनस्य प्रतिपत्तिर्जातेति पुनरुत्पत्त्यर्थमन्यमादध्यादित्युक्तम् । कथं पुनः सर्वाधानपक्षे मृतभर्तृकाया अग्निपरिचर्या, न चानाहिताग्नेर्भार्यायामुक्तमत्राप्यूह्यं, वचनबलेनैव मृतभर्तृकाया अलौकिकाग्निनिष्पत्तेः । उच्यते—निर्मथिताग्निं परिगृह्य पूर्ववत्समिन्धनमाचरेत् । 'निर्मन्थ्येन पत्नीम्' इत्यापस्तम्बेनैतस्मिन् पक्षे निर्मन्थ्येन पत्न्याः पितृमेधविधानात् । एवं स्त्रीविशेषेऽग्निविशेषसमिन्धनमुक्त्वा सर्वप्रमीतभर्तृकायास्साधारणधर्ममप्याह स एव—'भर्तुः पितुः

स्वजनस्य वा गृहमाश्रित्य संयताजिह्वाहस्तपादेन्द्रिया स्वाचारवती दिवारात्रं भर्तारमनुशोचन्ती व्रतोपवासैः कृशात्मा आयुषोऽन्ते पतिलोकं जयति न भूयः पतिवियोगमाप्नोति' इति। स्मृत्यन्तरेऽपि फलमुक्तम्—

पतिव्रता तु या नारी निष्ठां याति प्रभौ मृते।
सा हित्वा सर्वपापानि पतिलोकमवाप्नुयात् ॥

बृहस्पतिनाऽप्युक्तम्—

व्रतोपवासनिरता ब्रह्मचर्ये व्यवस्थिता।
धर्मदानपरा नित्यमपुत्राऽपि दिवं व्रजेत् ॥

यत्तु श्रुतावुक्तं 'नापुत्रस्य लोकोस्ति' इति, तत् यः पुत्रोत्पत्तौ धर्म्यमार्गेणाधिकारे जातेऽपि किं पुत्रेणेत्यनास्थया पुत्रोत्पत्तिं न करोति तद्विषयम्। अयमेव विषयोऽस्याः श्रुतेः इति दर्शयितुं मनुना दृष्टान्तोपि दर्शितः—

अनेकानि सहस्राणि कौमारब्रह्मचारिणाम्।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम् ॥
मृते भर्तरि साध्वी स्त्री ब्रह्मचर्ये व्यवस्थिता।
स्वर्गं गच्छत्यपुत्राऽपि यथा ते ब्रह्मचारिणः ॥

इति। पुत्रपौत्रादिसन्ततिमकृत्वा कौमारब्रह्मचारिणां विप्राणामनेकानि सहस्राणि स्वर्गं गतानीत्याद्यश्लोकान्वयः। या

तु पुत्रोत्पत्त्यर्थं ब्रह्मचर्येऽवस्थितिं न करोति, तस्याः दोष-
माह स एव—

अपत्यलोभाद्या तु स्त्री भर्तारमतिवर्तते ।
सेह निन्दामवाप्नोति पतिलोकाच्च हीयते ॥

यत्तु यमेनोक्तम्—

स्त्रियाः श्रुतौ वा शास्त्रे वा प्रव्रज्या न विधीयते ।
प्रजा हि तस्याः स्वो धर्मः सवर्णादिति धारणा ॥

इति, । शास्त्रे धर्मशास्त्रे । प्रव्रज्या ब्रह्मचर्यमित्यर्थः । यद्यपि स्त्रिया ब्रह्मचर्यं श्रुत्यादौ विहितं, तथाऽपि सवर्णतः पुत्रप्राप्तिलक्षणधर्मप्रशंसार्थं ब्रह्मचर्यविधिरविद्यमानप्राय इति निन्दाऽनेन क्रियत इत्यविरोधः । तदेतत्कलियुगाद्युगान्तरधर्मत्वेनोक्तमिति मन्तव्यम् । तथा च संस्कारकाण्डे विधवाया नियोजनप्रकरणे प्रतिपादितमस्माभिः । तेन कलियुगे ब्रह्मचर्ये व्यवस्थितत्वमेव धर्मः । युगान्तरे तु यमोक्तोपि धर्मो भवतीत्यवगन्तव्यम् । तत्रापि ब्रह्मचर्ये व्यवस्थानमुत्तमो धर्मो ब्रह्मलोकप्राप्तिकरत्वात् । तथाच कात्यायनः—

मृते भर्तरि या साध्वी ब्रह्मचर्ये व्यवस्थिता
साऽरुन्धतीसमाचारा ब्रह्मलोके महीयते ॥

यत्तु विष्णुना धर्मान्तरमुक्तम्—'मृते भर्तरि ब्रह्मचर्यं तदन्वारोहणं वा' इति, तदन्वारोहणं भर्तारमनु आरोहणं,

अग्न्यारोहणम् । तथाचाङ्गिराः—

मृते भर्तरि या नारी समारोहेद्धुताशनम् ।

साऽरुन्धतीसमाचारा स्वर्गलोके महीयते ॥

तदेतद्धर्मान्तरमपि ब्रह्मचर्यधर्मात् जघन्यं, निकृष्टफलत्वात् ॥

इति स्मृतिचन्द्रिकायां मृतभर्तृका धर्माः

———

अथ दायविभागाख्यस्य पदस्य विधिरुच्यते.

तत्र मनुः—

एष स्त्रीपुंसयोरुक्तो धर्मो वो रतिसंहितः ।

आपद्यपत्यप्राप्तिश्च दायधर्मं निबोधत ॥

दायाख्यद्रव्यविषयधर्मं मयोच्यमानं यूयं निबोधतेत्यर्थः । किं पुनर्दायाख्यद्रव्यमित्यपेक्षिते निघण्टुकारेणोक्तं—

विभक्तव्यं पितुर्द्रव्यं दायमाहुर्मनीषिणः ।

इति । विभागार्हपित्रादिद्वाराऽऽगते द्रव्ये वृद्धा दायशब्द-माहुरित्यर्थः । अत एव धारेश्वरेणैवमेवोक्तं—'दायशब्देन पितृद्वारा मातृद्वाराऽऽगतं च द्रव्यमेवोच्यते' इति । चशब्दः सम्बन्ध्यन्तरद्वाराऽऽगतद्रव्यमपि दायशब्देनोच्यत इति सूचनार्थः । एवशब्दस्त्वनापन्नस्वत्वरूपमिति ज्ञापनार्थः । स च अयुक्तः, आपन्नस्वत्वरूपस्यैव द्रव्यस्य पितृद्वारा पुत्रपौत्रेष्वागमनात् । एवञ्चान्यसम्बन्धिनि धने विभागार्हदायशब्दो

वर्तेत इति निघण्टुकारेणोक्तमिति मन्तव्यम् । दायविषय-धर्मश्चात्र विभागलक्षणोऽभिप्रेतः 'स्त्रीपुंधर्मों विभागश्च' इति पदोद्देशावसरे तस्यैव पूर्वमुक्तत्वात् । अत एव सङ्ग्रहकारः—

पितृद्वाराऽऽगतं द्रव्यं मातृद्वाराऽऽगतं च यत् ।
कथितं दायशब्देन तद्विभागोऽधुनोच्यते ॥

पितृद्वाराऽऽगतमिति यद्द्रव्यं दायशब्देन दायधर्ममिति समासान्तर्गतेन कथितं तस्य विभागोऽधुना स्त्रीपुंधर्माख्यपदप्रतिपाद्यजातस्य सर्वस्य प्रतिपादनानन्तरं मनुनोच्यत इति सङ्ग्रहश्लोकस्यार्थः । कथमुच्यत इत्यपेक्षिते मनुः—

ऊर्ध्वं पितुश्च मातुश्च समेत्य भ्रातरस्समम् ।
भजेरन् पैतृकं रिक्थमनीशास्ते हि जीवतोः ॥

अस्यापि तात्पर्यमाह संग्रहकारः—

यस्मिन् काले यया भङ्ग्या यैरेव क्रियतेऽपि च ।
यादृशस्य च दायस्य यथाशास्त्रं प्रदर्श्यते ॥

अस्यार्थः—यादृशस्य दायस्य पैतृकमातृकादेर्यस्मिन् काले यया समविषमादिभङ्ग्या प्रकारेण यैः पितृभ्रातृभगिन्यादिभिः कर्तृभिर्विभागः कर्तव्यः, तदेतत्सर्वं वृद्धमन्वादिशास्त्रानतिक्रमेण 'ऊर्ध्वं पितुश्च' इत्यादिना प्रदर्श्यत इति । 'ऊर्ध्वं पितुश्च' इति पितृधनविभागकाल उक्तः । मातुश्चेति मातृधनविभागकालः । तेन मातरि जीवन्त्यामपि पितृधन

विभागः कार्यः। तथा मातुरूर्ध्वं पितरि जीवत्यपि मातृ धनविभागः कार्य एव। अन्यतरधनविभागे उभयोरूर्ध्वका-लप्रतीक्षणानुपयोगात्। तथाच सङ्ग्रहकारः—

पितृद्रव्यविभागः स्याज्जीवन्त्यामपि मातरि।
न स्वतन्त्रतया स्वाम्यं यस्मान्मातुः पतिं विना॥
मातृद्रव्यविभागोपि तथा पितरि जीवति।
सत्स्वपत्येषु यस्मान्न स्त्रीधनस्य पतिः पतिः॥

इति। भार्यायाः पतिं विना पतिमरणेऽपि यस्मात्पत्युर्धने स्वतन्त्र-त्वेन न स्वामित्वं, यस्माच्चापत्येषु विद्यमानेषु स्त्रीधनस्य भार्याधनस्य भार्यामरणेऽपि पतिः भर्ता न पतिः न स्वामी। तस्मात्तयोर्मध्ये जीवत्यप्यन्यतरस्मिन् अन्यतरधनविभागो युक्त इत्यर्थः। अनेन पितरि जीवति तद्द्रव्यविभागो मातरि च जीवन्त्यां तद्द्रव्यविभागः पुत्राद्यैर्न कार्य इत्यर्थादुक्तम्। उक्तं चान्त्यपादेन मानवे—'अनीशास्ते हि जीवतोः' इति। अ-नीशाः अस्वतन्त्राः। तथाच शङ्खलिखितौ—'न जीवति पितरि पुत्रा रिक्थं भजेरन् यद्यपि स्यात् पश्चादधिगतं तैरनर्हा एव पुत्रा अर्थधर्मयोरस्वातन्त्र्यात्' इति। यद्यपि तैः स्वकीयजन्मनः पश्चादनन्तरमेव पितृधने स्वाम्यमधिगतं प्राप्तं तथाऽपि जीवति पितरि पितृधनं न विभजेरन्। यतोऽर्थधर्मयोरस्वातन्त्र्यात् विभागं कर्तुमनर्हाः पुत्रा इत्यर्थः। अर्थास्वातन्त्र्यं अर्थादानप्रदानयोरस्वातन्त्र्यम्, तथाच हा-

रीतः—'जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेष्वस्वातन्त्र्यम्' इति। अर्थादानं अर्थोपभोगः। विसर्गो व्ययः। आक्षेपः दासादिपरिजनस्यापराधेषु शिक्षार्थमाक्षेपः। अस्वातन्त्र्यं पितुरनुज्ञामन्तरेण स्वेच्छयाऽर्थादानादावप्रवृत्तिः। धर्मास्वातन्त्र्यमपि एवं पृथगिष्टापूर्तादावप्रवृत्तिः। एवंच पित्राऽनुज्ञातेन पुत्रेण स्वकर्माग्निहोत्रादि कार्यं नाननुज्ञातेनेति मन्तव्यम्। यत्तु देवलेनोक्तं—

पितर्युपरते पुत्रा विभजेरन् पितुर्धनम्।
अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते॥

इति, तत्रास्वाम्यवचनं अस्वातन्त्र्यप्रतिपादनार्थमिति मन्तव्यम्। निर्दोषे पितरि स्थितेऽपि पितृधने पुत्राणां जन्मना स्वाम्यस्य लोकसिद्धत्वात्। नन्वलौकिकं स्वाम्यं न पुत्राणां लोकसिद्धमिति वृथैव 'अस्वाम्यं हि भवेत्' इति वचनस्वारस्यभङ्गः क्रियते। न च वाच्यं प्रतिज्ञामात्रमलौकिकं स्वाम्यमिति, यतो न्यायमाह सङ्ग्रहकारः—

वर्तते यस्य यद्धस्ते तस्य स्वामी स एव न।
अन्यस्वमन्यहस्तेषु चौर्याद्यैः किं न वर्तते॥
तस्माच्छास्त्रत एव स्यात्स्वाम्यं नानुभवादपि॥

इति। यस्माद्यस्यान्तिके यद्धनं वर्तमानं दृष्टं तस्य स एव स्वामीत्यवधारयितुं न शक्यते। परकीयस्यापि चौर्यादिनाऽ-

न्यान्तिकस्थस्य दर्शने तस्यैव स्वामित्वापत्तेः । तस्माच्छास्त्रैकसमधिगम्यं स्वाम्यं न पुनर्मानान्तरगम्यमपीत्यर्थः । किंच यदि यद्यस्यान्तिके दृष्टं तस्य स एव स्वामी तर्ह्यस्य स्वमेतेनापहृतमिति न ब्रूयात्, यस्यैवान्तिके दृष्टं तस्यैव स्वामित्वात् । अपिच प्रमाणान्तरगम्ये स्वाम्ये 'ब्राह्मणस्याधिकं लब्धं, क्षत्रियस्य विजितं, निर्विष्टं वैश्यशूद्रयोः' इति गौतमप्रणीते धर्मशास्त्रे यथाक्रमं वर्णानतिक्रमेण पृथक् पृथक् विभिन्नप्रकारेण विहितोऽर्थागमो व्यर्थः स्यात्, मानान्तरस्यैव नियामकत्वात्, एतद्बाधकं चाह स एव—

अस्यापहृतमेतेन न युक्तं वक्तुमन्यथा ।
विहितोऽर्थागमश्शास्त्रे यथावर्णं पृथक्पृथक् ॥
प्रतिग्रहास्त्रवाणिज्यशुश्रूषाद्यैर्यथाक्रमम् ॥

इति । अस्येत्यादिना वक्तुमित्यन्तेनात्र प्रथमं बाधकमुक्तं, अवशिष्टेन व्यर्थः स्यादित्यध्याहारसापेक्षेण द्वितीयमिति मन्तव्यम् । एवंच स्वत्वमपि स्वाम्यवदेव शास्त्रैकसमधिगम्यं विज्ञेयम् । यस्मात् स्वाम्यस्वत्वयोस्तुल्ययोगक्षेमयोरेकतरमधिकृत्य साधितेऽपि शास्त्रैकसमधिगम्यत्वे द्वयोरेव साधितं भवति । अत एव संप्रति स्वत्वमधिकृत्यापि शास्त्रैकसमधिगम्यत्वं द्वयोस्साधयितुमाह स एव—

न च स्वमुच्यते तद्वत् स्वेच्छया विनियुज्यते ।
विनियोगोपि सर्वस्य शास्त्रेणैव नियम्यते ॥

अस्यायमर्थः—न च न ब्रूमोऽन्तिके वर्तमानतया परिदृष्टं स्वमिति, किंतु यद्वस्तु येन यथेष्टं विनियुज्यते तत् तस्य स्वमित्युच्यते। ततश्च नातिप्रसङ्गादिदूषणं, अपहृतादेरयथेष्ट-विनियोज्यस्य स्वव्यवहाराप्रसङ्गादिति वाच्यं, यतस्सर्वस्य स्वव्यवहारविषयस्यापि धनस्य विनियोगः शास्त्रेणैव गुरुभृत्यादेः भरणादौ नियम्यत इति यथेष्टविनियोज्यं किमपि नास्तीति। प्रपञ्चितं चैतत् सर्वं धारेश्वरसूरिणा। तस्मात् 'अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते' इति धर्मशास्त्रादस्वाम्ये सिद्धे 'यद्यपि स्यात् पश्चादधिगतं तैः' इति शङ्खवचनस्यैवान्यथा व्याख्या न्याय्या।

अत्रोच्यते—न ब्रूमो यथेष्टं विनियोज्यं स्वमिति, किंतु यथेष्टविनियोगार्हं स्वमिति ब्रूमहे। ननु शास्त्रेण गुरुभृत्यादेर्भरणादौ विनियोगनियमात् यथा यथेष्टविनियोज्यं दुर्निरूपं तथा यथेष्टविनियोगार्हत्वमपि यथेष्टविनियोगाभावादेव दुर्निरूपम्। मैवं, यथेष्टविनियोगाभावेऽपि यद्येनार्जितं तत्तस्य यथेष्टविनियोगार्हमित्येवं निरूप्यते। तथा च नयविवेके भवनाथेनैवं निरूपितं 'तच्च तस्य तदर्हं यद्येनार्जितम्' इति ग्रन्थेन। तस्यायमर्थः—यद्वस्तु येन पुरुषेणार्जितं तद्वस्तु तस्य पुरुषस्य तदर्हं यथेष्टविनियोगार्हमिति। स्वत्वनिरूपणवद्यथेष्टविनियोगार्हत्वनिरूपणं चास्मिन् मते सुशकमिति चशब्दार्थः। नन्वेवं चोरस्य चौर्यार्जितं यथेष्टविनियोगार्हं स्यात् इत्याशङ्क्याह

स एव—'लोकसिद्धं चार्जनं जन्मादि' इति । जन्मक्रयसंविभागपरिग्रहाधिगमाद्येवानिदंप्रथमलोकसिद्धं धनार्जनं न पुनश्चौर्यादिकमित्यर्थः । अतिप्रसङ्गपरिहरणमपि सुशकमिति चशब्दार्थः ।

नन्विदमार्जनमनिदंप्रथमलोकसिद्धमिदं नेत्यत्र किं नियामकमित्याशङ्क्याह स एव—'अत एवानिदंप्रथमलोकधीविषयव्यवस्थितनिबन्धनार्था स्मृतिः व्याकरणादिस्मृतिवत्' इति । यत एवानिदंप्रथमलोकसिद्धार्जनमेव स्वत्वापादकं ततश्च तदेव लौकिकवैदिकव्यवहारसिद्ध्यर्थमवश्यं ज्ञेयम् । अत एवानिदंप्रथमलोकधीविषयतया व्यवस्थितार्जनानां स्वग्रन्थे निबन्धनार्था 'स्वामी रिक्थक्रयसंविभागपरिग्रहाधिगमेषु ब्राह्मणस्याधिकं लब्धं क्षत्रियस्य विजितं निर्विष्टं वैश्यशूद्रयोः' इत्यादिका गौतमादिप्रणीता धर्मस्मृतिः साधुशब्दनिबन्धनार्थव्याकरणादिस्मृतिवत् कृतेत्यर्थः । रिक्थं रिक्थार्जनं पित्रादिधने स्वामित्वापादकं पुत्रादिजन्मेति यावत् । तथाच पैतृकधनलाभहेतुत्वेनोक्तं गौतमेनैव —'उत्पत्त्यैवार्थस्वामित्वं लभेतेत्याचार्यः' इति । 'उत्पत्त्यैव मातुर्गर्भे शरीरोत्पत्त्यैवेत्यर्थः । संविभागः पित्रादिधने विशेषनिष्ठस्वामित्वसंपादको विभागः । परिग्रहः काननादिगतजलतृणकाष्ठादेरन्येनास्वीकृतस्य स्वीकारः । अधिगमो निध्यादेरुपलब्धिः । एतेषु निमित्तेषु सत्सु पुत्रादिः क्रेता संविभक्ता

परिग्रहीताऽधिगन्ता च यथाक्रमेण पित्रादिधनस्य क्रीतस्य संविभक्तांशस्य परिगृहीतस्याधिगतस्य च स्वामी भवति ।

तथाच लब्धं परिगृहीतं ब्राह्मणस्याधिकं प्रातिस्विकमार्जितं, एवं क्षत्रियस्य विजितं विजयलब्धं, एवं वैश्यस्य निर्विष्टं कृष्यादौ भृतिरूपेण लब्धम्, शूद्रस्यापि निर्विष्टं द्विजशुश्रूषादौ भृतिरूपेण लब्धम्, प्रातिस्विकमार्जितमित्येवमार्जननिबन्धनार्थाया गौतमस्मृतेरर्थो विज्ञेयः । एवञ्च यत्संग्रहकारेणोक्तं—'वर्तते यस्य यद्धस्ते' इत्यादिना, यच्च धारेश्वरसूरिणा प्रपञ्चितं, तत्सर्वमपास्तं वेदितव्यम् । ततश्च 'अस्वाम्यं हि भवेदेषां निर्दोषे पितरि स्थिते' इति वचनानाञ्जस्येन शङ्खवचनाविरोधपरिहारो युक्त एवेत्यलमतिबहुना ।

प्रकृतमुच्यते—निर्दोषग्रहणात् पितरि स्थितेऽपि दोषे सति न पुत्राणां तत्पारतन्त्र्यमिति दर्शयति । तेन पितरि स्थितेऽप्यक्षमत्वादिदोषे सति अर्थादानविसर्गादौ ज्येष्ठस्य स्वातन्त्र्यं, अनुजानां तु ज्येष्ठाधीनत्वमवगन्तव्यम् । अत एव शङ्खलिखिताभ्यामुक्तं—'पितर्यशक्ते कुटुम्बस्य व्यवहारान् ज्येष्ठः प्रकुर्यादनन्तरो वा कार्यज्ञस्तदनुमतेन' इति । तदनुमतेन ज्येष्ठानुमतेन, तदानीं तस्यैव स्वातन्त्र्यात् । तदनन्तरग्रहणमनुजोपलक्षणार्थं, कार्यज्ञस्यैवात्र विवक्षितत्वात् । अशक्तग्रहणं च दीनादेरुपलक्षणार्थम् । अत एव हारीतः—'कामं दीने प्रोषिते आर्तिं गते वा ज्येष्ठोऽर्थांश्चिन्तयेत्' । इति दीने इत्या-

दौ जीवति पितरीति पदद्वयमनुषज्यते । तस्य पूर्ववाक्ये श्रवणादिहाकाङ्क्षितत्वाच्च । काममिति वदन् पितृपरतन्त्रत्वं तदानीं गतमिति दर्शयति । गते च पितृपरतन्त्रत्वे पुत्राणां पितृधनविभागकर्तृत्वार्हता जातेति पितृधनविभागोपि तदानीं पुत्राणामेवेच्छया भवितुमर्हति । अत एव शङ्खलिखितौ— 'अकामे पितरि रिक्थविभागो वृद्धे विपरीतचेतसि दीर्घरोगिणि च' इति । अकामे पितरि विभागेच्छाशून्ये पितरीत्यर्थः । वृद्धे अतिवृद्धे । विपरीतचेतसि अप्रकृतिस्थे । एतदुक्तं भवति—वार्धकादिना पितर्यस्वतन्त्रत्वमापन्ने तदनिच्छयाऽपि तद्धनविभागः पुत्राणामिच्छयैव भवतीति । दीर्घरोगिग्रहणं दीर्घकोपादेरप्युपलक्षणार्थम् । अत एव नारदः—

व्याधितः कुपितश्चैव विषयासक्तमानसः ।
अन्यथाशास्त्रकारी च न विभागे पिता प्रभुः ॥

अपितु तत्पुत्र एव प्रभवति इति शेषः । अन्यथाशास्त्रकारी स्मृत्याचारव्यपेतमार्गवर्ती । निर्दोषे पितरि स्थितेऽपि क्वचिद्विषये पुत्रकर्तृकमेव विभागमाह स एव—

अत ऊर्ध्वं पितुः पुत्रा विभजेरन् धनं समम् ।
मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च ।
निवृत्ते चापि रमणे पितर्युपरतस्पृहे ॥

इति । अत ऊर्ध्वमित्यादि सममित्यन्तमाद्यं वाक्यं जीवद्विभागकालबोधकं, तथाऽप्युत्तरवाक्यपूरणोपयोगार्थं पठितम् ।

पित्रोरपत्योत्पत्तिसामग्र्यभावनिश्चये स्त्र्यपत्यविवाहे च कृते पितुर्धनस्पृहायां च गतायां तद्धनं पुत्रा एव विभजेरन्निति द्वितीयवाक्यस्यार्थः। बोधायनस्त्वत्र पितुरपि कर्तृत्वमनुमति-द्वारेणाह—'पितुरनुमत्या दायविभागः' इति। क्व तर्हि पितृकर्तृको विभाग इत्यपेक्षिते नारदः—

पितैव वा स्वयं पुत्रान्विभजेद्वयसि स्थितः।

इति। वयसि स्थित इति वदन्नप्रतिहतस्वातन्त्र्ययुक्तपितृविषय एवायं नियम इति दर्शयति। एवकारेण पितृकर्तृकनियमलाभेऽपि स्वयंग्रहणादस्मिन् विषये पुत्राणामनुमतिकर्तृत्वमपि निरस्तम्। वाशब्दः सहवासेन विकल्पार्थः, न पुनः पित्रादिकर्त्रन्तरेण, सहवासस्यैवात्र पक्षान्तरत्वात्। तथाच व्यासः—

भ्रातॄणां जीवतोः पित्रोस्सहवासो विधीयते।

इति। पितुरूर्ध्वमपि भ्रातॄणामन्योन्यमर्थोपचयार्थं सहवासोस्त्येव। तथाच शङ्खलिखितौ—'कामं सहवसेयुरेकतः संहता वृद्धिमापद्येरन्' इति। पृथक् पृथक् व्ययाभावादिति भावः। विभागे तु धर्मवृद्धिमापद्येरन्नित्याह गौतमः—'विभागे तु धर्मवृद्धिः' इति। कथमित्यपेक्षिते नारदः—

भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते।

विभागे सति धर्मोपि भवेत्तेषां पृथक् पृथक्॥

धर्मः पितृदेवद्विजार्चनजन्यः। तथाच बृहस्पतिः—

एकपाकेन वसतां पितृदेवद्विजार्चनम्।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥

नन्वग्निहोत्रादिजन्योपि धर्मो विभक्तानां वर्धते नाविभक्तानां स्वत्वाभावेनाविभक्तानां स्वस्याग्निहोत्रादिजन्यधर्मार्जनासम्भवात्। तेनाग्निहोत्रादिधर्मो विभागपक्षोत्कृष्टत्वे हेतुतया वक्तव्यः। उक्तं च तथैव सङ्ग्रहकारेण—

क्रियते स्वं विभागेन पुत्राणां पैतृकं धनम्।
स्वत्वे सति प्रवर्तन्ते तस्माद्धर्म्या पृथक्क्रिया ॥

प्रवर्तन्ते स्वसाध्याग्निहोत्रादीनीति शेषः। अत्रोच्यते—पैतृकधनविभागेन पुत्राणां स्वं क्रियत इत्येतदयुक्तम्, जन्मनैव स्वं क्रियत इति प्रागेव प्रतिपादितत्वात्। ततश्चाविभक्तानामपि स्वत्वमस्तीति स्वसाध्याग्निहोत्रादिजन्यो धर्मः सम्पद्यत एवेति न कश्चिद्विभागपक्षस्याविभागपक्षाद्विशेष इति पूर्वोक्तप्रकारेणैव विभागपक्षे धर्मवृद्धिः गौतमादिभिरुक्तेति दिक् ॥

इति स्मृतिचन्द्रिकायां विभागकालकर्तृप्रदर्शनम्.

---

## अथ जीवद्विभागप्रकारः.

तत्र शङ्खलिखितौ—'जीवति पितरि रिक्थविभागोऽनुमतः प्रकाशं वा मिथो वा धर्मतः' इति। यो जीवद्विभागपक्षोऽनुमतः स तावत्प्रकाशं बन्ध्वादिजनसमक्षं यथा भवति तथा मिथो वा रहसि वा धर्मतो धर्मानपेतेन प्रकारेण कार्य इत्यर्थः। तमेवं प्रकारमाह कात्यायनः—

सकलं द्रव्यजातं यद्भागैः गृह्णन्ति तत्समैः ।
पितरो भ्रातरश्चैव विभागो धर्म्य उच्यते ॥

यन्मध्यगं द्रव्यजातं तत्सर्वं पित्रादयो यत्र विभागैस्समैरेव भागैर्गृह्णन्ति स विभागश्शास्त्रावगतत्वात् धर्मादनपेत इत्युच्यत इत्यर्थः । ज्येष्ठभ्रातृभागाधिक्येन विधान्तरतो धर्म्यं विभागं वक्तुं बोधायनेनोक्तं—'मनुः पुत्रेभ्यो दायं व्यभजत्, इति समोंशः सर्वेषामविशेषात्' इति । मनुः पुत्रेभ्यो दायं व्यभजदिति जीवद्विभागाभिधायके ब्राह्मणे विशेषानभिधानात् 'समं स्यादश्रुतत्वात्' इति न्यायबलादस्मादेव शास्त्रात्सर्वेषां पितृपुत्राणां सम एवांशोऽवगम्यत इत्यर्थः । ज्येष्ठस्य त्वाधिक्यं श्रुत्यन्तरासिद्धमित्याह स एव—'धनमेकं चारु समुद्धरेज्ज्येष्ठस्तस्माज्ज्येष्ठं पुत्रं धनेन निरवसाययन्ति' इति श्रुतिः । धनमेकमिति वदन् धनेनेत्येकवचनं श्रुतिवाक्यगतं विवक्षितमिति दर्शयति । निरवसाययन्ति तोषयन्तीत्यर्थः । तथाचापस्तम्बः—'एकधनेन ज्येष्ठं तोषयित्वा जीवन् पुत्रेभ्यो दायं विभजेत् समम्' इति । जीवन् पिता श्रेष्ठेनैकधनेन मध्यकद्रव्यादुद्धृतेन ज्येष्ठं प्रथमपुत्रं तोषयित्वाऽवशिष्टमात्मसहितज्येष्ठादिपुत्रेभ्यः समत्वेनैव विभजेदित्यर्थः । एवंच प्रथमोत्पन्नतया तदर्थमेवोद्धारः । स चैकस्यैव सर्वधनश्रेष्ठस्य, उद्धृतावशिष्टस्य समत्वेनैव विभाग इति विधान्तरमुक्तमित्यवगन्तव्यम् । एवं कात्यायनबोधायनोक्तपक्षयोर्मध्ये यं पक्षं

पिता कर्तुमिच्छति तमेव पक्षं कुर्यात्। पितृकर्तृके विभागे तस्यैव प्रभुत्वेन तदिच्छाया एव पक्षविशेषपरिग्रहकारणत्वात्। तदेतत्सर्वं संक्षिप्य याज्ञवल्क्येनोक्तं—

त्रिभागं चेत्पिता कुर्यादिच्छया विभजेत्सुतान्।
ज्येष्ठं वा श्रेष्ठभागेन सर्वे वा स्युस्समांशिनः॥

अत्रोत्तरार्धेन प्राङ्निरूपितपक्षद्वयं पूर्वोक्तक्रमव्यत्यासेनोक्तम्। तयोरन्यतरपक्षपरिग्रहे पितुरिच्छैव कारणं न पुनः पुत्राणामपीच्छा कारणमिति पूर्वार्धेनोक्तमिति मन्तव्यम्। एवञ्चात्मेच्छया यः पक्षः पित्रा परिगृहीतः स सुतैरनपेक्षितोपि अनुमन्तव्यः। तथाच स एव—

न्यूनाधिकविभक्तानां धर्म्यः पितृकृतस्स्मृतः।

इति। न्यूनतया विभक्तानां ज्येष्ठेतरेषां श्रेष्ठभागाभावेन तत्सद्भावात्, अधिकतया विभक्तो ज्येष्ठस्तेषां पितुरिच्छया स्वीकृतो यद्युद्धारपूर्वको विभागः तदा सोपि शास्त्रमूलत्वेन धर्म्यतया प्राक् स्मृत इति तैरप्यनुमन्तव्य इत्यर्थः। नारदोप्यमुमेवार्थमाह—

पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः।
तेषां स एव धर्म्यस्स्यात् सर्वस्य हि पिता प्रभुः॥

समधनैः कृतो यो धनविभागप्रकारस्तत्र पित्रा मह्यमेकमधिकं श्रेष्ठं धनं न दत्तमिति ज्येष्ठेनानुशयो न कार्यः। तथा यः पित्रा कृतो न्यूनाधिकधनैर्विभागस्तत्र पित्राऽस्मभ्यं न्यूनं दत्तं

ज्येष्ठायाधिकमिति अनुजैरनुशयो न कार्यः, पितुरिच्छया प्राप्तस्यैव अत्र धर्म्यत्वात्। कुतस्तस्यैव धर्म्यत्वमित्यपेक्षितेऽप्युक्तं—'सर्वस्य हि पिता प्रभुः' इति। सर्वविधस्य पितृकर्तृकविभागस्य यतः पितैव प्रभुरित्यर्थः। ये पुनर्धर्म्यं विभागमतिक्रामन्ति ते दण्ड्याः। यदाह बृहस्पतिः—

समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः।
तथैव ते पालनीया विनेयास्ते स्युरन्यथा॥

पित्रा शास्त्रावगतप्रकारानुसारेणेति शेषः, प्रकारान्तरेण कल्पितानामधर्म्यत्वेनापालनीयत्वात्। न हि स्वेच्छयैव स्वार्जितधनेऽपि कस्याचित्पुत्रस्य निष्कसहस्रेण कस्यचित्पुत्रस्य कपर्दिकामात्रेण विभागः कृतो धर्म्यो भवितुमर्हति। अनिर्दंप्रथमसंविभागस्यैव स्वत्वव्यवस्थापकत्वात्। न चैच्छिको विषमविभागोऽनिर्दंप्रथम एव 'इच्छया विभजेत् सुतान्' इति स्मृतिनिबद्धत्वादिति वाच्यम्। अस्यास्स्मृतेस्तथाविधविभागानिबन्धकत्वात्। तथाहि—स्वतस्तावदयुक्तत्वेऽप्यपरार्केणास्याः स्मृतेः पारिशेष्यात्तथाविधविभागप्रतिपादनपरत्वमापादितम्। तत् प्राक्प्रतिपादितसम्यगर्थसद्भावे समपास्तमिति। स्वेच्छामात्रेण पित्रा स्वार्जितधनेऽपि कृतो विषमविभागः पुत्रैरनुशये सत्यपालनीय इति सिद्धम्। यत्पुनरपरार्केणोक्तं "श्रेष्ठभागेनेत्येतदुद्धारप्रदर्शनार्थम्, तेन 'ज्येष्ठस्य विंश उद्धारः' इत्यादिभिर्मन्वादिशास्त्रैर्यावन्त उद्धारप्रकारा अभि-

हिताः ते सर्वेऽत्रोपलक्षिताः" इति, तदप्यपास्तम् 'धनमेकं चारु समुद्धरेज्जयेष्ठः' इति जीवाद्विभागोक्तोद्धारविशेषपरत्वस्यैव न्याय्यत्वात्। बृहस्पतिस्तु पितुर्भागाधिक्येन प्रकारान्तरमाह—

जीवाद्विभागे तु पिता गृह्णीतांशद्वयं स्वकम्।

इति। पिता विभजन्निति शेषः। तथाच नारदः—

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता।

इति। विभजन्निति वदन् पितृकर्तृके जीवद्विभागे भागद्वयमात्मनो न पुनः पुत्रकर्तृके जीवाद्विभाग इति दर्शयाति। पितृकर्तृकविभागेऽप्यात्मनो भागद्वयग्रहणे विशेषमाहतुश्शङ्खलिखितौ—'स यद्येकपुत्रस्स्यात् द्वौ भागावात्मनः कुर्यात्' इति। स इति प्रकृतः पिता प्रत्यवमृश्यते। एकपुत्रः स्यात् अतिक्रान्तपुत्रान्तरलाभकालः स्यात्, गलितवयस्कस्स्यादिति यावत्। अत एव बहुपुत्रसद्भावविषयेऽपि गलितवयस्कस्य भूयिष्ठभागग्रहणे पितृपुत्राणां भागवैषम्यमाह हारीतः—'जीवन्नेव वा विभज्य वनमाश्रयेद्वृद्धाश्रमं वा गच्छेत् स्वल्पेन वा संविभज्य भूयिष्ठमादाय वसेत् स यद्युपदस्येत् पुनस्तेभ्यो गृह्णीयात् क्षीणांश्च विभजेत्' इति। स्वल्पेन भागेनात्मीयभागार्धप्रमाणकेन भागेन पिता पुत्रान् विभज्य द्वैगुण्येन भूयिष्ठं भागं स्वयमादाय गृह एव वा वसेत्। एवं वसन्यदि कथञ्चिदुपदस्येदशनाद्यभावेन क्षीणस्स्यात् पिता तदा तेभ्यः पुत्रेभ्यः स्वदत्तभागवशादुपचितद्रव्येभ्यः सका-

शात् स्वकुटुम्बभरणपर्याप्तं धनं पुनर्गृह्णीयात् । अथ पुत्रा एवाशनाद्यभावेन क्षीणाः तदा तान् पुनः पूर्ववद्विभजेदित्यर्थः । वनमाश्रयेत् वानप्रस्थः स्यात् । वृद्धाश्रमः चतुर्थाश्रमः । वृद्धाश्रममिति वदन् गळितवयस्कविषयमिति दर्शयति । एवञ्चापरवयसि पुत्राश्रयार्थित्वात् 'यथा पिता पुत्रं क्षित उपधावति तादृगेव तत्' इति श्रुतिविषयत्वं पितुर्युक्तम् । स्वल्पभागग्रहणाद्यथा पुत्रः पितरं क्षित उपधावति तादृगेव तदिति श्रुतिविषयत्वं पुत्रस्य युक्तमित्यभिसंधाय 'यद्युपदस्येत्' इत्यादिना 'यथा पिता पुत्रं, यथा पुत्रः पितरम्' इत्यादितच्छ्रुतिद्वयार्थः उक्त इति मन्तव्यम् । अत एव 'पुनस्तेभ्यो गृह्णीयात् क्षीणांश्च विभजेत्' इति स्वकीयस्मृत्योरेवंविधश्रुतिमूलतां दर्शयितुमेतत्समानार्थश्रुतिद्वयं प्रतीकेन तेनैव दर्शितम्—'अथाप्यत्र ग्रहोपदासोपदायिकीं श्रुतिमुदाहरन्ति—पिताऽऽग्रयणः पुत्रा इतरे ग्रहा यद्याग्रयणः स्कन्देदुप वा दस्येदितरेभ्यो ग्रहेभ्यो गृह्णीयादितरे ग्रहाः स्कन्देयुरिति व्याख्याताम्' इति । ग्रहोपदासोपदायिकीं सोमग्रहशोषसमाधात्रीम् । आग्रयणः सोमग्रहविशेषः । इतरे आग्रयणव्यतिरिक्ता ग्राह्या ऐन्द्रवायवादयः । उप वा दस्येत् उपदस्येद्वा शुष्येद्वेति यावत् । स्कन्देयुरितीतिकारोऽत्रानशिष्टश्रुतिभागप्रतीकार्थः । व्याख्यातामिति प्रतीकोपदर्शितश्रुतिभागस्य व्याख्याऽस्माभिः 'यद्युपदस्येत् पुनस्तेभ्यो गृह्णीयात्

क्षीणांश्च विभजेत्' इति वाक्यद्वयेन कृतेत्यर्थः । अत्रापि पितुरिच्छया समविभागपक्षोपि पक्षे कार्यः,

सकलं द्रव्यजातं यद्भागैर्गृह्णन्ति तत्समैः ।
पितरो भ्रातरश्चैव विभागो धर्म्य उच्यते ॥

इति जीवद्विभागं वदता कात्यायनेन समविभागपक्षस्य सार्वत्रिकत्वेनाभिधानात् । तेनात्र विषये यदि स्वकीयेच्छया पिता समभागपक्षं कुर्यात् तदा त्वाह याज्ञवल्क्यः—

यदि कुर्यात्समानंशान् पत्न्यः कार्यास्समांशिकाः ।
न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥

यदि वार्धकेऽप्यात्मना सह समविभागपक्षमिच्छया पिता कुर्यात् तदा त्वात्मभागेन सह तत्समानं भागं प्रतिपत्नि गृह्णीयादित्यर्थः । एवञ्च 'जायापत्योर्न विभागो विद्यते' इति हारीतवचनविरोधशङ्का परिहृतेति सर्वमनवद्यम् । यत्र पुत्रः पितृधने धनार्जनसमर्थतया स्वांशं ग्रहीतुं नेच्छति तदा यावत् स्वीकरोति तावत्तस्मै दत्वा पृथक्क्रिया कार्येत्याह स एव—

शक्तस्यानीहमानस्य किञ्चिद्दत्वा पृथक्क्रिया ।

इति । यदा पुनर्जीवति पितरि पुत्रकर्तृको विभागः क्रियते तदा 'सकलं द्रव्यजातम्' इति कात्यायनेनोक्तसमभागप्रकारेण कार्यः, पुत्रकर्तृकजीवद्विभागे प्रमाणान्तरप्रतिपादकशास्त्रान्तराभावात्, 'पितुः पुत्रा विभजेरन् धनं समम्'

इत्यनुवृत्तौ 'मातुर्निवृत्ते रजसि' इत्यादिना समविभागनियमस्य नारदोक्तस्य पूर्वप्रकरणे पुत्रकर्तृकजीवद्विभागावसरे दर्शितत्वाच्च ॥

इति स्मृतिचन्द्रिकायां जीवद्विभागप्रकरणम्.

---

## अथाजीवद्विभागे समविभागप्रकारः.

तत्र पितरीत्यनुवृत्तौ हारीतः—'समेनैव मृते रिक्थविभागः' इति। मृते पितरि भ्रातृभिः क्रियमाणो रिक्थविभागः समांशेनैव कार्य इत्यर्थः। पैठीनसिरपि—'पैतृके विभाज्यमाने दायाद्ये भ्रातृणां समो विभागः' इति। दायाद्ये दायधन इत्यर्थः। न च भ्रातृणामिति बहुवचनबलात् द्वयोर्भ्रात्रोरविभाग एवेति वाच्यं, मध्यकद्रव्यस्वामिसमर्पणमात्रार्थत्वात्तस्य। अत एव मध्यकद्रव्यस्वामिन एकस्यैव दायविभागः देवलेन प्रतिषिध्यते—

एक एव सवर्णस्स्याद्दायोऽत्र न विभज्यते।

इति। सवर्णासवर्णानेकभ्रातृविषये तु क्वचिद्देशे दायो न विभज्यत इति दर्शयितुं सवर्णस्स्यादित्युक्तम्। उक्तं च मनुना—

ब्राह्मणक्षत्रियाविशां शूद्रापुत्रो न रिक्थभाक्।

इति। एतदुक्तं भवति—शूद्राशूद्रभ्रात्रोरनेकत्वेऽपि विवाहशून्यशूद्रापुत्रो रिक्थानर्ह इत्यशूद्र एव सर्वं गृह्णीयादिति। एवं

विभागानधिकारिसवर्णसाहित्यादनेकत्वेऽपि एक एव गृह्णीयात्।
तथाच सङ्ग्रहकारः—

सर्वमेव हरेज्ज्येष्ठोऽनुजेष्वनधिकारिषु ।
मध्यमो वा कनिष्ठो वा ज्यायस्यनधिकारिणि ॥

इति । न त्वधिकारिसवर्णानेकभ्रातृविषयेऽपि दायो न विभज्यते । तत्र मनुः—

ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः ।
शेषास्तमुपजीवेयुः यथैव पितरं तथा ॥

न चैतद्वचनं सहवासपक्षशिक्षार्थमिति वाच्यम् । यतस्तदर्थमन्यदेव वचनं 'एवं सहवसेयुर्वा' इति तेनैव प्रणीतमास्ते । सत्यमास्ते, तथाऽपि प्रगल्भभ्रातृषु सहवासपक्षशिक्षार्थमेव सहवसेयुरित्यतिदेशः । अप्रगल्भानुजेषु तु तत्प्रागल्भ्यपर्यन्तं सहवास एव कार्योऽनेन प्रकारेणेति दर्शयितुं 'ज्येष्ठ एव तु गृह्णीयात्' इत्युपदेश इति नानेन वचनेन वचोभङ्ग्या सवर्णानेकभ्रातृषु दायविभागः प्रतिषिध्यत इति न कश्चिद्विरोधः। यत्तु नारदेनोक्तं—

बिभृयाद्वेच्छतस्सर्वान् ज्येष्ठो भ्राता यथा पिता ।
भ्राता शक्तः कनिष्ठो वा शक्त्यपेक्षा कुले स्थितिः ॥

इति, तदशक्ताखिलानुजविषयम् । यत्तु गौतमेनोक्तं—'सर्वं वा पूर्वजस्य इतरान् बिभृयात् पितृवत्' इति । न चैतन्मा-

नवेन समानार्थमिति वाच्यम्, वाशब्देन प्रगल्भभ्रातृष्वनुजानां दायहरत्वस्य पाक्षिकत्वप्रतिपादनार्थत्वावगतेः । सत्यं—न मानवेन समानार्थं, किंतु प्रत्यक्षश्रुतिविरुद्धत्वादनादर्तव्यम् । तथा चापस्तम्बः—‘ज्येष्ठो दायाद इत्येके तच्छास्त्रैर्विप्रतिषिद्धं मनुः पुत्रेभ्यो दायं व्यभजदित्यविशेषेण श्रूयते’ इति । ज्येष्ठ एव भ्रातॄणां मध्ये पैतृकधनभागित्येके पुनराचार्या मन्यन्ते तन्मतं प्रत्यक्षश्रुतिविरुद्धं, यतस्तैत्तिरीयकब्राह्मणे—‘मनुः पुत्रेभ्यो दायं व्यभजत्’ इत्यविशेषेण श्रूयत इत्यर्थः । स्वमतं चानन्तरं तेनैवोक्तं ‘सर्वे हि धर्मयुक्ता भागिनः’ इति । सर्वे पुत्रा इति शेषः । तथाच बृहस्पतिः—

पितृरिक्थहराः पुत्राः सर्व एव समांशिनः ।

इति । रिक्थे ऋणे च समांशिन इत्यर्थः । तथाच याज्ञवल्क्यः—

विभजेरन् सुताः पित्रोरूर्ध्वं रिक्थमृणं समम् ॥

इति । ऋणमत्र पैतृकं विवक्षितम् । अपैतृकस्य तदैवापाकरणनियमात् । तथाच कात्यायनः—

भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम् ।
विभागकाले देयं तत् रिक्थिभिस्सर्वमेव तु ॥

नारदस्तु विभागकाले पैतृकमृणमपि देयमित्याह—

यच्छिष्टं पितृदायेभ्यो दत्वर्णं पैतृकं च यत् ।
भ्रातृभिस्तद्विभक्तव्यं ऋणी स्यादन्यथा पिता ॥

'पितृदायात् नव श्राद्धानि, नवश्राद्धं सह दद्युः' इति गौतमब्राह्मणात्,

पितुरूर्ध्वं विभागो य एकोद्दिष्टादनन्तरम् ।

इति संग्रहकारवचनाच्च । एवंच पैतृकं धनं नवश्राद्धपैतृकादिऋणापाकरणार्थधनादभ्याधिकं चेन्नारदोक्तमेव कार्यं, नो चेद्याज्ञवल्क्येनोक्तमेवेत्यवगन्तव्यम् । पैतृकमपि किंचिद्दणं विभागकाले पैतृकधनादनपाकरणीयं, किंतु विभजनीयमेवेत्याह कात्यायनः—

धर्मार्थं प्रीतिदत्तं च यद्दणं स्यान्नियोजितम् ।
तद्दृश्यमानं विभजेन्न दानं पैतृकाद्धनात् ॥

यत् धर्मार्थं संकल्पितं, यच्च पित्रा प्रीतेन वाचा दत्तं, यच्च स्वेनैव पित्रा पुत्रैरपाकरणीयमिति नियोजितं तदेतत्त्रिविधमृणं दृश्यमानं ज्ञायमानं विभजेदेवेत्यर्थः । यः पुनः पुत्रः स्वकर्तृकधनार्जनकर्मणा धनं प्राप्तुं शक्तस्सन् पितृद्वाराऽऽगतं धनं नेच्छति तस्य सन्तानतस्तदंशनिमित्तकविवादपरिहारार्थमसावितरैः पुत्रैर्विभाज्यधनात् किञ्चिद्धनं मूलधनार्थं दत्वा अवश्यं विभाज्य इत्याह—

भ्रातॄणां यस्तु नेहेत धनं शक्तस्स्वकर्मणा ।
स निर्भाज्यस्स्वकादंशात् किञ्चिद्दत्त्वोपजीवनम् ॥

भ्रातृविशेषस्य 'कर्मभूयस्त्वात् फलभूयस्त्वम्' इति न्यायेन सम-

भागादभ्यधिकेन धान्यादिना विवर्धनमितरैर्भ्रातृभिः कार्यमित्याह नारदः—

कुटुम्बार्थेषु चोद्युक्त तत्कार्यं कुरुते तु यः ।
स भ्रातृभिर्बृंहणीयो ग्रासाच्छादनवाहनैः ॥

इति स्मृतिचन्द्रिकायां अजीवद्विभागे समविभागप्रकारः.

---

## अथ विषमविभागप्रकारः.

तत्र बृहस्पतिः—

पितृरिक्थहराः पुत्राः सर्वे एव समांशिनः ।
विद्याकर्मरतस्तेषामधिकं लब्धुमर्हति ॥

ये पतितादिव्यतिरिक्ताः पितृरिक्थहराः पुत्राः विद्यादेरसत्तया सत्तया वा सदृशास्ते सर्वे समांशिन एव स्युः । ये पुनर्विद्यादेरसत्तया सत्तया वा विसदृशास्तेषां मध्ये यो विद्याद्युपेतः स एवोद्धारेण वा विषमविभागेन वाऽधिकं धनं लब्धुमर्हतीत्यर्थः । तत्रापि कर्मानुष्ठातृत्वतारतम्ये लभ्यधनपरिमाणश्रैष्ठ्ययोस्तारतम्यं भवति । न पुनर्विद्वत्तातारतम्येनेत्याह कात्यायनः—

यथा यथा विभागाप्तं धनं यागार्थतामियात् ।
तथा तथा विधातव्यं विद्वद्भिर्भागगौरवम् ॥

इति । द्रव्यबाहुल्ये सतीति शेषः । अत एव मनुः—

उद्धारो न दशस्वस्ति सम्पन्नानां स्वकर्मसु ।
यत्किञ्चिदेव देयं स्याज्ज्यायसे मानवर्धनम् ॥

इति । ज्येष्ठादेरर्पणार्थं विभाज्यद्रव्यराशेस्सकाशाद्योऽर्थ उद्ध्रियते स उद्धारः । दशसु कतिपयेषु जीवनपर्याप्तधनेष्विति यावत् । स्वकर्मसु स्वाधिकारतोऽनुष्ठेयकर्मसु सम्पन्नानां कर्तृत्वमापन्नानामशेषभ्रातॄणां द्रव्यबाहुळ्ये सत्यपि कर्मनिष्ठत्वसाम्यादुद्धारो मानवर्धनार्थदानं च नास्ति । किंतु स्वल्पधनशालिषु विद्यादितो विसदृशेषु जीवनमात्रपर्याप्तधनत्वेनानुद्धारेऽपि सन्मानार्थं ज्यायसे किञ्चिद्वस्त्रमात्रं देयमित्यर्थः । एवञ्च येषां भ्रातॄणां प्रभूतं धनं विद्यते, विद्यादौ च तारतम्यमस्ति तेषां विभागे उद्धार इति मन्तव्यम् । उद्धारप्रकारमप्याह मनुः—

ज्येष्ठस्य विंश उद्धारस्सर्वद्रव्याच्च यद्वरम् ।
ततोऽर्धं मध्यमस्य स्यात्तुरीयं तु यवीयसः ॥

ज्येष्ठस्य अग्रजस्य विद्यादिवशादुत्तमस्य विभाज्यद्रव्यराशेः विंशतितमो भागः, तस्मिन्नेव राशौ श्रेष्ठमेकं च द्रव्यमुद्धारः । ततोऽर्धं तस्मिन्नेव राशौ चत्वारिंशत्तमो भागो मध्यममेकं द्रव्यं जन्मतो विद्यादिवशतश्च मध्यमस्योद्धारः । तुरीयं तस्मिन्नेव राशौ अशीतितमो भागः कनिष्ठमेकं द्रव्यं जन्मतो विद्यावशाच्च यवीयस उद्धारः स्यादित्यर्थः । अवशिष्टस्य राशेर्विभागप्रकारमाह स एव—

एवं समुद्धृतोद्धारे समानंशान् प्रकल्पयेत् ।

इति । उद्धृतावशिष्टं समं विभजेदित्यर्थः । अथवा तस्मिन्नेव विषये विषमविभाग एव स्यान्नोद्धार इत्याह स एव—

उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना ।
एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्धं ततोऽनुजः ॥
अंशमंशं यवीयांस इति धर्मो व्यवस्थितः ॥

एकाधिकमंशं द्व्यंशमिति यावत् । 'द्व्यंशी वा पूर्वजस्स्यात्' इति गौतमस्मरणात् । पूर्वजो विद्यादिनाऽपि ज्येष्ठ इत्यर्थः । अत एव बृहस्पतिः—

जन्मविद्यागुणज्येष्ठो द्व्यंशं दायमवाप्नुयात् ।

इति । एवञ्च न जन्मतः प्राथम्यादिमात्रमुद्धारे विषमविभागे वा कारणं, किंतु विद्यादिनिबन्धनश्रेष्ठत्वाद्युपेतं प्राथम्यादिकमिति मन्तव्यम् । अयं च विषमविभागप्रकारः कलियुगे तु न वर्तत इत्याह संग्रहकारः—

यथा नियोगधर्मोऽद्य नानूबन्ध्यावधोपि वा ।
तथोद्धारविभागोपि नैव संप्रति वर्तते ॥

अद्यसंप्रतीत्येतौ शब्दौ कलियुगमभिसन्धायोक्तौ । अत एव पुराणं—

ऊढायाः पुनरुद्वाहं ज्येष्ठांशं गोवधं तथा ।
कलौ पञ्च न कुर्वीत भ्रातृजायां कमण्डलुम् ॥

ज्येष्ठांशं जन्मविद्यादिनिबन्धनश्रेष्ठांशम्। गोवधं अनूबन्ध्यादिकर्माङ्गम्। कमण्डलुं गृहिणः कमण्डलुधारणम्। एतदेव धारेश्वरेणोक्तं—'ज्येष्ठस्य विंश उद्धारः इत्येवमादीनि वाक्यानि न विचार्यन्ते लोकेन अत्यन्तं परित्यक्तत्वात्' इति। कलाविति शेषः, द्वापरादावनुष्ठेयत्वेनात्यन्तं परित्यागाभावात्। यत्पुनर्विश्वरूपेणोक्तं, यथा—

'महोक्षं वा महाजं वा श्रोत्रियायोपकल्पयेत्।

इत्यस्य शिष्टाचारेण बाधितत्वादकरणं, एवमेवोद्धारस्यापि' इति। तदयुक्तं, स्मृतिशिष्टाचारयोर्विरोधे शिष्टाचारस्यैव दुर्बलस्य बाध्यत्वात्। दुर्बलत्वं च 'श्रुतिस्मृतिविहितो धर्मस्तदलाभे शिष्टाचारः प्रमाणम्' इति वसिष्ठस्मरणादवगम्यते। किंच महोक्षादेरनुपकल्पनं शिष्टाचाराभाव एव न पुनश्शिष्टाचार इति शिष्टाचारेण बाधितत्वादित्ययुक्तमुक्तं—'शिष्टाचाराभावादकरणम्' इति श्रीकरोक्तिवद्वक्तव्यम्, न च तथोक्तम्। यत्पुनर्विज्ञानेश्वरेणोक्तं—'सत्यमयं विषमो विभागश्शास्त्रदृष्टः, तथाऽपि लोकविद्विष्टत्वान्नानुष्ठेयः' इति, एतदपि वाङ्मात्रम्। न ह्युद्धारविभागादौ लोकविद्वेषोऽस्ति, प्रत्युत विद्यागुणपुण्यकर्मसम्पन्नज्येष्ठादौ भागाधिक्ये लोकानुरागो दृश्यत इति यत्किञ्चिदेतत्। ये पुनः स्मृतिसमुच्चयकाराः शम्भुश्रीकरदेवस्वाम्यादयः उद्धारविषमविभागयोश्शिष्टाचारं क्वापि मन्यमाना उद्धारादिविषयाणि बहूनि

स्मृतिवाक्यानि विचारयितुं ग्रन्थविस्तरं चक्रिरे' तेषां धर्मज्ञसमयपुराणवचनाभ्यां कलौ सर्वत्र शिष्टाचाराभावस्य निश्चितत्वाद्वृथैव प्रयासो ग्रन्थविस्तरश्च जात इत्यस्माभिरुद्धारादिविषये दिङ्मात्रमेव प्रदर्शितम् ॥

इति स्मृतिचन्द्रिकायां विषमविभागप्रकारः

---

अथान्यान्यप्यजीवद्विभागविषयाणि कानिचिद्वचनानि लिख्यन्ते

तत्र वसिष्ठः—

'अथ भ्रातॄणां दायविभागो याश्चानपत्यास्स्त्रियस्तासां चा पुत्रलाभात्' इति । याः पितृस्त्रियोऽनपत्या गर्भावस्थापन्नास्तासामा पुत्रलाभादा प्रसवात्सहवासेन स्थितानां भ्रातॄणां प्रसूतापत्यलिङ्गज्ञानानन्तरं दायविभागो न पुनरेवंविधविषये नवश्राद्धानन्तरं दायविभाग इत्यर्थः । नन्वस्य वचनस्य नवश्राद्धानन्तरं भ्रातॄणामनपत्यपितृस्त्रीणां च दायविभागो भवतीति ऋज्वर्थः किमिति परित्यज्यते ? उच्यते— अनपत्यस्त्रीणामा पुत्रलाभादिति विरुद्धार्थावगतेस्तत्परिहाराय परित्यज्यते । स्त्रीणामदायानां दायविभागासंभवाच्च परित्यज्यते । तथाच अर्हति स्त्रीत्यनुवृत्तौ बोधायनः—'न दायं निरिन्द्रिया ह्यदायाश्च स्त्रियो मता इति श्रुतिः'

इति। हिशब्दोऽत्र यस्मादर्थे। एवञ्चायमर्थः—यस्मान्निरिन्द्रिया व्याध्यादिनाऽपगतेन्द्रियाः स्त्रियश्चादाया मता इति श्रुतिस्तस्मान्न स्त्री दायं विभक्तव्या, अन्यद्वाराऽऽगत तद्द्रव्यमर्हतीति। 'निरिन्द्रिया अदायाश्च स्त्रियो मताः' इत्यनेन 'तस्मात् स्त्रियो निरिन्द्रिया अदायादीः' इति तैत्तिरीयक श्रुतिरर्थतः प्रदर्शितेति मन्तव्यम्। यद्यदायाः स्त्रियः कथं तर्हि याज्ञवल्क्येनोक्तं—

पितुरूर्ध्वं विभजतां माताऽप्यंशं समं हरेत्।

इति, कथितं च व्यासेन—

असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्तिताः।
पितामह्यश्च सर्वास्ता मातृतुल्याः प्रकीर्तिताः॥

इति। कथितं च विष्णुना—'मातरः पुत्रभागानुसारिभागहारिण्य अनूढाश्च दुहितरः' इति। न हि स्त्रीणां दायानर्हत्वे मात्रादीनां दुहित्रन्तानामंशभागित्वोक्तिर्युज्यते। बाढं युज्यते, दायानर्हाणां तु दायहारित्वोक्तिर्विरुध्यते, न पुनरंशहारित्वोक्तिः। अंशशब्दो हि भागवचनो न दायवचनः, गणद्रव्यादावप्यंशो देय इति प्रयोगदर्शनात्। तेन मात्रादीनां दायद्रव्याभावेऽपि विभाज्यराशौ स्वाम्यस्य पत्न्यधिकरणसिद्धस्य विद्यमानत्वात्तत्र यावदर्थमर्थहरणं स्वकीयस्वाम्यव्यवस्थापकं मात्रादिभिरपि कार्यमिति 'याज्ञवल्क्यादिभिरुक्तमिति मन्तव्यम्। न च दायशब्दो 'यद्धनं स्वामिसम्बन्धादेव

निमित्तादन्यस्य स्वं भवति तदुच्यते' इति दायशब्दार्थनिरूपणार्थं मिताक्षरायामुक्तं युक्तम्। एवं हि नित्यं विभागार्हमेव त्वन्मते पत्नीस्वं भवेत् दायशब्दार्थत्वात्। लोके दंपत्योर्धने विभागार्हद्रव्यमेव हि दायशब्देन प्रयुज्यते। त्वन्मते पत्नीस्वं पतिसंबन्धादेव भवतीति तस्यापि दायत्वापत्तिः। ततश्च 'अदायाः स्त्रियः' इति श्रुतिविरोधो दुर्वारः स्यात्। अस्मन्मते तु विभागार्हं स्वस्वामिसंबन्धादेव निमित्तादन्यस्य स्वं जातं दायशब्दार्थं इति विभागनर्हं पत्नीस्वं न दायः। तथाहि—पतिद्वाराऽऽगतं जायाधनं नित्यं विभागानर्हमेव, लोके दंपत्योर्धने विभागादर्शनात्। 'जायापत्योर्न विभागो विद्यते, इति हारीतस्मरणाच्च। तेनात्र न मातुः स्वाम्यव्यवस्थापको दायविभागः, किंतु यावदर्थमेवार्थग्रहणमिति मन्तव्यम्। अत एव स्मृत्यन्तरे निर्धनमातृविषयमेवांशहरणं न मातृमात्रविषयमेव ज्ञायते।

जनन्यस्वधना पुत्रैर्विभागेंऽशं समं हरेत्।

इति स्मरणात्। अस्वधना प्रातिस्विकस्त्रीधनशून्या जननी पुत्रैरजीवद्भिभागे क्रियमाणे पुत्रांशसममंशं हरेदित्यर्थः। जननीग्रहणं तत्सपत्न्यादेरुपलक्षणार्थं, अस्वधनेतिविशेषणोपादानात्। स्वधनादेव स्वकीयजीवनस्य स्वानुष्ठेयस्य च धनसाध्यकर्मणः सिद्धिसंभवे जनन्यादीनां न भागग्रहणमिति गम्यते। तथा स्वधनमात्रात्तयोस्सिद्ध्यसम्भवे जनन्यादीनां

सधनानामपि न समभागहरणं, किंतु यथोपयोगं न्यूनभागस्यैव ग्रहणमिति च गम्यते, तथा विभाज्यराशेरतिबहुत्वे निर्धनानामपि जनन्यादीनां न समांशग्रहणं, किंतु यथास्वोपयोगं न्यूनस्यैव हरणमित्यपि गम्यते, अस्वधनेति विशेषणस्योपयोगवशादंशहरणं जनन्याः न पुनः भ्रातृवद्दायभागित्ववशादिति ज्ञापनार्थत्वात् । सममिति विशेषणस्य तूपयोगवशादसमांशस्य हरणेऽप्यत्वैयर्थ्यम्, अल्पविभाज्यराशावुपयोगवशादधिकहरणस्य प्राप्तस्य निवृत्त्यर्थत्वात् । यत्पुनर्विष्णुना दुहितॄणां पुत्रभागानुसारिभागहारित्वमुक्तं, तत्रापि जन्मना लब्धस्वाम्यस्य पितृमरणेऽप्यस्वतन्त्रावस्थस्याप्यविभाज्यस्यादायत्वात्, अनूढा इति विशेषणोपादानाच्च विवाहार्थं पुत्रभागानुसारिभागहरणं न पुनः भ्रातॄणामिव दुहितॄणां दायविभागार्थमिति गम्यते । यत एव न दायविभागार्थमंशहरणं किंतु विवाहसंस्कारार्थं अत एव विभाज्यधनबाहुल्याभावविषयमेतदिति वक्ष्यते । अत एव च देवलेनोक्तं—

कन्याभ्यश्च पितृद्रव्ये देयं वैवाहिकं वसु ।

विवाहप्रयोजकं धनमित्यर्थः । अत एव च संस्कार्या इत्यनुवृत्तौ याज्ञवल्क्येनोक्तं—

भगिन्यश्च निजादंशाद्दत्वाऽंशं तु तुरीयकम् ।

इति । एकस्य पुत्रस्य यावान्निजांशस्तच्चतुर्थांशं प्रतिभगिनि

प्रदाय भ्रातृभिर्भगिन्यः संस्कार्या विवाहयितव्या इत्यर्थः। स्मृत्यन्तरेऽपि—

भ्रातृभ्योऽशचतुर्भागं तत्र कन्या हरेद्धनम्।

इति। भ्रातृभ्यस्सकाशादंशं चतुर्थांशं धनं तत्र अजीवद्विभागे एकैका कन्या हरेदित्यर्थः। अनल्पाविभाज्यविषयमेतत्। तथाच कात्यायनः—

कन्यकानां त्वदत्तानां चतुर्थो भाग इष्यते।
पुत्राणां तु त्रयो भागाः साम्यं त्वल्पधने स्मृतम्॥

कन्यकानां प्रत्येकमिति शेषः। एवं पुत्राणामित्यत्रापि शेषो द्रष्टव्यः। अल्पे विभाज्यधने पुत्रभागसाम्यं त्वेकैककन्यकाभागस्य विष्णूादिना स्मृतमिति तुरीयपादार्थः। एवञ्चानल्पे विभाज्यधने चतुर्थो भाग इति पारिशेष्यादवगम्यते। 'पुत्राणां तु त्रयो भागाः' इत्येतत् समसङ्ख्याकभ्रातृभगिनीविषयम्। यत्र तु भगिन्यो न्यूनसङ्ख्याकास्तत्र पुत्राणां न त्रयो भागाः किंतु किञ्चिदभ्यधिकाः। यत्पुनः मनुनोक्तं—

स्वेभ्योंशेभ्यस्तु कन्याभ्यः प्रदद्युर्भ्रातरः पृथक्।
स्वात् स्वादंशाच्चतुर्भागं पतितास्स्युरदित्सवः॥

इति। यद्यप्यत्र स्वात् स्वात् इति वीप्सया यावन्तो भ्रातृणामंशास्तावन्त एव चतुर्थांशाः कन्याभ्यो भ्रातृभिः प्रदेया इति ऋज्वर्थः प्रतिभाति। तथाऽप्यधिकसङ्ख्याककन्याविषय-

त्वान्न प्राचीनस्मृतिविरोधः । न चात्रैकैकस्याः स्वात् स्वात् अंशाच्चतुर्थांशदानं, येन प्राचीनस्मृतिविरोधः । किंतु समुदायस्येति सुतरामविरोधः । दत्तं च कन्याभिस्समत्वेन विभज्य ग्राह्यम् । यत्पुनर्विष्णुनोक्तं— 'अनूढानां च कन्यानामंशवान् स्ववित्तानुसारेण संस्कारं कुर्यात्' इति, तदेकपुत्रतया दायविभागाभावविषयम् । यद्वा भ्रातॄणां सहवासविषयम् । कन्याग्रहणं असंस्कृतानां पितुरपत्यानामुपलक्षणार्थम् । अत एव व्यासः—

असंस्कृतास्तु ये तत्र पैतृकादेव ते धनात् ।
संस्कार्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥

बृहस्पतिः—

असंस्कृता भ्रातरस्तु ये स्युस्तत्र यवीयसः ।
संस्कार्याः पूर्वजैस्ते वै पैकृतान्मध्यकाद्धनात् ॥

तत्र अजीवत्पितृकेषु भ्रातृष्वित्यर्थः । असंस्कृताः पित्रेति शेषः । अत एव नारदः—

येषां वै न कृताः पित्रा संस्कारविधयः क्रमात् ।
कर्तव्या भ्रातृभिस्तेषां पैतृकादेव ते धनात् ॥

पैतृकधनाभावेऽप्याह स एव—

अविद्यमाने पित्र्येऽर्थे स्वांशादुद्धृत्य वा पुनः ।
अवश्यकार्याः संस्कारा भ्रातॄणां पूर्वसंस्कृतैः ॥

संस्कारा जातकर्माद्या उपनयनान्ता विवक्षिताः, अवश्यकार्या इत्यभिधानात्। विवाहादिसंस्कारस्य तु नैष्ठिकत्वादिपक्षान्तरदर्शनादवश्यकार्यताऽभावात् संस्कारशब्दस्य संकोचोऽत्र विवक्षित इत्यनवद्यम्। कन्यकानां तु विवाहान्तास्संस्कारा उपनयनरहिताः पित्र्यार्थाभावे स्वार्थादुद्धृत्य कार्याः। विवाहस्योपनयनस्थानत्वेनावश्यकार्यत्वात्। त्रिभागकालेऽन्यदपि धनं कन्यका स्वधृतालङ्कारादिकं लभत इत्याह शङ्खः—'विभज्यमाने दायाद्ये कन्यालङ्कारं वैवाहिकं स्त्रीधनं च कन्या लभेत्' इति। दायाद्ये दायधने भ्रातृभिर्विभज्यमाने कन्या स्वधृतालङ्कारं वैवाहिकं तुरीयांशादिधनं स्त्रीधनं च पित्रादिना दत्तं लभेदित्यर्थः। बोधायनोपि—'मातुरलङ्कारं दुहितरस्सांप्रदायिकं लभेरन् अन्यद्वा' इति। साम्प्रदायिकं मातृपरम्परायातम्। अन्यत् तादितरद्वा मात्रा धृतमलङ्कारं मातृकं तत्र विभज्यमाने दुहितरः कुमार्यो लभेरन्नित्यर्थः॥

इति स्मृतिचन्द्रिकायां अजीवद्विभागविषयाणि.

---

## अथ अन्यान्यपि दायांशानर्हविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र देवलः—

मृते न पितरि क्लीबकुष्ठ्युन्मत्तजडान्धकाः।
पतितः पतितापत्यं लिङ्गी दायांशभागिनः॥

मृते पितरि क्लीबादयो धनांशभागिनो न भवन्तीत्यर्थः । लि-ङ्गी नैष्ठिकवनस्थादिः । क्षपणकपाशुपतादिश्चात्र विवक्षितः । मृते पितरीति विभागकालप्रदर्शनार्थमुक्तम् । तेन पितरि जीवत्यपि जीवद्विभागे क्लीबादयो दायभागिनो न भवन्ति । अत एव जीवद्विभागेऽप्यभागित्वमेतेषां वक्तुमुक्तमापस्तम्बेन—'जीवन् पुत्रेभ्यो दायं विभजेत् समं क्लीबमुन्मत्तं पतितं च परिहाप्य' इति । चशब्दः कुष्ठिजडान्धादीनां सङ्ग्रहार्थः । परिहाप्य वर्जयित्वेत्यर्थः । मनुरप्यनंशभागिन आह—

अनंशौ क्लीबपतितौ जात्यन्धबधिरौ तथा ।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः ॥

निरिन्द्रियाः व्याध्यादिना विनष्टघ्राणादीन्द्रियाः । नारदोपि—

पितृद्विट् पतितषण्डो यश्च स्यादपपात्रितः ।
औरसा अपि नैतेऽशं लभेरन् क्षेत्रजाः कुतः ॥

अपपात्रितः अपपात्रीकृतः । 'अपपात्रितस्य रिक्थपिण्डोदकानि व्यावर्तन्ते' इति शङ्खलिखितस्मरणात् । अपपात्रितस्य महापराधेन बन्धुभिर्बहिष्कृतस्येत्यर्थः । वसिष्ठोपि—'अनंशास्त्वाश्रमान्तरगताः' इति । गृहस्थाश्रममपेक्ष्येति शेषः । न चैवमुपकुर्वाणस्य ब्रह्मचारिविशेषस्याप्यंशशून्यत्वमायातमिति वाच्यं, गृहस्थाश्रमानर्हत्वकार्याश्रमान्तरस्यात्र विवक्षितत्वात् । विष्णुरपि—'पतितक्लीबाचिकित्स्यरोगविकलास्त्वभागहराः' इति ।

विकलः इन्द्रियविकलः। अचिकित्स्यरोग इति वदन् अचिकित्स्यक्लैब्यवैकल्यादिशालिनोऽप्यभागहरा इति दर्शयति। तेन विभागकालस्थितक्लैब्यादिशालिनामभागहरत्वं न पुनस्सहजबाधिर्यक्लैब्यादिशालिनामेवेति मन्तव्यम्। कात्यायनः—

अक्रमोढासुतश्चैव सगोत्राद्यस्तु जायते।
प्रव्रज्यावसितश्चैव न रिक्थं तेषु चार्हति॥

अक्रमोढासुतो वर्णक्रमजन्मक्रमातिक्रमेण परिणीतायाः सुतो यः। तथा सगोत्रात् सगोत्रस्त्रीपरिणेतुस्सकाशाद्यस्सुतस्सगोत्रस्त्रियां जायते। तथा प्रव्रज्यावसितः स्वीकृतचतुर्थाश्रमत्यागी यो भवेत्। तेष्वक्रमोढासुतादिषु रिक्थं प्राप्तुं नार्हति, ते रिक्थानर्हा इत्यर्थः। मनुरपि—

अनियुक्तासुतश्चैव पुत्रिण्याऽऽप्तश्च देवरात्।
उभौ तौ नार्हतो भागं जारजातककामजौ॥

अनियुक्तायां परस्त्रियामपरिणेतुस्सकाशादुत्पन्नः सुतो जारजातकः, स्वार्थे कप्रत्ययः। परिणेत्रोत्पन्नपुत्रवत्यां देवरात् उत्पन्नः कामजः। तावुभौ भागं नार्हत इत्यर्थः। एतदुक्तं भवति—जारजातः नियोगविध्यतिक्रमेण जातश्च क्षेत्रिणो धनभागं नार्हतीति। बृहस्पतिरपि—

सवर्णजोऽप्यगुणवान् नार्हस्स्यात्पैतृके धने।

इति। अगुणवान् पितृदृष्टादृष्टकार्योपयोगिगुणरहितः। तथा चानन्तरमुक्तं तेनैव—

उत्तमर्णाधमर्णाभ्यां पितरं त्रायते सुतः ।
अतस्तु विपरीतेन नास्ति तेन प्रयोजनम् ॥
तया गवा किं क्रियते या न दोग्ध्री न गर्भिणी ।
कोऽर्थः पुत्रेण जातेन यो न विद्वान्न धार्मिकः ॥
शास्त्रशौर्यार्थरहितस्तपोविज्ञानवर्जितः ।
आचारहीनः पुत्रस्तु मूत्रोच्चारसमस्स्मृतः ॥

इति । उत्तममृणं ऋषिदेवपितॄणाम् । अधममृणं धनिकहस्तात् गृहीतम् । यथा मूत्रपुरीषे स्वकीयोदरान्निर्गते अप्यत्यन्तहेयभूते तथैव विद्यादिरहितः सूनुरौरसोपि हेयभूत इति मूत्रोच्चारसम इत्युक्तम् । मनुरपि—

सर्व एव विकर्मस्था नार्हन्ति भ्रातरो धनम् ॥

इति । विकर्मस्थाः निषिद्धकर्मैकनिरताः । धनं विभाज्यधनम् । एवं निरूपितनिरंशकास्सर्वे पोषणीयाः । तथाच याज्ञवल्क्यः—

क्लीबोऽथ पतितस्तज्जः पङ्गुरुन्मत्तको जडः ।
अन्धोऽचिकित्स्यरोगाद्या भर्तव्यास्तु निरंशकाः ॥

तज्जः पतितोत्पन्नः । आद्यशब्देनान्येषां प्राक्प्रतिपादितानां ग्रहणम् । भर्तव्याः दायहरैरिति शेषः । 'रिक्थग्राहिभिस्ते भर्तव्याः' इति विष्णुस्मरणात् । कथं भर्तव्या इत्यपेक्षिते मनुः—

सर्वेषामपि तु न्याय्यं दातुं शक्त्यं मनीषिणा ।
ग्रासाच्छादनमत्यन्तं पतितो ह्यददद्भवेत् ॥

अत्यन्तं यावज्जीवमित्यर्थः। कात्यायनः—

ग्रासाच्छादनमत्यन्तं देयं तद्बन्धुभिर्मतम्।
बन्धूनामप्यभावे तु पितृद्रव्यं तदाऽऽप्नुयात्॥
अपित्र्यं द्रविणं प्राप्तं दापनीया न बान्धवाः।

इति। तद्बन्धुभिः निरंशकबन्धुभिः। तत्पितृद्रव्यग्राहिभिर्ग्रासाच्छादनं देयमिति मन्वादीनां मतमित्यर्थः। अपित्र्यमित्यादेरयमर्थः—निरंशकपितृद्रविणं तद्बन्धुभिरप्राप्तं, राज्ञा तद्बन्धवो भरणाय न दापनीया इति। एतदुक्तं भवति। निरंशकपितृधनाग्राहकबान्धवानामनावश्यकं निरंशकभरणमिति। एवमशेषनिरंशकानां भरणं प्राप्तं कस्यचित्पर्युदासं कुर्वन्नाह देवलः—

तेषां पतितवर्ज्येभ्यो भक्तवस्त्रं प्रदीयते।

इति। पतितोत्पन्नस्यापि पतितत्वात् सोपि वर्ज्यः। अत एव बोधायनः—'अतीतव्यवहारान् ग्रासाच्छादनैः बिभृयुः अन्धजडक्लीबव्यसनिव्याधितादींश्चाकर्मिणः पतिततज्जातवर्ज्यम्' इति। अतीतव्यवहाराः मूकादयः। अकर्मिणः धर्मार्थवृत्त्यर्थकर्मस्वक्षमाः। वसिष्ठस्तु तन्त्रोक्त्यैव चतुर्णां भरणप्रतिषेधमाह—'अनंशास्त्वाश्रमान्तरगताः क्लीबोन्मत्तपतिताश्च भरणं क्लीबोन्मत्तानाम्' इति। अत्र विशेषग्रहणं शेषप्रतिषेधार्थमिति न्यायेन पतिताश्रमान्तरगतविषयस्य भरणस्य प्रतिषे-

धो गम्यते । आश्रमान्तरगतिमन्तरेण प्रव्रज्यावसितत्वासंभवात् प्रव्रज्यावसितविषयभरणस्यापि प्रतिषेधोऽत्रावगम्यते । एवञ्च पतिततज्जाताश्रमान्तरगतप्रव्रज्यावसिततज्जानां निरंशकानां भरणमनावश्यकमिति मन्तव्यम् । निरंशकपुत्राणामंशग्रहणविरोधिक्लैब्याद्यभावेऽपि निरंशकपुत्रत्वेन पैतामहधनानर्हत्वे प्राप्ते तदपवादमाह देवलः—

तत्पुत्राः पितृदायांशं लभेरन् दोषवर्जिताः ।

इति । तत्पुत्राः निरंशकपुत्राः । अंशग्रहणविरोधिक्लैब्यादिदोषवर्जिताः पितृदायांशं पैतामहधनांशं लभेरन्नित्यर्थः । न चेदं वचनं पतितापत्यस्यापि पैतामहधनभागित्वं प्रापयति तत्पुत्रा इति सामान्येनाभिधानादिति शङ्कनीयं, दोषवर्जिता इत्यनेन व्युदस्तत्वात् । पतितस्यापि पुमपत्यं पतितमेव भवति । तथाच वसिष्ठः—'पतितोत्पन्नः पतितो भवतीत्याहुरन्यत्र स्त्रियाः सा हि परगामिनी' इति । पतितस्य पुत्रवत् प्रतिलोमायाः स्त्रियाः पुत्रस्य पुत्रोपि पैतामहधनानर्हः अंशग्रहणविरोधदोषसद्भावात् । अत एव विष्णुः—'तेषामेवौरसाः पुत्रा भागहारिणो न तु पतितस्य पतनीये कृते कर्मण्यनन्तरोत्पन्नाः प्रतिलोमासु स्त्रीषूत्पन्नाश्चाभागिनस्तत्पुत्राः पैतामहेऽप्यर्थे' इति । अनन्तरोत्पन्नाः पश्चादुत्पन्नाः, आनन्तर्यस्याविवक्षितत्वात् । ते तु न भागहारिणः । एवं प्रव्रज्यावसितादिपुत्रेषु यत्रयत्र अंशग्रहणविरोधिदोषोऽस्ति

तत्रतत्र पैतामहधनाभागित्वं विज्ञेयम् । क्षेत्रजपुत्रविषयेऽप्युक्तं याज्ञवल्क्येन—

औरसक्षेत्रजास्तेषां निर्दोषा भागहारिणः ।

इति, तत् द्वापरादिविषयमिति मन्तव्यं, कलौ क्षेत्रजपुत्रनिषेधात् । सदोषास्त्वौरसादयो भर्तव्या इत्येतत्

अन्धोचिकित्स्यरोगाद्या भर्तव्यास्तु निरंशकाः ।

इत्यनेनैवोक्तमितीह नोक्तं, किंतु पूर्वं यन्नोक्तं तदाह स एव—

सुताश्चैषां प्रभर्तव्या यावद्वै भर्तृसात्कृताः ।

अपुत्रा योषितश्चैषां भर्तव्यास्साधुवृत्तयः ॥

निर्वास्या व्यभिचारिण्यः प्रतिकूलास्तथैव च ।

इति । सुताः कन्यकाः एषां निरंशकानाम् । भर्तव्याः निरंशकपितृद्रव्यग्राहिभिर्निरंशकभरणप्रकारेणैव । यावज्जीविमित्यस्यापवादो 'यावद्वै भर्तृसात्कृताः' इति, यावद्विवाहसंस्कृता भवन्ति तावदेवेत्यपवादभागस्यार्थः । एषां निरंशकानामपुत्रा योषितः परिणीताः स्त्रियः सदाचारा निरंशकपितृद्रव्यग्राहिभिरेव निरंशकभरणप्रकारेणैव भर्तव्याः । व्यभिचारिण्यः भरणकर्तुः प्रतिकूलाश्च गृहाद्बहिः कार्याः । तत्रासाधुवृत्तयो निर्वासिता न भर्तव्याः । प्रतिकूलास्तु निर्वासिता न भर्तव्याः ।

इति स्मृतिचन्द्रिकायां अंशानर्हविषयाणि.

---

## अथ विभाज्यनिरूपणम्.

तत्र कात्यायनः—

पैतामहं च पित्र्यं च यच्चान्यत्स्वयमार्जितम् ।
दायादानां विभागे तु सर्वमेतद्विभज्यते ॥

स्वयमार्जितं पित्र्याद्यविभक्तद्रव्योपयोगेन स्वयमार्जितं, तदनुपयोगेन स्वयमार्जितस्याविभाज्यत्वात् । एवं त्रिविधं धनं सर्वं विभज्यते । यदि नास्ति पितामहादिकृतमृणादिकमिति शेषः । अस्ति चेन्न सर्वं, अपि तु ऋणादिकं दत्वाऽवशिष्टं विभज्यते। तथाच स एव—

ऋणं प्रीतिप्रदानं तु दत्वा शेषं विभाजयेत् ।

इति । प्रीतिप्रदानं प्रीत्या प्रदत्तं शेषं विभाजयेदिति वदन् विभाज्यबाहुळ्यविषयमेतादिति दर्शयति । तदबाहुळ्यविषये तु रिक्थवदृणमपि विभाज्यमित्यजीवद्विभागप्रकरणे प्रदर्शितम् । विभागकाले यदृणं प्रीतिदेयं तस्याकूटत्वनिश्चयार्थं बन्धुभिस्सह रिक्थग्राहिभिस्तद्विचार्यमित्याह स एव—

ऋणमेवंविधं शोध्य विभागे बन्धुभिस्सह ।

इति । वञ्चनार्हं रिक्थमपि विशोध्यमित्याह स एव—

गृहोपस्करवाह्याश्च दोह्याभरणकर्मिणः ।
दृश्यमाना विभज्यन्ते कोशं गूढेऽब्रवीद्भृगुः ॥

कार्मिणः कर्मकरा दासादयः । गूढे द्रव्ये वञ्चनाशङ्कायां

कोशाख्यं दिव्यं भृगुरब्रवीदित्यर्थः । तथाच स एव—

गूढद्रव्याभिशङ्कायां प्रत्ययस्तत्र कीर्तितः ।

इति । प्रत्ययो दिव्यम्, तदपि कोशाख्यमेवेत्युक्तं प्राक् । बृहस्पतिरप्यत्र तदेव दिव्यं भवतीत्याह—

गृहोपस्करवाह्यादिदोह्याभरणकार्मिणः ।
दृश्यमाना विभज्यन्ते गूढे कोशो विधीयते ॥

न च कोशग्रहणं यथाप्राप्तदिव्योपलक्षणार्थमिति वाच्यं,

शङ्काविश्वाससंधाने विभागे रिक्थिनां सदा ।
क्रियासमूहकर्तृत्वे कोशमेव प्रदापयेत् ॥

इति कात्यायनीये विभागविषयेऽभिहितेऽपि कोशे पुनरिह विषयाभिधानस्य नियमार्थत्वात् । तेन बार्हस्पत्येऽपि कोशग्रहणं नियमार्थमेव ॥

इति स्मृतिचान्द्रिकायां विभाज्यनिरूपणम्.

---

## अथ अविभाज्यनिरूपणम्.

तत्र व्यासः—

विद्याप्राप्तं शौर्यधनं यच्च सौदायिकं भवेत् ।
विभागकाले तत्तस्य नान्वेष्टव्यं स्वरिक्थिभिः ॥

विद्याप्राप्तशब्देनात्र न विद्यामात्रप्राप्तं धनमुच्यते, किंतु विद्याविशेषप्राप्तम् । तथाच कात्यायनः—

परभक्तोपयोगेन विद्या प्राप्ताऽन्यतस्तु या ।
तया प्राप्तं धनं यत्तु विद्याप्राप्तं तदुच्यते ॥

परान्यशब्दावत्राविभक्तापेक्षया यद्व्यक्त्यन्तरं तत्र प्रयुक्तौ । भक्तशब्दोत्र द्रव्यमात्रोपलक्षकतया प्रयुक्तः । उक्तलक्षणया विद्यया धनप्राप्तौ निमित्तत्वमनेकविधमिति निमित्तभावभेदेन तत्प्राप्तं धनमप्यनेकविधं, तत्सर्वमविभाज्यमिति संक्षेपतो विद्याप्राप्तशब्देनैव व्यासेनाभिहितम् । तत्स्वग्रन्थे प्रपञ्चयितुमप्याह कात्यायनः—

उपन्यस्ते तु यल्लब्धं विद्यया पणपूर्वकम् ।
विद्याधनं तु तद्विद्याद्विभागे न विभज्यते ॥
शिष्यादार्त्विज्यतः प्रश्नात् सन्दिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत् ।
विद्याधनं तु तत्प्राहुर्विभागे न विभज्यते ।
परं निरस्य यल्लब्धं विद्यातो द्यूतपूर्वकम् ॥
विद्याधनं तु तद्विद्यान्न विभाज्यं बृहस्पतिः ।
विद्याप्रतिज्ञया लब्धं शिष्यादाप्तं च यद्भवेत् ॥
ऋत्विङ्न्यायेन यल्लब्धमेतद्विद्याधनं भृगुः ।
शिल्पिष्वपि हि धर्मोऽयं मूल्याद्यच्चाधिकं भवेत् ॥
विद्याबलकृतं चैव याज्यतश्शिष्यतस्तथा ।
एतद्विद्याधनं प्राहुः सामान्यं यदतोऽन्यथा ॥

इति । उपन्यस्ते वर्गत्यागादिवैचित्र्येणोपन्यस्ते । शिष्यात्

अध्यापनात् । आर्त्विज्यतः आर्त्विज्यकरणात् । प्रश्नात् उपपातक्यादिकृतप्रायश्चित्तार्थप्रश्नात् । संदिग्धप्रश्ननिर्णयात् अर्थ्यादिकृतप्रश्नप्रतिप्रश्नयोर्निर्णयात् । स्वज्ञानशंसनात् अग्रपूजादौ स्वज्ञानप्रख्यापनात् । वादात् जल्पवितण्डादिभेदात् । प्राध्ययनात् घटिकाध्ययनात् । विद्यातः अक्षहृदयज्ञानादिना । विद्याप्रतिज्ञया बहुविद्याढ्यत्वप्रतिज्ञया । शिष्यादाप्तं गुरुपूजनार्थम् । ऋत्विङ्न्यायेन लब्धं उपद्रष्टृत्वादिना लब्धम् । शिल्पिष्वपि शिल्पिविद्योपजीविष्वपि । अयं विद्याधनविभागरूपो धर्मोऽस्ति । मूल्यात् भृतेः यद्धनमधिकं भृतकाध्ययनादौ भवेत् । तथा विद्याबलकृतं विद्याधिक्यकृतं यद्विशिष्टपूजादौ भवेत् । तथा याज्यतः शिष्यतः सत्कारादौ भवेत् । तदेतद्विद्याधनं प्रातिस्विकं प्राहुः । अतो विद्याधनाद्यदन्यथाभूतं विभक्तपित्रादिद्रव्योपयोगेन प्राप्तं तदविभक्तानां सामान्यं साधारणं विभाज्यमिति यावत् । शेषं व्यक्तार्थम् । नारदोऽपि सामान्यं विद्याधनमाह—

कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात्स लभेताश्रितोऽपि सन् ॥

अविभक्तधनोपयोगेन प्राप्तविद्याधनस्य विभाज्यत्वप्रदर्शनार्थमेतत् । आश्रितोऽपि अविद्योऽपीत्यर्थः । एवमविभक्तपित्रादिग्राहितविद्यालब्धमपि धनं विभाज्यम् । तथात्र कात्यायनः—

कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि वा ।

शौर्यप्राप्तं तु यद्वित्तं विभाज्यं तद्बृहस्पतिः ॥

इति । अविभक्तस्वकुले पितृद्रव्यादेः पितृतोपि वा शिक्षितविद्यानां यद्वित्तं शौर्यादिप्राप्तं विद्ययैव प्राप्तं तत् विद्याधनं विभाज्यं बृहस्पतिरब्रवीदित्यर्थः । विभाज्यविद्याधने भागाधिक्यमार्जकस्यास्ति, 'येन चैषां स्वयमार्जितं स्यात् स द्व्यंशमेव हरेत्' इति वसिष्ठस्मरणात् । गौतमस्त्वविभाज्यविद्याधनेऽपि अंशदानमार्जकेच्छयाऽपि क्वचिदाह—'स्वयमार्जितं वैद्येभ्यो वैद्यः कामं दद्यात्' इति । वैद्येभ्यः विद्यावद्भ्यः । नारदस्तु इच्छाशून्यो न दद्यादित्याह—

वैद्यो वैद्याय नाकामो दद्यादंशं स्वतो धनात् ।
पितृद्रव्यं समाश्रित्य न चेत्तेन तदाहृतम् ॥

पूर्वार्धे यद्धनादिति सामान्येनोक्तं तदविभाज्यविद्याधनविषयमित्युत्तरार्धेनावगन्तव्यम् । अवैद्याय सकामोपि न दद्यात् । तथा च कात्यायनः—

नाविद्यानां तु वैद्येन देयं विद्याधनात्क्वचित् ।
समाविद्याधिकानां तु देयं वैद्येन तद्धनम् ॥

अवैद्यानां न क्वचिद्देयं, सकामेनापि न देयमित्यर्थः । शौर्यधनं च तेनैव निरूपितं—

आरुह्य संशयं यत्र प्रसभं कर्म कुर्वते ।
तस्मिन् कर्मणि तुष्टेन प्रसादः स्वामिना कृतः ॥

तत्र लब्धं तु यत्किञ्चित् धनं शौर्येण तद्भवेत् ।

इति । प्रसभो बलात्कारः । अन्यदप्यविभाज्यमाह स एव—

ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तत्स्मृतम् ॥

इति । ध्वजाहृतपदप्रतिपाद्यमप्युक्तं तेनैव—

सङ्ग्रामादाहृतं यत्तु विद्राव्य द्विषतां बलम् ।
स्वाम्यर्थे जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते ॥

एतदपि शौर्यधनशब्देनैव व्यासेनाभिहितं, तद्विशेषत्वात् । कात्यायनेन भेदेन ध्वजाहृतस्याभिधानं प्रपञ्चनार्थमिति मन्तव्यम् । अत्रापि विद्याप्राप्तवदविभाज्यत्वे पित्राद्यविभक्तधनानुपयोगेनार्जनं प्रयोजकमित्यवगन्तव्यम् । अत एव तदुपयोगेनार्जितं विषमविभागेन विभाज्यं भवतीत्याह व्यासः—

साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम् ।
शौर्यादिनाऽऽप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं देयं शेषास्तु समभागिनः ।

इति । साधारणं विभक्तानां धनम् । भ्रातृग्रहणमविभक्तोपलक्षणार्थम् । तस्य साधारणधनाश्रयादर्जितस्येत्यर्थः । शौर्यादिनेति वदन् अन्यत्रापि धने कन्यागतवैवाहिकादौ साधारणं समाश्रित्य विवाहेन प्राप्ते विभाज्यत्वं दर्शयति । कन्यागतवैवाहिकयोस्स्वरूपमाह कात्यायनः—

यल्लब्धं दानकाले तु सजात्या कन्यया सह ।
कन्यागतं तु तद्वित्तं शुद्धं वृद्धिकरं स्मृतम् ॥

वैवाहिकं तु तद्विद्यात् भार्यया यत्सहागतम् ।
धनमेवंविधं सर्वं विज्ञेयं धर्मसाधकम् ॥

इति । कन्यागतं कन्यया सहागतम् । स्त्रीधनस्य तु सर्वविधस्यापि अविभाज्यत्वमाह स एव—

विवाहकाले यत्किंचिद्वरायोद्दिश्य दीयते ।
कन्यायास्तद्धनं सर्वमविभाज्यं च बन्धुभिः ॥
शौर्यप्राप्तं विद्यया च स्त्रीधनं चैव यत्स्मृतम् ।
एतत्सर्वं विभागे तु न च वैभाज्यमर्थिभिः ॥

बृहस्पतिरप्यविभाज्यधनमाह—

पितामहपितृभ्यां च दत्तं मात्रा च यद्भवेत् ।
तस्य तन्नापहर्तव्यं शौर्यभार्याधनं तथा ॥

मातृदत्ते तु विशेषमाह नारदः—

मात्रा च यद्धनं दत्तं यस्मै स्यात् प्रीतिपूर्वकम् ।
तस्याप्येष विधिर्दृष्टो माताऽपीष्टे यथा पिता ॥

स्वधन इति शेषः । एष विधिः पितृदत्तविषयोक्तो विधिः । एवं मित्रदत्तादिकमप्यविभाज्यम् । तथाच याज्ञवल्क्यः—

पितृद्रव्याविरोधेन यदन्यत्स्वयमार्जितम् ।
मैत्रमौद्वाहिकं चैव माधुपर्किकमेव च ॥

इति । मनुनाऽत्र माधुपर्किकस्याप्यविभाज्यत्वमुक्तम् । पितृद्रव्याविरोधेन यदन्यत्स्वयमार्जितमित्यस्यार्थो मनुना स्पष्टीकृतः—

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जयेत् ।

इति । उभयत्र पितृग्रहणमविभक्तोपलक्षणार्थम् । श्रमेण श्रमजनकेन कृष्यादिनेति यावत् । अनुपघ्नन् अपीडयन् । व्यासोपि—

अनाश्रित्य पितृद्रव्यं स्वशक्त्याऽऽप्नोति यद्धनम् ।
दायादेभ्यो न तद्दद्यात्................ ॥

अनाश्रित्य आर्जनसिद्ध्यर्थमिति शेषः । पितृग्रहणमविभक्तोपलक्षणार्थमत्रापि । प्रजापतिरपि—

विद्याशौर्यश्रमैर्लब्धं स्त्रीधनं माधुपर्किकम् ।
मैत्रमौद्वाहिकं भ्रातुः भ्रातृभिर्न विभज्यते ॥

श्रमः कृष्यादिः । एवं पूर्वपुरुषक्रमायातं परापहृतं स्वशक्त्याऽभ्युद्धृतं द्रव्यं दायादेभ्यो न दद्यात् ।

क्रमादभ्यागतद्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्यात्................ ॥

इति याज्ञवल्क्यस्मरणात् । द्रव्यं भूव्यतिरिक्तम् । भूद्रव्येऽप्याह शङ्खः—

पूर्वनष्टां तु यो भूमिमेकश्चाभ्युद्धरेत्क्रमात् ।
यथाभागं लभन्तेऽन्ये दत्वाऽंशं तु तुरीयकम् ॥

क्रमादभ्यागतां पुत्रपौत्रादीनां मध्ये यः पूर्वं नष्टां परापहृतां भूमिं स्वशक्त्याऽभ्युद्धरेत्तस्मै तच्चतुर्थांशं दत्वा शेष-

मुद्धारकेण सहान्ये विभजेरन्नित्यर्थः । केचित्—अभ्युद्धृतं त्वमेव गृहाणेत्यन्यानुमतिमन्तरेणाभ्युद्धृतभूम्यादिसर्वद्रव्यविषयमेतद्वचनं, याज्ञवल्क्यवचनं त्वन्यानुमत्याऽभ्युद्धृतभूम्यादिसर्वद्रव्याविषयम्, इति वदन्ति । यदत्र युक्तं तद्ग्राह्यम् । परेणापहृतस्य तु भूम्यादिद्रव्यस्योद्धारे व्यासेनोक्तं—

कृतेऽकृते वा विभागे रिक्थी यत्र प्रवर्तते ।
सामान्यं चेद्द्रावयति तत्र भागहरस्तु सः ॥

परापहृतं विभाज्यधनं यो रिक्थी साधयति स तत्र साधिते धने द्व्यंशी स्यादित्यर्थः । अन्यदप्यविभाज्यमाह मनुः—

वस्त्रं पत्रमलंकारं कृतान्नमुदकं स्त्रियः ।
योगक्षेमप्रचारं च न विभाज्यं प्रचक्षते ॥

वस्त्रं अविभक्तप्रावृतं वस्त्रं, 'यच्चाङ्गयोजितम्' इति कात्यायनस्मरणात् । पत्रं पत्रारूढमृणं 'धनं पत्रनिविष्टम्' इति तेनैवोक्तत्वात् । स्त्रियो दास्यः । उदकं स्वनिवेशनस्थकूपवाप्याद्यम्भः । योगक्षेमशब्दौ लोकाक्षिणा व्याख्यातौ—

क्षेमं पूर्तं योगमिष्टमित्याहुस्तत्त्वदर्शिनः ।
अविभाज्ये तु ते प्रोक्ते........................ ॥

इति । अथवा योगक्षेमार्थमुपासितेश्वरसकाशाद्यो रिक्थिनां लाभः स एवात्र योगक्षेमशब्देनोच्यते । प्रचारशब्देन गो-

प्रचार उच्यते, कात्यायनेन 'गोप्रचारश्च' इति विशेषितत्वात्। अथवा प्रचारशब्देनाङ्कणादिकमुच्यते । अविभाज्यं प्रचक्षते विचारहीनाः केचन स्मृतिकारा इति शेषः। अत एव बृहस्पतिः—

वस्त्रादयो विभाज्या यैरुक्तास्तैर्न विचारितम् ।
धनं भवेत्समृद्धानां पत्रालङ्कारसंश्रितम् ॥
युक्त्या विभजनीयं तदन्यथाऽनर्थकं भवेत् ।

इति । यद्यपि वस्त्रादावेकस्मिन्वस्त्रे धारणाय विभागे क्रियमाणे वस्तुनाशः। ऋणलेख्ये तु तत्प्रामाण्यनाशः। कृतान्ने प्रभूते विभज्यमाने स्वल्पाशनभोक्तृविषये तन्नाशः। कूपादौ तु दुष्करो विभाग इति अविभाज्यत्वमेव भाति, तथाऽपि यथा वस्तुनाशाद्यनवतारः तथा युक्त्या विभजनीयं, अन्यथा साधारणतयाऽवस्थिते सत्यसूयया परस्परोपभोगप्रतिबन्धे कस्यचिदप्युपकाराभावादनर्थकं भवेदित्यर्थः। युक्त्या विभजनप्रकारोपि तेनैव दर्शितः—

विक्रीय वस्त्राभरणमृणमुद्राह्य लेखितम् ।
कृतान्नं चाकृतान्नेन परिवर्त्य विभज्यते ॥
उद्धृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते ।
एकां स्त्रीं कारयेत्कर्म यथांशेन गृहेगृहे ॥
बह्व्यस्समांशतो देया दासानामप्ययं विधिः ।
योगक्षेमवतो लाभः समत्वेन विभज्यते ॥

प्रचारश्च यथांशेन कर्तव्यो रिक्थिभिस्सदा ।

इति । ऋणमुद्ग्राह्य अधमर्णसकाशादादाय । अनुसारेण स्वभागानुसारेणेत्यर्थः । एवञ्च यदुक्तमुशनसा—

अविभाज्यं सगोत्राणामा सहस्रकुलादपि ।
याज्यं क्षेत्रं च पत्रं च कृतान्नमुदकं स्त्रियः ॥

इति । एतदपि अनादृत्य युक्त्या याज्यं च क्षेत्रं च विभजनीयम् । तथाहि—याज्यसकाशादुत्पन्नो लाभो विभजनीयः । क्षेत्रं तु अखिलदायादानुमत्या विभजनीयम्—

दायादैर्नाभ्यनुज्ञातं यत्किञ्चित् स्थावरे कृतम् ।
तत्सर्वमकृतं ज्ञेयं यद्येकोपि न मन्यते ॥

इति प्रजापतिस्मरणात् । यत्पुनस्तेनैवोक्तं—

गृहक्षेत्राणि याज्याश्च प्रसादो यश्च पैतृकः ।
मातृकश्च प्रसादो यः तद्विभागो न विद्यते ॥

इति । तत्र तावत् विभागनिषेधमनादृत्यैव युक्त्या पूर्वोक्तप्रकारेण गृहादिकं विभजनीयम् । तथाच कात्यायनः—

दृश्यमानं विभज्येत गृहं क्षेत्रं चतुष्पदम् ।

इति गृहादेरपि विभागमाह । पितृप्रसादलब्धस्य निषेधोपि स्थावरेऽनादृत्य एव,

पितृप्रसादात्सिध्यन्ति वस्त्राण्याभरणानि च ।
स्थावराणि न सिध्यन्ति प्रसादे पैतृके सति ॥

इति याज्ञवल्क्यस्मरणात् । यत्पुनस्तेनैव स्मृतं—

लोके रिक्थविभागेऽपि न कश्चित्प्रभुतामियात् ।
भोग एव तु कर्तव्यो न दानं न च विक्रयः ॥

इति । लोके कुलक्रमायाते स्थावरादौ न कश्चित्पित्रादिरपि रिक्थविभागे, अपिशब्दात् विक्रयादावपि न प्रभुतामियात् । तेन तत्र दायादानुमतिमन्तरेण न विभागविक्रयदानानि कुर्यादिति तस्यार्थः ।

इति स्मृतिचन्द्रिकायां अविभाज्यनिरूपणम्.

---

## अथ पुत्रपौत्रादिविभागविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र याज्ञवल्क्यः—

प्रमीतपितृकाणां तु पितृतो भागकल्पना ।

इति । प्रमीता अविभक्ताः पितरो येषां भ्रातॄणां ते प्रमीतपितृकाः । तेषां पितृतो भागकल्पना । पितृद्वारेणैव पितृपितामहप्रपितामहद्रव्यविभागकल्पना, न पुनस्स्वरूपेणेत्यर्थः । पितृतो भागकल्पनायां को विशेष इत्यपेक्षिते बृहस्पतिः—

तत्पुत्रा विषमसमाः पितृभागहराः स्मृताः ।

इति । तत्पुत्राः प्रमीतपितृकाणामेकैकस्य पुत्रा विषमसमाः न्यूनाधिकसङ्ख्याकाः स्वं स्वं पैतृकं भागमेव लभन्त इत्यर्थः । एतदुक्तं भवति—कस्यचित् प्रमीतस्य पितुरेक एव

पुत्रः, कस्यचित् द्वौ पुत्रौ, कस्यचिद्बहवः तत्र यथैकस्स्व पितृभागहरः तथैव द्वावपि स्वपितृभागमात्रहतौ। तथैव बहवोपि स्वपितृभागमात्रहराः स्मृता इति। यद्यपि पितृभागमात्रहरत्वे-नैकपितृकाणां पितृतो भागकल्पना स्वाम्यानानुरूपा, तथाऽपि वाचनिकत्वादनुमन्तव्या। यदा समुतयोरविभक्तयोर्भ्रात्रोः मध्ये कश्चिद्भ्राता मृतः तत्सुतस्तु पितामहादप्यप्राप्तांशकः, पितामहोपि नासीत्, तदा कात्यायन आह—

अविभक्तेऽनुजे प्रेते तत्सुतं रिक्थभागिनम्।
कुर्वीत जीवनं येन लब्धं नैव पितामहात्॥
लभेतांशं स पित्र्यं तु पितृव्यात्तस्य वा सुतात्।

इति। जीवनं दायधनम्। अनुजग्रहणं मृतभ्रातुरुपलक्षणार्थम्। अस्मिन्नेव विषये यदा प्रमीतस्य सुता बहवः तदाऽप्याह स एव—

स एवांशस्तु सर्वेषां भ्रातॄणां न्यायतो भवेत्।

इति। न्यायतो भवेत् 'समं स्यादश्रुतत्वात्' इति न्यायेन मिथः समभागतया भवेदित्यर्थः। यदपरं स एवाह—

लभेत तत्सुतो वाऽपि निवृत्तिः परतो भवेत्।

इति। तस्यायमर्थः—तस्य विभाज्यधनस्वामिपौत्रस्य सुतोपि वा स्वपितुरभावे तद्भागं लभेत, अथ तस्याप्यभावः किंतु तत्सुतादेरेव विद्यमानत्वं तदा तु मृतभ्रातृसन्ततौ वृद्धप्र पितामहधनभागग्रहणनिवृत्तिरिति। ननु प्रपौत्रस्य प्रपिताम-

द्धनग्रहणमपि न घटते, जन्मना पितृपितामहयोरेव धने पुत्रपौत्रयोरेव स्वत्वसिद्धिनियमात् । सत्यं, यथा पुत्रादेर्मातृधने पिण्डं दत्वा तदैव मातुरूर्ध्वं स्वत्वसिद्धिः जीवनक्रियया भवतीति वक्ष्यते तथा प्रपितामहधने प्रपौत्रस्यापि स्वत्वसिद्धिरिति युक्तमुक्तं 'लभेत तत्सुतो वाऽपि' इति । एवञ्च यो यस्य धनस्वामिनः प्रमीतस्य पितृत्वेन पितामहत्वेन वा पिण्डदाता तस्य तद्धनभागित्वं धनस्वामिनस्संततत्यन्तरे सत्यपि विद्यत इत्यवगन्तव्यम् । अत एव देवलः—

समिच्छन्ति पिण्डानां दायार्थस्य विभाजनम् ।

इति । आचतुर्थाद्दायार्थस्य विभागं पिण्डदातृत्वं च मन्वादय इच्छन्तीत्यर्थः । तथाच स एव—

अविभक्तविभक्तानां कुल्यानां वसतां सह ।
भूयो दायविभागस्स्यादा चतुर्थादिति स्थितिः ॥
तावत्कुल्यास्सपिण्डास्स्युः पिण्डभेदस्ततःपरम् ।

इति । अविभक्तविभक्तानां अविभक्तधनानां विभिन्नसन्ततिजातानां कूटस्थकुल्यानां भूयश्चिरं सहवसतामा चतुर्थात् कूटस्थप्रपौत्रपर्यन्तं दायधनविभागस्स्यादित्यनेकसन्ततिकदायविभागमर्यादेयमित्यर्थः । जीवत्पितृकस्य पुनः पित्रा सह कथं पैतामहधनविभाग इत्यपेक्षिते कात्यायनः—

पैतामहं समानं स्यात्पितुः पुत्रस्य चोभयोः ।

इति । व्यासोपि—

ऋमायाते गृहक्षेत्रे पुत्रपौत्रास्समांशिनः ॥

इति । बृहस्पतिरपि—

द्रव्ये पितामहोपात्ते जङ्गमे स्थावरेऽपि वा ।

सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि ॥

याज्ञवल्क्यः—

भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा ।

तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः ॥

निबन्धः करतया पाचकादिभिः पण्यादिषु गृह्यमाणोऽंशः । सदृशं स्वाम्यं स्यादित्यनयैव वचोभङ्ग्या समांशत्वमेवोक्तमिति मन्तव्यम् । अन्यथा पूर्वोक्तवचनसमानार्थता स्वरसतो युक्ता न स्यात् । एवञ्च जीवद्विभागे पितामहादिधनविषये विषमविभागो न कदाचिदपीति मन्तव्यम् । स्वार्जितधनविषये तु विषमविभागोपि युगान्तरे कदाचिदस्तीति जीवद्विभागप्रकरणेऽभिहितम् । केचित्—यथाश्रुतार्थतामेव चास्य वचनस्याङ्गीकुर्वन्ति । तथाच पौत्रमात्रेच्छयाऽपि पितामहधनविभागो भवति । पितुरिच्छामात्रेण च ऋमायातधनदानादिकं न भवति, तत्र पौत्रस्यापि स्वाम्याभिधानादित्याहुः । तदत्रापि ग्राह्यं आञ्जसत्वात् । 'अर्थे पैतामहे पितृपुत्रयोस्तुल्यं स्वाम्यम्' इति विष्णुनाऽप्युक्तत्वाच्च । अत्रार्थादतुल्यं स्वाम्यं पितृपुत्रयोः पितृधन इति गम्यते । ननु पैतामहे पैतृके च

जन्मनैव स्वाम्यमिति का तत्र तुल्यातुल्यता? उच्यते— पैतामहे धने पितृपुत्रयोस्स्वाम्ये स्वातन्त्र्यमेव तुल्यता। पैतृके तु जीवति पितरि निर्दोषे तस्यैव स्वातन्त्र्यमित्यतुल्यता। अनेनैव भेदेन स्वाम्ये तुल्यातुल्योक्तिः। यत्तु कात्यायनेनोक्तं—

स्वयं चोपार्जिते पित्रा न पुत्रः स्वाम्यमर्हति।

इति, एतत् पुत्रमात्रेच्छया पैतृकधनाविभानर्हतां वचोभङ्ग्या वक्ति, न पुनर्यथाश्रुतार्थपरमित्यनवद्यम्। व्यासेन तु स्पष्टमेवोक्तं—

पैतृके न विभागार्हाः पुत्राः पितुरनिच्छतः।

इति। यत्पुनर्बृहस्पतिनोक्तं—

पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्जितम्।
विद्याशौर्यादिनाऽवाप्तं तत्र स्वाम्यं पितुः स्मृतम्॥

इति, तत्रापि स्वाम्यमित्यनेन वचोभङ्ग्या पितुस्स्वातन्त्र्यमुक्तमिति मन्तव्यम्। स्वातन्त्र्याभिधानस्य प्रयोजनमप्याह स एव—

प्रदानं स्वेच्छया कुर्याद्भोगं कुर्यात्ततो धनात्।
तदभावे तु तनयास्समांशाः परिकीर्तिताः॥

इति। सुतानुमतिमन्तरेणापि पितुस्स्वातन्त्र्यबलाद्दानादिकं जीवद्विभागोक्तविषयविशेषे विषमविभागकल्पनं च युज्यत इति तात्पर्यार्थः। स्वार्जितप्रायं यत्क्रमायातं, यच्च स्वार्जितं पि-

तृधनं तद्विभागे पुत्रैर्बलात्कारो न कार्य इति वचोभङ्ग्याऽऽह कात्यायनः—

स्वशक्त्याऽपहृतं नष्टं स्वयमाप्तं च यद्भवेत् ।
एतत्सर्वं पिता पुत्रैर्विभागे नैव दाप्यते ॥

यत्परैरपहृतं क्रमायातं स्वशक्त्यैवोद्धृतं, यद्विनष्टं वा क्रमायातं स्वेनैव लब्धं, यच्च विद्याशौर्यादिना स्वयमेवार्जितं एतत्सर्वं पिता विभागे पुत्रैर्न दाप्य इत्यर्थः ॥

इति स्मृतिचन्द्रिकायां पुत्रपौत्रादिविभागकल्पनाविषयाणि.

---

## अथ स्त्रीधनविभागविषयाणि.

तत्रादौ तावत् स्त्रीधनभेदानाह मनुः—

अध्यग्न्यध्यावहनिकं दत्तं च प्रीतिकर्मणि ।
भ्रातृमातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम् ॥

अत्र पूर्वार्धस्यार्थः कात्यायनेन विवृतः—

विवाहकाले यत् स्त्रीभ्यो दीयते ह्यग्निसन्निधौ ।
तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्तितम् ॥
यत्पुनर्लभते नारी नीयमाना पितुर्गृहात् ।
अध्यावहनिकं चैव स्त्रीधनं तदुदाहृतम् ॥
प्रीत्या दत्तं तु यत्किञ्चित् श्वश्र्वा वा श्वशुरेण वा ।
पादवन्दनिकं चैव प्रीतिदत्तं तदुच्यते ॥

इति। पादवन्दनिकं पादवन्दनावसरे दत्तम्। भ्रातृमातृपितृप्राप्तं यदाकदा वा जीवनार्थमिति शेषः। षड्विधग्रहणं उत्तरार्धोक्तमेव स्त्रीधनमिति भ्रमापनुत्त्यर्थं कृतं, न पुनरवधारणार्थम्। अत एव—

मातापितृपतिभ्रातृदत्तमध्यग्न्युपागतम्।
आधिवेदनिकाद्यं च ........................ ॥

इति याज्ञवल्क्येनाद्यग्रहणं कृतम्। विष्णुना तु षड्विधादधिकमुक्तं—'पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतं आधिवेदनिकं बन्धुदत्तं शुल्कं अन्वाधेयिकं स्त्रीधनम्' इति। आधिवेदनिकं अधिवेदननिमित्तम्। बन्धुदत्तमित्यत्र बन्धुशब्दः पूर्वोक्तपित्रादिव्यतिरिक्तबन्धुषु गोबलीवर्दन्यायाद्वर्तते। शुल्कान्वाधेयिकयोः स्वरूपं कात्यायनेनोक्तं—

गृहोपस्कारवाह्यानां दोह्याभरणकर्मिणाम्।
मूल्यं लब्धं तु यत्किंचिच्छुल्कं तत्परिकीर्तितम्॥
विवाहात्परतो यत्तु लब्धं भर्तृकुलात् स्त्रिया।
भर्तुः पित्रोस्सकाशाद्वा अन्वाधेयं तु तद्भृगुः॥

इति। मूल्यं गृहोपस्करादिमूल्यम् लब्धं कन्याधनत्वेन वरादिसकाशात् कन्यार्हणोपाधितयेति शेषः। पितृमात्रादिभिः स्त्रियै जीवनार्थदानविषये विशेषमाह स एव—

पितृमातृपतिभ्रातृज्ञातिभिः स्त्रीधनं स्त्रियै॥
यथाशक्त्या द्विसाहस्राद्दातव्यं स्थावरादृते।

यथाशक्ति स्थावरव्यतिरिक्तद्विसाहस्रकार्षापणपर्यन्तं दातव्य मित्यर्थः। व्यासोपि—

द्विसाहस्रः पणो दायः स्त्रियै देयो धनस्य च।

इति। दीयत इति दायः। परः परमः। एवञ्च द्विसहस्र-कार्षापणाधिकमूल्यो धनस्य भागो जीवनार्थमृद्धेनापि न देय इति गम्यते। स्त्रियै देय इत्यत्र प्रत्यब्दमिति विधेयस-ङ्ख्या योग्यताबलाद्गम्यते। प्रत्यब्दमसकृदर्पणे नियमोऽयम्। अनेकाब्देषूपजीवनार्थं सकृदेव दाने तु नायमवधिनियमो नापि स्थावरपर्युदासः। यत्तूत्सवादावेव धार्यमित्येवमाद्युपाधिनाऽल-ङ्कारादिकं दत्तं, यच्च दायादादिवञ्चनार्थं दत्तं, तत् स्त्रीधनं न भवतीत्याह कात्यायनः—

यत्तु सोपाधिकं दत्तं यच्च योगवशेन वा।
पित्रा भ्रात्राऽथ वा पत्या न तत् स्त्रीधनमिष्यते॥

योगवशेन वञ्चनाद्युपायत एवेत्यर्थः। ननूपाधियोगयोरभावेऽपि पित्रादिना दत्तं न स्त्रीधनं भवितुमर्हति,

भार्या पुत्रश्च दासश्च निर्धनास्सर्व एव ते।
यत्ते समधिगच्छन्ति यस्यैते तस्य तद्धनम्॥

इति स्मरणात्। मैवं—पुत्रादिसाहचर्यान्नानेन परमार्थतो निर्धनत्वं भार्याया गम्यते, किंतु धनव्ययादावस्वातन्त्र्यमा त्रम्। तेन यस्य एते तस्यानुज्ञया स्वधनस्यापि विनियोगं

भार्यादयः कुर्युरिति स्मृतिवाक्यतात्पर्यमवसेयम् । अत एव चोक्तं मनुना—

न निर्हारं स्त्रियः कुर्युः कुटुम्बाद्बहुमध्यगात् ।
स्वकादपि च वित्ताद्धि स्वस्या भर्तुरनाज्ञया ॥

स्वतन्त्राननुज्ञया परतन्त्राः स्त्रियः स्त्रीपुंससाधारणवित्तादात्मीयवित्ताद्वा त्यागभोगादिकं न कुर्युरित्यर्थः । अथवा—निर्धनत्वाभिधायकस्मृतिवाक्यस्य शिल्पादिप्राप्तधनविषयत्वं विज्ञेयम् । तदाह कात्यायनः—

प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः ।
भर्तुस्स्वाम्यं तदा तत्र शेषं तु स्त्रीधनं स्मृतम् ॥

अन्यतः सख्यादितः, पित्रादितः प्राप्तस्य स्त्रीधनत्वेन शेषकोटित्वात् ॥

इति स्मृतिचन्द्रिकायां स्त्रीधनभेदाः.

---

## अथ स्त्रीधनकृत्यम्.

तत्र व्यासः—

यच्च भर्त्रा धनं दत्तं सा यथाकाममश्नुयात् ।

इति । चशब्दात् 'सौदायिकं यथाकामं' इति वदन् भर्तृदायादौ स्वातन्त्र्यं दर्शयति । कात्यायनोपि—

सौदायिकं धनं यत्तु स्त्रीणां स्वातन्त्र्यमिष्यते ।
तस्मात्तदानृशंस्यार्थं तैर्दत्तमुपजीवनम् ॥

सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥
भर्तृदायं मृते पत्यौ विन्यसेत् स्त्री यथेष्टतः ।
विद्यमाने तु संरक्षेत्........................ ॥

इति । द्वितीयश्लोकेन सौदायिकाख्यस्त्रीधने पत्यौ विद्यमानेऽप्यविद्यमानेऽपि स्वातन्त्र्यमुक्तं, सदेत्यभिधानात् । भर्तृदायो भर्तृदत्तं, तस्मिन् धने तु तदनन्तरोक्तपादत्रयेणाविद्यमाने पत्यौ स्वातन्त्र्यमुक्तम् । विद्यमाने तु संरक्षेत् भर्तृदत्तं भर्त्राज्ञया विन्यसेदित्यर्थः । सौदायिकपदं तेनैव निरूपितं—

ऊढया कन्यया वाऽपि पत्युः पितृगृहेऽपि वा ।
भ्रातुस्सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥

लब्धं धनमिति शेषः । तथाच व्यासः—

यत्कन्यया विवाहे च विवाहात्परतश्च यत् ।
पितृभर्तृगृहात्प्राप्तं धनं सौदायिकं स्मृतम् ॥

इति । एतद्वचनद्वयेनैतदुक्तं भवति—वाग्दानप्रभृति पतिगृहप्रवेशरूपोत्सवसमाप्तिपर्यन्तं पितृगृहे पतिगृहे वा पितृमातृपक्षत एव स्त्रिया लब्धं यौतकादि धनं सौदायिकशब्दाभिधेयमिति। ननु 'यौतकादि तु यद्देयं सुदायः' इति निघण्टुपाठात् कथं सौदायिकशब्दोऽत्र प्रयुक्तः? स्वार्थतद्धितान्ततयेत्यनवद्यम् । भर्तृदाये तु मृते भर्तरि न स्थावरे स्वातन्त्र्यम् । तथाच नारदः—

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् ।
सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते ॥

भर्तरि मृतेऽपि न तद्दत्तस्थावरे स्वातन्त्र्यमित्यर्थः । यथाकाममित्यनेन स्वातन्त्र्यमुक्तम् । एवञ्च सौदायिके स्थावरेतरप्रीतिदत्ते च स्त्रीणां स्वातन्त्र्यमन्यत्र तु स्त्रीधनेऽप्यस्वातन्त्र्यमिति मन्तव्यम् । पुरुषाणां तु स्त्रीधने सर्वत्रास्वातन्त्र्यमेव । यदाह कात्यायनः—

न भर्ता नैव च सुतो न पिता भ्रातरो न च ।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः ॥

स्वामित्वाभावादित्यभिप्रायः । अत एवानन्तरमुक्तं तेनैव—

यदि ह्येकतरोऽप्येषां स्त्रीधनं भक्षयेद्बलात् ।
सवृद्धिकं प्रदाप्यः स्याद्दण्डं चैव समाप्नुयात् ॥
तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्वकम् ।
मूल्यमेव प्रदाप्यः स्यात् यद्यसौ धनवान् भवेत् ॥

इति । धनवान्यदि भवेदित्यभिधानात् मूल्यमात्रमपि निर्धनो न दाप्य इत्यर्थात् गम्यते । अनुज्ञाप्य भक्षणेऽपि मूल्यप्रदानाभिधानात् भर्त्रादीनामस्वातन्त्र्यमवगम्यते, न पुनः पारतन्त्र्यमात्रम् । एवञ्च विवाहेन भार्याया भर्तृधने नित्यपारतन्त्र्यं स्वामित्वं संपद्यते, न पुनर्भर्तुः भार्याधने तादृशमपीत्यवगन्तव्यम् । अत एव भर्तुः स्त्रीधनभोगेऽप्यनर्हतामाह देवलः—

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ।
भोक्त्री तत्स्वयमेवेदं पतिर्नार्हत्यनापदि ॥
वृथा मोक्षे च भोगे च स्त्रियै दद्यात्सवृद्धिकम् ।

इति । वृत्तिः वर्तनार्थं पित्रादिना दत्तम् । लभ्यत इति लाभः । एतदुक्तं भवति—पार्वत्यादिप्रीत्यर्थं व्रतादौ स्त्रिया यल्लभ्यते तदपि स्त्रीधनमिति । स्वयमेवेत्येवकारः स्वापत्यानां व्युदासार्थः । भर्तृव्युदासस्य पतिर्नार्हतीत्यनेन सिद्धत्वात् । भर्तुर्व्युदासे ततो बहिरङ्गभ्रात्रादिव्युदासस्य दण्डापूपन्यायसिद्धत्वात् । वृथा आपदं विनेत्यर्थः । मोक्षस्त्यागः । स्त्रियाऽननुज्ञातबलात्काररहितत्यागभोगविषयमेतत्, सवृद्धिकप्रदानस्य दण्डासहितस्याभिधानात् । पतिर्नार्हतीत्यनापदीति वदन् आपदि तु पतिरेवार्हति स्त्रीधनं भोक्तुं नान्य इति दर्शयति । अत एव—

पुत्रार्तिहरणे वाऽपि स्त्रीधनं भोक्तुमर्हति ।

इत्यनन्तरवचने भोक्तुमर्हतीत्यत्र पतिरिति शेषो द्रष्टव्यः । पुत्रग्रहणं स्वकुटुम्बोपलक्षणार्थम् । आर्तिः धनालाभनिमित्ततो दुरपनोदाऽत्र विवक्षिता । तस्याः हरणे परिहरणे । वाशब्दादन्यत्रापि धनालाभनिमित्ततो दुष्परिहरे महासङ्कटे स्त्रीधनमननुज्ञातमपि पतिर्भोक्तुं त्यक्तुं वाऽर्हतीत्युक्तम् । ननु परधनत्यागभोगे परस्य स्वाम्यनुज्ञया विना कथमर्हता? उच्यते—स्वाम्यनुज्ञाभावेऽपि पूर्वोक्तविषये स्वाधीनजनस्वाम्यके

तु स्त्रीधने यथेष्टविनियोगानर्हेऽप्यापदपनोदकत्यागभोगादावर्हताऽस्तीत्यस्मादेव वचनात् कल्प्यत इत्यदोषः। अत्र याज्ञवल्क्यः—

दुर्भिक्षे धर्मकार्ये च व्याधौ संप्रतिरोधके ।
गृहीतं स्त्रीधनं भर्ता न स्त्रियै दातुमर्हति ॥

धर्मकार्ये नित्ये नैमित्तिके च काम्येऽपि । क्वचिच्छान्तिके ग्रहयज्ञादौ । संप्रतिरोधके धनदानं विना निवारयितुमशक्ये धनिकासेधादौ । गृहीतं स्त्रीधनं, गत्यन्तराभावेनेति शेषः । भर्ता प्रतिदानसमर्थधनाभावेन दरिद्रः इति शेषः । सति संभवे प्रतिदानस्यात्रावश्यकत्वात् । अत एव प्रतिदानस्य क्वचिदेवावश्यकत्वमुक्तं कात्यायनेन—

व्याधितं व्यसनस्थं च धनिकैर्वोपपीडितम् ।
ज्ञात्वा निसृष्टं यत्प्रीत्या दद्यादात्मेच्छया तु सः ॥

ज्ञात्वा स्त्रियेति शेषः । निसृष्टं अनुज्ञातम् । यद्यपीदं वचनं 'न भर्ता नैव च सुतः' इत्यादिवचनत्रयानन्तर्यतो भर्त्रादिविषयमिति प्रतिभाति, तथाऽपि—

अथ चेत् स द्विभार्यस्स्यान्न च तां भजते पुनः ।
प्रीत्या निसृष्टमपि चेत् प्रतिदाप्यः स तद्बलात् ॥
ग्रासाच्छादनवासानामाच्छेदो यत्र योषितः ।
तत्र स्वमाददीत स्त्री........................ ॥

इत्युपरितनवचनपर्यालोचनया भर्त्रैकविषयमिति मन्तव्यम् । या

पुनरतिदुष्टा स्त्री सा स्वधनमपि विनियोक्तुं नार्हतीत्याह स एव—

अपकारक्रियायुक्ता निर्मर्यादाऽर्थनाशिका ।
व्यभिचाररता या च स्त्रीधनं न च साऽर्हति ॥

स्वेच्छया विनियोक्तुमिति शेषः । भर्त्राऽऽश्रुतं स्त्रीधनं त्वगृहीतमपि देयम्,

भर्त्रा प्रतिश्रुतं देयमृणवत् स्त्रीधनं सुतैः ।

इति तेनैवोक्तत्वात् । सुतग्रहणं पौत्रस्याप्युपलक्षणमृणवदित्यभिधानात् । अनेनापि स्त्रीधने सुतादीनां नास्ति स्वाम्यमिति गम्यते । ततश्च स्त्रीधने जीवद्विभागो नास्त्येव स्त्र्येकस्वामिकत्वात् । अत एव मनुः—

जीवन्तीनां तु तासां ये तद्धरेयुस्स्वबान्धवाः ।
तान् शिष्याच्चोरदण्डेन धार्मिकः पृथिवीपतिः ॥
पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत् ।
न तं भजेरन् दायादाः भजमानाः पतन्त्यधः ॥

इति । धृतः सातत्येनेति शेषः । सातत्येन धृते योगोपाधिराहित्येन स्त्रीधननिश्चयो भवति । पूर्वार्धस्य च निश्चितस्त्रीधनकथनार्थत्वात् सातत्येनेति शेषेण भाव्यमिति गम्यते । दायादा दुहित्रादयः ।

इति स्मृतिचन्द्रिकायां स्त्रीधनकृत्यम्.

---

## अथ स्त्रीद्वाराऽऽगतधनविभागः.

तत्र तावदागमनप्रकारमाह मनुः—

अन्वाधेयं च यद्दत्तं पत्या प्रीतेन चैव यत् ।
पत्यौ जीवति वृत्तायां प्रजायास्तद्धनं भवेत् ॥

अन्वाधेयं विवाहादूर्ध्वं स्त्रिया भर्तृकुलात् पितृकुलाच्च लब्धम् ।

विवाहात्परतो यत्तु लब्धं भर्तृकुलात् स्त्रिया ।
अन्वाधेयं तु तद्द्रव्यं लब्धं पितृकुलात्तथा ॥

इति कात्यायनस्मरणात् । विवाहात्परत इत्यनेनान्वाधेयपदस्थानुशब्दार्थो विवृतः । लब्धमित्यनेन तत्रस्थाधेयशब्दार्थ इति मन्तव्यम् । यदन्वाधेयं, यच्च प्रीतेन पत्यैव दत्तं तद्द्विविधं स्त्रीधनं धनस्वामिन्यां मृतायामनन्तरक्षणवर्तिन्याः स्त्रीपुंसप्रजायास्स्वं भवेदित्यर्थः । एतदुक्तं भवति—सप्रजस्त्रीधनं धनस्वामिमरणानन्तरक्षणजीवनशालित्वेऽपि न पत्युर्भवति, किंतु तच्छालिन्याः प्रजाया इति । एवञ्चास्मादिदमवगम्यते—धनस्वामिन ऊर्ध्वं धनागमने धनस्वामिमरणानन्तरक्षणजीवनक्रियैव धनग्रहणाधिकारितया धर्मशास्त्रप्रतिपादितजनस्य स्वत्वापत्तिकारणमिति । तेन यत्रयत्र धनस्वामिन ऊर्ध्वमेव धनागमनमपुत्रस्वर्यातधनादौ तत्रतत्र रिक्थग्राहिणस्स्वत्वापत्ताविदमेव कारणं कल्प्यम् । प्रजाया इति सामान्येनाभिधानादत्र स्त्रीपुंसप्रजाया उक्तद्विविधरिक्थग्रहणाधिकारः समसमय एव ज्ञायत इति । स्वत्वापत्तिरपि तथैव, न पुनः पूर्वं

भगिनीनां तदभावे भ्रातॄणां भवतीति मन्तव्यम् । विभागोऽप्यत्र भ्रातृभगिनीकर्तृको विज्ञेयः । एवञ्च यदुक्तं—

जनन्यां संस्थितायां तु सर्वे सर्वे सहोदराः ।
भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः ॥

इति, तत् स्वोक्तान्वाधेयादिद्विविधरिक्थविषयमिति मन्तव्यम् । अस्मिन्नेव विषये विशेषमाह बृहस्पतिः—

स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी ।
अप्रत्ता चेत्समूढा तु लभते सा न मातृकम् ॥

अपत्यानां पुत्रापत्यानाम् । वचनद्वयेऽपीतरेतरयोगे चशब्दः, तेनात्रेतरेतरयुक्तानां विभागकर्तृत्वं विज्ञेयम् । अत एव कात्यायनः—

भगिन्यो बान्धवैस्सार्धं विभजेरन् सभर्तृकाः ।

इति । बान्धवैस्सहोदरैर्भ्रातृभिरित्यर्थः । सभर्तृका इति विशेषणं विधवानिवृत्त्यर्थम् । न पुनः कन्यानिवृत्त्यर्थं, पूर्वोक्तवचनविरोधात् । सहोदरभ्रातृभिस्सार्धं भागहरा भगिन्यो यास्ताः प्रकृत्याह मनुः—

यास्तासां स्युर्दुहितरस्तासामपि यथार्हतः ।
मातामह्या धनात्किञ्चित्प्रदेयं प्रीतिपूर्वकम् ॥

यथार्हतः शीलोपयोगदारिद्र्याद्यपेक्षयेत्यर्थः । ननु दुहितृदुहितॄणां भ्रातृभगिनीसद्भावे मातामहीधने स्वामित्वाभावात् किमिति किञ्चित् प्रदीयते? उच्यते—यथा पैतृके धने कन्यानां दाया

र्हत्वाभावेऽपि वचनात् ताभ्यस्तुरीयांशो भ्रातृभिर्दीयते, तथाऽत्र स्वामित्वाभावेऽपि भ्रातृभगिनीभिर्वचनबलात् किञ्चिद्दीयते। इयांस्तु भेदः—तत्र दायानर्हत्वेऽपि जन्मना स्वाम्यमस्तीत्यभिसन्धाय 'पतितास्स्युरदित्सवः' इति दोषकीर्तनादवश्यं दातव्यं, इह तु स्वामित्वमपि नास्तीत्यभिसन्धाय प्रीतिपूर्वकमिति स्ववचनात् प्रीतौ सत्यां देयं—नो चेन्न देयमिति। अन्यत् किञ्चिन्मातृकं रिक्थमप्रत्तानामेव न पुनस्सर्वासां दुहितृसोदरप्रजानां भवतीत्याह स एव—

मातुस्तु यौतकं यत्स्यात् कुमारीभाग एव सः।

इति। यौतकं समानासनोपवेशनप्रत्यासन्नयोर्वधूवरयोर्विवाहादौ येनकेनचित्समर्पितं धनम्,

तद्वधूवरयोर्देयं युतयोर्यौतकं मतम्।

इति निघण्टुकारोक्तत्वात्। अन्योन्यान्वितयोर्वधूवरयोर्यद्देयं तद्धनं युतयोरिदमिति व्युत्पत्त्या यौतकं मतमित्यर्थः। देवस्वामी तु—पितृगृहाल्लब्धं भर्तृगृहाल्लब्धापेक्षया पृथक्धनतया मातुर्यौतकं मातृधनं मातुरेवेत्याह, तच्चिन्त्यं पक्षद्वयस्यापि कल्पनामात्रत्वात्। कुमारीणामनेकत्वे 'समं स्यादश्रुतत्वात्' इति न्यायेन यौतकविभागः कार्यः, भागविशेषास्मृतेः। एवमुक्तं त्रिविधव्यतिरिक्तं मातृकं रिक्थं कुमारीणां अकुमारीणामप्यप्रतिष्ठितानामेव, न पुनस्सर्वासां दुहितॄणामित्याह गौतमः—

'स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानां च'

इति। अध्यग्न्याद्यादि स्त्रीधनं कुमारीणामप्रतिष्ठितानामनूढानां च दुहितॄणामेवेत्यर्थः। ततश्च तद्धनं ता एव दुहितरो विभजेरन्नित्यभिप्रायः। अप्रतिष्ठिता अनपत्याः निर्धनाः दुर्भगाः विधवा वा। एवमपरार्कानुसारेण गौतमवचनं व्याख्यातम्। अस्य विज्ञानेश्वरकृता व्याख्या हेया, स्वबुद्धिमात्रेणाध्याहारादिकरणात्। अस्मिन्नेव विषये विशेषमाह याज्ञवल्क्यः—'मातुर्दुहितरश्शेषमृणात्' इति। मातृऋणापाकरणावशिष्टं मातृकं रिक्थं मातुरूर्ध्वं समं अप्रत्ताप्रतिष्ठितदुहितरो विभजेरन्नित्यर्थः। एवम्भूतदुहित्रभावेऽप्याह स एव—'ताभ्य ऋतेऽन्वयः' इति। एतदेव नारदस्स्पृष्टयति—'अभावे दुहितॄणां तदन्वयः' इति। अप्रत्तदुहितृष्वन्वयासंभवात् प्रत्तदुहित्रन्वय इति पारिशेष्यादवगम्यते। स्त्रीगामिधनत्वात् स्त्रीरूपान्वय इति च गम्यते। प्रत्तदुहितॄणां स्त्रीरूपान्वयाभावे दौहित्राणां यथा स्यादिति सामान्येन तदन्वय इत्युक्तम्। दौहित्राणामप्यभावे तु—

विभजेरन् सुताः पित्रोरूर्ध्वं रिक्थमृणं समम्।

इति याज्ञवल्क्यवचनतः मातुरूर्ध्वं मातृकं रिक्थं मातृकृतं च ऋणं समं सुता विभजेरन्नित्यवगमात् सुतानां मातृऋणधनविभागकर्तृत्वं सिद्धं, अन्यथा 'विभजेरन् सुताः पित्रोः' इत्येकशेषोक्तिरपार्थिका स्यात्। सुतानामप्यभावे पौत्राणां पितामहीऋणधनभोक्तृत्वं 'पुत्रपौत्रै ऋणं देयं' इति पौत्राणामपि पितामहीकृतऋणापाकरणाधिकारात्, 'रिक्थभाजः

ऋणं प्रकुर्युः' इति स्मरणाच्च। भिन्नपितृकाणां विषमसङ्ख्यानां पौत्राणां समवाये पितामहीऋणधनविभागः पितामहधनविभागवत् पितृतो भागकल्पना, एवमेव भिन्नमातृकाणां दौहित्राणां दौहित्रीणां च विषमसंख्यानां समवाये मातृतो भागकल्पना। अत्र 'प्रतिमातृ स्ववर्गे भागविशेषः' इति गौतमस्मरणात्। यत्तु कात्यायनेनोक्तं —

दुहितॄणामभावे तु रिक्थं पुत्रेषु तद्भवेत्।

इति, तदप्रत्तदुहितृविषयम्। तत्र ऋतुकालभर्तोरसम्भवेनान्वयासम्भवात्। एवञ्च कात्यायनेनोक्तं यौतकविषयमिति मन्तव्यम्। भार्याया ऊर्ध्वमन्वयाभावे भर्तरि भार्यारिक्थं भवेत्।

अप्रजस्त्रीधनं भर्तुः ब्राह्मादिषु चतुर्ष्वपि।

इति याज्ञवल्क्यस्मरणात्। अपिशब्दात् गान्धर्वेऽपि। अत एव मनुः—

ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम्।
अतीतायामप्रजसि भर्तुरेव तदिष्यते॥

उक्तपञ्चविवाहेषु संस्कृतायाः भार्याया यद्धनं तत्तस्याः दुहित्रादिपौत्रान्तधनहारिसन्ततेरभावे सत्यतीतायाः भर्तुरेवेष्यते, न पुनर्मात्रादीनां बन्धूनामित्यर्थः। यत्तु कात्यायनेनोक्तं—

बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत्।

इति, तत् उक्तपञ्चविधेतरविवाहसंस्कृतस्त्रीधनविषयम्।

तथाच स एव—

आसुरादिषु यल्लब्धं स्त्रीधनं पैतृकं स्त्रियाः ।
अभावे तदपत्यानां मातापित्रोस्तदिष्यते ॥

पैतृकं मातापितृसकाशाद्दानेनागतम् । तदपत्यानामभावे आसुरादिषु संस्कृतस्त्रियामुत्पन्नापत्यानामभावे । अपत्यग्रहणं पूर्वोक्तदौहित्रादिपौत्रान्तानां स्त्रीधनहारिणामुपलक्षणार्थम् । यत्तु यमेनोक्तं—

आसुरादिषु यद्द्रव्यं विवाहेषु प्रदीयते ।
अप्रजायामतीतायां पितैव तु धनं हरेत् ॥

इति, तत्र प्रदीयते पित्रेति शेषो द्रष्टव्यः । ततश्च न पूर्वोक्तवचनविरोधः । एवं पितृव्यभ्रातृमातुलादिबन्धुदत्तं स्त्रीधनं सति सम्भवे पितृव्यादिबन्धूनां, अन्यथा भर्तुरेवेत्यासुरादिष्ववगन्तव्यम् । किञ्चिद्बन्धुदत्तं न दातुर्भवतीत्याह गौतमः— 'भगिनीशुल्कः सोदर्याणामूर्ध्वं मातुः' इति, शुल्काख्यं स्त्रीधनं पूर्वतरप्रकरणे निरूपितम्, तद्दातारो वरादयः, तेषां दातृत्वेऽपि तद्धनं न भवति, किंतु धनस्वामित्वं सोदरभ्रातॄणां, तेषामभावे तन्मातुर्भवतीत्यर्थः । यत्पुनरर्हतीत्यनुवृत्तौ शङ्खेनोक्तं—'स्वं च शुल्कं वोढा' इति तत् अपरिसमाप्ते विवाहे सति मृतायां वध्वां द्रष्टव्यम् । 'मृतायां दत्तमादद्यात्' इति याज्ञवल्क्यस्मरणात् । दत्तं शुल्कमलङ्कारादिकं वा आ-

दद्यात् वोढेति शेषः । कन्याधनं प्रत्याह बोधायनः—

रिक्थं मृतायाः कन्यायाः गृह्णीयुस्सोदरास्स्वयम् ।
तदभावे भवेन्मातुस्तदभावे पितुर्भवेत् ॥

गौणमातृपरिगणनपूर्वकं धनहर्तृनाह बृहस्पतिः—

मातृष्वसा मातुलानी पितृव्यस्त्री पितृष्वसा ।
श्वश्रूः पूर्वजपत्नी च मातृतुल्याः प्रकीर्तिताः ॥
यद्यासामौरसो न स्यात्सुतो दौहित्र एव वा ।
तत्सुता वा धनं तासां स्वस्रीयाद्यास्समाप्नुयुः ॥

इति । स्वस्रीयो धनस्वामिन्या भागिनेयः स्वमातृष्वसुर्धनमवाप्नुयात् । एवमाद्यशब्दपरिगृहीताः यथाक्रमेण स्वकीयमातृतुल्यायाः धनं समाप्नुयुः । एवमेव सपत्नीसन्तानोऽप्युपमातृधनं तत्सन्तानतद्भर्त्राद्यभावे सत्यवाप्नुयात् । क्वचिद्भर्त्रादिसद्भावेऽपि सपत्नीनां सन्तानविशेषस्योपमातृधनभाक्त्वमाह मनुः—

स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथंचन ।
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥

पित्रा दत्तमिति वदन् पूर्वोक्तधनहर्तृभर्तृपितृप्रभृतिषु सत्स्वपीति दर्शयति । भर्तृविजातीयस्त्रीधनं तत्सन्तानाभावे सति भर्तृसजातीयस्त्र्यन्तरकन्या तत्सन्ततिर्वा हरेदित्यर्थः । एवञ्च भर्तृसजातीयानेकस्त्रीषु सन्तानशून्याया मृताया धनं स्त्र्यन्तरकन्या तत्सन्ततिर्वा न हरेत् । किंतु ब्राह्मादिषु भर्तै-

व, शेषेषु धनदातैवेत्यनुसन्धेयम्। उक्तार्थोपसंहारस्तु कात्यायनेन कृतः—

स्त्रीधनस्येति धर्मोऽयं विभागश्च प्रकल्पितः।

इत्येवं निरूपितो धर्मोऽयं प्रकल्पितश्च विभागः स्त्रीधनस्याध्यवसेय इत्यर्थः॥

इति स्मृतिचन्द्रिकायां स्त्रीद्वाराऽऽगतधनविभागः.

---

## अथ गौणपितृद्वाराऽऽगतधनविभागः.

तत्र मनुः—

न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः।

इति। ननु—

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः।

इति तेनैवोक्तत्वात् पितृरिक्थे भ्रात्रादीनां न प्रसक्तिरिति कथं तत्प्रतिषेधोऽवकल्पते। न च प्रनष्टपुत्रविषयेऽवकल्पत इति वाच्यं, पुत्रा रिक्थहरा इति विधानानवकल्पनात्। उच्यते—'पुत्रा रिक्थहराः पितुः' इत्यत्र पितृपुत्रशब्दौ गौणौ। एवञ्चायमर्थः—क्षेत्रजादिपुत्राः क्षेत्रस्वाम्यादिपितृरिक्थहरा न तद्भ्रात्रादय इति। क्षेत्रजादिपुत्रा अपि तेन दर्शिताः—

यस्तल्पजः प्रमीतस्य क्लीबस्य पतितस्य वा।

स्वधर्मेण नियुक्तायां स पुत्रः क्षेत्रजः स्मृतः॥

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि।

सदृशं प्रीतिसंयुक्तं स ज्ञेयो दत्त्रिमस्सुतः ॥
सदृशं तु प्रकुर्याद्यं गुणदोषविचक्षणम् ।
पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः ॥
उत्पद्यते गृहे यस्तु न विज्ञायेत कस्यचित् ।
स गृहे गूढ उत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥
मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा ।
यं पुत्रं परिगृह्णीयादपविद्धस्तु स स्मृतः ॥
पितृवेश्मनि यं पुत्रं जनयेत् कन्यका रहः ।
तं कानीनं वदेन्नाम्ना वोढुः कन्यासमुद्भवम् ॥
या गर्भिणी संस्क्रियते ज्ञाताऽज्ञाताऽपि वा सती ।
वोढुस्स गर्भो भवति सहोढ इति चोच्यते ॥
क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात् ।
स क्रीतकः सुतस्तस्य सदृशोसदृशोपि वा ॥
या पत्या वा परित्यक्ता विधवा वेच्छयाऽऽत्मनः ।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते ॥
मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात् ।
आत्मानं स्पर्शयेद्यस्मै स्वयं दत्तस्तु स स्मृतः ॥
यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् ।
स पारयन्नेव शवस्तस्मात् पारशवस्स्मृतः ॥
क्षेत्रजादीन् सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥

इति। अद्भिरिति पुत्रदानविधानस्योपलक्षणार्थम्। तद्विधानं चास्माभिर्दत्ताप्रदानिकपदे दर्शितम्। आपदि दुर्भिक्षादौ, अथवा ग्रहीतुरापदि पुत्राभावे। सदृशं दातुः प्रतिग्रहीतुश्च सवर्णम्। प्रीतिसंयुक्तं न लोभादिसंयुतम्। प्रकुर्यात् अनाथं पुत्रत्वेन स्वीकुर्यात्। सदृशोऽसदृशोऽपि वेत्यत्र गुणापेक्षयेति शेषः। गृहे भार्यया उत्सृष्टं दुष्टमुहूर्तजत्वादिहेतुतो न पातित्यतः। पारयन्नेव शवः जीवन्नेव शवः। पुत्रप्रतिनिधीन् गौणपुत्रान्। क्रियालोपात् औरसाभावे तत्कर्तृकश्राद्धादिक्रियालोपात् बिभ्यतो मनीषिण आहुरिति सम्बन्धः। एवं निरूपितगौणपुत्राणां सर्वेषां युगान्तरे पुत्रत्वेन परिग्रहः, कलौ तु दत्तस्यैव—

दत्तौरसेतरेषां तु पुत्रत्वेन परिग्रहः।

इति कलेरादौ धर्मगुप्त्यर्थं महात्मभिः दत्तकौरसेतरेषां पुत्रत्वेन परिग्रहनिवारणात्। पुत्रिकाकरणमप्यस्मादेव वाक्यात् कलौ निवारितं, दत्तौरसेतरत्वात् पुत्रिकायाः। एवञ्च कलावौरसपुत्रपौत्रयोरभावे दत्तक एव पुत्रो गौणो भवति नान्य इत्यनुसन्धेयम्। मुख्योऽपि पुत्रः कलावसवर्णभार्याभवो नास्ति, असवर्णकन्याविवाहनिषेधात्। तथाच धर्मवाक्यं—

कन्यानामसवर्णानां विवाहश्च द्विजन्मभिः॥

इति। अत्रापि कलेरादौ धर्मगुप्त्यर्थं महात्मभिः निवारित इति वाक्यशेषो द्रष्टव्यः। अत एवास्माभिरसवर्णापुत्राणां

दत्तकेतरगौणपुत्राणां पुत्रिकायास्तत्पुत्रस्य च विभागविधयो न निबध्यन्ते, सम्प्रत्यननुष्ठेयतया वृथा ग्रन्थविस्तरापत्तेः। यत् पुनर्मनुनोक्तं—

भ्रातृणामेकजातानामेकश्चेत् पुत्रवान् भवेत्।
सर्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत्॥

इति, तन्न परमार्थतो भ्रात्रन्तरस्यापि तेनैव पुत्रेण पुत्रवत्त्वमाचष्टे, भ्रातृपुत्रसद्भावेऽपि भ्रात्रन्तरस्यापुत्रत्वावगमात्। अत एव याज्ञवल्क्येन 'पत्नी दुहितरः' इत्यादिना भ्रातृपुत्रसद्भावेऽपि 'स्वर्यातस्य ह्यपुत्रस्य' इत्युक्तम्। भ्रातृपुत्रस्य च पत्नीदुहितृपितृभावे सत्यपुत्रधनभागित्वं च अत एव तत्रोक्तम्। एवं तर्हि मनुवचनस्य का गतिः? उक्तमस्माभिश्श्राद्धाधिकारनिरूपणप्रकरणे भ्रात्रन्तराणां पुत्रवत्त्वोक्तिः ग्रामस्य तात इतिवदौरसप्रशंसार्थेति। यत्तु सङ्ग्रहकारेणोक्तं—

यद्येकजाता बहवो भ्रातरस्तु सहोदराः।
एकस्यापि सुते जाते सर्वे ते पुत्रिणः स्मृताः॥
बह्वीनामेकपत्नीनामेष एव विधिस्स्मृतः।
एका चेत्पुत्रिणी तासां सर्वासां पिण्डदस्तु सः॥

इति, तस्य पूर्वोक्तेन सहाविरोधाय देवस्वामिना तात्पर्यार्थ उक्तः, 'उभयत्र नान्यः प्रतिनिधिः कार्यः' इत्यन्तेन ग्रन्थेन। उभयत्रापि 'यद्येकजाताः' इत्यादिवचनद्वयेऽपि

भ्रातृसुते सपत्नीसुते पुत्रप्रतिनिधितया कथञ्चित्कर्तुं शक्ये सति तदन्यो न प्रतिनिधिः कार्य इति तात्पर्यार्थो बोद्धव्य इत्यर्थः। एवञ्च गौणपितृद्वारा धनागमनं कलौ दत्तकाख्यं पुत्रं प्रत्येव। अत्र मनु—

उपपन्नो गुणैस्सर्वैः पुत्रो यस्य तु दत्त्रिमः।
स हरेतैव तद्रिक्थं संप्राप्तोप्यन्यगोत्रतः॥

अपिशब्दात्सगोत्रतः संप्राप्तोपि। अत्र तृतीयपादार्थो देवस्वामिना विवृतः—'तदीयं सर्वं रिक्थं गोत्रं च हरेतैव' इति। एवञ्च पुत्रत्वापादकक्रिययैव दत्त्रिमस्य प्रतिग्रहीतुर्धने स्वत्वं तत्सगोत्रत्वं च भवतीति मन्तव्यम्। दातुर्धने तु दानादेव पुत्रत्वनिवृत्तिद्वारा दत्त्रिमस्य स्वत्वनिवृत्तिर्दातुर्गोत्रनिवृत्तिश्च भवतीति चावगन्तव्यम्। अनेनैवाभिप्रायेणोक्तं—

गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमस्सुतः।

इति। प्रतिग्रहीतृरिक्थग्रहणेऽपि सर्वं क्वचिद्विषये न हरेत्। तथाच वसिष्ठः—'तस्मिंश्चेत्प्रतिगृहीत औरसपुत्र उत्पद्येत चतुर्थभागी स्यात्' इति। विष्णुः—

अनेकपितृकाणां तु पितृतोंऽशस्य कल्पना।
यद्यस्य पैतृकं रिक्थं स तद्गृह्णीत नेतरः॥

यत्र भ्रातॄणामेकस्यौरसः पुत्र इतरेषां क्षेत्रजादयः यदा ते अविभक्तधना मृताः तदा तेषामौरसादीनां मुख्यगौणपितृ-

द्वारा पैतामहद्रव्यविभागकल्पना कर्तव्या । तत्राप्यौरसोत्पत्तौ चतुर्थांशभागित्वमेव, इतरेषां पूर्वन्यायानपायात् । यत्र भ्रातरः केचिज्जीवन्ति केचिन्नष्टाः तत्राप्ययमेव न्याय इति ॥

इति स्मृतिचन्द्रिकायां गौणपितृद्वाराऽऽगतधनविभागः.

---

## अथ पुत्रद्वाराऽऽगतधनविभागः.

तत्र मनुः—

पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा ।

इति । अक्षरार्थो व्यक्तस्तात्पर्यार्थस्त्वव्यक्तः सङ्ग्रहकारेण दर्शितः—

अशेषात्मजहीनस्य मृतस्य धनिनो धनम् ।
केनेदानीं ग्रहीतव्यमित्येतदधुनोच्यते ॥

अस्यायमर्थः—मुख्यगौणपुत्रविहीनस्य धनवतो मृतस्य धनमिदानीं तन्मरणानन्तरं केन जनेन हर्तव्यमित्याकाङ्क्षायां पित्रादिना हर्तव्यमित्येतत् अधुना पित्राद्यपेक्षयेह बहुविधोपकारकासन्नजनाभावे मनुनोच्यत इति । अत एव पित्रादिभ्यो गौणपुत्राणामासन्नतरत्वं ज्ञात्वा सङ्ग्रहकारेण 'पिता हरेदपुत्रस्य' इत्यस्य अशेषात्मजहीनस्येति तात्पर्यमुक्तं, तदनवद्यमेव । किंतु यथा गौणपुत्राणां दृष्टादृष्टोपकारकत्वेन पित्राद्यपेक्षयाऽग्रेसरत्वात्तदपेक्षयाऽऽसन्नतरत्वं, तथा पत्न्या अपि दृष्टादृष्टोपकारकरणे श्रुतिस्मृत्यादिपर्यालोचनया पित्राद्यपेक्ष-

याऽग्रेसरत्वात्तदपेक्षयाऽऽसन्नतरत्वमस्तीति पत्न्या अप्यभावे 'पिता हरेदपुत्रस्य' इत्येतन्मनुनोच्यत इत्येवं तात्पर्यमूह्यते । अत एव दृष्टादृष्टोपकारकत्वलक्षणसम्बन्धेनान्यापेक्षया पत्न्याः प्रत्यासन्नत्वमभिधाय बृहस्पतिना गौणपुत्राभावे तिष्ठत्स्वपि पित्रादिषु सकुल्यान्तेषु पत्न्या एव पतिधनभागित्वं दर्शितम्—

आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः ।
शरीरार्धं स्मृता भार्या पुण्यापुण्यफले समा ॥
यस्य नोपरता भार्या देहार्धं तस्य जीवति ।
जीवत्यर्धशरीरेऽर्थं कथमन्यस्समाप्नुयात् ॥
कुल्येषु विद्यमानेषु पितृभ्रातृसनाभिषु ।
असुतस्य प्रमीतस्य पत्नी तद्भागहारिणी ॥

अत्र द्वितीयार्धेन दृष्टादृष्टोपकारसंपादने पुत्रादिभ्यः पत्न्याः प्रत्यासन्नत्वमुक्तम् । अवयवार्थस्तु—आम्नाये वेदे 'अर्धो वा एष आत्मनः । यत्पत्नी' इत्येवमादौ । आत्मनो देहस्येत्यर्थः । एतदुक्तं भवति—देहार्धं यथा अर्थात् अर्धं दृष्टादृष्टोपकारि तथा जायाऽपीति । स्मृतितन्त्रे धर्मशास्त्रे—

पतत्यर्धं शरीरस्य यस्य भार्या सुरां पिबेत् ।
पतितार्धशरीरस्य निष्कृतिर्न विधीयते ॥

इत्येवमादौ । लोकाचारे लोकानुसार्यर्थशास्त्रे

शरीरार्धमयीं भार्यां को विहास्यति पण्डितः ।

इत्येवमादौ। पुण्यापुण्यफले स्मार्तकर्मणि सहाधिकारात्। अ सुतस्य मुख्यगौणसुतहीनस्य। पत्नी यज्ञाधिकारापादकप्रशस्त-ब्राह्मादिविवाहसंस्कृता 'पत्युर्नो यज्ञसंयोगे' इति पाणि-निस्मरणात्। नेतरा, पत्नीपदेन व्यावर्तितायाः तस्याः पत्नी-त्वायोगात्। तथाच स्मृत्यनन्तरं—

क्रयक्रीता तु या नारी न सा पत्न्यभिधीयते।
न सा दैवे न सा पित्र्ये दासीं तां कवयो विदुः॥

पत्नीत्वाभावे केवलदृष्टोपकारत्वं स्त्रिया इति दर्शयितुं दासीं विदुरित्युक्तम्। एवञ्च पित्र्यादिकर्मण्यर्हताऽपि पतिभागहा-रित्वे प्रयोजिकेति पत्नीग्रहणेन ज्ञापितम्। अत एव श्रौत-स्मार्तादिकर्मणि पातिव्रत्येन परिरक्षितताया अधिकारार्हाया एव पत्न्याः पतिधनलाभ इत्याह प्रजापतिः—

पूर्वं प्रमीताग्निहोत्रं मृते भर्तरि तद्धनम्।
लभेत्पतिव्रता नारी धर्म एष सनातनः॥

अग्निहोत्रशब्देन तत्साधनाग्निर्लक्ष्यते। पतिव्रता सुसंयता, स्वतः प्रायश्चित्तेन वा श्रौतस्मार्तकर्माधिकारार्हतया वा भर्त्रा सहवासेन स्थितेति यावत्। नारी पत्नी, अग्निहोत्रलाभोक्तेः पत्नीत्वावगमार्थत्वात्। कर्मार्हायाः पित्र्ये कर्मणि भ्रात्राद्य-पेक्षयाऽग्रेसरत्वं बृहस्पतिना दर्शितं—

पुत्राभावे तु पत्नी स्यात् पत्न्यभावे तु सोदरः।

इति । अत्र वृद्धमनुः—

अपुत्रा शयनं भर्तुः पालयन्ती व्रते स्थिता ।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं लभेत च ॥

उत्तरार्धे त्वर्थक्रमेण पाठक्रमबाधो द्रष्टव्यः । ततश्चायमर्थः— उक्तलक्षणा पत्न्येव कृत्स्नं भर्त्रंशं पूर्वं लभेत पश्चात् पतिपिण्डं दद्यात् । न पुनस्तस्यां सत्यां भ्रात्रादिरिति । भर्तुश्शयनं पालयन्ती सुसंयतेत्यर्थः । व्रते स्थिता पत्यौ जीवत्यपि भर्तुरनुज्ञया व्रतादिपरा 'कामं भर्तुरनुज्ञया व्रतोपवासनियमेज्यादीनामारम्भः स्त्रीधर्मः' इति शङ्खलिखितस्मरणात् । अनेनास्तिकताऽपि पत्यंशलाभे प्रयोजिकेति वचोभङ्ग्या ज्ञापितमिति मन्तव्यम् । यद्यपि विवाहादेव पतिधने कृत्स्ने पत्न्या अपि स्वाम्यमाजीवनात् परतन्त्रतया सिद्धं, तथाऽपि स्वतन्त्रतया स्वामित्वान्तरं लभ्यत इत्येवमर्थं लभेत चेत्युक्तम् । तत्पिण्डकृत्स्नपदयोरर्थः प्रजापतिना प्रपञ्चितः—

जङ्गमं स्थावरं हेम कुप्यं धान्यरसाम्बरम् ।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम् ॥
पितृव्यगुरुदौहित्रान् भर्तुस्स्वस्रीयमातुलान् ।
पूजयेत्कव्यपूर्ताभ्यां वृद्धानाथातिथींस्तथा ॥

इति । कुप्यं त्रपुसीसादि । कव्यं पित्रर्थं सङ्कल्पितमन्नम् । पूर्तं पूर्ताख्यखातादिकमाङ्गभूतं दक्षिणादिकम् । एतदुक्तं भवति—स्थावरेणापि सहितं कृत्स्नमंशमादाय धनसाध्यं स्वय-

धिकारश्राद्धपूर्तादिकं दानादिकं च पत्युरात्मनश्च श्रेयस्साधनं कर्मजातं पातिपक्षीयऋत्विगाचार्यादिपुरस्सरं पत्न्या गृहीतधनानुसारेण कार्यमिति । एवञ्च यत्कैश्चिदुक्तं—पत्नीगृहीतं धनं योग्यपातिपक्षाभोग्यं धनिकानुपकारकं वृथा यास्यतीति न पत्नी पतिधनभागिनीति, तत् असिद्धहेतुकत्वाद्धेयम् । एतच्च पत्नीस्वामित्वं विभक्ते पत्यौ द्रष्टव्यम् । यदाह बृहस्पतिः—

यद्विभक्ते धनं किञ्चिदाध्यादि विविधं स्मृतम् ।
तज्जाया स्थावरं मुक्त्वा लभेत मृतभर्तृका ॥

यत्किञ्चिदाध्यादि विविधं धनं स्थावरजङ्गमात्मकं भर्तृस्वामिकात्मकं स्मृतं, तत्सर्वं विभक्तविषये लभेतेत्यर्थः । विभक्तग्रहणादविभक्तविषये तु सहवासिन एव पितृभ्रात्रादयो मृतापुत्रधनं लभेरन्निति गम्यते । जाया पत्नी । स्थावरं मुक्त्वेत्येतद्दुहितृरहितपत्नीविषयम् । पत्नीमात्रविषयत्वे तु—

जङ्गमं स्थावरं हेम कुप्यं धान्यरसाम्बरम् ।
आदाय........................... ॥

इति पूर्वोक्तवचनविरोधस्स्यात् । न च तद्विरोधपरिहारायाविभक्तपत्यंशविषयं वृत्तहीनपत्नीविषयं वेदं वचनमस्त्विति वाच्यम् । यत एवंप्रकारां व्यवस्थां निराकर्तुमाह स एव—

वृत्तस्थाऽपि कृतेऽप्यंशे न स्त्री स्थावरमर्हति ।

इति । सन्तानवृत्तिभूतस्थावरलब्ध्यर्हता तु सन्तानशालितायत्ते·

ति तच्छून्या स्त्री वृत्तस्थाऽपि विभक्तविषयेऽपि स्थावरं नार्हतीत्यर्थः। यदपरमुक्तं तेनैव—

मृते भर्तरि भर्त्रंशं लभेत कुलपालिका।
यावज्जीवं हीनस्वाम्यं दानाधमनविक्रये॥

इति, कुलपालिका वंशपालिका वृत्तस्थेति यावत्। तत् वृद्धानाथाद्युपजीवनायादृष्टार्थदानविधानात् तदितरदृष्टार्थनर्तकादीनां दानादावस्वातन्त्र्यप्रतिपादनार्थमिति मन्तव्यम्। एवञ्च धर्मार्थदाने स्वातन्त्र्यमस्त्येव। अत एव धर्मार्थदानमनिशमावर्तनीयमित्याह स एव—

व्रतोपवासनिरता ब्रह्मचर्ये व्यवस्थिता।
धर्मदानरता नित्यमपुत्राऽपि दिवं व्रजेत्॥

न हि पारतन्त्र्ये नित्यदानक्रिया युज्यते। एवञ्चादृष्टसाधकद्रव्यसम्पादनार्थयोराधिविक्रययोरपि स्वातन्त्र्यमप्रतिषिद्धमिति मन्तव्यम्। यदपरमुक्तं कात्यायनेन—

अपुत्रा शयनं भर्तुः पालयन्ती गुरौ स्थिता।
भुञ्जीतामरणात् क्षान्ता दायादा ऊर्ध्वमाप्नुयुः॥

इति, क्षान्ता दायादकारितधनाविनियोगप्रतिबन्धं सहमानेत्यर्थः। तत् अविभक्तदशायां रक्षणभरणासमर्थेषु कार्यान्तरव्यग्रेषु वा श्वशुरादिषु पत्न्या स्वयमेव जीवनार्थमुपात्ताविभक्तद्रव्यविषयम्। विभक्तद्रव्यविषयत्वे वृद्धमन्वादिवचनपरिनिश्चितार्थविरोधापत्तेः। रक्षणादिसमर्थेषु श्वशुरादिष्वविभक्त-

मृतधनग्राहिषु सत्सु तैरेव गृहीतधनैर्भरणं कार्यम्। तथाच नारदः—

यावत्यो विधवास्साध्व्यो ज्येष्ठेन श्वशुरेण वा।
गोत्रजेनापि वाऽन्येन भर्तव्याश्छादनाशनैः ॥

धनग्राहिणेति सर्वत्र ज्येष्ठादौ शेषो द्रष्टव्यः। धनग्रहणानिमित्तत्वात् भरणस्य। अत्र विशेषमाह कात्यायनः—

स्वर्याते स्वामिनि स्त्री तु ग्रासाच्छादनभागिनी।
अविभक्ते धनांशं तु प्राप्नोत्यामरणान्तिकम् ॥

धनांशं यावता धनेनाक्लिष्टजीवनं धनसाध्यं च नित्यनैमित्तिकं कर्म स्त्र्यधिकारकं काम्यव्रतादिकं च सिध्यति तावन्तमित्यर्थः। तुशब्दो वाशब्दार्थे, धनांशं वा प्राप्नोतीत्यर्थः। एतावद्धनसंपादकं क्षेत्रांशं वा प्राप्नोति, धनग्रहणस्य वर्तनाद्युपायोपलक्षणार्थत्वात्। अत्राद्यपक्षः पत्नीव्यतिरिक्तभार्याविषयः, जीवनमात्रसाधनस्वल्पार्थभागित्वाभिधानात्। जीवनमात्रसाधनस्य स्वल्पामियत्तामाह नारदः—

आढकांस्तु चतुर्विंशत् चत्वारिंशत्पणांस्तथा।
प्रतिसंवत्सरं साध्वी लभेत मृतभर्तृका ॥

आढकोऽष्टोनद्विशतप्रसृतिपरिमितो धान्यचयः। पणः कार्षापणः। स च व्यावहारिकनिष्काशीतितमभागस्य स्थाने क्वचिद्देशे प्रवर्तते। तेन यत्र देशे पणो न प्रवर्तते तत्र त-

त्स्थाने व्यावहारिकनिष्काशीतितमभागः लभ्यते । कृतेऽप्यंश इत्यनुवृत्तौ बृहस्पतिः—

प्रदद्यात्त्वेव पिण्डं वा क्षेत्रांशं वा यदृच्छया ।

इति । पिण्डग्रहणं अशनाच्छादनोपलक्षणार्थम् । एवञ्चाय-मर्थः—अशनाच्छादनं पूर्वोक्तपरिमाणकं पूर्वोक्तधनांशसंपाद-कक्षेत्रांशं वा । स च रुच्या भर्त्रंशार्हपत्नीव्यतिरिक्तविधवायै अविभक्तविषये जीवनार्थं प्रदद्यादिति । एवकारः प्रदान स्यावश्यकत्वज्ञापनार्थः । श्वश्र्वाद्यशुश्रूषकस्त्रीविषयोत्राद्यः पक्षः । तत्र ज्ञापकमुपरिष्टात् भविष्यति । दत्तं च दायकेतरैरपि पाल-नीयमित्याह स एव—

स्थावराज्जीवनं स्त्रीभ्यो यद्दत्तं श्वशुरेण तु ।
न तच्छक्यमपाहर्तुमितरैः श्वशुरे मृते ॥

श्वशुरग्रहणं भरणकारिण उपलक्षणार्थम् । स्थावरग्रहणं च धनस्योपलक्षणार्थम् । तेन धनाद्यपि जीवनार्थं स्त्रीभ्यो दत्त-मपाहर्तुमशक्यमितरैरित्यवगन्तव्यम् । क्वचिदपहर्तव्यमित्याह कात्यायनः—

भोक्तुमर्हति क्लृप्तांशं गुरुशुश्रूषणे रता ।
न कुर्याद्यदि शुश्रूषां चेलपिण्डे नियोजयेत् ॥

क्लृप्तांशं अपहृत्येति शेषः । एवमकार्यकारिण्यादावपि क्लृप्तां-शापहरणं कार्यमित्याह स एव—

अपचारक्रियायुक्ता निर्लज्जा चार्थनाशिका ।
व्यभिचाररता या च स्त्री धनं न च साऽर्हति ॥

इति । धनं जीवनार्थमुपक्लृप्तधनांशं, क्षेत्रांशं वा जीवनाद्यर्थमुपक्लृप्तं उक्ता चतुर्विधा स्त्री नार्हतीत्यर्थः । धनग्रहणमशनाच्छादनाद्युपलक्षणार्थम् । अत एव नारदः—

भरणं चापि कुर्वीरन् स्त्रीणामा जीवनक्षयात् ।
रक्षन्ति शय्यां भर्तुश्चेत् आच्छिन्द्युरितरासु तत् ॥

इतरासु व्यभिचाररतासु । भरणमशनाच्छादनाय कल्पितं धान्यवस्त्रमूल्यद्रव्यमाच्छिन्द्युः अपहरेयुरित्यर्थः । यदत्र मनुनोक्तं—

एवमेव विधिं कुर्याद्योषित्सु पतितास्वपि ।
वस्त्रान्नमासां देयं तु वसेयुश्च गृहान्तिके ॥

इति, तत् भर्तृकर्तृकभरणविषयमिति पूर्वार्धत एवावगम्यत इत्यविरोधः । या पुनश्शङ्कितव्यभिचारा तस्यास्तु विभक्तविषये पत्नीत्वेऽपि हारीतोक्तं कार्यं—

विधवा यौवनस्था चेत् नारी भवति कर्कशा ।
आयुषः क्षपणार्थं तु दातव्यं जीवनं तदा ॥

इति । कर्कशा क्रूरा साहसार्हा संभावितव्यभिचारेति यावत् । यत्पुनर्मनुना 'पत्न्येव कृत्स्नमंशं लभेत च' इति वृद्धमनूक्तविरुद्धमुक्तं—

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियेतान्यतरो वाऽपि तस्य भागो न लुप्यते ॥
सोदर्या विभजेरंस्तं समेत्य सहितास्समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥

इति, हीयते पातित्यादिनिमित्तेनेति शेषः । यदपि नारदेन—

संसृष्टानां तु यो भागस्तेषामेव स इष्यते । इत्युक्त्वोक्तं—
भ्रातॄणामप्रजाः प्रेयात् कश्चिच्चेत् प्रव्रजेत वा ।
विभजेयुर्धनं तस्य शेषास्ते स्त्रीधनं विना ॥

इति, तदेतद्द्वयमपि संसृष्टद्रव्यविषयमिति स्पष्टमेव, तेन नास्ति विरोधः । एवञ्च 'पत्न्येव समस्तमंशं लभेत' इति विभक्तासंसृष्टविषयमिति मन्तव्यम् । तथाच सङ्ग्रहकारः—

भ्रातृषु प्रविभक्तेषु संसृष्टेष्वप्यसत्सु च ।
गुर्वादेशान्नियोगस्था पत्नी धनमवाप्नुयात् ॥

गुर्वादेशान्नियोगस्थेति धारेश्वरमतं विश्वरूपादिभिस्सम्यक् दूषितत्वादुपेक्षणीयम् । ततश्च सङ्ग्रहकारोक्तविषये वृद्धमनूक्तगुणविशिष्टा पत्नी भर्तृधनमखिलमवाप्नुयादित्येतदेव मतमादर्तव्यम् । यत्तु श्रुतावुक्तं 'तस्मात् स्त्रियो निरिन्द्रिया अदायादीः' इति, तदपि न वृद्धमन्वादिवचनबाधकं, निरिन्द्रियपुत्रसाहचर्यादप्रसभूतस्त्रीविषयत्वावगतेः । भवतु वा सर्वस्त्रीविषयत्वावगतिः, तथाऽपि दायादतया शृङ्गग्राहिकोक्तपत्न्यादिस्त्रीव्यतिरिक्तविषयार्थवादश्रुतिरिति सर्वं सुस्थम् । पत्नी-

बहुत्वे समं विभज्य अपुत्रभर्तृधनग्रहणं सर्वासां युक्तम्। एवं सर्वस्मृत्येकवाक्यतया निश्चितं पत्नीधनं ये प्रतिबध्नन्ति ते राज्ञा नियन्तव्या इत्याह प्रजापतिः—

तत्सपिण्डा बान्धवाश्च ये तस्याः परिपन्थिनः।
हिंस्युर्धनानि तान् राजा चोरदण्डेन शासयेत् ॥

इति स्मृतिचन्द्रिकायां पुत्रद्वाराऽऽगतधनविभागे पत्नीविषयाणि.

---

अथ दुहित्रादिविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र बृहस्पतिः—

भर्तुर्धनहरी पत्नी तां विना दुहिता स्मृता ॥

इति। तां विना तस्या अभाव इत्यर्थः। अत एव विष्णुः—'अपुत्रस्य धनं पत्न्यभिगामि तदभावे दुहितृगामि' इति। अस्मिन् क्रमे न्यायमाह बृहस्पतिः—

अङ्गादङ्गात्सम्भवति पुत्रवद्दुहिता नृणाम्।
तस्मात्पितृधनं त्वन्यः कथं गृह्णीत मानवः ॥

शरीरावयवसम्बन्धेन दुहिता पुत्रसमा, पुत्रे हि पित्रवयवानां बाहुल्येन सङ्क्रान्तिः, दुहितरि त्वल्पतया—

पुमान् पुंसोऽधिके शुक्ले स्त्री भवत्यधिके स्त्रियाः।

इति स्मरणात्। तेन किंचित्सामान्यात् पुत्रवदित्युक्तम्। अन्यः पुत्रपत्नीव्यतिरिक्तः पित्रादिर्मानवः तिष्ठन्त्यां दुहितरि पुत्रधनं कथं गृह्णीतेत्यर्थः। तथाच मनुः—

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।

तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत् ॥

आत्मनि आत्मतुल्यपुत्रसमायामित्यर्थः। नन्वेवमपि गौणपुत्रपत्न्योरभावे दुहितेतिक्रमे न्यायो नोक्तः, औरसाभावमात्रे दुहितेत्येतावन्मात्रसाधकत्वादुक्तन्यायस्य । सत्यं,— किंत्विदमेव गौणपुत्रपत्न्योरभावे दुहितेत्यत्रापि क्रमे न्याय ऊहनीय इत्यभिप्रायेणोक्तम् । अत एव नारदेन तयोरप्यभावे दुहितेति क्रमानुसारी न्यायः स्वयमूहितो मन्दानुग्रहाय प्रदर्शितः—

पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात् ।

इति । स्वयमेव न्यायं विवृणोति—

पुत्रश्च दुहिता चोभौ तुल्यसन्तानकारकौ ।

इति । उभौ स्वपितृश्रेयस्करसन्तानकारकावित्यर्थः । तथाहि पौत्रदौहित्रयोः पुत्रदुहितृसन्तानयोस्स्वरूपतस्तुल्यत्वाभावात् कार्यतोऽत्र तुल्यत्वमभिप्रेतम् । न च ऋणापाकरणकार्यतस्तुल्यत्वं सम्भवति 'पुत्रपौत्रैः ऋणं देयम्' इति स्मरणात् । तथा पितामहद्रव्यमाधिकृत्य—

तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः ।

इति स्मरणतश्च पौत्रस्याधिक्यप्रतीतेः, तेनात्रादृष्टकार्यतस्तुल्यत्वमभिप्रेतम् । तच्च—श्राद्धदातृत्वं

पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रका मताः ।

इति विष्णुस्मरणात् । एवञ्च दुहितुः स्वसन्तानमुखेनादृष्टोपका-

रकसंबन्धेनासन्नता च। एतावता निमित्तेन 'पुत्राभावे तु दुहिता' इत्यत्र पुत्रग्रहणं पत्न्या अपि प्रदर्शनार्थमिति मन्तव्यम्। ननु पिता श्राद्धदाने स्वयमेवादृष्टोपकारक इति दुहितुरपेक्षयाऽऽसन्नत्वात् पत्न्यभावे 'पिता हरेदपुत्रस्य' इत्यस्यायमवसर इति कथं दुहितुरर्थग्रहणं? मैवं,

तस्यामात्मनि तिष्ठन्त्यां कथमन्यो धनं हरेत्।

इत्यनेनैवोक्तत्वात्। तथाहि—यद्यप्यदृष्टोपकारसम्बन्धेन व्यवहिता, तथाऽपि शारीरसम्बन्धेनाव्यवहितेत्युभयथासम्बन्धा दुहितैवाग्रेसरी। एवं तर्हि दुहित्रभावे पिता हरेदित्यस्यावसरस्स्यात्। नाधुनाऽपि तस्यावसरः, दुहित्रभावेऽपि दौहित्रस्य तत्कोटित्वेन पित्राद्यपेक्षयाऽऽसन्नत्वात्—

अपुत्रपौत्रसन्ताने दौहित्रा धनमाप्नुयुः।
पूर्वेषां तु स्वधाकारे पौत्रा दौहित्रका मताः॥

इति विष्णुस्मरणाच्च। एवं सोपपत्तिकां पत्न्यभावे दुहितृगामितां ब्रुवता बृहस्पत्यादिनैव दौहित्रगामि धनमिति विधायकं यद्वचनजातं तत्पुत्रिकाविषयमेव, न पुनरपुत्रिकादुहितृविषयामिति धारेश्वरदेवस्वामिदेवरातमतं स्मृतितन्त्राभिज्ञत्वाभिमानोन्मादकल्पितं निरस्तं वेदितव्यम्। तथाहि—'तृतीयः पुत्रः पुत्रिका विज्ञायते' इति वसिष्ठस्मृत्या गौणपुत्रकोटिनिविष्टायाः पुत्रिकायाः पत्न्यां सत्यामपि क्षेत्रजादेरिव,

न भ्रातरो न पितरः पुत्रा रिक्थहराः पितुः ।

इत्यादिवचनान्तरैरेव औरसाभावे रिक्थग्राहिण्याः पत्न्याः प्रागेव दण्डापूपन्यायेनैव धनभागित्वे सिद्धे पुनः किं सोपपत्तिकं धनभागित्वं स्मर्तुं बृहस्पत्यादीनां वचनान्तरारम्भेण । तेन तैरेव तन्मतं निरस्तमित्यलं धारेश्वरादिमतान्तरनिराकरणयत्नेनास्मदीयेन । यत्तु नारदेन पुत्रहीनपत्नीमधिकृत्योक्तं—

स्यात्तु चेद्दुहिता तस्याः पित्र्योऽंशो भरणे मतः ।
आ संस्काराद्धरेद्भागं परतो बिभृयात्पतिः ॥

इति, तस्यार्थः—तस्याः पत्न्याः पुत्ररहितायाः यदि दुहिता विद्यते तदा दुहितुर्भरणे भरणाय पित्र्योऽंशोऽभिमतः । तस्मादा विवाहसंस्कारात् भरणार्थमेव दुहिता पितृभागं हरेत् । न पुनर्यथेष्टविनियोगार्थमिति । एवञ्च सर्वासामेव कन्यानां पितृधनप्राप्तिरुत्सर्ग इति गम्यते । ततश्चास्यापवादकानि दुहितुः पितृधनप्राप्तिप्रातिपादकानि वचनानि सर्वाणि पुत्रिकाविषयाण्येवेति वाच्यं, दुहितृमात्रविषयत्वे तूत्सर्गवत्सामान्यतया तदपवादाक्षमत्वादनर्थकानि भवेयुः । तस्माद्धारेश्वरादीनामेव मतमनुसर्तव्यस्यादेवं यदि नारदवचनं विभक्तविषयं स्यात् संसृष्टिविषयं तु तदिदितितस्यैव पूर्वापरपर्यालोचनया स्फुटमवगम्यते । ततश्च विभक्तविषये यानि दुहितृदायप्रातिपादकवचनानि तेषां तत्ज्ञापकत्वमेव नापवादकत्वमिति न पुत्रिका विषयत्वकल्पने किञ्चिन्मूलमुपलभामह इत्यलमतिबहुना । एवमपि

न दुहितृमात्रविषयाणि तानि वचनानि, यत आह कात्यायनः—

पत्नी भर्तुर्धनहरी या स्यादव्यभिचारिणी।
तदभावे तु दुहिता यद्यनूढाऽप्रतिष्ठिता॥

इति। एवञ्च कात्यायनवचनान्यनूढादुहितृविषयाणि, अथवा निर्धनोढादुहितृविषयाणीति मन्तव्यम्। निर्धनत्वेनैवाप्रतिष्ठिताऽत्र विवक्षिता, न पुनर्वन्ध्यात्वादिना सन्तानराहित्येनाप्रतिष्ठिता, तस्यास्सन्तानमुखेनादृष्टोपकारकसम्बन्धाभावेन धनहारित्वायोगात्। तदभावे इत्यनेन पूर्वोक्तायाः अव्यभिचारिण्याः पत्न्या अभावः प्रत्यवमृश्यते, न पत्नीस्वरूपमात्रस्य, न केवलं पत्न्याः स्वरूपाभावे दुहिता धनहारिणी किंत्वव्यभिचारित्वलक्षणविशेषणाभावेऽपीति मन्तव्यम्। अत एव सङ्ग्रहकारेण—

तादृक्पत्न्या अभावेऽपि पुत्रिका धनमर्हति।

इत्युक्तम्। न परं पत्नीस्वरूपाभावे, किंतु धनभागिनीति निरूपणार्थमुक्तविशेषणविशिष्टपत्न्यभावेऽपि पुत्रिका धनमर्हतीत्यर्थः। पुत्रिका धनमर्हतीति तु प्रागेव निरस्तत्वादुपेक्षणीयम्। तेन पत्न्याः स्वरूपाभावे दुहितृगामि द्रव्यं, विशेषणाभावे तु पिता हरेदित्यादिवचनोक्तपित्रादिगामीति कैश्चित् कृता विषयव्यवस्थाऽप्युपेक्षणीया। बृहस्पतिस्तु पत्न्या ऊर्ध्वमर्थग्राहिणीनां मुख्यपुत्रादूर्ध्वमर्थग्राहिणीनां च दुहितॄणां विशेषणान्याह—

सदृशी सदृशेनोढा साध्वी शुश्रूषणे रता ।
कृताऽकृता वाऽपुत्रस्य पितुर्धनहरी तु सा ॥

सदृशी पितृसवर्णा । अत्राद्यानि चत्वारि विशेषणानि पत्न्या ऊर्ध्वं धनग्राहिदुहितृविषयाणि । प्राग्धनग्राहिण्याः दुहितुर्विशेषणे त्वविशिष्टे । कृताकृतेत्यत्र पुत्रिकेति विशेष्यस्याध्याहारः कर्तव्यः । इतरत्र दुहितेति विशेष्यस्याध्याहारः कार्यः । वाशब्दो व्यवस्थितविकल्पाभिधानार्थः । एवंचायमर्थः— औरसपुत्रविहीनस्य पितुर्धनं द्विविधाऽपि पुत्रिका पत्न्याः पूर्वं गृह्णीयात्, सवर्णादिविशेषणोपेता दुहिता तूर्ध्वमिति । एवञ्च पत्न्या ऊर्ध्वं सवर्णादिविशेषणोपेताप्रतिष्ठितानूढानां दुहितॄणां समवायेऽनूढैव गृह्णाति, पित्रा भर्तव्यत्वात् । तदभावेऽप्रतिष्ठिता, भर्त्रा भर्तव्यत्वेऽपि भर्तुर्भरणसामर्थ्याभावेनाप्रतिष्ठितत्वात् । तदभावे सवर्णादिविशेषणोपेता प्रतिष्ठिता, प्रतिष्ठितत्वेऽपि धनग्रहणयोग्यत्वात् । तदभावे दौहित्रः,तत्कोटित्वादित्यनुसन्धेयम् । दौहित्रस्याभावे तु पित्रपेक्षयाऽन्यस्यासन्नतरस्याभावात् । 'पिता हरेदपुत्रस्य रिक्थं' इत्युक्तस्यावसरत्वात् पितृगामि धनं भवति । अस्मिन्नेवावसरे मात्रपेक्षयाऽप्यन्यस्यासन्नतरस्याभावात्—

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् ।

इत्युक्तस्यावसरत्वान्मातृगामि धनं भवति । अत एव याज्ञवल्क्येन 'पत्नी दुहितरश्चैव पितरौ' इत्युक्तम् । चशब्देन सू-

चितस्य दौहित्रस्यानन्तरमेव मातापितरौ समसमये धनभाजौ। तयोरवान्तरक्रमे न्यायाभावादित्यभिप्रायो याज्ञवल्क्यस्यावगन्तव्यः। अभिप्रायमबुध्वाऽत्रापि कैश्चित्पण्डितंमन्यैः कश्चिन्नयाय उत्प्रेक्षितः, मातुर्गर्भधारणपोषणद्वारेणात्यन्तोपकारित्वात्,

सहस्रं तु पितुर्माता गौरवेणातिरिच्यते।

इति स्मरणाच्च, पितरि विद्यमानेऽपि मातुरेव धनग्रहणेऽधिकार इति। नायं न्यायो मातुरादौ अंशग्रहणाधिकारापादनायालं, पितुरपि बहुधा संविधातृत्वात् विद्याप्रदत्वात्

तयोरपि पिता श्रेयान् बीजप्राधान्यदर्शनात्।

इति स्मरणाच्च। अन्यैः पुनरन्यथा उत्प्रेक्षितः—पिता सपत्नीपुत्रेष्वपि साधारणः माता तु न साधारणीति प्रत्यासत्त्यतिशयोस्तीति। विप्रलम्भसदृक्षमिदं, न हि जननीजनकयोर्जन्यं प्रति संनिकर्षे तारतम्यमस्ति। न च बहुसम्बन्धतः साक्षात्सम्बन्धनिबन्धनायाः प्रत्यासत्तेरतिशयोप्यपैति। यदपि तैरेवोक्तं—'एकशेषश्रवणेऽपि कथञ्चिन्मातुः प्राथम्यमवगम्यते' इति, तदपि मन्दं, 'सारस्वतौ भवतः' इत्युत्पत्तिवाक्ये क्रमावगत्यभावेन याज्याक्रमेण प्रधानयोः क्रमः पञ्चमे दर्शितो न पुनस्सारस्वतावित्येकशेषत एव कथञ्चित्क्रमावगतिरुपपादितेति निर्निबन्धनमेव मातुः प्राथम्यसमर्थनम्। अत एव श्रीकरेण पित्रोर्विभज्यधनग्रहणमुक्तम्। तदप्ययुक्तं, 'पिता हरेद-

पुत्रस्य रिक्थं, स्वर्यातस्य ह्यपुत्रस्य माता दायमवाप्नुयात्' इत्येताभ्यां व्रीहियवयोर्निरपेक्षसाधनत्ववन्निरपेक्षस्वाम्यप्रतीतेः। अपरे पुनरन्यथा मातुः प्रत्यासत्तिमुन्नयन्ति—'सोदरस्य तु सोदरः' इत्यत्र मातृद्वारेण सोदरे दायवचनान्मातुः प्रत्यासत्तिर्गम्यत इति, तदेतत् काशकुशावलम्बनमात्रं, तथाहि भ्रातुर्भिन्नोदरादेकोदरयोरेकमातृकत्वेन प्रत्यासत्तौ विशेषोऽस्ति जनकात् पुनर्जनन्याः पुत्रं प्रति प्रत्यासत्तौ विशेषः किंनिबन्धनो भविष्यतीति न विद्मः। तस्मादत्र पित्रोस्सद्भावे कः क्रम इत्यपेक्षायां वक्तव्यो विशेषः। यत्तूक्तं शम्भुना—'मध्यकधनत्वात् दम्पत्योर्येनकेनाचित् गृह्यमाणमुभयार्थमिति न विशेषो वक्तव्यः' इति, तदयुक्तम्। मात्रा गृह्यमाणं मात्रर्थमेवाध्यग्न्यादिस्त्रीधनवन्नोभयार्थमिति विशेषो वक्तव्य एव। सोऽभिधीयते—न्यायाभावादत्र क्रमे वचनमेव शरणं, वचने च पितुरेव प्रथमं धनग्रहणेऽधिकारः प्रतिपाद्यते। तथाच 'अपुत्रस्य धनं पत्न्यभिगामि, तदभावे दुहितृगामि' इत्यनुवृत्तौ बृहद्विष्णुः—'तदभावे पितृगामि तदभावे मातृगामि' इति। यद्यप्यपुत्रधनस्य दुहित्रभावे पितृगामित्वमुक्तम्। तथाऽपि दुहित्रभावे दौहित्रगामित्वस्य न्यायवचनाभ्यामुक्तत्वात्। दौहित्रस्याभावे तु पितृगामित्वमवगन्तव्यं, दौहित्रस्यापि दुहितृकोटित्वात् पृथक् दौहित्रगामित्वानभिधानं बृहद्विष्णोरिति च मन्तव्यम्। मात्रभावे तु सोदरभ्रातृगामित्वमेकमातृकत्वेन मृत-

भ्रातृप्रत्यासत्त्यतिशयलक्षणन्यायात् प्राप्तं, तदभावे भिन्नोदरभ्रातृगामित्वं च, तत् याज्ञवल्क्येन न्यायमूलक्रममेवाभिदधताऽभिहितं—'पितरौ भ्रातरस्तथा' इति । भ्रातरस्सोदरा एवात्र भिन्नोदरापेक्षया धनिनं प्रति प्रत्यासन्नत्वादभिप्रेताः । ततश्च मात्रभावे सोदरभ्रातृगाम्यपुत्रधनमित्युत्सर्गो याज्ञवल्क्येन दर्शितः । तथा सोदरत्वरूपविशेषविवक्षायामपि भ्रातर इति सामान्यशब्दप्रयोगेण सोदराभावे भिन्नोदरा इति चोत्सर्गस्तेनैव दर्शितः । उत्सर्गस्य वक्ष्यमाणविषयद्वयेऽपवादमाह कात्यायनः—

विभक्ते संस्थिते द्रव्यं पुत्राभावे पिता हरेत् ।
भ्राता वा जननी वाऽथ माता वा तत्पितुः क्रमात् ॥

तत्पितुर्माता विभक्तमृतापुत्रस्य पितुर्माता, पितामहीति यावत् । पुत्रग्रहणमासन्नतरोपलक्षणार्थम् । तेन पुत्रादिदौहित्रान्तानां पित्रपेक्षया दृष्टादृष्टोपकारकादिसम्बन्धेनासन्नतराणामभावे प्रथमं पिता हरेदित्यर्थः । वाशब्दास्त्रयोऽप्यत्राभावविकल्पार्थाः । स्वाम्याख्ये सिद्धरूपे वस्तुनि 'न हि वस्तु विकल्प्यते' इति न्यायेन तुल्यवद्विकल्पासंभवात् । एवञ्चैतदुक्तं भवति—पित्रभावे भ्राता हरेत्तदभावे जननी तदभावे पितामहीति । क्रमात् उक्तपाठक्रमेणेत्यर्थः । अनेनैव च क्रमेण विभक्तसंस्थितविषये मनुरपि पुत्रपत्नीदुहितृदौहित्राणामासन्नतराणामभावम-

पुत्रस्येत्युपलक्षकशब्देन अपुत्रस्येत्युक्त्वा पितृभ्रातृमातृपिताम-हीनां धनग्रहणं सार्धश्लोकेनाह—

पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा ।

अनपत्यस्य पुत्रस्य माता दायमवाप्नुयात् ॥

मातर्यपि च वृत्तायां पितुर्माता धनं हरेत् ।

इति । अपुत्रस्य पुत्रपत्नीदुहितृदौहित्रशून्यस्येत्यर्थः । एवञ्च कात्यायनमनुप्रतिपादितः पित्रादिपितामह्यन्तानां धनग्रहणक्रमो वचनैकनिबन्धनः स्वविरुद्धनैयायिकक्रमबाधक इति न्यायविरोधशङ्काऽत्र न कार्या । याज्ञवल्कीयमेव वचनं क्रमपरं, तत्परत्वस्य तत्र 'पूर्वाभावे परःपरः' इति कण्ठोक्त्या व्यक्तत्वात् । तेन तद्विरुद्धानि वचनानि 'पिता हरेदपुत्रस्य' इत्येवमादीनि त्वधिकारमात्रपराण्येवेति व्याख्याऽप्युपेक्षणीया। 'माता वा तत्पितुः क्रमात्' इति, 'मातर्यपि च वृत्तायाम्' इति कात्यायनवचनयोरपि कण्ठोक्त्या क्रमस्मृतेः । मातुः पूर्वं भ्राता धनहारीत्यत्र विशेषमाह बृहस्पतिः—

भार्यासुतविहीनस्य विभक्तस्य मृतस्य तु ।

माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया ॥

इति । तस्य मृतस्य । भार्याग्रहणं न्यायतो बद्धक्रमाणां दुहितृदौहित्रपितॄणामुपलक्षणार्थम् । तेन सुतभार्यादुहितृदौहित्रपितृविहीनस्येत्यर्थो विज्ञेयः । एवञ्च 'पितरौ भ्रातरस्तथा' इत्युक्तक्रमस्य मातुरनुज्ञाविषये विद्यमानपितामहीविषये च का-

त्यायनाद्युक्तक्रमेणापवादोऽनुसन्धेयः । एतेनेदं निरस्तं—यत् कैश्चिदुक्तं "मातृपितृभ्रातृसुतानां 'पितरौ भ्रातरस्तथा तत्सुताः' इति वचनेन बद्धक्रमत्वान्मध्येऽनुप्रवेशाभावात् भ्रातृसन्तानानन्तरं पितामही गृह्णाति, तस्याः क्रमविशेषोक्त्यभावेनाविरोधात्" इति । न हि पितामह्याः क्रमविशेषोक्त्यभावः, कात्यायनवचने पाठतस्तद्गताथशब्देन, मानवीये मातरि वृत्तायामिति पदद्वयेन च पितामह्याः क्रमविशेषोक्तेः प्राक्प्रदर्शितत्वात् । बद्धक्रमस्यापि तस्य न्यायमूलस्य मध्ये वचनमूलक्रमविशेषसम्भवाच्च । यत्तु शङ्खलिखितोक्तं—'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं, तदभावे पितरौ हरेयाताम्' इति, तत् सामान्यविशेषन्यायेन विभक्तसंस्थितविषयादन्यत्र संसृष्टस्वर्यातविषयेऽवतिष्ठत इत्यविरोधः । यत्तु बृहस्पतिनोक्तं—

पुत्राभावे तु पत्नी स्यात् पत्न्यभावे तु सोदरः ।
तदभावे तु दायादः पश्चाद्दौहित्रकं धनम् ॥

इति, तत् पत्न्याः पूर्वं सोदरनिवृत्त्यर्थं, न पुनर्दायादशब्दनिर्दिष्टदुहितृभ्यः पूर्वं सोदरप्राप्त्यर्थम् । तथात्वे 'अङ्गादङ्गात्सम्भवति पुत्रवद्दुहिता' इत्यादिस्ववचनविरोधापत्तेः । यत्तु देवलेनोक्तं—

ततो दायमपुत्रस्य विभजेरन् सहोदराः ।
तुल्या दुहितरो वाऽथ ध्रियमाणः पिताऽथवा ॥
सवर्णा भ्रातरो माता भार्या चेति यथाक्रमम् ।

इति। यद्यप्यत्र व्यवहितान्वयो वचनरचनाऽस्येनावगम्यते, तथाऽपि पूर्वोक्तसर्ववचनन्यायाविरोधाय व्यवहितान्वयेनैवार्थोऽवगन्तव्यः। तथाहि—अपुत्रस्य दायं भार्या पत्नी वाऽऽप्नुयात् अथवा तुल्यास्सवर्णाः दुहितरो विभजेरन् अपिवा ध्रियमाणो विद्यमानः पिता हरेत्, अनर्थकाध्रियमाणशब्दाद् ध्रियमाणे पितरि मातेत्यन्वयावगमात् पितुरभावे माताऽवाप्नुयात्, ततस्सहोदरास्सवर्णाश्च भ्रातरो यथाक्रमं पूर्वं सहोदरास्तत्तदभावे सवर्णा इति क्रमानतिक्रमेण विभजेरन्निति। मात्रनुज्ञायाः पितामह्याश्चाभावविषय एतद्द्रष्टव्यम्। अस्मिन्नपि विषये कात्यायनेन सुबोधाय क्रमो दर्शितः—

अपुत्रस्याथ कुलजा पत्नी दुहितरोपि वा।
तदभावे पिता माता भ्रातॄ पुत्राश्च कीर्तिताः॥

पुत्रशब्दः संबन्धिशब्दत्वात् पदन्यायेन भ्रातृपुत्रेष्वेव वर्तते। अत एव याज्ञवल्क्येन 'भ्रातरस्तथा तत्सुताः' इत्युक्तम्। यत्तु सङ्ग्रहकारेणोक्तं—

तादृग्दुहित्रभावेऽपि माता धनमवाप्नुयात्।
विद्यमानेऽपिं पितरि सपत्नीसुतसन्ततौ॥
तादृग्भ्रातुरभावेऽपि पितुर्माता हरेद्धनम्।
विद्यमानेऽपि पितरि क्षत्रियासुतसन्ततौ॥
पितामह्या अभावेऽपि पिता धनमवाप्नुयात्।

इति । सुतसन्ततावित्यत्र विद्यमानायामित्यध्याहारे कृते सत्य-स्यार्थः सुगमः । तदेतद्धारेश्वरोत्प्रेक्षितन्यायमूलत्वाद्विश्वरूपा-दिभिस्तन्नयायनिराकरणान्मूलभूतन्याये असत्यनादृत्यमेव । य त्पुनस्तेनैवोक्तं—

सोदर्यास्सन्त्यसोदर्या भ्रातरो द्विविधा यदि ।
विद्यमानेऽप्यसोदर्ये सोदर्या एव भागिनः ॥

इति, तत् सम्यङ्न्यायमूलत्वादादरणीयम् । भ्रातृसुतेष्व-प्ययं विशेषः सोदरासोदरभ्रातृसुतसमवाये ग्राह्यः । ततश्च सोदरभ्रातृसुताभावे सपत्नीभ्रातृसुता धनभाजः । तेषामभावे के धनभाज इत्यपेक्षिते याज्ञवल्क्यः 'गोत्रजाः' इति । धनभाज इति शेषः । गोत्रजशब्दोऽत्र गोबलीवर्दन्यायात् पूर्वोक्तपितृ-भ्रातृतत्सुतव्यतिरिक्तपितामहतत्सुतादिगोत्रजेषु वर्तते । तत्रापि सरूपैकशेषस्य स्वतोऽवगतेः पितामहदुहित्रादिस्त्रीव्यतिरिक्तेषु व-र्तते । कारणान्तरादेव हि 'कुक्कुटावानय मिथुनीकरिष्यामहे' इत्यादौ विरूपैकशेषावगतिः । न चेह तथाऽस्तिकारणान्तरं, प्रत्युत भ्रातृतत्सुतसाहचर्यात् पुमांस एव गोत्रजा गम्यन्ते। किञ्च पत्नीदुहित्रादीनां शृङ्गग्राहेण दायादत्वस्मृतेरगत्या 'तस्मात् स्त्रियो निरिन्द्रिया अदायादीः' इति श्रुतेस्तद्व्य-तिरिक्ताविषयतोक्ता । तेनेह सरूपैकशेषतया स्मृतेः सत्यां संगतौ श्रुतिविरोधिनी विरूपैकशेषता दूरोत्सारिता । अत एव 'जीवन् पुत्रेभ्यो दायं विभजेत्' इत्यापस्तम्बसूत्रं व्या

चक्षाणेन तद्भाष्यकारेण पुत्रेभ्य एव दायं विभजेन्न स्त्री भ्यो दुहितृभ्य इत्युक्तम्। यद्यपि 'भ्रातृपुत्रौ स्वसृदुहितृ भ्याम्' इति शब्दस्मृत्या पुत्रेभ्य इत्यत्र विरूपैकशेषं कृत्वा दुहितॄणामप्यनुप्रवेशः सूत्रे कर्तुं शक्यते, तथाऽपि पुमांसो दायादा न स्त्रियः 'तस्मात् स्त्रियो निरिन्द्रिया अदायादीः' इति श्रुतेरिति। एतेनैतन्निरस्तं—यत् कैश्चिदुक्तं—गोत्रजा पितामही तत्सपिण्डाः समानोदकाश्च, तत्र पितामही प्रथमं धनभाक् 'मातर्यपि च वृत्तायां पितुर्माता धनं हरेत्' इति मात्रनन्तरं पितामह्या धनग्रहणे प्राप्ते पुत्रादीनां भ्रातृसुतपर्यन्तानां बद्धक्रमत्वेन मध्येऽनुप्रवेशाभावादुत्कर्षे तत्सुतानन्तरमपि पितामही गृह्णाति अविरोधादिति। भ्रातृसुतानन्तरमपि तेषां गोत्रजानां च बद्धक्रमत्वाविशेषात् पितामह्या सहैवात्र क्रमो बाध्यत इत्यसम्बन्धसरूपैकशेषत्वेन पुंसामेव गोत्रजानां भ्रातृसुतैस्सह क्रमबन्धनात्, न चान्यगोत्रजा पितामही मृतगोत्रजाऽपीत्यलं बहुना। गोत्रजा इत्येकशेषकरणमपि पितराविवितिवन्न्यायामूलावान्तरक्रमाभावादेव याज्ञवल्क्यस्येति मन्तव्यम्। न हि भ्रातृसुताभावे पितामहसुतो धनभागित्येवमाद्यवान्तरक्रमे कश्चिन्न्यायोस्ति। ननु पितामहमतिक्रम्य तत्सुतो धनभागिति केनोच्यते। भ्रातरस्तत्सुता इत्यभिधाय गोत्रजा इत्यभिदधता याज्ञवल्क्येनोच्यते। गोत्रजशब्देनैव भ्रातृतत्सुतयोर्निर्देशे लभ्यमानेऽपि पृथक्तयोरभिधा-

नस्य गोत्रजेषु पितामहादिषु तस्यतस्य सन्ततौ पितृसन्तताविव द्वयोरेव पुत्रपौत्रयोर्धनभागित्वज्ञापनार्थत्वात्। मनुनाऽप्ययमेवार्थः सूच्यते—

यो यो ह्यनन्तरः पिण्डात्तस्य तस्य धनं भवेत्।
अत ऊर्ध्वं सकुल्यास्स्युराचार्यश्शिष्य एव वा॥

तदेतद्धारेश्वरो व्याचष्टे—यो योह्यनन्तरः पिण्डादित्यत्र पिण्डादिति पदं सपिण्डादित्यर्थे द्रष्टव्यम्। कः पुनरयमवधिभूतः सपिण्डः? पिता हरेदित्यधिकृतत्वात् पितैव। ननु पितुरन्तरस्तत्पिता भवति तत्पुत्रश्च। तत्रोभयोर्विद्यमानत्वे कस्यानन्तर्यं युक्तम्? तत्पुत्राणामिति ब्रूमः। कुत एतत्? 'पिता हरेदपुत्रस्य रिक्थं भ्रातर एव वा' इत्यत्र एवकारेण पितामहे रिक्थभागित्वाभावसूचनात्। ततश्च वचनादेव तुल्येऽप्यानन्तर्ये सन्ततिद्वारमेवानन्तर्यमिष्यते। एवञ्च 'यो यो ह्यनन्तरः पिण्डात्' इत्यनेन पितृसन्ततेरभावे पितामहसंततिरभिधीयते, तस्याप्यभावे प्रपितामहसन्ततिरित्येवमाद्यात्सपिण्डादित्यनुसन्धेयम्। सपिण्डानामभावे तु सकुल्याः समानोदकाश्चात्र सकुल्यशब्देनोच्यन्ते। तेषामप्यासन्नसन्ततेरभावे पूर्ववद्विप्रकृष्टसन्तती रिक्थार्हेति। एवञ्च ये—भ्रातृसुतानन्तरं पितामहो धनभाक् तदभावे तत्सन्ततिः, एवं प्रपितामहादेरपीत्याहुः, ते न्यायसिद्धक्रमबाधकक्रमान्तरपरवचनसूक्ष्मार्थज्ञा न भवन्ति। अत्रायं दायप्राप्तिक्रमः—भ्रातृसुताभावे पिताम-

हसुतस्य दायप्राप्तिः, तस्याभावे प्रपितामहसुतस्य, तस्याभावे वृद्धप्रपितामहसुतस्य, तस्याभावे वृद्धप्रपितामहपितृसुतस्य, तस्याभावे सपिण्डान्तिमपुरुषस्य, तस्याभावे तत्सुतस्य, तस्याभावे समानोदकाद्यपुरुषस्य, तस्याभावे तत्सुतस्य, एवमेवोपरितनषट्समानोदकसन्ततावप्यनुसन्धेयम् । तदेतत्सर्वमभिसन्धायाह बृहस्पतिः—

बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।
यस्त्वासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥

ज्ञातयः सपिण्डाः सकुल्याः समानोदकाः । बान्धवास्त्वासन्नतराः क्रमेणैव स्मृत्यन्तरे प्रदर्शिताः—

आत्मपितृष्वसुः पुत्रा आत्ममातृष्वसुस्सुताः ।
आत्ममातुलपुत्राश्च विज्ञेया आत्मबान्धवाः ॥
पितुः पितृष्वसुः पुत्राः पितुर्मातृष्वसुस्सुताः ।
पितुर्मातुलपुत्राश्च विज्ञेयाः पितृबान्धवाः ॥
मातुः पितृष्वसुः पुत्राः मातुर्मातृष्वसुस्सुताः ।
मातुर्मातुलपुत्राश्च विज्ञेया मातृबान्धवाः ॥

इति । ज्ञातिसकुल्यबन्धुषु वाचनिकासन्नतराभावे यथाकथञ्चिदप्यासन्नतरा मृग्याः, 'पिण्डगोत्रऋषिसम्बन्धा रिक्थं भजेरन्' इति सामान्येन गौतमस्मरणात् । बन्धूनामभावे के धनभाज इत्यपेक्षिते याज्ञवल्क्यः—'शिष्यसब्रह्मचारिणः' इति । धनभाज इति शेषः । उपनीय वेदमध्यापितः शिष्यः, एका-

चार्यः सब्रह्मचारी। शिष्योपाध्यायसम्बन्धेन धनसम्बन्धे गुणभूतस्य शिष्यस्य कथिते प्रधानभूताचार्यस्य दण्डापूपन्यायात् बन्ध्वभावे प्रथमं धनसम्बन्धो ज्ञायते इति मत्वाऽऽचार्यस्यात्रानभिधानमिति मन्तव्यम्। सब्रह्मचार्यभावे के धनभागिन इत्यपेक्षिते मनुः—

सर्वेषामप्यभावे तु ब्राह्मणा रिक्थभागिनः।
त्रैविद्याश्शुचयो दान्ताः तथा धर्मो न हीयते॥
अहार्यं ब्राह्मणद्रव्यं राज्ञा नित्यमिति स्थितिः॥

इति। मनूक्तलक्षणब्राह्मणाभावे राजानं प्रत्याह नारदः—

ब्राह्मणार्थस्य तन्नाशे दायादश्चेन्न कश्चन।
ब्राह्मणायैव दातव्यमेनस्वी स्यान्नृपोऽन्यथा॥

तन्नाशे अर्थस्वामिनाशे। ब्राह्मणेतरार्थस्य तन्नाशे त्वाह मनुः—

इतरेषां तु वर्णानां सर्वाभावे हरेन्नृपः।

इति। नृपो जनपदपुरपरिपालनादिकर्ता। सर्वेषामभावे राजगामि धनमित्यनुवृत्तौ नारदः—

अन्यत्र ब्राह्मणात्किंतु राजा धर्मपरायणः।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिस्स्मृतः॥

तत्स्त्रीणां ब्राह्मणेतरधनस्वामिस्त्रीणां धनभागित्वानर्हाणामित्यर्थः। सर्वेषामभावे इत्यत्र वर्णभेदनिबन्धनविशेषमाह सङ्ग्रहकारः—

पितर्यविद्यमानेऽपि धनं तत्पितृसन्ततेः।
तस्यामविद्यमानायां तत्पितामहसन्ततेः॥

असत्यामपि तस्यां तु प्रपितामहसन्ततेः ।
एवमेवोपरितनाः सपिण्डा रिक्थभागिनः ॥
तदभावे सकुल्यास्स्युराचार्यश्शिष्य एव वा ।
सब्रह्मचारी सद्विप्राः पूर्वाभावे परः परः ॥
शूद्रस्यैकोदराभावे राजा धनमवाप्नुयात् ।
आचार्यस्याप्यभावे तु तथा क्षत्रियवैश्ययोः ॥

इति सङ्ग्रहकारस्य धारेश्वरमतानुसारित्वात् पितर्यविद्यमानेऽपि धनं तत्पितृसन्ततेः इत्यभिधानम् । अस्मन्मते तु पितर्यविद्यमाने तु मातुर्धनं, तदभावे पितामह्याः, तदभावे धनिकपितृसन्ततेः भ्रातृतत्सुतरूपाया इत्यनुसन्धेयम् । एवमुक्तमपुत्रधनविषयं सर्वं यथायोग्यमनुपनीतोपकुर्वाणब्रह्मचारिसमावृत्तगृहस्थाश्रमान्तरबहिर्भूतस्नातकस्वामिविषयम्, नैष्ठिकवनस्थयतिस्वामिकधनविषये तु ग्राहकान्तरस्मरणात् । तथाच याज्ञवल्क्यः—

वानप्रस्थयतिब्रह्मचारिणां रिक्थभागिनः ।
क्रमेणाचार्यसच्छिष्यधर्मभ्रात्रेकतीर्थिनः ॥

ब्रह्मचार्यत्र यतिसाहचर्यान्नैष्ठिकोऽवगम्यते । धर्मभ्राता समानाचार्यकः । एकतीर्थः समानशास्त्रकः क्रमेण पूर्वपूर्वाभावे परः पर इत्यर्थः ॥

इति स्मृतिचन्द्रिकायां दुहित्रादिविषयाणि.

---

अथ संसृष्टभ्रात्रादिविषयाणि कानिचिद्वचनानि लिख्यन्ते।
अत्र बृहस्पतिः—

विभक्तो यः पुनः पित्रा भ्रात्रा वैकत्र संस्थितः।
पितृव्येणाथवा प्रीत्या तत्संसृष्टस्स उच्यते॥

यः पुत्रादिः पित्रादिना सह विभक्तस्सन् पुनः प्रीत्यादिनिमित्तेन विभक्तेनैव येन पित्रादिना सहवाससमापन्नः स तेन संसृष्ट इत्युच्यत इत्यर्थः। इदं चात्रार्थादवगम्यते—पितृभ्रातृपितृव्यव्यतिरिक्तेन भ्रातृपितृव्यपुत्रादिना सह संसर्गो न विद्यत इति। सहवासे पुरुषाणामाहत्य संसर्गाभावात् धनद्वारेण संसर्गो वाच्य इतीदंताव्यवहारनिमित्तभूतावच्छेदकापनोदेन विभक्तानां पूर्ववदेकराशीकरणपर्यन्तस्संसर्गो न पुनः सहवासमात्रमिति मन्तव्यम्। अत एव पुनः क्रियमाणधनविभागमनूद्य तत्र प्रकारविशेषमाह मनुः—

विभक्तास्सहजीवन्तो विभजेरन् पुनर्यदि।
समस्तत्र विभागस्स्याज्ज्यैष्ठ्यं तत्र न विद्यते॥

सहजीवन्तः सहवासेन जीवन्तः। विभजेरन् संसृष्टधनमिति शेषः। तत्र संसृष्टधनविभागे समविभागविधानादेव सिद्धे ज्यैष्ठ्यनिमित्तकांशाग्रहणे पुनर्ज्यैष्ठ्यनिमित्तकभागवैषम्यनिषेधोऽयं स्वल्पधनसंसर्गनिमित्तकभागवैषम्यानुज्ञानार्थः। तेन संसर्गसमये यदीयं यावत्संसृष्टं तदनुसारेण संसृष्टविभागवैषम्यं कल्पनीयम्। एवंच धनस्येदंतापनोदाय संसर्गो न पुनरिय-

त्तापनोदायेति मन्तव्यम् । अन्यदपि भागवैषम्यं निमित्ता-न्तरकृतमाह बृहस्पतिः—

संसृष्टानां तु यः कश्चिद्विद्याशौर्यादिनाऽधिकम् ।
प्राप्नोति तस्य दातव्यो द्व्यंशश्शेषास्समांशिनः ॥

तस्मिन् प्राप्ताधिकधन इति शेषः । संसृष्टद्रव्यानुपरोधेनार्जितेऽपि विभाज्यत्वविधानार्थमेतत् । संसृष्टानां मध्ये पुनर्विभागकरणादर्वाक्प्रमीतस्य पुत्रादिसद्भावे,

प्रमीतपितृकाणां तु पितृतो भागकल्पना ।

इति विधिना विभागः कर्तव्यः, विधानान्तरास्मरणात्, पुत्राद्यभावे तु न पत्नीदुहितृन्यायः, विधानान्तरस्मरणात् । तथाच बृहस्पतिः—

विभक्ता भ्रातरो ये तु संप्रीत्यैकत्र संस्थिताः ।
पुनर्विभागकरणे तेषां ज्यैष्ठ्यं न विद्यते ॥
यदा कश्चित्प्रमीयेत प्रव्रजेद्वा कथञ्चन ।
न लुप्यते तस्य भागः सोदरस्य विधीयते ॥

इति । यथा प्रथमविभागकरणात् पूर्वं मृतस्यापुत्रस्य प्रव्रजितस्य वा भागो लुप्यते, विभागाभावेन तद्धेतुकाया इयत्ताया अभावात्, तेन सर्वं रिक्थं सहवासिन एव तत्र सर्वे गृह्णन्ति, न तथाऽत्र विभागहेतुकाया इयत्तायाः अभावः, प्रथमविभागेनैवेयत्तायाः कृतत्वात् । न च संसर्गात्सा अपैति,

तस्येदन्तामात्रापनोदकत्वात् । तेन न सर्वं रिक्थं संसृष्टिन एव सर्वे गृह्णीयुः, किंतु विभागकाले तत्तद्भागः पृथगुद्धरणीयः । स च विभक्तपतिभागविषय इवादौ न पत्न्याः, किंतु संसृष्टि-सोदरस्य भ्रातुर्वचनेन विधीयते । सोदरस्येत्येकवचनमविव-क्षितम् । अत एव नारदः—

भ्रातॄणामप्रजाः प्रेयात् कश्चिच्चेत्प्रव्रजेत वा ।
विभजेयुर्धनं तस्य शेषास्ते स्त्रीधनं विना ॥

शेषाः संसृष्टिनः सोदरभ्रातरः,

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।

इति याज्ञवल्क्यस्मरणात् । संसृष्टिनो भ्रातुर्धनं संसृष्ट्येव भ्राता हरेत् न पत्न्यादिः, तत्रापि सोदर एवेत्यर्थः । एवं तर्ह्यत्र मृतस्य पत्नीनामप्रत्तदुहितॄणां च का गतिरित्यपेक्षितेऽप्याह नारदः—

भरणं चास्य कुर्वीरन् स्त्रीणामा जीवितक्षयात् ।
रक्षन्ति शय्यां भर्तुश्चेदाच्छिन्द्युरितरासु तत् ॥
या तस्य दुहिता तस्याः पित्र्योंऽशो भरणे मतः ।
आ संस्काराद्धरेद्भागं परतो बिभृयात्पतिः ॥

इति । तस्य मृतस्य प्रव्रजितस्य वा या दुहिता तस्याः परि-णयनं, ततःपूर्वं भरणं च शेषा एव कुर्वीरन्निति द्वितीयश्लो-कस्य तात्पर्यार्थः प्रत्येतव्यः । यत्र पुनश्शेषेषु भ्रातृष्वसंसृष्टा

अपि सोदराः केचित्सन्ति तत्र ये संसृष्टास्सोदरास्त एव विभजेयुः—

संसृष्टानां तु यो भागस्तेषामेव स इष्यते ।

इति प्रस्तुत्य भ्रातॄणामप्रजा इत्युक्तम् । यत्र त्वसंसृष्टास्सर्वे सोदराः भिन्नोदरास्तु संसृष्टाः तत्र सोदरा एव असंसृष्टा अपि तस्य धनं विभजेरन् न तु भिन्नोदरास्संसृष्टाः—

असंसृष्टयपि चादद्यात्संसृष्टो नान्यमातृजः ।

इति याज्ञवल्क्यस्मरणात् । असंसृष्टयपीत्यपिशब्दात् अन्यमातृजस्य संसृष्टित्वविशिष्टस्य आदानप्रतिषेधः अवगम्यते । यदा तु शेषेषु सोदराभावः तदा भिन्नोदरास्संसृष्टा विभजेयुः ।

संसृष्टौ यौ पुनः प्रीत्या तौ परस्परभागिनौ ।

इति बृहस्पतिस्मरणात् । अत्र भिन्नमातृकाविति पौनरुक्त्यपरिहाराय गम्यते । यत्तु याज्ञवल्क्योक्तं—

अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत् ।

इति, तत् सोदर्यसद्भावविषयमित्यविरुद्धम् । यद्यसंसृष्टानामेकोदराणामभाव एव संसृष्टभिन्नोदराणां धनग्रहणं तर्हि,

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियेतान्यतरो वाऽपि तस्य भागो न लुप्यते ॥
सोदर्या विभजेरंस्तं समेत्य सहितास्समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥

इति मनुवचनाविरोधस्स्यात् । चशब्दद्वयेन सर्वेषां श्लोको-

क्तानां सोदरभ्रातृभगिन्यसोदरभ्रातॄणामितरेतरयुक्तानां विभागावगतेः। किंच संसृष्टा भिन्नोदरभ्रातरस्तैस्सहितास्सोदर्यास्सनाभयो भगिन्यस्समेत्य तमलुप्तभागं समं विभजेरन्निस्येवान्वयान्मिळितानामेव कर्तृता सहितसर्वशब्दाभ्यां सुव्यक्तेति व्यक्तो विरोधः। केचिद्विरोधपरिहारार्थमिदं वचनमेवं व्याचक्षिरे—"तमलुप्तभागं सोदरा यदा संसृष्टिनः तदा त एव गृह्णीयुः, नासंसृष्टिनः सोदरा अपि। संसृष्टीनां सोदराणामभावे सर्वे सोदरास्समेत्य मिळितास्सहिताः समप्रधानभावेन समं अन्यूनाधिकं विभजेरन्। सोदराणामभावे भगिन्यस्सनाभयो विभजेरन्। तासामप्यभावे अन्योदर्या भ्रातरः" इति। तदेतत् अनेकाध्याहारकरणादसन्तासमञ्जसत्वाच्चोपेक्षणीयम्। अन्ये पुनर्विरोधपरिहारार्थं—

अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत्।
असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृजः॥

इति याज्ञवल्क्यवचनं पठित्वा तद्वचनं यथा प्रतीयमानमानववचनसमानार्थतया व्याकुर्वते। तत्र तावत् 'अन्योदर्यस्तु संसृष्टी नान्योदर्यो धनं हरेत्। असंसृष्टी' इत्येतावतो भागस्याक्षरार्थतात्पर्यार्थौ व्याख्यातौ। अन्योदर्यो यस्सापत्नो भ्राता संसृष्टिधनं हरेत् न पुनरन्योदर्यो धनं हरेत् असंसृष्टी। अनेनान्वयव्यतिरेकाभ्यामन्योदर्यस्य संसृष्टित्वं धनग्रहणे कारणमुक्तमिति। अपिचादद्यात् असं-

संसृष्टी' इत्येतावता मध्यमभागेन सह सम्बन्धमसंसृष्टीति पूर्वभागस्याभिधायाक्षरार्थसहितः तात्पर्यार्थो व्याख्यातः । असंसृष्टीत्येतदुत्तरेणापि संबध्यते । ततश्चासंसृष्टयपि संसृष्टिनो धनमाददीत । कोसावित्यत आह—'संसृष्टः' इति । संसृष्टः एकोदरसंसृष्टः सोदर्य इति यावत् । अनेनासंसृष्टस्यापि सोदर्यधनग्रहणे सोदरत्वं कारणमुक्तमिति । नान्यमातृज इति भागस्याप्येवकाराध्याहारं कृत्वा तेन सह सम्बन्धं संसृष्ट इति मध्यमभागान्तर्गतस्य पदस्याभिधायाक्षरार्थो व्याख्यातः । संसृष्ट इत्युत्तरेणापि सम्बध्यते । तत्र च संसृष्टः संसृष्टीत्यर्थः । नान्यमातृज इत्यत्र एवशब्दाध्याहारेण व्याख्यानं कार्यम् । संसृष्टयप्यन्यमातृज एव सोदरसहितः संसृष्टिनो धनं नाददीतेति कृत्स्नश्लोकस्य च तात्पर्यार्थो मानववचनसमानार्थतया दर्शितः । एवञ्च 'असंसृष्टयपि चादद्यात्' इत्यपिशब्दश्रवणात् 'संसृष्टो नान्यमातृजः' इत्यवधारणनिषेधादसंसृष्टसोदरस्य संसृष्टभिन्नोदरस्य च विभज्यग्रहणं कर्तव्यमित्युक्तं भवति । द्वयोरपि धनग्रहणकारणस्यैवैकस्य सद्भावादिति । तदेतत् एवंव्याख्यातृभ्यः तेभ्य एव रोचते, न पुनः प्रतिपत्तृभ्यः, वचनतोऽत्यन्ताप्रतीयमानस्यैव स्वप्रज्ञाबलाद्वचनार्थकरणात् । तस्मादत्र मनुवचनयाज्ञवल्क्यवचनयोर्यथाप्रतीयमानार्थपरयोर्विषयव्यवस्थयैवाविरोधो वाच्यो न पुनरर्थैक्याभिधानक्लेशादिति सैवोच्यते । मनुवचनं

तावत् स्थावरतदितरधनसद्भावविषयं, प्रजापतिना तत्रैव संसृष्टासंसृष्टानां विभज्यधनग्रहणविधानात्—

अन्तर्धनं च यद्द्रव्यं संसृष्टानां च तद्भवेत् ।
भूमिं गृहं चासंसृष्टाः प्रगृह्णीयुर्यथाऽंशतः ॥

इति । संसृष्टानां भिन्नोदरभ्रातॄणां यथांशतो गूढधनं जङ्गमं च द्विपदचतुष्पदादिरूपं भवेत् । असंसृष्टास्सोदरभ्रातृभगिन्यस्तु गृहक्षेत्रं यथांशतः प्रगृह्णीयुरित्यर्थः । एवंच पारिशेष्यात् केवलस्थावरसद्भावविषये केवलस्थावरेतरसद्भावविषये वा याज्ञवल्क्यवचनं द्रष्टव्यम् । यदा तु शेषभूतसंसृष्टभिन्नोदरा एव तदा पिता पितृव्यो वा यस्संसृष्टस्स एव गृह्णीयात् । 'संसृष्टिनि प्रेते संसृष्टो रिक्थभाक्' इति गौतमस्मरणात् । यदा तु पिता पितृव्यो वा संसृष्टो न विद्यते तदा त्वसंसृष्टभिन्नोदरो भ्राता गृह्णीयात् । तदभावे त्वसंसृष्टः पिता, तदभावे माता, तदभावे पत्नी । तथाच शङ्खः—'स्वर्यातस्य ह्यपुत्रस्य भ्रातृगामि द्रव्यं तदभावे पितरौ हरेयातां ज्येष्ठा वा पत्नी' इति । स्वर्यातस्य ह्यपुत्रस्य पित्रा पितृव्येण वा संसृष्टस्य संसृष्ट्यभावे भिन्नोदरासंसर्गे भ्रातृगामि द्रव्यमित्यर्थः । तथा च नारदः—

संसृष्टानां तु यो भागस्तेषामेव स इष्यते ।
अतोऽन्यथांशतो भाज्यो निर्बीजेष्वितरानियात् ॥

अतोऽन्यथा संसृष्टेषु सत्सु भिन्नोदरभ्रात्राद्यसंसृष्टिनो नांश-

भाजः। यदा तु सर्वे संसृष्टाः निर्बीजाः प्रजारहिता भवन्ति तदा चेतरान् भिन्नोदरभ्रात्रादीनसंसृष्टान् इयात् संसृष्टानां भागं प्राप्नुयादित्यर्थः। तत्र चायं 'भ्रातृगामि द्रव्यम्' इत्यादिशङ्खवचनोक्तक्रमो द्रष्टव्यः। ज्येष्ठाग्रहणं सुसंयतत्वादिगुणवत्त्याः कथनार्थं, न पुनर्मध्यमादिनिवृत्त्यर्थम्। पुनरपि तदभाव इति वक्तव्ये वाशब्दः प्रयुक्तः, फलसाम्यात्। तथाहि—वाशब्दाद्विकल्पो गम्यते। न चात्र स्वाम्यरूपे वस्तुनि तुल्यविकल्पः सम्भवति। 'न हि वस्तुनि विकल्पः' इति न्यायशास्त्रे सिद्धत्वात्। तस्मादत्र वाशब्दादभावविकल्पावगतेः फलसाम्यमस्त्येव। एवञ्चायं क्रमः—भ्रात्रभावे पिता हरेत् तदभावे माता तदभावे पत्नीति। ततश्च विभक्तविषयोक्तपत्नीदुहित्रादिक्रमविरुद्धत्वात्तदविरोधायैतत् संसृष्टांशविषयामिति कल्प्यते। विभक्तविषयोक्तनैयायिकपत्नीदुहित्रादिक्रमोऽस्मिन्विषये शङ्खोक्तवाचनिकक्रमेण बाध्यते। वाचनिक एवायं क्रमः, अस्मिन् क्रमे कस्यचिन्न्यायस्याभावात्। अनेन व्युत्क्रमेण यदा पत्नीनामागतं धनं भ्रातृपुत्रादयश्च सपिण्डा विद्यन्ते तदा त्वाह नारदः—

मृते पत्यौ तु भार्यास्स्युरभ्रातृपितृमातृकाः।
सर्वे सपिण्डास्स्वधनं विभजेयुर्यथांशतः॥

भार्याः पत्न्यः। अभ्रातृपितृमातृकाः याः पत्युर्भ्रातृपितृमातरस्तासामभावविशिष्टा इत्यर्थः। अनेन द्वन्द्वसमासे भ्रात्रपेक्षयाऽ

भ्यर्हितं पितृपदस्य पूर्वनिपातनं परित्यज्य वैपरीत्येन समासरचनां कुर्वता नारदेन संसृष्टापुत्रधनं प्रथमतो भ्रातृगामि तदभावे पितृगामि तदभावे मातृगामि तदभावे सर्ववृत्तस्थपत्न्यभिगामीति दर्शितम् । संसृष्टविषये पत्नीनां न गौणपुत्राभावे दायहरत्वं, किंतु भिन्नोदरासंसृष्टभ्रातृपितृमातृणामप्यभाव इति मन्तव्यम् । सर्वे सापिण्डा इत्यादेरयमर्थः—संसृष्टापुत्रस्य ये भ्रातृपितृमातृव्यतिरिक्तास्सपिण्डाः भ्रातृपुत्रादयस्ते स्वधनं पूर्वमपुत्रधनेन सह स्वपित्रादिसंसृष्टं तदूर्ध्वं तत्पत्नीभिस्सह यथांशतो भ्रातृपुत्राणां भ्रात्रंशो भार्याणां भर्त्रंश इत्यंशानतिक्रमेण विभजेयुरिति । पत्नीनामभावे तु संसृष्टापुत्रांशं तद्भगिनी लभते । तथाच बृहस्पतिः—

> या तस्य भगिनी सा तु ततोंशाल्लब्धुमर्हति ।
> अनपत्यस्य धर्मोऽयमभार्यापितृकस्य च ॥
> सा च दत्ता त्वदत्ता वा सोदरे तु मृते सति ।
> तस्यांशं तु हरेत्सैव द्वयोर्व्यक्तं हि कारणम् ॥

अभ्रातृमातृकस्य चेति चशब्दार्थः । भगिन्यभावे तु केवलास्सपिण्डाः संसृष्टांशं—

> अनन्तरस्सपिण्डाद्यस्तस्य तस्य धनं भवेत् ।

इत्युक्तक्रमेण विभजेरन्, प्रतिपदोक्तानामभावात् । तथाच स एव—

मृतोऽनपत्योऽभार्यश्चेदभ्रातृपितृमातृकः ।
सर्वे सपिण्डास्तद्दायं विभजेरन्यथांशतः ॥

तद्दायं संसृष्टदायम् । मृतोऽनपत्यो भिन्नमातृको भ्रात्रादिप्रतिपदोक्तधनग्राहित्वरहितश्चेदिति पूर्वार्धस्य तात्पर्यार्थः । सपिण्डाभावे तु विभक्तसंस्थितद्रव्यवदेव संसृष्टस्वर्यातद्रव्यमपि समानोदकादिगामीत्यनुसन्धेयम् । संसृष्टद्रव्यमधिकृत्य सपिण्डेभ्यः ऊर्ध्वं विशेषास्मृतेः ॥

इति स्मृतिचन्द्रिकायां संसृष्टभ्रात्रादिविषयाणि.

---

## अथ विभक्तजपुत्रादिविभागः.

अत्र जीवद्विभागोत्तरकालजातं पुत्रं प्रत्याह विष्णुः— 'पितृाविभागानन्तरोत्पन्नस्य भागं दद्युः' इति । अस्यार्थः— अविस्पष्टगर्भायां पितृभार्यायां ये पुत्राः पित्रा विभक्तास्ते स्वविभागोत्तरकालजस्य पुत्रस्य तत्संभवाज्ञानतः स्वभागप्रविष्टतद्भागमुद्धृत्य दद्युरिति । पिता तु स्वभागप्रविष्टतद्भागांशं न दद्यात्, किंतु पूर्वजैर्दत्तानंशान् गृहीत्वा विभक्तजेन सह वसेत् । तस्याप्राप्तव्यवहारस्य सहवासेन पालनीयत्वात् । अत एव 'पितृविभक्ताः भागं दद्युः' इत्युक्तं, न पुनः पिता पितृविभक्ताश्च भागं दद्युरिति । यत्तु गौतमेनोक्तं—'विभक्तजः पित्र्यमेव' इति, भागं गृह्णीयादिति शेषः । तदेतत्पितृ-

विभक्तपुत्रैर्विभक्तजस्य भागदानात् प्रागेव मृते पितरि द्रष्टव्यम् । तथाच पूर्वजैर्भागो न देयः, पित्र्यमेवेत्येवकारकरणात् । यत्तु बृहस्पतिनोक्तं—

पित्रा सह विभक्ता ये सापत्ना वा सहोदराः ।
जघन्यजास्तु ये तेषां पितृभागहरास्तु ते ॥

इति, तत्रपितृभागहरा इत्यस्य पितृभाग एव भागहरा इत्यर्थोऽवगन्तव्यः । तदेतत् विभागादूर्ध्वमेव ये गर्भस्था भूत्वा जातास्तद्विषयम् । जघन्यजानां पितृभागादेव भागहरत्वे कारणमप्याह स एव—

अनीशः पूर्वजः पित्र्ये भ्रातृभागे विभक्तजः ।

अनीशः अस्वामी । अनीशः पूर्वजः पित्र्य इत्यत्र पित्रा सह विभक्तत्वादित्यभिप्रायः प्रत्येतव्यः । भ्रातृभागे विभक्तज इत्यत्र तु भ्रातृभागे विभक्तजधनसङ्क्रमणाभावादित्यभिप्रायोऽध्यवसेयः । प्रथमोक्ताभिप्रायेण विभक्ताग्रजानामनीशतां पित्र्ये प्रसाध्य तद्बलादन्यदप्याह स एव—

पुत्रैस्सह विभक्तेन पित्रा यत्स्वयमार्जितम् ।
विभक्तजस्य तत्सर्वमनीशाः पूर्वजास्स्मृताः ।

सर्वग्रहणं विभागात्पश्चादार्जिते पित्र्ये पूर्वजानां सुतानामगृहीतांशत्वेनांशोस्तीति शङ्कानिवृत्त्यर्थम् । एवंच पूर्वजास्तदितराश्चान्योन्यमसम्बन्धिजनवदस्वामिनः परस्परधने, किन्त्वीषदत्र भेदोस्तीत्याह स एव—

यथा धने तथा चर्णे दानाधानक्रयेषु च।
परस्परमनीशास्ते मुक्त्वाऽऽशौचोदकक्रियाः॥

केवलमाशौचोदकक्रियादौ परस्परमीशा न धनादावित्यर्थः। आधानमाधिः। उक्तमृणादावनीशत्वं संसर्गाभावे सतीत्याह स एव—

संसृष्टौ यौ पुनः प्रीत्या तौ परस्परभागिनौ।

इति। यत्पुनर्मनुनोक्तं—

ऊर्ध्वं विभागाज्जातस्तु पित्र्यमेव हरेद्धनम्।
संसृष्टास्तेन वा ये स्युः विभजेत स तैस्सह॥

इति, तत्र पित्र्यमेवेत्युत्तरार्धेऽपि संबध्यते। अतो न प्रागुक्तेन विरुद्धम्। तदेतद्विभक्तजेन पितुस्सहवासदशायां मृते पितरि द्रष्टव्यम्। अजीवद्विभागोत्तरकालजातं तु पुत्रं प्रत्याह याज्ञवल्क्यः—

विभक्तेषु सुतो जातस्सवर्णायां विभागभाक्।
दृश्याद्वा तद्विभागस्स्यादायव्ययविशोधितात्॥

पितुरूर्ध्वमविस्पष्टगर्भायां पितृभार्यायां भ्रातृषु परस्परं विभक्तेषु पश्चात्सुतो यो जातस्स विभागभाक्, भाग एव विभागः तं लभत इति यावत्। सर्वस्माद्विभक्ततद्धनादुद्धृत्य भागभागिति यावत्। यद्वा—दृश्यात् दृश्यमानगृहोपस्करवाह्यदोह्याभरणभृत्यादेः सकाशादेवायव्ययविशोधितात् उपचयापचयाभ्यामवधारितेयत्तादिकाद्विभक्तादुद्धृतो भागस्तस्य विभक्त-

जस्य स्यादित्यर्थः। इश्यग्रहणं गूढद्रव्यजाताद्विभक्तादुद्धृत्यांशकल्पनानिवृत्त्यर्थम्। विभक्तजस्य सुतत्वाविशेषेऽपि विभागकाले दुर्विज्ञेयसद्भावशालित्वात्तत्र भागे ह्रासकरणं न्याय्यमिति मन्वानेन पक्षान्तरमुक्तमिति मन्तव्यम्। दुर्विज्ञेयतत्सद्भावता न तद्दोषकृतेति प्रथमपक्षोपि नात्यन्तानुचित इति मन्तव्यम्। यत्र पुनर्विभक्तागतादौ पुरुषदोषकृतो विभागात् पश्चादागमस्तत्र विभक्तागतस्य ह्रासपक्ष एव न समानभागपक्षान्तरोन्मेषः। अत एव तत्र ह्रासभागमेवाह बृहस्पतिः—

गोत्रसाधारणं त्यक्त्वा योऽन्यं देशं समाश्रितः।
अर्धतस्त्वागतस्यांशः प्रदातव्यो न संशयः॥

गोत्रसाधारणं त्यक्त्वा सर्वसहवासनिवासदेशमुत्सृज्य योऽत्यन्तदूरदेशनिवासी स्वसद्भावाज्ञानतः शेषैरेव विभज्य सर्वस्मिन् धने गृहीते पश्चादागतस्यांशोऽर्धतो विभक्तद्रव्यार्धादुद्धृत्य दातव्य इत्यर्थः। अत्रेतरेषां विभक्तागतसद्भावाज्ञानं तद्दोषनिबन्धनमिति न पक्षान्तरोन्मेषः। अत एव न संशय इत्युक्तम्। एवमतिदीर्घकालप्रोषितस्य सद्भावाज्ञानतः कृते विभागे सत्यागतस्यापीत्याह स एव—

ऋणं लेख्यं गृहं क्षेत्रं यस्य पैतामहं भवेत्।
चिरकालप्रोषितोपि भागभागागतस्तु सः॥

भागभाक् अर्धभागित्यर्थः। आगतो विभागादूर्ध्वमागतः। पौत्रादिस्तु विभक्तागतः क्रमायातद्रव्यमात्रेंऽशभागित्याह स एव—

तृतीयः पञ्चमश्चैव सप्तमो योपि वा भवेत् ।
जन्मनामपरिज्ञाने लभेतांशं क्रमागते ॥

कस्यचिद्विभक्तागतस्य क्रमागतेष्वपि भूमात्रेंऽशो देय इत्याह स एव—

यं परम्परया मौलाः समस्तास्स्वामिनं विदुः ।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही ॥

आगतस्य विभागादूर्ध्वमिति शेषः । विभागादूर्ध्वमागतस्य पूर्वमागतस्य वा स्वभागं ग्रहीतुं प्रवृत्तस्य दृष्टादृष्टप्रमाणेनादौ तावदात्मनः परायत्ते द्रव्ये स्वाम्यं साधयतो भागहरणेऽधिकारो भवति नान्यथेत्याह स एव—

कृतेऽकृते वा विभागे रिक्थी यत्र प्रवर्तते ।
सामान्यं चेद्भावयति तत्र भागहरस्तु सः ॥

इति स्मृतिचन्द्रिकायां विभक्तजपुत्रादिविभागः.

---

## अथावलुप्तविभागः.

तत्र मनुः—

ऋणे धने च सर्वस्मिन् प्रविभक्ते यथाविधि ।
पश्चाद्दृश्येत यत्किञ्चित्तत्सर्वं समतां नयेत् ॥

विभागकाले यद्दृश्यते ऋणं धनं वा सर्वस्मिन् तस्मिन् यथाविधि—

पितृरिक्थहराः पुत्राः सर्व एव समांशिनः ।
विद्याकर्मयुतस्तेषामाधिकं लब्धुमर्हति ॥

इत्यादिविध्यनतिक्रमेण विभक्ते पश्चात् कालान्तरे यत्किञ्चि-द्दृणं प्रोषितोत्तमर्णस्य यत्किञ्चिद्धनं प्रोषितनिक्षेपधारकादि-समीपस्थं तयोस्समागमादिवशाद्दृश्यते तत्सर्वं समतां नयेत्। न पुनर्विद्याकर्मयुतेऽधिकतामित्यर्थः। पश्चाद्दृष्टे ऋणे समतानि-यमात् पूर्वदृष्टे ऋणे धनवद्विषमताऽस्तीति गम्यते। एवं वि भागकाले यद्वस्तु येनकेनाचिद्वञ्चकेन परकीयबुद्ध्युत्पादनादि ना प्रच्छादितं विभागोत्तरकाले विचार्यमाणे स्वकीयमेव ज्ञातं चेत्तत्समतां नयेदित्याह कात्यायनः—

प्रच्छादितं यदि धनं पुनरासाद्य तत्समम्।
भजेरन् भ्रातृभिस्सार्धं अभावे हि पितुस्सुताः॥

पितुरभावे सर्वे सुता एव तदासादितं विभजेरन्नित्यर्थः। एवं सहवासिषु केनचित्किञ्चिद्धनमपहृतं कथञ्चिद्विभागादूर्ध्वं दृष्टं चेत् समतां नयेत्। तथाच याज्ञवल्क्यः—

अन्योन्यापहृतं द्रव्यं विभक्ते यत्तु दृश्यते।
तत्पुनस्ते समैरंशैर्विभजेरन्निति स्थितिः॥

ते सर्वे विभक्ता इत्यर्थः। अपहृतवद्दुर्विभक्तमपि समतां नयेत्। तथाच कात्यायनः—

अन्योन्यापहृतं द्रव्यं दुर्विभक्तं च यद्भवेत्।
पश्चात्प्राप्तं विभज्येत समभागेन तद्भृगुः॥

दुर्विभक्तं अशास्त्रोक्तप्रकारेण विषमतया विभक्तं मिथोऽपहृ-तदुर्विभक्तवदन्यापहृतं नष्टलब्धं च समतां नयेत्। तथा वि-

भक्तेनार्जितं धनं त्वार्जकस्यैव भवति न दायादस्येत्याह स एव—

विभक्तेनैव यत्प्राप्तं धनं तस्यैव तद्भवेत् ।
हृतं नष्टं च यल्लब्धं प्रागुक्तं च पुनर्भजेत् ॥

प्रागुक्तं मिथोऽपहृतं दुर्विभक्तं च, दृष्टान्तार्थमत्र पुनरनयोरुपादानम् । एवञ्च प्रागुक्तवत् विभजेरन्नित्यर्थः । तेन परापहृतस्य नष्टलब्धस्य च सममेव विभजनमनेनोक्तमिति मन्तव्यम् । एवं मन्वादिभिर्विभागात् पश्चाद्दृश्यमानमात्रस्यैव साधारणद्रव्यस्य विभागविधानात् पूर्वकृतविभागः सम्यक् जात इति गम्यते । तेन विभागादूर्ध्वं किञ्चित्सामान्यद्रव्यदर्शनेऽपि पुरुषाणां विभक्तत्वं पूर्वमेव संपन्नमिति मन्तव्यम् । यत्पुनर्मनुनोक्तं—

विभागे तु कृते किञ्चित् सामान्यं यत्र दृश्यते ।
नासौ विभागो विज्ञेयः कर्तव्यः पुनरेव हि ॥

इति, तत् विभक्तैर्विभक्तद्रव्येष्वायव्ययादिकरणात् प्रागेव दृष्टविषये द्रष्टव्यम् । अन्यथा पूर्वोक्तसर्ववचनविरोधापत्तेः । पुनर्विभागविधानस्य प्रयोजनं पश्चाद्दृष्टांशेऽप्युद्धारादिकरणम् ॥

इति स्मृतिचन्द्रिकायां अवलुप्तविभागः.

---

## अथ विभक्तकृत्यम्.

तत्र नारदः—

यद्येकजाता बहवः पृथग्धर्माः पृथक्क्रियाः ।
पृथक्कर्मगुणोपेता न चेत्कार्येषु संमताः ॥

स्वभागान्यदि दद्युस्ते विक्रीणीरन्नथापि वा ।
कुर्युर्यथेष्टं तत्सर्वमीशास्ते स्वधनस्य वै ॥

अस्यार्थः—एकस्माज्जाता यदि बहवोऽनेकधा विभक्ताः तथा पृथक्पृथक् परस्परानुमतिमन्तरेण धनसाध्याग्निहोत्रादिकर्मकारिणस्स्युः, तथैव विभक्तव्ययायत्तकृष्यादिलौकिकक्रियाकारिणो भवेयुः, तथा विभिन्नभाण्डादिकर्माङ्गद्रव्योपेतास्स्युः, तथा स्वकार्येषु भ्रातरो न चेत्संमताः तदाताननादृत्य स्वकार्यं कुर्युः । तथा ते विभक्ता यदि स्वभागान् दद्युर्विक्रीणीयुरथापि वा तत्सर्वं यथेष्टं कुर्युः यतस्ते विभक्तास्स्वतन्त्राः स्वामिन इति यावत् । यत्तु बृहस्पतिनोक्तं

विभक्ता वाऽविभक्ता वा दायादास्स्थावरे समाः ।
एको ह्यनीशस्सर्वत्र दानाधमनविक्रये ॥

इति, आधमनं आधीकरणम् । तदेतत् यत्र समतया स्थावरविभागमतिदुष्करं मत्वा तत्फलमेव फलकाले विभज्य ग्रहीष्याम इत्यभिसन्धिना तदितरधनाविभागतो दायादा विभक्ता भवन्ति तद्विषयम्, तत्र स्थावरे त्वेकैकस्य स्वतन्त्रस्वामित्वाभावात् । विभक्तस्य कृत्यान्तरमप्याह स एव—

येनांशो यादृशो भुक्तः तस्य तन्न विचालयेत् ।

इति । तथा राजानं प्रत्याह—

स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत् ।

स राज्ञांऽशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत् ॥

अनुबन्धो निबन्धः आग्रह इति यावत् ॥

इति स्मृतिचन्द्रिकायां विभक्तकृत्यविषयाणि..

---

अथ विभागतद्धर्मसद्भावनिर्णयहेतवः कथ्यन्ते.

तत्र याज्ञवल्क्यः—

विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः ।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः ॥

यौतकैः पृथक्कृतैः । विभागग्रहणं तद्धर्माणामपि प्रदर्शनार्थम् ।

अत एव नारदः—

विभागधर्मसंदेहे दायादानां विनिर्णयः ।
ज्ञातिभिर्भागलेख्येन पृथक्कार्यप्रवर्तनात् ॥

नासीदावयोर्विभाग इति स्वरूपापलापादिना सर्वस्माद्विभाज्यान्नावयोर्विभाग इति धर्मापलापादिना विभागतद्धर्मसद्भावसंदेहे दायादानां ज्ञात्यादिसाक्षिभिर्विभागलेख्येन वा पृथक्कार्यप्रवर्तनादियुक्तिभिर्वा निर्णयो ज्ञेय इत्यर्थः । पृथक्कार्यप्रवर्तनं दायादानां पृथक्पृथग्वैश्वदेवभिक्षादानातिथिपूजनादिधर्मप्रवर्तनम् । कथं तस्य युक्तित्वमित्यपेक्षिते अनन्तरमुक्तं तेनैव—

भ्रातॄणामविभक्तानामेको धर्मः प्रवर्तते ।
विभागे सति धर्मोऽपि भवेत्तेषां पृथक्पृथक् ॥

धर्मो वैश्वदेवादिः । तथाच बृहस्पतिः—

एकपाकेन वसतां पितृदेवद्विजार्चनम् ।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे ॥

एवञ्च पृथक्पृथग्वैश्वदेवादिकार्यप्रवर्तनं अविभक्तेष्वविद्यमानं विभक्तत्वमवगमयतीति विभागसंदेहे सति निर्णायकयुक्तित-योक्तिर्युक्तेत्यनवद्यम् । युक्त्यन्तराणि वक्तुं परस्परसाक्षित्वा-दिकं तावद्विभक्तानां विधास्यन् तत्प्रतिषेधमविभक्तेषु स एवाह—

साक्षित्वं प्रातिभाव्यं च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्युः नाविभक्ताः परस्परम् ॥

ग्रहणं प्रतिग्रहः । एवञ्च परस्परसाक्षित्वादियुक्तिभ्योपि वि-भागसद्भावावगतिः सिध्यत्येव । अत एवानन्तरमुक्तं तेनैव—

येषामेताः क्रिया लोके प्रवर्तन्ते स्वरिक्थिषु ।
विभक्तानवगच्छेयुः लेख्यमप्यन्तरेण तान् ॥

प्रवर्तन्ते व्यस्तास्समस्ता वेति शेषः । एवमृणग्रहणमपि रि-क्थिषु प्रवर्तमानं विभक्तावगमकम् । अविभक्तेष्वप्रवर्तनात् । तथाच याज्ञवल्क्यः—

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि ।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम् ॥

ततश्च ऋणदातुरपि ऋणग्रहीतुः सकाशात् विभक्तत्वं सि-द्धम् । अत एव बृहस्पतिः—

पृथगायव्ययधनाः कुसीदं च परस्परम् ।
वणिक्पथं च ये कुर्युः विभक्तास्ते न संशयः ॥

कुसीदं वृद्ध्यर्थं धनप्रयोगः । वणिक्पथो वाणिज्यम् । परस्परमित्युभयत्र संबध्यते । एवं हेतुतो निर्णयः स्वतश्श्रेष्ठनिर्णायकप्रमाणाभावे कार्य इत्याह स एव—

साहसं स्थावरं स्वाम्यं प्राग्विभागश्च रिक्थिनाम् ।
अनुमानेन विज्ञेयो न स्युर्यत्र च साक्षिणः ॥

प्राग्विभागो विभागविवादात् प्राग्जातो विभागः । अनुमानं युक्तिः । साहसादिसाधकयुक्तिप्रदर्शनार्थं कांश्चित्साधकानाह स एव—

कुलानुबन्धव्याघातहोढं साहससाधकम् ।
स्वस्य भोगस्स्थावरस्य विभागस्य पृथग्धनम् ॥

कुलानुबन्धः पूर्वपुरुषवैरानुबन्धः । व्याघातः परस्परं स्पर्धा । होढं बलादपहृतलेशदर्शनम् । स्वस्य भोगः आत्मनो भोगः अत्र कात्यायनः—

वसेयुर्दश वर्षाणि पृथक्धर्माः पृथक्क्रियाः ।
भ्रातरस्तेऽपि विज्ञेयाः विभक्ताः पैतृकाद्धनात् ॥

भ्रातृशब्दोऽत्र रिक्थसम्बन्ध्युपलक्षणार्थः । पैतृकग्रहणं दायधनोपलक्षणार्थम् । परमार्थतो दायग्रहणाभावेऽपि,

पश्यतोऽब्रुवतो भूमेर्हानिर्विंशतिवार्षिकी।
परेण भुज्यमानायाः धनस्य दशवार्षिकी ॥

इति वचनानुसारेण विभक्ता एवेति विज्ञेया इत्यर्थः। दश वर्षादर्वाक् पुनः प्रागुक्तयुक्तिभिरेव निर्णयः। तासामन्यथा सिद्धिसम्भावनया निर्णयाभावे तु—

युक्तिष्वप्यसमर्थासु शपथैरेव निर्णयेत्।

इति वचनाद्यद्यपि शपथः प्रापितः, तथाऽपि शपथे निर्णयो न कार्यः। यत आह याज्ञवल्क्यः—

विभागधर्मसंदेहे बन्धुसाक्ष्यभिलेखितैः।
विभागभावना कार्या न भवेद्दैविकी क्रिया॥

इति। कथं तर्हि युक्तिष्वसमर्थासु निर्णय इत्यपेक्षिते मनुः—

विभागे यत्र संदेहो दायादानां परस्परम्।
पुनर्विभागः कर्तव्यः पृथक्स्थानस्थितैरपि॥

यत्र संदेहो युक्तिभिरसमर्थाभिर्नापैतीति शेषः। यत्पुनस्तेनैवोक्तं—

सकृदंशो निपतति सकृत्कन्या प्रदीयते।
सकृदाह ददानीति त्रीण्येतानि सकृत्सकृत्॥

इति, तत् युक्त्यादिभिरपगतसंदेहविभागविषयमिति सर्वमनवद्यम्॥

इति स्मृतिचन्द्रिकायां विभागतद्धर्मसद्भावनिर्णयहेतवः.
समाप्तं च दायविभागाख्यपदस्य विधिवितानम्.

---

अत्रेयं प्रकरणानुपूर्वी—विभागकालकर्तृप्रदर्शनं, जीवद्वि- भागप्रकारः, विषमविभागप्रकारः, अजीवद्विभागप्रकारविषयाणि, दायानर्हविषयाणि, विभाज्यनिरूपणं, अविभाज्यनिरूपणं, पुत्रपौत्रादिविभागकल्पनाविषयाणि, स्त्रीधनभेदाः, स्त्रीधनकृत्यं, स्त्रीद्वाराऽऽगतधनविभागः, गौणपितृद्वाराऽऽगतधनविभागः, पुत्रद्वाराऽऽगतधनविभागः, अपुत्रद्वाराऽऽगतधनविभागे पत्नीविषयाणि, दुहित्रादिविषयाणि, संसृष्टभ्रात्रादिविषयाणि, विभक्तजपुत्रादिविभागः, अवलुप्तधनविभागः, विभक्तकृत्यं, विभागतद्धर्मसद्भावनिर्णयहेतवः ॥

इति स्मृतिचन्द्रिकायां दायविभागाख्यपदस्य प्रकरणानुपूर्वी.

इति दायभागप्रकरणं समाप्तम्.



# अथ साहसाख्यपदस्य विधिरुच्यते.

---

तत्र बृहस्पतिः—

मनुष्यमारणं चौर्यं परदाराभिमर्शनम् ।
पारुष्यमुभयं चेति साहसं स्याच्चतुर्विधम् ॥

अत्र आद्ये द्विविधे साहसे साहसिकज्ञानार्थमाह स एव—

हतस्तु दृश्यते यत्र घातकस्तु न दृश्यते ।
पूर्ववैरानुमानेन ज्ञातव्यस्स महीभुजा ॥
विज्ञेयोऽसाधुसंसर्गाच्चिह्नात् होढेन तस्करः ।
एषोदिता घातकानां तस्कराणां च भावना ॥

चिह्नं शोणितलेपादिः । होढेन हृतहस्तस्थधनादिना । उदित-भावनासंभवे तु कात्यायनः—

विना चिह्नैस्तु यत्कार्यं साहसाख्यं प्रवर्तते ।
शपथैस्स विशोध्यस्स्यात् सर्ववादेष्वयं विधिः ॥

इति । स इति साहसकर्तृत्वेनाभियुक्तः प्रत्यवमृश्यते । तत्र बृहस्पतिः—

दिव्यैर्विशुद्धो मान्यस्स्यादशुद्धो वधमर्हति ।

इति । नारदोपि—

तत्कारिणो नार्थदण्डैश्शास्या वध्याः प्रयत्नतः ।

इति । तत्कारिणः साहसलक्षणवधकारिणः । तेषां वधे

विशेषमाह व्यासः—

ज्ञात्वा तु घातकं सम्यगसहायं सबान्धवम् ।
हन्याच्चित्रवधोपायैरुद्वेजनकरैर्नृपः ॥
बन्दिग्राहांस्तथा वाजिकुञ्जराणां च हारिणः ।
प्रसह्य घातिनश्चैव शूलानारोपयेन्नरान् ॥

यत्तु बृहस्पतिनोक्तं—

प्रकाशवधकाराश्च तथा चोपांशुघातकाः ।
ज्ञात्वा सम्यग्धनं हृत्वा हन्तव्या विविधैर्वधैः ॥

इति, तत् ब्रह्मघ्नक्षत्रियादिविषयम् । यदाह बोधायनः— 'क्षत्रियादीनां ब्राह्मणस्य वधे वधः सर्वस्वहरणं च, तेषामेव तुल्यापकृष्टवधे यथाबलमनुरूपान् दण्डान् प्रकल्पयेत्' इति । बहूनामेकघातकत्वे दोषानुरूपदण्डाभिधानार्थमाह कात्यायनः—

एकं चेद्बहवो हन्युस्संरब्धाः पुरुषं नराः ।
मर्मघाती तु यस्तेषां स घातक इति स्मृतः ॥

तत्र स एव वधापराधदण्डभाक् । तथाच बृहस्पतिः—

मर्मघाती तु यस्तेषां यथोक्तं दापयेद्दमम् ।

इति । तमिति शेषः । यत्तदोर्नित्याभिसम्बन्धात् । मर्महन्तृव्यतिरिक्तानामपि दण्डोऽनन्तरमुक्तः—

आरम्भकृत्सहायश्च तथा मार्गानुदेशकः ।

आश्रयश्शस्त्रदाता च भक्तदाता विकर्मिणाम् ॥
युद्धोपदेशकश्चैव तद्विनाशप्रदर्शकः ।
उपेक्षी कार्ययुक्तश्च दोषवक्ताऽनुमोदकः ॥

स्मृत्यन्तरेऽपि—

अनिषेद्धा क्षमो यस्स्यात् सर्वे तत्कार्यकारिणः ।
यथाशक्त्यनुरूपं तु दण्डमेषां प्रकल्पयेत् ॥

इति । अनुरूपं दोषानुरूपम् । अत एव मर्महन्तृदोषार्धभागित्वं द्रष्टुर्दर्शयति मनुः—

आरम्भकृत्सहायश्च दोषभाजौ तदर्धतः ।

इति । एवं मार्गानुदेशकादेरपि दोषलाघवमूह्यम् । याज्ञवल्क्यस्तु साहसप्रयोजकत्वतारतम्याद्दोषमहत्त्वतारतम्यं दण्डातिरेककथनमुखेनाह—

यस्साहसं कारयति स दाप्यो द्विगुणं दमम् ।
यश्चैवमुक्त्वाऽहं दाता कारयेत्स चतुर्गुणम् ॥

यदिदं साहसं भवान् कुर्यात् तदैतावद्धनं भवते दास्यामीत्येवमुक्त्वा साहसं कारयति स चतुर्गुणं दाप्य इत्यर्थः । द्विगुणं चतुर्गुणमित्यत्र साहसकर्तुरुक्तदण्डात् द्विगुणं चतुर्गुणमित्यर्थोऽवसेयः । मनुस्तु क्रोधादितः प्रेरितानां साहसिकानामुक्तो यो दण्डस्तस्याभावं दोषाभावकथनमुखेन विधिकः प्रेरितानां साहसिकानां कथयति—

शस्त्रं द्विजातिभिर्ग्राह्यं धर्मो यत्रोपरुध्यते ।
द्विजातीनां च वर्णानां विप्लवे कालकारिते ॥
आत्मनश्च परित्राणे दक्षिणानां च संगरे ।
स्त्रीविप्राभ्यवपत्तौ च घ्नन् धर्मेण न दुष्यति ॥

धर्मः तटाकारामादिकः भेदनच्छेदनादिसाहसिकैः यत्र देशे काले चोपरुध्यते, तथा शूद्रेतरवर्णसंकरे परदाराक्रमणादिरूपे राजाभावकालकारिते, तथाऽऽत्मनः परतः प्राणसंशये, तथा दक्षिणानां गवां संगरे ग्रहणनिमित्तकयुद्धे, तथा स्त्रीविप्राभ्यवपत्तौ दुर्बलहिंसानिवारणे, द्विजातिभिः क्षत्रधर्माश्रयणरहितैरसमर्थैश्शस्त्रं ग्राह्यमिति संबन्धः । क्षत्रियस्य प्रजामात्ररक्षणार्थं शस्त्रग्रहणं प्राप्तमिति तद्व्यतिरिक्तविप्रवैश्यविषयं द्विजातिग्रहणम् । तथाच बोधायनः—

ब्राह्मणार्थे गवार्थे वा वर्णानां वाऽपि सङ्करे ।
गृह्णीयातां विप्रविशौ शस्त्रं धर्मव्यतिक्रमे ॥

गौतमोपि—'प्राणसंशये ब्राह्मणोपि शस्त्रमाददीत दुर्बलहिंसायां विमोचने शक्तश्चेत्' इति । ब्राह्मणग्रहणं वैश्यस्यापि प्रदर्शनार्थम् । अत एव विष्णुः—'आत्मत्राणे वर्णसंकरे वा ब्राह्मणवैश्यौ शस्त्रमाददीयाताम्' इति । यत्तु बोधायनेनोक्तं—'भयार्थमपि ब्राह्मण आयुधं नाददीत' इति, यदप्यापस्तम्बेन—'परीक्षार्थोपि ब्राह्मण आयुधं नाददीत' इति, उभयत्राप्यपिशब्देन बिभीषिकार्थं हिंसार्थं वा ब्राह्मणस्य शस्त्र-

ग्रहणं दूरोत्सारितमिति गम्यते। तेन बिभीषिकार्थं ब्राह्मणस्य शस्त्रग्रहणविधानं पूर्वोक्तं विरुध्यते; सत्यं, अत एव पूर्वोक्तधर्मोपरोधादिशस्त्रग्रहणविधिविषयादन्यत्र प्रतिषेधोऽवतिष्ठते इति व्यवस्थापनीयम्। 'घ्नन् धर्मेण न दुष्यति' इति वदता मनुना हिंसापर्यन्तोऽयं शस्त्रग्रहणोपदेशो न बिभीषिकामात्रसंजननायेति दर्शितम्। 'घ्नन् धर्मेण न दुष्यति' इत्यस्य यद्यपि क्षात्रयुद्धधर्मेण घ्नन् न दुष्यतीत्यर्थो भवति। तथाऽपि धर्मोपरोधकादिहिंसाया अवश्यकर्तव्यत्वात्तत्र क्षात्रयुद्धधर्मेण घ्नन्नित्यर्थायोगाद्धर्मेण हिंसादिविधिना प्रेरितो भूत्वा घ्नन् न दुष्यतीत्यर्थोऽवगन्तव्यः। एतदुक्तं भवति— धर्मोपरोधकादिहिंसायाश्चोदितत्वात् तत्कर्ता न दुष्यतीति। तथाच मनुवृत्तावुक्तं—'स्तेनादीनां वधः क्षात्रधर्मेणेत्ययुक्तं, तद्धननस्यावश्यकर्तव्यत्वात्। तस्माद्धर्मेण शास्ता न दुष्यतीति द्रष्टव्यम्' इति। धर्मोपरोधकादिहननचोदना स्मृत्यनुमेया न प्रत्यक्षश्रुतेरिति दर्शयितुमुपक्रमस्मृतिवाक्यमाह मनुः—

गुरुं वा बालवृद्धौ वा ब्राह्मणं वा बहुश्रुतम्।
आततायिनमायान्तं हन्यादेवाविचारयन्॥

अत्र गुर्वादिपदान्यन्यपरतया प्रयुक्तानीति दर्शयितुं तेषां तात्पर्यार्थो वृत्तिकारेण दर्शितः—गुरुं वा मान्यतमं वेत्यर्थः। बालवृद्धौ वा कृपाविषयमपीत्यर्थः। ब्राह्मणं वा बहुश्रुतं समस्तपात्रगुणयुक्तमित्यर्थः। उत्तरार्धार्थोऽपि तेनैव दर्शितः—

वधार्थमधिकारविच्छेदार्थमवश्यमेतीत्यातताथिनमायान्तं प्रवृत्तं प्राणाद्यपहारे हन्यादेव, अविचारयन्नित्यत्र धारणेति नियमः पर इति। कात्यायनोपि—

विनाशहेतुमायान्तं हन्यादेवाविचारयन्।

विनाशहेतुं उदासीनं जलभेदादिविनाशहेतुं आततायिनमिति यावत्। क्वचिदपि विचारयन्निति पाठादर्शनात्। एतदुक्तं भवति—आततायिवधः सदोषो निर्दोषो वेति विचारो न कार्यः वैधत्वादिति। वासिष्ठोपि वैधत्वं दर्शयति—

आततायिनमायान्तमपि वेदान्तगं रणे।

जिघांसन्तं जिघांसीयान्न तेन भ्रूणहा भवेत्॥

इति। अत्र केचिदाहुः—आततायिवधविधिवाक्यत्रयेऽप्यायान्तमिति वचनादात्तशस्त्रो हन्तुमुन्मुखोऽभिधावन् दारादीन्वा जिहीर्षन् हन्तव्यः। कृते त्वनर्थे किमन्यत् करिष्यतीत्युपेक्ष्य एवेति। अत्र कृते त्वनर्थ इत्याद्ययुक्तमित्यपरे दूषयन्ति। करिष्यन् कृतवांश्च द्वावपि दौष्ट्येन समौ वधार्हावेव। तस्मादायान्तमिति पदं कृत्वाऽऽगतस्याप्याततायिन उपलक्षणार्थमुक्तमिति। अन्ये पुनरेवमाहुः—वर्तमानार्थजिघांसन्तमिति विधिवाक्यस्थपदपर्यालोचनया वर्तमानाविषदानादिव्यापारा एवाततायिन उच्यन्ते। तद्व्यापारनिवारणं च यत्राततायिवधमन्तरेण न संभवति तत्रैव तद्वधाभ्यनुज्ञा, सत्यां गतौ वधस्यानुचितत्वात्। तेन विषोपादानादौ व्याप्रियमाणः प्रहर-

णादिमात्रेण अनिवार्यः, न हन्तव्यः। विषदानादौ व्यापृतस्य ग्रहणादिमात्रेण निवारयितुं शक्यस्य वा वधो दोषनिमित्त मेवेति। तदपि न—न हि विषदानादिव्यापारेषु व्यापृतानां व्यापारनिवृत्तावपि पूर्वसिद्धं परशरीरादिविनाशहेतुत्वलक्षण माततायित्वमपैति। तदुक्तं मेधातिथिना—'आततायित्वाच्चासौ हन्यते न हि कृतवतः आततायित्वमपैति' इति। तेन विष दानादौ व्यापृतोप्याततायित्वाद्धन्तव्य इति मेधातिथेरभिप्रायः। ननु च दारादिरक्षणार्थो वध इति कृते दारादिविप्लवे पश्चा द्वधो व्यर्थ इत्युपेक्ष्य एव कृतवानाततायी, न हन्तव्यः। मैवं—न दारादिरक्षणार्थो वधविधिः, किंतु दाराद्युपद्रवादिनि-मित्ते वधो विधीयते। रक्षणार्थस्तु वधविधिरात्मनश्च परि-त्राण इत्यादौ क्वचिदेव। तस्मात्कृतवानित्याततायी नोपेक्ष्यः। अत एव मनुः—

नाततायिवधे दोषो हन्तुर्भवति कश्चन।
प्रकाशं वाऽप्रकाशं वा मन्युस्तं मन्युमृच्छति॥

एतद्भाष्यकारो मेधातिथिर्व्याचष्टे—'न कश्चनेति नेहाधर्मो न दण्डो न प्रायश्चित्तम्। प्रकाशं आभाष्य जनसमक्षम्। अ-प्रकाशं विषदानादिना येनकेनचिदुपायेन। मन्युः क्रोधाभि-मानिनी देवता। स मन्युमृच्छति। नात्र हन्तृहन्तव्यभावोस्ति पुरुषयोः। आततायिक्रोधः इतरेण क्रोधेन हन्तव्य इत्यर्थ-वादोऽयम्' इत्यादिग्रन्थेन। अत्राप्रकाशवधेऽपि दोषाभावं

वदन् मनुरप्युपप्लुत्रं कृत्वा गतेऽप्याततायिनि विषदानादिना वधो न दोषायेति दर्शयति, उपप्लवकरणसमये विषदानासम्भवात्। बृहस्पतिरपि—

नाततायिवधे हन्ता किल्बिषं प्राप्नुयात्क्वचित्।
विनाशार्थिनमायान्तं घातयन्नापराध्नुयात् ॥

अत्र करिष्यदाततायिविषयं उत्तरवाक्यं विनाशार्थिनमिति विशेषश्रुत्यैव प्रतिपन्नमिति पूर्ववाक्यं कृत्वागताततायिविषयमिति गम्यते। करिष्यदाततायिनोपि यथाकथञ्चित् विनाशार्थित्वापगमात् निवृत्तोद्यमाः तदा तान् घातयन् अपराध्नुयादिति दर्शयितुं 'विनाशार्थिनमायान्तम्' इत्युक्तम्। अत एवास्मिन् विषये वधस्थाने ग्रहणमाह कात्यायनः—

उद्यतानां तु पापानां हन्तुर्दोषो न विद्यते।
निवृत्तास्तु यदारम्भात् ग्रहणं न वधः स्मृतः ॥

आततायित्वानिष्पत्तेरित्यभिप्रायः। आततायित्वनिष्पत्तावपि क्वचिद्विषये न वध इत्याह सुमन्तुः—'आततायिवधे न दोषोऽन्यत्र गोब्राह्मणाद्यदा हतः प्रायश्चित्तं स्यात्' इति। गौः ब्राह्मणो वा आततायी यदा हतः तदा प्रायश्चित्तं स्याद्दोषस्स्यादित्यर्थः। आत्मपरित्राणव्यतिरिक्तविषयमेतत्। यदाह देवलः—

आत्मत्यागः परत्यागात् पापीयान् पातकादपि।

पातके निष्कृतिः प्रोक्ता कथमात्मघ्ननिष्कृतिः ॥
आत्मानं बुद्धिसम्पन्नं योग्यं सर्वार्थसिद्धिषु ।
श्रमदुःखभये त्यक्त्वा रौरवे परिपच्यते ॥
उद्यम्य शस्त्रमायान्तं भ्रूणमप्याततायिनम् ।
निहत्य भ्रूणहा न स्यादहत्वा भ्रूणहा भवेत् ॥

इति । परवधार्हपातकादात्मत्राणानास्थानादात्मत्यागः पापीयानित्युक्तदोषमवेत्य भ्रूणमपि ब्राह्मणमपि दण्डापूपन्यायात् गामप्याततायिनमात्मपरित्राणायावश्यं हन्यादित्यर्थः । यत्तूशनसा ब्राह्मणस्य रुधिरोत्पादननिमित्तदोषमभिधायाभिहितम्—'गृहीतशस्त्रमाततायिनं हत्वा न दोषस्स्यात्' इति, तदपि पूर्वोक्तात्मपरित्राणविषये द्रष्टव्यम् । यत्तु कात्सायनेनोक्तं—

आततायिनि चोत्कृष्टे तपस्स्वाध्यायजन्मतः ।
वधस्तत्र तु नैव स्यात् पापे हीने वधो भृगुः ॥

इति । तपस्स्वाध्यायजन्मत उत्कृष्टे ब्राह्मणे न वध इत्यर्थः । यच्च बृहस्पतिनोक्तं—

आततायिनमुत्कृष्टं वृत्तस्वाध्यायसंयुतम् ।
यो न हन्याद्वधप्राप्तं सोऽश्वमेधफलं लभेत् ॥

उत्कृष्टं ब्राह्मणमित्यर्थः । वधप्राप्तं—

स्वाध्यायिनं कुले जातं यो हन्यादाततायिनम् ।
न तेन भ्रूणहा भवति मन्युस्तं मन्युमृच्छति ॥

इत्यादिवचनापातमात्राद्वधप्राप्तमित्यर्थः । तदेतद्वचनद्वयं पूर्वोक्तात्मत्राणव्यतिरिक्तविषये ब्राह्मणाततायिनि द्रष्टव्यम् । यत्तु बोधायनेनोक्तं—'षट्स्वप्यनभिचरन् पतति' इति, षट्सु आततायिष्विति शेषः । के पुनस्त इत्यपेक्षिते वसिष्ठः—

अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः ।
क्षेत्रदारहरश्चैव षडेते ह्याततायिनः ॥

उदाहरणभूतानामत्यन्तप्रसिद्धानां षड्विधत्वादुभयत्र षड्ग्रहणं, न पुनः परिसङ्ख्यार्थं, विधान्तरेणाततायिनां लोके विद्यमानत्वात् । अत एव—

उद्यतासिविषाग्निश्च चापोद्यतकरस्तथा ।
आथर्वणेन हन्ता च पिशुनश्चैव राजनि ॥
भार्यातिक्रमकारी च रन्ध्रान्वेषणतत्परः ।
एवमाद्यान्विजानीयात्सर्वानेवाततायिनः ॥

इति कात्यायनेनैव एवमाद्यानित्युक्तम् । एवमाद्यान् एवंप्रकारानित्यर्थः । अत एवाततायिन इत्यनुवृत्तौ तेनैवोक्तं—

यशोवृत्तहरान् पापानाहुर्धर्मार्थहारकान् ।
अनाक्षारितपूर्वो यस्त्वपराधे प्रवर्तते ॥
प्राणद्रव्यापहारे च तं विद्यादाततायिनम् ।

प्राणद्रव्यापहारेऽन्यस्मिन्नपि तत्तुल्यापराधे च यस्त्वनाक्षारितपूर्वोऽबाधितपूर्वः प्रवर्तते तं आततायिनं विद्यादित्यर्थः । अने·

नार्थादाक्षारितपूर्वो यः पूर्वोक्तविषदानाद्यपराधे प्रवर्तते नासा वाततायीत्युक्तम् । एवञ्च 'आततायी वधोद्यतः' इत्यमरसिंहकृतोऽर्थनिर्देशः क्षेत्रदारापहर्त्रादीनामर्थानां प्रदर्शनार्थमिति मन्तव्यम् । एवंच 'षट्स्वप्यनभिचरन् पतति' इत्याततायि वधमात्रमकुर्वन् पतितो भवतीत्यर्थोऽवगन्तव्यः । तदेतद्बोधायनवचनं आत्मत्यागविषये तद्व्यतिरिक्तधर्माद्युपरोधविषयेऽपि गोब्राह्मणेतरशेषाततायिविषये द्रष्टव्यम् । गवां पर्युदासवचना त्तदितरपश्वादितिर्यग्जातीनामप्याततायिनां वधो विहित इत्य वगम्यते । अत एव कात्यायनेन आततायिपश्वादिवधेऽपि दोषाभावो दर्शितः—

नखिनां शृङ्गिणां चैव दंष्ट्रिणां चाततायिनाम् ।
हस्त्यश्वानां तथाऽन्येषां वधे हन्ता न दोषभाक् ॥

अन्येषां चञ्च्वादिशालिनां पक्ष्यादीनाम् । एवञ्चाततायिनां वधे यत्र दोषाभाव उक्तः तत्र घातकानां वधनिबन्धनदण्डाभावः प्रत्येतव्यः, अस्मिन् साहसाख्यवधे दोषाभावकथनस्य दण्डाभावप्रतिपत्त्यर्थत्वात् ॥

इति स्मृतिचन्द्रिकायां वधलक्षणसाहसविषयाणि
वचनानि निरूपितानि.

---

अथ साहसस्तेयविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र बृहस्पतिः—

साम्प्रतं साहसं स्तेयं श्रूयतां क्रोधलोभजम् ।

इति । साहसलक्षणकं स्तेयमित्यर्थः । किं तदित्यपेक्षिते याज्ञवल्क्यः—

सामान्यद्रव्यप्रसभहरणं साहसं स्मृतम् ।

इति । सामान्यद्रव्यं बहुजनैः प्रहरादिकालक्रमेण रक्ष्यमाणं द्रव्यम् । एतत् छलेन हर्तुं न शक्यते, रक्षणे प्रमादासम्भवात् । तेनास्य प्रायेण बलादपहरणम्, तदेतदाभिसन्धायोक्तं—'सामान्यद्रव्यप्रसभहरणम्' इति । साहसं स्मृतं साहसलक्षणं स्तेयमित्यर्थः । तथाच कात्यायनः—

सान्वयस्त्वपहारो यः प्रसह्य हरणं च यत् ।
साहसं च भवेदेवं स्तेयमुक्तं विनिह्नवः ॥

अन्वयो रक्षणकालक्रमप्राप्तपालकनरनैरन्तर्यम्, तस्मिन् सति योऽपहारः सः सान्वयोऽपहारः । स च प्रसह्य क्रियमाणः साहसं च स्तेयं च इत्येवं द्विरूपमापद्यते । उक्तप्रकारविपरीतोऽपि निह्नवो द्रव्यापहारः स्तेयरूपमेवापद्यत इति स्मृतावुक्तमित्यर्थः ।

निरन्वयं भवेत् स्तेयं कृत्वाऽपव्ययते च यत् ।

इति मनुस्मरणात् । अस्यार्थो मेधातिथिना स्पष्टीकृतः–निर-

न्वयं आरक्षकपुरुषवर्जितमवसरं अभिज्ञाय क्रियते यच्चौर्यम्, प्रसह्य कृतं निह्नुते कृतमिदं न मयेति, तदपि स्तेयमिति। एवं साहसस्तेयकेवलस्तेययोर्भेदकथनं तत्कर्तृषु दण्डभेदकथनार्थम्। तत्र तावत्साहसस्तेयकर्तृविषये दण्डानाह बृहस्पतिः—

क्षेत्रोपकरणं सेतुमूलपुष्पफलानि च।
विनाशयन् हरन् दण्ड्यश्शताद्यमनुरूपतः॥
पशुवस्त्रान्नपानानि गृहोपकरणं तथा।
हिंसयन् चोरयन् दाप्यो द्विशताद्यं दमस्तथा॥
स्त्रीपुंगोहेमरत्नानि देवविप्रधनं तथा।
कौशेयं चोत्तमं द्रव्यमेषां मूल्यसमो दमः॥
द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैः।
हन्ता वा घातनीयस्स्यात् प्रसङ्गविनिवृत्तये॥

इति। अत्र विनाशयन् हरन् हिंसयन् चोरयन् हन्ता वेति च वदन् इदं दण्डशास्त्रं साहसस्तेयकर्तृविषयमिति दर्शयति, तस्य क्रोधलोभवत्त्वेन हननोपेतस्तेयकारित्वात्। हन्ता वा घातनीय इत्यब्राह्मणविषयम्। तथाच साहसस्तेयं प्रकृत्य यमः—

न शारीरो ब्राह्मणस्य दण्डो भवति कर्हिचित्।
गुप्ते तु बन्धने बद्ध्वा राजा भक्तं प्रदापयेत्॥
अथवाऽप्यधनं रक्षाकर्म वा कारये नृपः।
मासार्धमासं कुर्वीत कार्यं विज्ञाय तत्त्वतः॥
यथाऽपराधं विप्रं तु विकर्माण्यपि कारयेत्।

अवध्या ब्राह्मणा गावो लोकेऽस्मिन्वैदिकी श्रुतिः ॥

इति । रक्षाकर्म पश्वादिपालनरूपं गर्हितम् । यत्तु याज्ञवल्क्येन साहसस्तेयं प्रस्तुत्यानन्तरमुक्तं—

तन्मूल्याद्द्विगुणो दण्डो निह्नवे तु चतुर्गुणः ।

इति । तन्मूल्यात् साहसस्तेयप्राप्तवस्त्रादिमूल्यादित्यर्थः । तद्वचनं वस्त्राद्युत्तमहरणे दृष्टसाहसकृते द्रष्टव्यम्,

द्विगुणो वा कल्पनीयः पुरुषापेक्षया नृपैः ।

इति वस्त्राद्युत्तमद्रव्यहरणे बृहस्पतिनोक्तत्वात् । निह्नवे तु न मयेदमुत्तमद्रव्यप्रसभहरणं कृतमित्यपलापे तु कृते इत्यर्थः ।

इति स्मृतिचन्द्रिकायां साहसस्तेयविषयाणि.

---

अथ प्रसङ्गादस्मिन्नेव पदे केवलस्तेयविषयाण्यपि

कानिचिद्वचनानि लिख्यन्ते, नारदीये पदोद्देशकवचने स्तेय संग्रहयोरनुद्देशादुद्देशक्रमप्राप्तावसराभावात् । तत्र मनुः—

द्विविधांस्तस्करान् विद्यात् परद्रव्यापहारिणः ।
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः ॥

बृहस्पतिरपि –

प्रकाशाश्चाप्रकाशाश्च द्विविधास्तस्करास्स्मृताः ।
प्रज्ञासामर्थ्यमायाभिः प्रभिन्नास्ते सहस्रधा ॥

के पुनः प्रकाशास्तस्करा इत्यपेक्षिते स्वयमेवाह—

नैगमा वैद्यकितवा सभ्योत्कोचकवञ्चकाः ।
दैवोत्पातविदो भद्राश्शिल्पज्ञाः प्रतिरूपकाः ॥
अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः ।
प्रकाशास्तस्करा ह्येते तथा कुहकजीवनाः ॥

इति । प्रतिरूपकाः प्रतिरूपकराः । तथाच नारदः—

प्रकाशवञ्चकास्तत्र कूटमानतुलास्स्मृताः ।
उत्कोचकास्सोपाधिकाः कितवाः पण्ययोषितः ॥
प्रतिरूपकराश्चैव मङ्गलादेशवृत्तयः ।
इत्येवमादयो ज्ञेयाः प्रकाशास्तस्करा भुवि ॥

इति । नैगमादिच्छद्मना परद्रव्यापहारिणश्चेत् प्रकाशतस्करा न स्वरूपत इत्यवगन्तव्यम् । नैगमादिव्याजेन परद्रव्यापहर्तृत्वे सिद्धे दण्डमाह व्यासः—

स्त्रीपुंसौ वञ्चयन्तीह मङ्गलादेशवृत्तयः ।
गृह्णन्ति छद्मना चार्थमनार्यास्त्वार्यलिङ्गिनः ॥
नैगमाद्या भूरिधना दण्ड्या दोषानुरूपतः ।
यथा ते नातिवर्तन्ते तिष्ठन्ति समये तथा ॥

दोषानुरूपतो दण्ड्या न पुनर्धनानुरूपत इत्यर्थः । ते च विधयो विस्तारभयान्न दर्शिताः ग्रन्थान्तरे द्रष्टव्याः । एवमप्रकाश तस्कराणां दण्डमभिधातुं तेषां स्वरूपमाह स एव--

साधनाद्यन्विता रात्रौ विचरन्त्यविभाविताः ।
अविज्ञातनिवासाश्च ज्ञेयाः प्रच्छन्नवञ्चकाः ॥

रात्राविति प्रायिकाभिप्रायेणोक्तम् । दिवाऽप्यरण्यादावविभावितानां विचरतां सम्भवात् । एतेषामवान्तरभेदमाह स एव—

उत्क्षेपकस्सन्धिभेत्ता पान्थमुट् ग्रन्थिभेदकः ।
स्त्रीपुंगोऽश्वपशुस्तेयी चोरो नवविधः स्मृतः ॥

उत्क्षेपको धनिनामनवधानमवधार्यान्तिकस्थं धनमुद्धृत्य ग्राहकः । सन्धिभेत्ता गृहाणां विच्छेदायकृतसञ्चरस्थाने पृष्ठसन्धाववस्थाय तत्रसभित्तिभेत्ता । पान्थमुट् उत्कटकान्तारादौ पथिकानां धनापहारकः । ग्रन्थिभेदकः परिधानादिग्रथितधनं ग्रहीतुं तद्ग्रन्थिविमोचकः । स्त्रीपुंगोऽश्वपशुस्तेयी द्वन्द्वान्तेश्रूयमाणश्शब्दः प्रत्येकमभिसम्बध्यते । अत एव नवविध इत्युक्तम् । अत्र याज्ञवल्क्यः—

ग्राहकैर्गृह्यते चोरो लोप्त्रेणाथ पदेन वा ।

इति । बृहस्पतिरपि—

संसर्गैश्चिह्नलोप्त्रैश्च विज्ञातो राजपूरुषैः ।
प्रदाप्योऽपहृतं शास्यो दमैश्शास्त्रप्रचोदितैः ॥

संसर्गैः कुत्सितसंसर्गैः । चिह्नं चौर्यसाधनसङ्ग्रहवत्त्वादिकम् । लोप्त्रं स्तेयावाप्तं धनम् । प्रदाप्यः स्वामिन इति शेषः । अत एव विष्णुः—'स्तेनास्सर्व एवापहृतं धनिकस्य दाप्याः, तत-

स्तेषामभिहितदण्डप्रयोगः' इति । कस्य स्तेनस्य कः पुनरभिहितो दण्ड इत्यपेक्षिते बृहस्पतिः—

उत्क्षेपकस्य संदंशः छेत्तव्यो राजपूरुषैः ।

इति । संदंशोत्राङ्गुल्यङ्गुष्ठात्मकः परवस्त्रादानहेतुर्विवक्षितः । मनुरपि—

सन्धिं भित्वा तु ये चौर्यं रात्रौ कुर्वन्ति तस्कराः ।
तेषां छित्वा नृपो हस्तौ तीक्ष्णे शूले निवेशयेत् ॥

तानिति शेषः । तथाच व्यासः—

सन्धिं भित्वाऽनेकविधं धनं प्राप्नोति वै गृहात् ।
प्रदाप्य स्वामिने सर्वं तीक्ष्णशूले निवेशयेत् ॥

यः प्राप्नोति तं प्रदाप्य पश्चाच्छूले निवेशयेदित्यर्थः । अन्यस्य स्तेनस्य दण्डमाह बृहस्पतिः—

एकस्मिन् यत्र निधनं प्रापिते दुष्टचारिणि ।
बहूनां भवति क्षेमः तस्य पुण्यप्रदो वधः ॥
तथा पान्थमुषो वृक्षे गळे बध्वाऽवलम्बयेत् ।

इति । अपरस्य मनुर्दण्डमाह—

अङ्गुली ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे ।
द्वितीये हस्तचरणौ तृतीये वधमर्हति ॥

अङ्गुली तर्जन्यङ्गुष्ठौ । ग्रन्थिभेदने तयोस्साधकतमत्वात् ।

प्रथमे ग्रन्थिभेदानामङ्गुल्यङ्गुष्ठयोर्वधः ।

इति बृहस्पतिस्मरणाच्च । स्त्रीपुंसस्तेनयोर्दण्डमाह व्यासः—

स्त्रीहर्ता लोहशयने दग्धव्यो वै कटाग्निना ।
नरहर्ता हस्तपादौ छित्वा स्थाप्यश्चतुष्पथे ॥

गोस्तेनस्य दण्डमाह बृहस्पतिः—

गोहर्तुर्नासिकां छित्वा बध्वाऽम्भसि निमज्जयेत् ।

अश्वपशुस्तेनयोर्दण्डमाह व्यासः—

अश्वापहरणे पादौ कटिं छित्वा प्रमाप्यते ।
पशुहर्तुस्त्वर्धपादं तीक्ष्णशस्त्रेण कर्तयेत् ॥

पशुहर्तुरर्थदण्डः पश्वनुसारेण कार्य इत्याह नारदः—

महापशून् स्तेनयतो दण्ड उत्तमसाहसम् ।
मध्यमं मध्यमपशून् पूर्वं क्षुद्रपशौ हृते ॥

मध्यमं मध्यमसाहसम् । पूर्वं प्रथमसाहसम् । सुवर्णादिकं स्तेनयतो दण्डमाह मनुः—

सुवर्णरजतादीनां उत्तमानां च वाससाम् ।
पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते ॥
शेषेष्वेकादशगुणं मूल्याद्दण्डं प्रकल्पयेत् ।
धान्यं दशभ्यः कुम्भेभ्यो हरतोऽभ्यधिकं वधः ॥
शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम् ॥

इति । स्वर्णरजतादीनां तुलया मेयानां पञ्चाशत्संख्याः देशव्यवहारानुसारेण कर्षादिना वेदितव्याः । 'तथागणिममेयानां शतादभ्यधिके वधः' इत्यत्रापि एवमेव शतसङ्ख्याऽवगन्त-

न्या। शेषशब्दो यद्यप्युक्तसङ्ख्यातिरिक्ते न्यूनाधिकसङ्ख्याके वर्तितुमर्हति, तथाऽपि लघुदण्डाभिधानान्न्यूनसङ्ख्याक एव व-र्तेत इति मन्तव्यम् । कुम्भशब्दः खारीपर्यायः, तत्र क्वचिद्देशे कुम्भशब्दप्रयोगात् । खार्याः पुनरियत्ता स्मृत्यन्तरे दर्शिता—

अङ्गुल्यग्रत्रयग्राह्या शाणमित्यभिधीयते ।
शाणं पाणितलं मुष्टिः प्रसृतिश्च तथाऽञ्जलिः ॥
कुडुपश्च तथा प्रस्थः आढको द्रोण एव च ।
मानी खारी च विज्ञेयास्संख्यायाश्चतुरुत्तराः ॥

इति । 'दाप्यस्तस्य च तद्धनम्' इत्यनेन यद्यपि प्रकृतधान्यात्मकमेव धनं तत्स्वामिने स्तेनापहृतं दाप्य इति भाति, तथाऽपि 'स्तेनास्सर्व एवापहृतं दाप्याः' इति विष्णुस्मरणात् सर्वत्र कृते स्तेये योज्यम् । अन्यान्यपि बहूनि स्तेयविषयाणि विद्यन्ते वचनानि विस्तरभयादिह न लिखितानि मानवादौ द्रष्टव्यानि ॥

इति स्मृतिचन्द्रिकायां केवलस्तेयविषयाणि.

---

## अथ साहसस्त्रीसङ्ग्रहविषयाणि.

तत्र बृहस्पतिः—

अनिच्छन्त्या यत्क्रियते सुप्तोन्मत्तप्रमत्तया ।
प्रलपन्त्या वा रहसि बलात्कारकृतं तु तत् ॥

संवर्तोऽपि—

नेच्छन्त्या यानि चिह्नानि बलात्कारकृतानि च।
परपुंसः प्रसङ्गेषु नारीणां तानि शृण्वतः॥
नखदन्तक्षतक्षामा कुचग्रहणविक्षता।
सद्यो विध्वंसिता नारी बलात्कारेण दूषिता॥
उच्चैर्विक्रोशयन्ती च रुदन्ती लोकसन्निधौ।
तस्य नाम्ना वदन्ती च यथाऽहं तेन दूषिता॥
शोचेदेवंविधैर्लिङ्गैः क्षामीकृतपयोधरा।
छिन्नाऽलङ्कारकेशैश्च व्याकुलीकृतलोचना॥
राज्ञा सभ्यैः सभां नीत्वा स्वयमन्विष्य तत्क्षणात्।
यद्ब्रूयात्सहजं वाक्यं तत्कर्तव्यं प्रयत्नतः॥
विवादे साक्षिणामत्र न कुर्वीत परिग्रहम्।
प्रार्थनादभिशस्तस्य न दिव्यं दातुमर्हति॥

इति। बलात्कारेण सद्यो विध्वंसिता दूषिता नारी या नखदन्तक्षताद्यन्विता विध्वंसकस्य नाम्ना तत्कृतविध्वंसनप्रकारं वदन्ती शोचेत् तां तत्क्षणात् राजा स्वयमन्विष्य सभ्यैस्सह सभां प्राप्य का तव पीडेति पृच्छेत्। ततस्तदा तयाऽऽवेदितं तदाकर्ण्य चिह्नैरेवात्र राज्ञा निर्णेतव्यमित्यर्थः। तत्रापराधिनो दण्डमाह मनुः—

सहस्रं ब्राह्मणो दण्ड्यो विप्रां गुप्तां बलाद्व्रजन्।

इति । गुप्तां स्वानियमेन रक्षिताम् । ब्राह्मणेतरसवर्णांविषये तु बृहस्पतिरपराधिनो दण्डमाह—

सहसा कामयेद्यस्तु धनं तस्याखिलं हरेत् ।
उत्कृत्य लिङ्गवृषणौ भ्रामयेद्गर्दभेन तु ॥

कामयेत् परस्त्रियं व्रजेदित्यर्थः । उक्तदण्डस्य विषयं विषयान्तरे दण्डान्तरं चाह स एव—

दमो नेयस्समायां तु हीनायामधिकस्ततः ।
पुंसः कार्योऽधिकायां तु गमने स प्रमापणम् ॥

दमः 'सहसा कामयेत्' इत्यादिवाक्योक्तो दमः । समायां जारसवर्णपरभार्याविषये नेयो जारं प्रापणीयः । जारतो हीनाविषये तूक्तदमादधिको दमो जारं नेयः । जारतोऽधिकाविषये तु स एवोक्तो दमः पुंसः कार्यः, प्रमापणमपि पुंसः कार्यमित्यर्थः । यत्तु कात्यायनेन प्रमापणमात्रमुक्तं—

स्त्रीषु वृत्तोपभोगस्स्यात् प्रसह्य पुरुषो यदा ।
वधे तत्र प्रवर्तेत कार्यातिक्रमणं हि तत् ॥

इति, तत् अगुणवतो जायायां द्रष्टव्यम् । अत्र मन्वादिभिः पुरुषस्यैव दण्डाभिधानं दण्डप्रापकस्त्रीगतापराधाभावादिति मन्तव्यम् । तथाऽपीतरपुरुषसंसर्गजं पापं नार्यास्सम्पद्यते । ततश्चासंव्यवहार्यताऽत्रापि दण्ड्यायामिव समाना । सा प्रायश्चित्तेन क्वचिदपैति क्वचिन्नेत्याह बृहस्पतिः—

अनिच्छन्ती तु या भुक्ता गुप्तां तां वासयेद्गृहे ।
मलिनाङ्गीमधश्शय्यां पिण्डमात्रोपजीविनीम् ॥
कारयेन्निष्कृतिं कृच्छ्रं पराकं वा समे गताम् ।
हीनवर्णोपभुक्ता या त्याज्या वध्याऽथवा भवेत् ॥

इति । गुप्तां पुनस्सम्भोगरहिताम् । वासयेत् विशुद्धिपर्यन्तमिति शेषः । समे गतां समे वर्णे पुंसि सङ्गतामित्यर्थः । हीनवर्णोपभुक्ताविषये वचनान्तरपर्यालोचनया यद्वक्तव्यं तद्विस्तरभयादिह नोक्तम् । स्वावसरे प्रायश्चित्तकाण्डे वक्ष्यते ।

इति स्मृतिचन्द्रिकायां साहसस्त्रीसङ्ग्रहविषयाणि.

---

अथ प्रसङ्गादेवास्मिन् पदे केवलस्त्रीसङ्ग्रहविषयाण्यपि कानिचिद्वचनानि लिख्यन्ते ॥

तत्र बृहस्पतिः—

छद्मना कामयेद्यस्तु तस्य सर्वहरो दमः ।
अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः ॥

छद्मना कामयेत् वञ्चनया सङ्गच्छेत् । सर्वहरः सर्वस्वहरणम् । ततः भगाङ्ककरणानन्तरमित्यर्थः । सहसा कामयेदित्यादिवाक्यस्यैवास्यापि—

दमो नेयस्समायां तु हीनायामर्धिकस्ततः ।
पुंसः कार्योऽधिकायां तु गमने स प्रमापणम् ॥

इति विशेषो द्रष्टव्यः। तस्यायमर्थः—समायां जारसवर्णपरभार्यागमनविषये 'छद्मना कामयेत्' इत्यादिवाक्योक्तो दमो नेयः पुमांसं जारभूतं प्रापणीयः। हीनायां जारतो हीनवर्णायां गमने ततः छद्मना गमननिमित्तकाद्दमादर्धिकोऽर्धः दमः पुंसः कार्यः। अधिकायां जारतोऽधिकवर्गायां गमने सप्रमापणमपि पुंसः कार्यम् सर्वस्वहरणं कृत्वा प्रमापयेदित्यर्थः। अत्रापि पुंस एवापराधित्वात्तस्यैव दण्डाभिधानमिति मन्तव्यम्। तेनात्रापि स्त्रिया नास्ति दण्डः, तथाऽपि परपुरुषसम्पर्कजन्मदोषसद्भावादसंव्यवहार्यताऽस्ति। ततश्चात्रापि—

अनिच्छन्ती तु या भुक्ता गुप्तां तां वासयेत् गृहे।
मलिनाङ्गीमधश्शय्यां पिण्डमात्रोपजीविनीम्॥
कारयेन्निष्कृतिं कृच्छ्रं पराकं वा समे गताम्।
हीनवर्णोपभुक्ता या साज्या वध्याऽथवा भवेत्॥

इत्युक्तमनुसंधेयम्। स्त्रीपुंसयोः परस्परानुरागजोपगमने तु दण्डमाह याज्ञवल्क्यः—

सजातावुत्तमो दण्डः आनुलोम्ये तु मध्यमः।
प्रातिलोम्ये वधः पुंसां स्त्रीणां नासादिकर्तनम्॥

अत्र नार्या अपि दण्डाभिधानादन्योन्यानुरागजोपभोगविषयमिदं वचनमिति गम्यते, गुरुदण्डाभिधानात् सम्बन्धिभिः प्रसह्य परिपालितचरितशालिनीविषयमिति च गम्यते। मध्य-

मो दण्डः चत्वारिंशत्सहितपञ्चशतकार्षापणात्मकः । एवञ्च पञ्चशताधिकत्वादयमपि गुरुदण्डः

ऋणं वा यदि वा दण्डः प्रायश्चित्तमथापि वा ।
यत्र पञ्चशताधि स्यात् तत्कार्यं गुरु कीर्तितम् ॥

इति स्मरणात् । तेन गुरुत्वान्मध्यमोऽपि पूर्वोक्तगुप्ताविषय एव । कर्णादिकर्तनं तु प्रातिलोम्य एव, तदनन्तराभिधानात् वधार्धतुल्यत्वाच्च । एवञ्च स्वजातावानुलोम्ये च नार्याः पुंसोऽभिहितार्थदण्डार्धदण्डः कल्पनीय इति वधार्धतुल्यकर्णादिकर्तनाभिधानादेवाधिगन्तव्यम् । अत एव कात्यायनः—

सर्वेषु चापराधेषु पुंसो योऽर्थदमः स्मृतः ।
तदर्धं योषितो दद्युः............... ॥

इति । पुरुषवदपराधकर्त्र्य इति शेषः । यत्तु मनुना सानुरागया ब्राह्मण्या सह सङ्गतस्य मध्यमसाहसमुक्तं,

शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः ।

इति, तत् अरक्षितचरितशालिनीविषयम् । यत्पुनरानुलोम्येऽप्येवमेव तेनोक्तं—

अगुप्ते वैश्यराजन्ये शूद्रां वा ब्राह्मणो व्रजेत् ।
शतानि पञ्च दण्ड्यः स्यात् सहस्रं चान्त्यजे स्मृतम् ॥

इति । अन्त्यजः प्रसिद्धश्चर्मकरादिः । अगुप्ते मानसव्यभिचारादरक्षिते गृहेऽवरुद्धे इति यावत् ।

अरक्षिता गृहे रुद्धा पुरुषैराप्तकारिभिः ।

इति तेनैवोक्तत्वात्। एवञ्च रुद्धामित्यत्र गृहे रुद्धामित्यध्याहर्तव्यम्। एवञ्चैतदाप्तकारिभिः प्रसह्य रक्षितचरितशालिनीविषयमित्यवसेयम्। यत्तु ब्राह्मणस्य शूद्रेतरानुलोम्ये तेनोक्तं—

सहस्रं ब्राह्मणो दण्डं दाप्योऽगुप्ते तु ते व्रजन्।

इति, ते क्षत्रियावैश्ये अगुप्ते मानसव्यभिचारानवकाशाय गृहव्यापारावसक्तचित्ततया सुरक्षिते विवक्षिते, न तु स्वगृहेऽवरुद्धे गुरुतरदण्डत्वात्। द्विविधगुप्ताव्यतिरिक्तविषये तु व्यास आह—

गुप्तायां संग्रहे दण्डो यथोक्तस्समुदाहृतः।
इच्छन्त्यामागतायां तु गच्छतोऽर्धदमः स्मृतः॥

गुप्तां गच्छतो यावान् दण्ड उक्तस्तादितरां गच्छतस्तदर्धो दण्डः स्मृत इत्यर्थः। एवञ्च गुप्तायास्संग्रहे यत्र वध उक्तः तत्र तदितरस्यास्सङ्ग्रहे लिङ्गच्छेदो भवति। यत्रोत्तमसाहसो दण्ड उक्तस्तत्र तदितरस्यास्सङ्ग्रहे मध्यमसाहसः। यत्र पुनः मध्यमसाहस उक्तस्तत्र प्रथमसाहस इत्यनुसन्धेयम्। प्रातिलोम्ये तु जातिविशेषतो दण्डविशेषानाह मनुः—

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन्।
अगुप्तमङ्गसर्वस्वी गुप्तं सर्वेण हीयते॥

अस्यार्थः—शूद्रः स्वेतरवर्णजां परस्त्रियं गच्छन्महापराधी भवति। तत्र गुप्तायां सङ्ग्रहे तावदङ्गसर्वस्वी ताभ्यां हीयते, लिङ्गेन धनेन च हीयत इति यावत्। अगुप्तायां सङ्ग्रहे तु सर्वेण

लिङ्गेन शरीरेण हीयत इति। तथाच शूद्रस्येत्यनुवृत्तौ गौतमः—'आर्यस्त्र्यभिगमने लिङ्गोद्धारस्सर्वस्वहरणं च गोप्ता चेद्वधोऽधिकः' इति । आर्यस्त्र्यभिगमने त्रैवर्णिकस्त्र्यभिगमन इत्यर्थः। गुप्तं द्वैजातं वर्णमावसन्नित्यनुवृत्तौ मनुः—

वैश्यस्सर्वस्वदण्डस्स्यात्संवत्सरनिरोधितः।
सहस्रं क्षत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति ॥

संवत्सरनिरोधितः बन्धनागार इति शेषः। मूत्रेण गर्दभस्य गोर्वेति शेषः। एतयोरेवागुप्तां ब्राह्मणीं गच्छतोः दण्डमाह स एव—

ब्राह्मणीं तु यदाऽगुप्तां गच्छेतां वैश्यपार्थिवौ।
वैश्यं पञ्चशतं कुर्यात् क्षत्रियं तु सहस्रिणम् ॥

पञ्चशतं कुर्यात् पञ्चशतकार्षापणदण्डेन दण्डयेदित्यथः। एतयोरेव गुप्तायां ब्राह्मण्यां दण्डाधिक्यमाह स एव—

उभावपि तु तावेव ब्राह्मण्या गुप्तया सह।
विप्लुतौ शूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥

शूद्रवद्दण्ड्यौ लिङ्गेन धनेन शरीरेण च हीनौ कार्याविसर्थः। विषयान्तरेऽप्येतयोरेव दण्डान्तरमाह स एव—

वैश्यश्चेत् क्षत्रियां गुप्तां वैश्यां वा क्षत्रियो व्रजन्।
यो ब्राह्मण्यामगुप्तायां तावुभौ दण्डमर्हतः ॥

'वैश्यं पञ्चशतं कुर्यात् क्षत्रियं तु सहस्रिणम्' इत्युक्तदण्डमर्हत

इत्यर्थः । प्रातिलोम्येऽप्यल्पदण्डार्हत्वायासन्तनिर्गुणपतिपत्नी-विषय एव वैश्यदण्डोऽयं द्रष्टव्यः। आनुलोम्ये तु गुरुदण्डा-र्हत्वायासन्तसगुणपतिपत्नीविषय एवायं क्षत्रियदण्डो द्रष्टव्यः। एवञ्च पारिशेष्यात् 'वैश्यस्सर्वस्वदण्डस्स्यात्' इत्यादिनोक्तो गुरुदण्डः स्वजातावेवासन्तसगुणपतिपत्नीविषय एवावतिष्ठत इत्यवगन्तव्यम् । स्वजातावपि क्वचिच्छारीरदण्डमपराधा धिक्यं प्रदर्शयन्नाह नारदः—

माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताऽऽचार्यभार्या च सगोत्रा शरणागता ।
राज्ञी प्रव्राजिता धात्री साध्वी वर्णोत्तमा च या ॥
आसामन्यतमां गत्वा गुरुतल्पग उच्यते ।
शिश्नस्य कर्तनं तत्र नान्यो दण्डो विधीयते ॥

इति । अन्योऽस्मान्न्यून इति शेषः, अधिकस्य विधानात् । तथाच याज्ञवल्क्यः—

पितुस्स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
मातुस्सपत्नीं भगिनीं आचार्यतनयां तथा ॥
आचार्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ।
छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा ॥

इति । ब्राह्मणव्यतिरिक्तविषयमेतत्, वधस्यापि विधानात् ।

अस्मिन्नेव विषये स्त्रिया अपि वधः, 'सकामायाः स्त्रियास्तथा' इति वचनात्। अन्यत्रापि क्वचित् स्त्रिया वधमाह मनुः—

भर्तारं लङ्घयेद्या तु जातिस्त्रीगुणदर्पिता।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते॥

लङ्घयेत् किमनेनात्यन्ताननुरूपेण पत्येति उपपतिं समाश्रयेदित्यर्थः। यमोऽपि—

वृषलं सेवते या तु ब्राह्मणी मदमोहिता।
तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनाम्॥
वैश्यं वा क्षत्रियं वाऽपि ब्राह्मणी सेवते तु या।
शिरसो मुण्डनं तस्याः प्रयाणं गर्दभेन तु॥

इति। मदमोहितेति वदन्वधदण्डस्यासार्वत्रिकत्वं दर्शयति। तेन नार्याः कर्णादिकर्तनमिति प्रागुक्तो दण्डो रागादत्यन्तासक्ताविषय इति मन्तव्यम्। अत्यन्तासक्तिरहिताविषये तु न शारीरो दण्डः, संव्यवहारार्थं—

यत्पुंसः परदारेषु तच्चैनां चारयेद्व्रतम्।

इति प्रायश्चित्तविधानात्। एवञ्च यत्कात्यायनेनोक्तं—

नास्वतन्त्राः स्त्रियो ग्राह्याः पुमांस्तत्रापराध्यति।
प्रभुणा शासनीयास्ता राजा तु पुरुषं नयेत्॥
प्रोषितस्वामिका नारी प्रापिता यद्यपि ग्रहे।
तावत्सा बन्धने स्थाप्या यावत्प्रत्यागतः प्रभुः॥

इति, तत् व्रतचारणार्हास्वतन्त्रासु द्रष्टव्यम् । योषिदुत्थापितानुरागजसङ्ग्रहे तु बृहस्पतिराह—

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना ।
कामयेत्तत्र सा दण्ड्या नरस्यार्धदमस्स्मृतः ॥

दण्ड्या योषितोऽभिहितदण्डेनेति शेषः । अर्धदमो योषिद्दमादर्धदमः । यत्तु यमेनोक्तं—

परदारसवर्णासु दण्ड्यास्स्युः पञ्चकृष्णलान् ।
असवर्णास्वानुलोम्ये दण्डो द्वादशको मतः ॥

इति । द्वादशकः द्वादशकार्षापण इत्यर्थः । तदेतत् बन्धकीविषयं, बन्धक्यधिकारे तेनास्य दण्डस्य विधानात् । वेश्याविषये तु व्यास आह—

परोपरुद्धागमने पञ्चाशत्पणको दमः ।
प्रसह्य वेश्यागमने दण्डो दशपणस्स्मृतः ॥ इति ॥

इति स्मृतिचन्द्रिकायां केवलस्त्रीसंग्रहविषयाणि.

---

## अथ साहसपदान्तर्गतोभयपारुष्यविषयाणि.

तत्र नारदः—

फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
भङ्गाक्षेपावमर्दाद्यैः प्रथमं साहसं स्मृतम् ॥
वासःपश्वन्नपानानां गृहोपकरणस्य च ।

एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥
व्यापादो विषशस्त्राद्यैः परदाराभिमर्शनम् ।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥
तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः ।
मध्यमस्य तु शास्त्रज्ञैः दृष्टः पञ्चशतावरः ॥
वधस्सर्वस्वहरणं पुर्या निर्वासनाङ्कने ।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे ॥
स्यातां संव्यवहार्यौ द्वौ धृतदण्डौ तु पूर्वयोः ।
धृतदण्डोप्यसंभाष्यो ज्ञेय उत्तमसाहसे ॥

इति । एतेनैव प्रकारेणेत्यनेन भङ्गाक्षेपावमर्दाद्यः प्रकार उक्तः । भङ्गः फलादिरूपस्य । आक्षेपः आक्रोशः फलमूलादेर्वाचा न्यग्भावकरणमिति यावत् । अवमर्दः स्वरूपावशेषेण पीडनम् । आद्यशब्देनामेध्यादिना उपघातादि गृह्यते । अत्राक्षेपशब्देन वाक्पारुष्यमुक्तम् । भङ्गावमर्दाद्यैरित्यनेन दण्डपारुष्यम् । तयोः प्रथममध्यमादिसाहसभेदोक्त्या तु सहसाकृतविषयताऽपि ज्ञापिता । एवञ्च फलमूलादिषु सहसा कृतं वाक्पारुष्यं दण्डपारुष्यं वा प्रथमसाहसम् । वासःपश्वादिषु कृतं तु मध्यमसाहसम् । प्राणिषु प्राणोपरोधितया कृतं पुनरुत्तमसाहसमिति मन्तव्यम् । तस्य साहसवाक्पारुष्यस्य साहसदण्डपारुष्यस्य वाऽपराधस्य दण्डः क्रियापेक्षः अपराधक्रियापेक्षः कल्पनीय इति शेषः । तत्र प्रथमस्य दण्डश्शता-

वरः। शतकार्षापणादूनो नास्तीत्यर्थः। एवमुत्तरवाक्यस्या-प्यर्थो व्याख्येयः। प्रथमसाहसदण्डस्य क्रियापेक्षया आ-धिक्यं मध्यमसाहसदण्डात् कल्प्यम्। यथाद्युत्तमसाहसदण्ड-पञ्चकेऽपि क्रियापेक्षया व्यवस्था कल्प्या, 'तस्य दण्डः क्रिया पेक्षः' इत्यस्य प्रथममध्यमोत्तमसाहसाधारस्येहाभिधानात्। क्रि-यापेक्षः सहसाकृतः पारुष्यतारतम्यापेक्ष इत्यर्थः॥

इति स्मृतिचन्द्रिकायां साहसपदान्तर्गतोभयपारुष्यविषयाणि.

---

## अथ प्रसङ्गात् साहसकल्पापराधदण्डविषयाणि कानिचिद्वचनानि लिख्यन्ते.

तत्र मनुः—

कूटशासनकर्तॄंश्च प्रकृतीनां च दूषकान्।
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्विट्सेविनस्तथा॥

द्विट्सेविनः शत्रुसेवकान्। द्वितीयपादस्तु 'स्वाम्यमात्यदुर्ग-कोशदण्डराष्ट्रमित्राणि प्रकृतयस्तद्दूषकांश्च हन्यात्' इति वि-ष्णुवचनादेव व्याख्यातः। दण्डशब्दोत्र सेनामात्रमाचष्टे, 'राष्ट्रदुर्गबलानि च' इत्यमरसिंहेनाभिधानात्। मानवे ब्राह्मण-ग्रहणं मनुष्योपलक्षणार्थम्। अत एव राजा हन्यादित्यनुवृत्तौ विष्णुः—'स्त्रीबालपुरुषघातिनश्च' इति। अथवा ब्राह्मणघ्न-ग्रहणं—महापातकिनामुपलक्षणार्थम्। तथाच तत्रैवोक्तं—

ब्रह्महा च सुरापश्च तस्करो गुरुतल्पगः ।
एते सर्वे पृथग्वध्या महापातकिनो नराः ॥

यस्य प्रतिषिद्धा सुरा स इह सुरापो विवक्षितः । तस्करोऽप्यत्र सुवर्णस्तेयी विवक्षितः 'महापातकिनः' इत्यभिधानात् । विप्रेतरमहापातकिविषयमेतत् । विप्रविषये त्वाह बृहस्पतिः—

महापातकयुक्तोऽपि न विप्रो वधमर्हति ।
निर्वासनाङ्कने मौण्ड्यं तस्य कुर्यान्नराधिपः ॥

कामकृतविषयमेतत् । निर्वासनादिदण्डे कृतेऽप्यत्र दोषो नापैति, उत्तमसाहसकल्पापराधत्वात् ।

धृतदण्डोऽप्यसंभाष्यो ज्ञेय उत्तमसाहसे ।

इत्यस्य तत्कल्पापराधेऽप्यतिदिष्टत्वात् ॥

अत एव निर्वासितानामङ्कितानामप्यसंव्यवहार्यतां प्रपञ्चितवान् मनुः—

असंभोज्या ह्यसंयाज्याः अपाठ्याश्चाविवाहिनः ।
चरेयुः पृथिवीं सर्वां सर्वधर्मबहिष्कृताः ॥
ज्ञातिसंबन्धिभिश्चैते कर्तव्याः कृतलक्षणाः ।
निर्वाच्या निर्नमस्कारास्तन्मनोरनुशासनम् ॥

इति । सर्वधर्मबहिष्कृताः श्रौतस्मार्तकर्मपरिभ्रष्टा इत्यर्थः ; कृतलक्षणाः ललाटे कृताङ्काः । ज्ञात्यादिभिः निर्वाच्याः निर्नमस्काराः कर्तव्या इत्यन्वयः । यत्तु तेनैवोक्तं—

आगस्सु ब्राह्मणस्यैव कार्यो मध्यमसाहसः।
विवास्यो वा भवेद्राष्ट्रात् सद्रव्यस्सपरिच्छदः॥

इति। आगस्सु महापातकेष्वित्यर्थः। तदकामकृतविषयम्। तत्रापि प्रायश्चित्तमकुर्वतो मध्यमसाहसो दण्डः कार्यः। तदप्यकुर्वतो विवास इति व्यवस्था ज्ञेया। ब्राह्मणेतरमहापातकिविषये त्वकामकृते सर्वस्वहरणं कामकृते वध इत्याह स एव—

इतरे कृतवन्तस्तु पापान्येतान्यकामतः।
सर्वस्वहारमर्हन्ति कामतस्तु प्रमापणम्॥
एते सर्वे पृथग्वध्या महापातकिनो नराः॥

इत्यनेन विप्रेतरेषु निष्कारणं वधस्योक्तत्वात्।

ब्राह्मणान् बाधमानं तु कामादवरवर्णजम्।
हन्याच्चित्रवधोपायैरुद्वेजनकरैर्नृपः॥

इति तेनैव ब्रह्मघ्नवधे विशेषस्मरणाच्च। अवरवर्णजं ब्राह्मणेतरवर्णजम्। सर्वस्वहारमर्हन्ति प्रायश्चित्तमकुर्वन्त इति शेषः। कुर्वन्तस्तु कमर्हन्तीत्यपेक्षिते स एवाह—

प्रायश्चित्तं तु कुर्वाणाः पूर्वे वर्णा यथोदितम्।
नाङ्क्या राज्ञा ललाटे तु दाप्यस्तूत्तमसाहसम्॥

नाङ्क्याः नापि सर्वस्वदण्डार्हाः किंतूत्तमसाहसं दाप्या इत्यर्थः। यत्तु बोधायनेनोक्तं—'क्षत्रियादीनां ब्राह्मणवधे वधः

सर्वस्वहरणं च' इति, तत् साहसरूपवधविषयम् । यत्त्वनन्तरमुक्तं— 'तेषामेव तुल्यापकृष्टवधे यथाबलमनुरूपं दण्डं प्रकल्पयेत्' इति, तेषां क्षत्रियादीनां तुल्यापकृष्टवधे बलानुरूपं दण्डं प्रकल्पयेदित्यर्थः । तत् कण्ठोक्तचैव स्पष्टविषयम् । दण्डप्रकल्पनप्रकारश्चानन्तरमुक्तः— 'क्षत्रियवधे गोसहस्रमृषभैकाधिकं राज्ञ उत्सृजेद्वैरनिर्यातनार्थं शतं वैश्ये दश शूद्रे वृषभश्चात्राधिकः शूद्रवधेन स्त्रीवधो गोवधश्च व्याख्यातः' इति। उत्सृजेत् दद्यादित्यर्थः। वैश्यस्य वधे शतं गोशतम् । शूद्रे शूद्रवधे दश गाः तासु वृषभोऽधिकः । वैरनिर्यातनार्थं राज्ञ उत्सृजेदित्युभयत्रानुषज्यते । वैरनिर्यातनार्थमित्यनेनायं दण्डो न दोषनिर्यातनार्थमित्युक्तम् । तेनात्र धृतदण्डस्याप्यसम्भाष्यत्वादिकं नापैतीति दर्शितम् । एवञ्च जडाधिकृतक्षत्रियादिवधे कामकृते पादोनो गोसहस्रादिको दण्डः कल्पनीयः । अकामकृते त्वर्धोन इति ज्ञेयम् । प्रणाड्या कृत्वाऽकामतश्चेत् त्रिपादोनः कल्पनीयः, दोषानुसारित्वाद्दण्डस्य । दोषाभावं क्वचित् प्रणाड्या वधे त्वाह याज्ञवल्क्यः—

अमनुष्यकृतो दोषो नापैहीति प्रजल्पतः ।
काष्ठलोष्टेषुपाषाणवाहायुधकृतस्तथा ॥

अस्यार्थः—अमनुष्यैः पशुपक्ष्यादिभिः स्वत एव कृतो हिंसादिदोषः तत्स्वामिनां तेषु बलवर्धनघासादिदायित्वेऽपि न भवति। तथाऽन्यप्रेषितकाष्ठलोष्टपाषाणपृष्ठयानवाहादिकृतो हिंसादिदोषः

प्रेरकस्यापसरेति पुनःपुनरुच्चैरुच्चरितुः न भवतीति। ततोत्र दण्डो नास्तीत्यभिप्रायः । दण्डाभावस्यात्राभिप्रेतस्य क्वचिदपवादमाह स एव—

शक्तो ह्यमोक्षयन् स्वामी दंष्ट्रिणां शृङ्गिणां तथा ।
प्रथमं साहसं दद्याद्विक्रुष्टे द्विगुणं तथा ॥

विक्रुष्टे मोचय मोचयेति पीड्यमानेन आक्रन्दितेऽप्यमोक्षयन् प्रथमसाहसद्वयं दद्यादित्यर्थः । बृहस्पतिरपि साहसकल्पापराधे दण्डमाह—

दण्डाजिनादिना युक्तमात्मानं दर्शयन्ति ये ।
हिंसन्ति छद्मना शून्ये वध्यास्ते राजपूरुषैः ॥

याज्ञवल्क्यस्तु सम्बन्धिवधे दण्डमाह—

विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम् ।
विकर्णकरनासोष्ठीं कृत्वा गोभिः प्रमापयेत् ॥

असम्बन्धिपुरुषे तु विषाग्निदानादौ साहसिकवधवत्सहायादेर्वधो न कार्यः, किंतु तस्यैव कार्य इत्याह यमः—

विषाग्निदायकाश्चोराः घातकाश्चोपघातकाः ।
स्वशरीरेण दण्ड्यास्स्युः मनुराह प्रजापतिः ॥

उपघातकाः अन्यद्वारा घातकाः। गुर्वादिघातकस्यापि स्त्रीवद्दण्डः, विशेषास्मृतेः दण्डापूपन्यायसिद्धत्वाच्च । तथाहि—यत्र स्त्रिया अपि गुरुदण्डस्तत्र सुतरां पुंस इति गम्यते ।

विविधवधो वा, स्त्रीदण्डापेक्षया पुरुषस्यान्यत्र दण्डाधिक्यदर्शनात् । सम्बन्धिवधनिमित्तकदण्डोऽयं कामकृते द्रष्टव्यः, कामकृतमहापातकदण्डाधिक्यस्य अकामकृतविषये कल्पनायोगात् । अकामकृतसंबन्धिवधविषये तु अकामकृतमहापातकदण्डाधिकदण्डत्वाय पुरान्निर्वासनान्तं सर्वस्वहरणं प्रायश्चित्तमकुर्वतो दण्डः कल्पनीयः । कुर्वतस्तूत्तमसाहसद्वयमित्यूह्यम् । मनुरपि साहसकल्पापराधे दण्डमाह—

तटाकभेदकं हन्यादप्सु शुद्धवधेन वा ।
तच्चापि प्रतिसंस्कुर्याद्दद्याद्वोत्तमसाहसम् ॥

तटाकमहत्त्वाल्पत्वानुसारेणात्र दण्डविकल्पे व्यवस्था कार्या । तथा—

यस्तु पूर्वनिविष्टस्य तटाकस्योदकं हरेत् ।
आगमं वाऽप्युपारुन्ध्यात्स दाप्यः पूर्वसाहसम् ॥

आगमं उदकस्य तटाकं प्रत्यागमनम् । हरेत् स्वतटाकादिपूरणायेति शेषः । एवमुपारुन्ध्यादित्यत्रापि शेषो द्रष्टव्यः । कात्यायनोऽपि—

हरेद्भिन्द्याद्दहेद्वाऽपि देवानां प्रतिमा यदि ।
तद्गृहं चैव यो भिन्द्यात् प्राप्नुयात्पूर्वसाहसम् ॥
प्रमाणेन तु कूटेन मुद्रया वाऽपि कूटया ।
कार्यं तु साधयेद्यो वै स दाप्यो दममुत्तमम् ॥

इति । प्रमाणं लिखितादि । बृहस्पतिरपि—

मन्त्रौषधिबलात्किञ्चित् संभ्रान्तिं दर्शयन्ति ये ।
मूलकर्म च कुर्वन्ति निर्वास्यास्ते महीभुजा ॥

मूलकर्म वशिक्रियाविशेषो मूलाद्यौषधसाध्यः ॥

इति स्मृतिचन्द्रिकायां साहसकल्पापराधदण्डविषयाणि.
समाप्तं च साहसाख्यपदस्य प्रासङ्गिकस्य विधिवितानम् ॥

---

अथ वाक्पारुष्यस्य पदस्य विधिरुच्यते.

तत्र बृहस्पतिः—

समजातिगुणानां तु वाक्पारुष्ये परस्परम् ।
विनयोऽभिहितश्शास्त्रे पणा अर्धत्रयोदशाः ॥

अर्धं त्रयोदशं येषां द्वादशानां ते तथोक्ताः । केवलजातिसाम्ये तु मनुराह—

समवर्णे तु सर्वेषां द्वादशैव व्यतिक्रमे ।

इति । परस्परं वाचैवेति शेषः । वाचा व्यतिक्रमस्य पौर्वापर्यादिकृतविशेषाभावे द्वयोस्समदोषयोर्द्वादश पणा एव दण्डो भवति न पुनरन्यतरस्य न्यूनोऽधिको वेत्यर्थः । अत एव स्मृत्यन्तरं—

पारुष्यदोषानृतयोः युगपत्संप्रवृत्तयोः ।
विशेषश्चेन्न दृश्येत विनयस्स्यात् समस्तयोः ॥

विशेषदर्शने तु तदनुसारेण विषम एव दमस्स्यादित्यभिप्रायः। अत एव बृहस्पतिः—

समानयोस्समो दण्डो न्यूनस्य द्विगुणस्ततः।
उत्तमस्याधिकः प्रोक्तो वाक्पारुष्ये परस्परम्॥

अयुगपत् सम्प्रवृत्तयोस्समानयोरपि विषमो दण्डः। तथाच नारदः—

पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक्।
पश्चाद्यस्सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः॥

पूर्वे त्वाक्षारणे निमित्ते तन्निमित्तको विनयः पश्चादाक्षारणनिमित्तकविनयादभ्यधिको भवेदित्यर्थः। वर्णादितस्समयोर्निबन्धे तु विशेषदर्शने तन्निमित्तमपि विनयगौरवं भवतीत्याह स एव—

द्वयोरापन्नयोस्तुल्यमनुबध्नाति यः पुमान्।
तयोर्दण्डमवाप्नोति पूर्वो वा यदि वोत्तरः॥

तुल्यमापन्नयोस्समत्वेनैव आक्षेपकरयोरिति यावत्। तयोर्दण्डमवाप्नोति तुल्यमापन्नयोर्द्वयोः। दण्डो मिलितयोर्यावान् तावन्तमाप्नोतीत्यर्थः। यः पुनरनुतापान्निबन्धं सृजति तस्य दण्डह्रासकल्पनस्य प्रकारमाहोशना—

मोहात् प्रमादात् संघर्षात्प्रीत्या वोक्तं मयेति यः।
नाहमेवं पुनर्वक्ष्ये दण्डार्धं तस्य कल्पयेत्॥

एवं जातिगुणवयोविद्याविशेषदर्शने, तथा प्रथममध्यमोत्तमभावेन त्रिधाऽभिहितवाक्पारुष्यान्तर्गतभेददर्शने, तथा निष्ठुरा-

श्लीलतीव्रत्वादिवाक्पारुष्यविशेषदर्शने, तथा श्रुताभिजनदेश कर्मशरीरपितृमातृगुर्वाद्यधिक्षेपविशेषदर्शने तत्तन्निबन्धनोच्चावच दण्डविधायिकास्स्मृतयो यद्यपि वचस्समुच्चयकारैस्समुच्चिताः। अस्माभिस्तु सम्प्रति तदर्थानुष्ठाननिष्ठप्रजाशिक्षकाभावात् वृथा ग्रन्थविस्तरापत्तिर्मा भूदिति न समुच्चिताः। क्वचिद्वाक्पारुष्य-दण्डस्यापवादमाह वचोभङ्ग्या बृहस्पतिः—

गुणहीनस्य पारुष्ये ब्राह्मणो नापराध्नुयात्।

इति। सत्यत्वादित्वेऽपि वाक्पारुष्यदण्डो नापैतीत्याह वचो भङ्ग्या नारदः—

पतितं पतितेत्युक्त्वा चोरं चोरेति वा पुनः।
वचनात्तुल्यदोषस्स्यान्मिथ्या द्विर्दोषतां व्रजेत्॥

वचनात् तथ्यवचनात्। तथाच स एव—

दुष्टस्यैव तु यो दोषान् कीर्तयेत्क्रोधकारणात्।
अन्यापदेशवादी च वाग्दुष्टं तं नरं विदुः॥

क्रोधकारणादिति वदन् दुष्टपरिहरणकारणाद्दोषकीर्तनं न दोषकारीति दर्शयति। दर्शितं च कात्यायनेन—

यत्र स्यात्परिहारार्थं पतितस्तेनकीर्तनम्।
वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेत्॥

वचनात् पतितादिकीर्तनादित्यर्थः। यत्राभियोगादौ पातित्या-दिकं साधयेत् तत्रापि वचनाद्दोषो न स्यादित्यर्थः॥

इति स्मृतिचन्द्रिकायां वाक्पारुष्यस्य पदस्य विधिवितानम्.



अथ दण्डपारुष्याख्यस्य पदस्य विधिरुच्यते.

तत्र मनुः—

एष दण्डविधिः प्रोक्तो वाक्पारुष्यस्य तत्त्वतः।
अत ऊर्ध्वं प्रवक्ष्यामि दण्डपारुष्यनिर्णयम् ॥

दण्डपारुष्यस्य प्रतिव्यक्ति दण्डानिर्णयं अत ऊर्ध्वं प्रवक्ष्यामीत्यर्थः । दण्डपारुष्यव्यक्तयस्तु दिङ्मात्रतः परिशिष्टकारेण प्रदर्शिताः—

दुःखं रक्तं व्रणं भङ्गं छेदनं भेदनं तथा ।
कुर्याद्यः प्राणिनां तद्धि दण्डपारुष्यमुच्यते ॥

स्थावरजङ्गमप्राणिनां प्राण्यन्तरकृतं नखादिना त्वग्भेदादिभवं दुःखं रक्तव्रणादिकं च दण्डपारुष्यमुच्यत इत्यर्थः । व्यासेनापि दिङ्मात्रेण प्रदर्शिताः—

भस्मादिना प्रक्षिपणं ताडनं च करादिना ।
आवेष्टनं चांशुकाद्यैर्दण्डपारुष्यमुच्यते ॥

इति । आदिग्रहणेनोपरि प्रक्षेपणाद्दुःखकरं कर्दमपांसुमलादि द्रव्यं गृह्यते । करादिनेत्यनेनादिशब्देन लगुडपाषाणेष्टकायुधादि द्रव्यम्, आद्यग्रहणेन रज्जुशृङ्खलादि द्रव्यम् । प्रदर्शितव्यक्तीनां मध्ये कासुचिद्व्यक्तिषु दण्डे निर्णयमाह मनुः—

त्वग्भेदकश्शतं दण्ड्यो लोहितस्य च दर्शकः ।
मांसभेत्ता तु षण्णिष्कान् प्रवास्यस्त्वस्थिभेदकः ॥

मांसभेत्ता व्रणकर्ता । अस्थिभेदकोऽस्थिभञ्जकः । कात्यायनोऽपि—

कर्णोष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च ।
छेदने चोत्तमो दण्डो भेदने मध्यमो भृगुः ॥

बृहस्पतिरपि—

भस्मादिना प्रक्षिपणं ताडनं च करादिना ।
प्रथमं दण्डपारुष्यं दमः कार्योऽत्र माषकः ॥
इष्टकोपलकाष्ठैश्च ताडने तु द्विमाषकः ।
कार्यः कृतानुरूपस्तु लग्ने घाते दमो बुधैः ॥
एष दण्डस्समेषूक्तः परस्त्रीष्वधिकेषु च ।
द्विगुणस्त्रिगुणो ज्ञेयः प्राधान्यापेक्षया बुधैः ॥

इति। याज्ञवल्क्यस्त्वप्रदर्शितास्वपि दण्डपारुष्यव्यक्तिषु दण्डमाह-

पादकेशांशुककरोल्लुञ्छनेषु पणान्दश ।
पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः ॥

अत्र अंशुकावेष्टनं च अंशुकाद्यैरिति प्रदर्शितम् । शेषास्त्व- प्रदर्शिता व्यक्तयः । एवमन्यास्वप्यप्रदर्शितव्यक्तिषु प्रतिव्यक्ति दण्डनिर्णयस्मृतयो यद्यपि समुच्चयकारैः समुच्चिताः । अस्मा- भिस्तु विस्तरभयान्न समुच्चिताः । कात्यायनस्तु वाक्पारुष्योक्त- प्रतिव्यक्तिदण्डनिर्णय इहानुक्तदण्डविषये क्वचिदनुसन्धेय इति दर्शयति—

वाक्पारुष्ये यथैवोक्ताः प्रातिलोम्यानुलोम्यतः ।
तथैव दण्डपारुष्ये पात्या दण्डा यथाक्रमम् ॥

एवञ्चात्र प्रतिव्यक्ति दण्डनिर्णयः प्रातिलोम्यादावपि कात्यायनेन स्मृत इति न क्वचिदस्मृताः दण्डाः पात्याः । नन्वेवमपि क्वचिदत्रापराधानुसारेण कल्पिता दण्डाः पात्याः, अनन्तव्यक्तिषु प्रतिव्यक्ति दण्डनिर्णयस्मरणायोगात् । सत्यं—अत एवोक्तमुशनसा—

यत्र नोक्तो दमस्सर्वैरानन्त्यात्तु महात्मभिः ।
तत्र कार्यं परिज्ञाय कर्तव्यं दण्डधारणम् ॥

आनन्त्यात् पारुष्यव्यक्तीनामिति शेषः । कार्यं प्राणिषु प्राण्यन्तरैरुत्पादितं दुःखम् । अत एव मनुः—

मनुष्याणां पशूनां च दुःखाय प्रहृते सति ।
यथा यथा महद्दुःखं दण्डं कुर्यात्तथा तथा ॥

केनचित्कस्यचिद्दुःखाय प्रहृते सति स्वल्पं दुःखं महद्वा भवतु, दण्डस्तु महानेवेत्याह स एव—

येनकेनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः ।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥

हिंस्यात् प्रहरेत् । श्रेयांसं द्विजम् । अन्त्यजः शूद्रः । तथाच बृहस्पतिः—

येनाङ्गेन द्विजातीनां शूद्रः प्रहरते रुषा ।
छेत्तव्यं तद्भवेत्तस्य मनुना समुदाहृतम् ॥

येनकेनचिदङ्गेनेति सामान्येनोक्तिं स्वयमेव मनुर्विशेषनिष्ठां कर्तुमाह—

पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।
पादेन प्रहरन् कोपात् पादच्छेदनमर्हति ॥
अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः ।
अवमूत्रयतो मेढ्रमवशर्धयतो गुदम् ॥
केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ।
पादयोर्दाढिकायां च ग्रीवायां वृषणेषु च ॥

इति । पाणिं दण्डं वा उद्यम्येत्यत्र प्रहरन्नित्यनुषज्यते । केशेष्वेकेन हस्तेन गृह्णतोऽप्युभयहस्तच्छेदनाविधिः द्विवचनात् गम्यते । दाढिका पुरुषस्य प्रधानं लिङ्गमुच्यते । कोपाद्दर्पादिति च वदन् मोहप्रमादादिना प्रहारावष्ठीवनादिकं कुर्वन्न दण्ड्य इति दर्शयति । दर्शितं च याज्ञवल्क्येन—

हीनेष्वर्धदमो मोहमदादिभिरदण्डनम् ।

इति । हीनेषु पारुष्यकृदपेक्षया जात्यादिना हीनेषु पुरुषेषु पारुष्ये कृते तत्कर्तुरर्धदमः समेषूक्तदमापेक्षया भवतीत्यर्थः । परस्परपारुष्यकारिषु दममाह बृहस्पतिः—

द्वयोः प्रहरतोर्दण्डः समयोस्तु समस्स्मृतः ।
आरम्भकोऽनुबन्धी च दाप्यस्स्यादधिकं दमम् ॥

सङ्ख्यया समभावाभावे त्वाह याज्ञवल्क्यः—

एकं घ्नतां बहूनां तु यथोक्ताद्द्विगुणो दमः ।

इति । बहूनां प्रत्येकं द्विगुणो दमो न पुनस्समुदायस्य प्रहारकस्य, प्रत्येकमेवापराधाधिक्यात् । अत एव विष्णुः—

'एकं घ्नतां बहूनां प्रत्येकस्योक्तदण्डो द्विगुणः' इति । प्रत्येकस्य प्रत्येकमित्यर्थः। व्रणादिदुःखेष्वतिदुस्सहेषु जातेष्वाह कात्यायनः–

देहेन्द्रियविनाशे तु यथा दण्डं प्रकल्पयेत् ।
तथा तुष्टिकरं देयं समुत्थानं च पाण्डितैः ॥

तुष्टिकरं दुस्सहव्रणतुष्टिकरं देयं दुस्सहव्रणादिकारिणा देयम् । समुत्थानं व्ययं पाण्डितैः व्रणगुरुत्वानुसारेण कल्पितमिति शेषः । समुत्थानं च आव्रणरोपणाद्देयम् ।

समुत्थानव्ययं चासौ दद्यादा व्रणरोपणात् ।

इति तेनैवोक्तत्वात् । समुत्थानव्ययं भिषग्भेषजपथ्यपानाद्यर्थं क्रियमाणं व्ययम् । बृहस्पतिरपि—

अङ्गावपीडने चैव छेदने भेदने तथा ।
समुत्थानव्ययं दाप्यः कलहापहृतं च यत् ॥

समुत्थानव्ययमङ्गादिपीडनादिदुःखोत्पादको दाप्य इत्याह याज्ञवल्क्यः—

दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम् ।
दाप्यः—

इति । दुःखमुत्पादयेत् मनुष्यग्राम्यपशूनामिति शेषः । तथाच विष्णुः—'सर्वे च पुरुषपीडाकरास्तदुत्थं व्ययं दाप्याः ग्राम्यपशुपीडाकराश्च' इति । ग्राम्यपशुपीडातिशयेन पशुमरणे त्वाह स एव—'ग्राम्यपशुघाती कार्षापणशतं दण्ड्यः पशुस्वामिनश्च तन्मूल्यं दद्यात्' इति । प्राणिघातनिबन्धो दण्डः क्वचित्क्वचित् अशक्यप्रतीकारविषये दोषाभावान्नेत्याह मनुः–

छिन्ने नस्ये युगे भग्ने तिर्यक्प्रतिमुखागते ।
अक्षभङ्गे च यानस्य चक्रभङ्गे तथैव च ॥
छेदने चैव यन्त्राणां योक्त्ररश्मेस्तथैव च ।
आक्रन्दे चाप्यपैहीति न दण्डं मनुरब्रवीत् ॥

इति । छिन्ने नस्ये बलीवर्दान्नासिकास्थरज्ज्वादौ त्रुटिते । युगे शकटादियुगकाष्ठे भग्ने । तिर्यक्प्रतिमुखागते कथञ्चित् भूवैषम्यादिना तिर्यगभिमुखं वा परावृत्ते याने । यन्त्राणि शकटादिकाष्ठानां बन्धनार्थं रज्ज्वादीनि । बलीवर्दादिनियन्तृकपाशप्रग्रहयोर्योक्त्ररश्मिशब्दाभ्यां पृथगभिधानात् यन्त्रशब्देन न ग्रहणम् । अपैहीत्याक्रन्दे अपैहीत्युच्चैरुच्चारिते । अपैहीतिशब्दोऽपसरेत्यादितत्समानर्थाखिलशब्दानां प्रदर्शनार्थम् । तेनापभ्रंशभाषयाऽप्याक्रन्दे कृते न दण्डः । शक्यप्रतीकारेऽत्रोपेक्षकस्य दण्डमाह स एव—

यत्रापवर्तते युग्यं वैगुण्यात्प्राजकस्य तु ।
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम् ॥

प्राजकस्य नोदकस्य, शकटादिनेतुरिति यावत् । द्विशतग्रहणं तत्तत्प्राणिहिंसायां विशेषविहितदण्डोपलक्षणार्थम् । प्राजकस्य वैगुण्यात् एकहस्तत्वादिकात् स्वामिना वेतनलाघवार्थमनुमतात् । प्रगुणप्राजकप्रमादादिना प्रवृत्ते युग्ये न स्वामी दण्ड्यः, किंतु प्राजक इत्याह स एव—

प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हति ।

इति । आप्तः प्रगुण इत्यर्थः । नारदोपि क्वचिद्दण्डचः प्रभुरित्याह—

पुत्रापराधे न पिता न स्वामी शुनि दण्डभाक् ।
न मर्कटे च तत्स्वामी तैरेव प्रहितो न चेत् ॥

स्थावरप्राणिपीडाकराणां तु दण्डमाह मनुः—

वनस्पतीनां सर्वेषामुपभोगो यथा यथा ।
तथा तथा दमः कार्यो हिंसायामिति धारणा ॥

स्थावरप्राणिजातोपलक्षणार्थं वनस्पतिग्रहणम् । फलभोगार्थेषु पनसादिंमहाभोगकारणेषु उत्तमसाहसदण्डः, पुष्पभोगार्थेषु चम्पकादिषु पक्कापक्कफलभोगापेक्षयाऽल्पभोगकारणेषु मध्यमसाहसदण्डः, पत्रभोगार्थेषु पुष्पभोगापेक्षया स्वल्पभोगकारणेषु वल्लीगुल्मलतादिस्थावरप्राणिषु कार्षापणशतं, अत्यल्पभोगार्थेषु तृणष्वेकः कार्षापण इत्युपभोगानुसारेण दमोऽवगन्तव्यः। तथाच दण्ड इत्यनुवृत्तौ विष्णुः—'फलोपभोगद्रुमच्छेदी तूत्तमसाहसं, पुष्पोपभोगच्छेदी मध्यमसाहसं, वल्लीगुल्मलताच्छेदी कार्षापणशतं, तृणच्छेद्येकं, सर्वे च तत्स्वामिनां तदुत्पात्तिं' इति । सर्वे फलोपभोगद्रुमच्छेदकादयः तत्स्वामिनां छिन्नद्रुमादिस्वामिनां तदुत्पात्तिं फलोपभोगद्रुमाद्युत्पात्तिं पुनः प्ररोपितद्रुमादिभोगकालपर्यन्तं दाप्या इति शेषः ॥

इति स्मृतिचन्द्रिकायां दण्डपारुष्याख्यस्य
पदस्य विधिवितानम्.

---

अथ द्यूतसमाह्वयाख्यस्य पदस्य विधिरुच्यते.

तत्र नृपतिं प्रत्याह मनुः—

प्रकाशमेतत्तास्कर्यं यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान् भवेत् ॥

तास्कर्यं तस्करत्वम् । यत्नवान् भवेत् यत्नवान् भूत्वा तौ निवारयेत् । तथाचाह स एव—

द्यूतं समाह्वयं चैव राजा राष्ट्रे निवारयेत् ।

इति । द्यूतसमाह्वययोः को भेद इत्यपेक्षिते स एवाह—

अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥

अप्राणिभिः अक्षादिभिः । प्राणिभिः मेषादिभिः । निवारणमत्र निर्वासनादिदण्डेन, दण्डस्यैव नीचनिवारणत्वात् । अत एव निवारणाय निर्वासनमाह स एव—

कुशीलवांश्च कितवान् पाषण्डस्थांश्च मानवान् ।
विकर्मस्थान् शौण्डिकांश्च क्षिप्रं निर्वासयेत्पुरात् ॥

कितवानां नीचकारित्वप्रख्यापनायात्र कुशीलवाद्यनेकनीचसाहचर्यकरणमिति मन्तव्यम् । दुस्सङ्गेन कुमार्गित्वं अविलम्बेन प्रजानामापद्यत इति क्षिप्रग्रहणं कृतम् । क्षिप्रग्रहणस्यैतदेव प्रयोजनमुक्तं तेनैव—

एते राष्ट्रे वर्तमानाः राज्ञः प्रच्छन्नतस्कराः ।
विकर्मक्रियया नित्यं बाधन्ते भद्रिकाः प्रजाः ॥

एते कुशीलवादयः। बृहस्पतिस्तु मनोर्मतमन्येषां मतं चाह—

द्यूतं निषिद्धं मनुना सत्यशौचधनापहम्।
अभ्यनुज्ञातमन्यैस्तु राजभागसमन्वितम्'॥
सभिकाधिष्ठितं कार्यं तस्करज्ञानहेतुना।

इति। सभां कृत्वा द्यूतकारकस्सभिकः। कथं पुनस्सभिकस्य द्यूतकारकत्वमित्यपेक्षिते स एवाह—

सभिको ग्राहको द्रव्यं दद्याज्जेत्रे नृपाय च।

इति। द्यूतपराजितकितवानां तु बन्धनादिना पणग्राहको भवेत्। पणग्रहणात् प्रागेव स्वद्रव्यं जेत्रे नृपाय च यथाभागं दद्यात् सभिक इत्यर्थः। तथाच कात्यायनः—

जेतुर्दद्यात्स्वकं द्रव्यं जिताद्ग्राह्यं त्रिपक्षकम्।
सद्यो वा सभिकेनैव कितवात्तु न संशयः॥

त्रिपक्षकमित्यनेन यथासामर्थ्यमा त्रिपक्षात् पणदानकालो देय इति दर्शितम्। जेत्रे राज्ञे च दत्तस्य स्वद्रव्यस्य पणप्रतिनिधेः वृद्धिः पणग्रहणकाले पणेन सह साभिकेन ग्राह्या।

दशकं तु शते वृद्धिं गृह्णीयात्तु पराजयात्।

इति तेनैवोक्तत्वात्। पराजयात् पराजितादित्यर्थः। सभिकाधिष्ठितमित्यस्यानित्यत्वमाह स एव—

अथवा कितवो राज्ञे दत्वा भागं यथोदितम्।
प्रकाशं देवनं कुर्यादेवं दोषो न विद्यते॥

दोषो राजवञ्चनलक्षणो द्यूतकारित्वलक्षणो वा। समाह्वयं प्रस्तुत्याह बृहस्पतिः—

द्वंद्वयुद्धेन यः कश्चिदवसादमवाप्नुयात्।
तत्स्वामिना पणो देयो यस्तत्र परिकल्पितः॥

क्वचित्पणपरिकल्पनं कृताकृतमित्याह नारदः—

परिहासकृतं यच्च यच्चाप्यविदितं भवेत्।
तत्रापि नाप्नुयात्काममथवाऽनुमतं तयोः॥

काम्यत इति कामः पणः, नाप्नुयात् द्यूतस्य तत्रालस्यापनोदनार्थत्वादित्यभिप्रायः। तयोर्जेतृजितयोर्देवनात् प्रागनुमतं कामं परिहासकृतादावपि जेता प्राप्नुयादिति शेषः। तत्र प्राप्तपणापादितभक्ष्यादिभक्षणादावावृत्तिप्रतिषेधार्थमाह स एव—

भक्ष्यभोज्यान्नपानानि स्वल्पान्यन्यानि कानिचित्।
प्रीत्या तु सकृदाजीवेत प्रसङ्गं तु विवर्जयेत्॥

विवादनिर्णयस्तत्र सभिकादिसमयानुसारेण प्रसिद्ध इति तद्विषयाणि वचनान्यनास्थया नास्माभिः समुच्चितानि॥

इति स्मृतिचन्द्रिकायां द्यूतसमाह्वयाख्यस्य
पदस्य विधिवितानम्.

---

## अथ प्रकीर्णकाख्यस्य पदस्य विधिरुच्यते.

तत्र बृहस्पतिः—

एष वादिकृतः प्रोक्तो व्यवहारस्समासतः।
नृपाश्रयं प्रवक्ष्यामि व्यवहारं प्रकीर्णकम् ॥

वादिकृतः अर्थिप्रत्यर्थिभ्यां राजानि मिथो विसंवादमावेद्य कृतः। स च ऋणादानादिद्यूतान्तविषयो न द्यूतमात्रविषय इति। एषशब्दोऽत्र प्रागुक्तसप्तदशपदान्तर्गताशेषगणे वर्तते, न पुनरनन्तरोक्तद्यूतसमाह्वयान्तर्गतविशेषेष्वेवावतिष्ठते ; समासत इत्युभयत्र सम्बध्यते । नृपाश्रयं दुष्टचेष्टोपेताश्रयान्तरसापेक्षनृपाश्रयम् । एकाश्रयव्यवहाराभावात् प्रकीर्णकं प्रकीर्णकव्यपदेशयोगिनं, तद्योगश्च विप्रकीर्णानां नृपाश्रयाणामेकत्र संनिवेशात् । तथाच नारदः—

राज्ञामाज्ञाप्रतीघातः तत्कर्मकरणं तथा ।
पुरप्रमाणं सम्भेदः प्रकृतीनां तथैव च ॥
पाषण्डनैगमश्रेणिगणधर्मविपर्ययः ।
पितापुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ॥
प्रतिग्रहविलोपश्च कोप आश्रमिणामपि ।
वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा ॥
न दृष्टं यच्च पूर्वेषु सर्वं तत्स्यात् प्रकीर्णकम् ।

इति । प्रतीघातो भङ्गः । तत्कर्म सिंहासनारोहणादिराजकर्म ।

पुरप्रमाणं पौरचरितलेख्यप्रमाणम् । सम्भेदः प्रकृतीनां राज्याङ्गानां मर्मोच्छेदो दूषणैः प्रसिद्धैः । पाषण्डादयः प्रागनेकधा व्याख्याताः । परधर्माणां करणं धर्मविपर्ययः । पितापुत्रविवादोत्र ऋणादानाद्यनन्तर्भूतोऽभिहितः । न दृष्टं यच्च पूर्वेष्विति प्रागुक्तसर्वशेषतयाऽभिधानात् । राजाज्ञाप्रतीघाताविशेषे केनचित्कृते राज्ञा स्वयमन्विष्य भाविते दण्डमाह याज्ञवल्क्यः—

ऊनं वाऽभ्यधिकं वाऽपि लिखेद्यो राजशासनम् ।
पारदारिकचोरौ वा मुञ्चतो दण्ड उत्तमः ॥

अन्यूनानातिरेकेण लेखनस्यादुष्टलक्षणस्य च राज्ञाऽऽदिष्टस्यातिक्रमे तदाज्ञाप्रतिघातकत्वेनातिदौष्ट्यादुत्तमसाहसदण्डोऽत्र ग्राह्य इत्यर्थः । आज्ञाकारिणां सत्कारमन्यथाकारिणामत्यन्तापकारमाचरेदित्याह स एव—

ये राष्ट्रेऽधिकृतास्तेषां चारैर्ज्ञात्वा विचेष्टितम् ।
साधून् संमानयेद्राजा विपरीतांश्च घातयेत् ॥

अधिकृतस्थानानुसारेण वर्तमानास्साधवः । राष्ट्र इत्युपलक्षणम् । अत एव व्यासः—

न्यायस्थाने येऽधिकृता गृहीत्वाऽर्थं विनिर्णयम् ।
कुर्वन्त्युत्कोचकास्ते तु राजद्रव्यविनाशकाः ॥
उत्कोचजीविनो द्रव्यहीनान् कृत्वा विवासयेत् ।

इति । तत्कर्मकरणे च दण्डमाह याज्ञवल्क्यः—

राजयानासनारोहे दण्डो मध्यमसाहसः ।

इति । कात्यायनोपि—

राजक्रीडासु ये सक्ताः राजवृत्त्युपजीविनः ।
अप्रियस्य च यो वक्ता वधं तेषां प्रवर्तयेत् ॥

पुरप्रमाणप्रकृतिसंभेदादौ राज्ञा यत्कर्तव्यं तदस्माभिः प्रागेव प्रसङ्गादस्मिन् काण्डे सदाचारकाण्डे चाभिहितमित्युपरम्यते। तेन प्रकीर्णकाख्यपदप्रतिपाद्यं किञ्चिदेवेह प्रतिपादितम् । अवशिष्टमिह तत्र तत्र प्रसङ्गादुक्तमनुसन्धेयम् ॥

इति सकल विद्याविशारद श्रीकेशवादित्य भट्टोपाध्याय-
सूनु याज्ञिक देवण भट्टोपाध्याय सोमयाजि विर-
चितायां स्मृतिचन्द्रिकायां व्यवहारकाण्डे
द्वितीयपरिच्छेदः काण्डश्च
समाप्तः.

